# ॥ श्रीमहाभारतीयचतुर्थखण्डान्तर्गतानुशासनपर्व्वसूचीपत्रं ॥



९

# ॥ श्रीमहाभारतीयचतुर्थखण्डान्तर्गतानुशासनपर्व्वसूचीपत्रं॥

## ॥ श्रीमहाभारतीयचतुर्थखण्डान्तर्गतखिलहरिवंशपर्व्वसूचीपत्रं ॥

# THE MÁHABHÁRATA,

## AN EPIC POEM,

WRITTEN BY

## THE CELEBRATED VEDA VYA'SA RISHI.

## VOL. IV.

CONTAINING

PART XIII.—ANUSHÁSANA PARVA.
XIV.—ÁSHUAMEDHIKA PARVA.
XV.—ÁSHRAMABÁSIKA PARVA.
XVI.—MAUSALA PARVA.
XVII.—MAHÁPRASTHÁNIKA PARVA.
XVIII.—SUARGÁROHANIKA PARVA.
XIX.—KHILA HARIBANSHA PARVA.

EDITED AND CAREFULLY COLLATED WITH THE BEST MANUSCRIPTS IN THE LIBRARY OF THE SANSCRITA COLLEGE OF CALCUTTA BY NIMAICHANDRA SIROMANI PANDIT OF THE COLLEGE AND RÁMAGOVINDA, PANDIT TO THE ASIATIC SOCIETY

AND

RÁMAHARI NYÁYA PANCHÁNAN

AND

PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL.

Calcutta:

PRINTED AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD.

1839.

# श्रीमहाभारतं

श्रीमन्महर्षिवेदव्यासविरचिता

श्रीमन्महाभारतसंहिता

अनुशासनाश्वमेधिकाश्रमवासिकमौसलमहाप्रस्थानिक
स्वर्गारोहणिकखिलहरिवंशपर्व्वघटितः

चतुर्थखण्ड

साधारणविद्यावृद्ध्यर्थकसमितिधनव्ययेन मुद्रितुमारब्धस्तत्परित्यक्तत्वात्
गौडदेशीयाया एसियातिकाख्यसभाया अनुज्ञया

कलिकाताख्यराजधान्यां सम्मुद्रायन्त्रालये

मुद्रितः

संस्कृतपाठशालाध्यापकेन श्रीनिमाइचन्द्रशिरोमणिना एसियातिकाख्यसभाध्यापकेन
श्रीरामगोविन्दतर्करत्नेन श्रीरामहरिन्यायपञ्चाननेनापि
संशोधितश्च

शकाब्दाः १७६१
इं० १८३९

# श्रीमहाभारतं

## ॥ अनुशासनपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ।

॥ युधिष्ठिर उवाच ॥ शमो बहुविधाकारः सूक्ष्म उक्तः पितामह । न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशं ।
अस्मिन्नर्थे बहुविधा शान्तिरुक्ता पितामह । स्वकृते का नु शान्तिः स्याच्छमाद्बहुविधादपि ।
शराचितशरीरं हि तीव्रव्रणमुदीक्ष्य च । शमं नोपलभे वीर दुष्कृतान्येव चिन्तयन् ।
रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलं । त्वां दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजं ।
अतः कष्टतरं किन्नु मत्कृते यत्पितामहः । इमामवस्थां गमितः प्रत्यमित्रैरणाजिरे ।
तथा चान्ये नृपतयः सहपुत्राः सबान्धवाः । मत्कृते निधनं प्राप्ताः किन्नु कष्टतरं ततः ।
वयं हि धार्त्तराष्ट्राश्च कालमन्युवशं गताः । कृत्वेदं निन्दितं कर्म्म प्राप्स्यामः कां गतिं नृप ।
इदन्तु धार्त्तराष्ट्रस्य श्रेयो मन्ये जनाधिप । इमामवस्थां सम्प्राप्तं यदसौ त्वां न पश्यति ।
सोऽहं तवं ह्यन्तकरः सुहृद्वधकरस्तथा । न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितं क्षितौ ।
दुर्य्योधनो हि समरे सहसैन्यः सहानुजः । निहतः क्षत्रधर्म्मेऽस्मिन् दुरात्मा कुलपांसनः ।
न स पश्यति दुष्टात्मा त्वामद्य पतितं क्षितौ । अतः श्रेयो मृतं मन्ये नेह जीवितमात्मनः ।
अहं हि समरे वीर गमितः शत्रुभिः क्षयं । अभविष्यं यदि पुरा सह भ्रातृभिरच्युत ।
न त्वामेवं सुदुःखार्त्तमद्राक्षं सायकार्द्दितं । नूनं हि पापकर्म्माणो धात्रा सृष्टाः स्म हे नृप ।
अन्यस्मिन्नपि लोके वै यथा मुच्येम किल्विषात् । तथा प्रशाधि मां राजन्मम चेदिच्छसि प्रियं ।
॥ भीष्म उवाच ॥ परतन्त्रं कथं हेतुमात्मानमनुपश्यसि । कर्म्मण्यं हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियं ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः ।
गौतमी नाम कौन्तेय स्थविरा शमसंयुता । सर्पेण दष्टं स्वं पुत्त्रमपश्यद्गतचेतनं ।
अथ तं स्नायुपाशेन बध्वा सर्पममर्षितः । लुब्धकोऽर्ज्जुनको नाम गौतम्याः समुपानयत् ।
स चाब्रवीदयं ते स पुत्त्रहा पन्नगाधमः । ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना ।
अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोऽपि वा । नह्ययं बालहा पापश्चिरं जीवितुमर्हति ।

॥ गौतम्युवाच ॥ विसृजैनमबुद्धिस्त्वमवध्योऽर्ज्जुनक त्वया। को ह्यात्मानं गुरुं कुर्य्यात्प्राप्तव्यमविचिन्तयन्।
प्लवन्ते धर्म्मलघवो लोकेऽम्भसि यथा प्लवाः। मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके।
हत्वा चैनं नामृतः स्यादयं मे जीवत्यस्मिन्कोऽत्ययः स्यादयं ते। असोत्सर्गे प्राणयुक्तस्य जन्तोर्मृत्योर्लोकं को नु गच्छेदनन्तं।
॥ लुब्धक उवाच ॥ जानाम्यहं देवि गुणागुणज्ञे सर्व्वार्त्तियुक्ता गुरवो भवन्ति। स्वस्थस्यैते तूपदेशा भवन्ति तस्मात् क्षुद्रं सर्पमेनं हनिष्ये।
प्रमायिनः कालगतिं वदन्ति सद्यः शुचं त्वर्थविदस्त्यजन्ति। श्रेयः क्षयं शोचति नित्यमोहात्तस्माच्छुचं मुञ्च हते भुजङ्गे। २५
॥ गौतम्युवाच ॥ आर्त्तिर्नैवं विद्यतेऽस्मद्विधानां धर्म्मात्मानः सर्व्वदा सज्जना हि। नित्यायस्तो बालकोऽप्यस्ति तस्माद्दीशे नाहं पन्नगस्य प्रमाथे।
न ब्राह्मणानां कोपोऽस्ति कुतः कोपाच्च यातना। मार्द्दवात् क्षम्यतां साधो मुच्यतामेष पन्नगः।
॥ लुब्धक उवाच ॥ हत्वा लाभः श्रेय एवाव्ययः स्याल्लभ्यो लाभः स्याद्बलिभ्यः प्रशस्तः। कालाल्लाभो यस्तु सत्यो भवेत श्रेयो लाभः कुत्सितेऽस्मिन् न ते स्यात्।
॥ गौतम्युवाच ॥ कार्थ प्राप्तिर्गृह्य शत्रुं निहत्य का कामाप्तिः प्राप्य शत्रुं न मुक्ता। कस्मात्सौम्याऽहं न क्षमे नो भुजङ्गे मोक्षार्थं वा कस्य हेतोर्न कुर्य्याः।
॥ लुब्धक उवाच ॥ अस्मादेकाद्बहवो रक्षितव्या नैको बहुभ्यो गौतमि रक्षितव्यः। कृतागसं धर्म्मविदस्त्यजन्ति सरीसृपं पापमिमं जहि त्वं।
॥ गौतम्युवाच ॥ नास्मिन् हते पन्नगे पुत्त्रको मे सम्प्राप्स्यते लुब्धक जीवितं वै। गुणं चान्यं नास्य वधे प्रपश्ये तस्मात्सर्पं लुब्धक मुञ्च जीवं। ३०
॥ लुब्धक उवाच ॥ वृत्रं हत्वा देवराट् श्रेष्ठभाग्वै यज्ञं हत्वा भागमवाप चैव। शूली देवो देववृत्तं चर त्वं क्षिप्रं सर्पं जहि माभूत्ते विशङ्का।
॥ भीष्म उवाच ॥ असकृत्प्रोच्यमानापि गौतमी भुजगं प्रति। लुब्धकेन महाभागा पापे नैवाकरोन्मतिं।
ईषदुच्छ्वसमानस्तु कृच्छ्रात्संस्तभ्य पन्नगः। उत्ससर्ज्ज गिरं मन्दां मानुषीं पाशपीडितः।
॥ सर्प उवाच ॥ को न्वर्ज्जुनक दोषोऽत्र विद्यते मम बालिश। अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत्।
तस्यायं वचनाद्दष्टो न कोपेन न काम्यया। तस्य तत्किल्बिषं लुब्ध विद्यते यदि किल्बिषं। ३५
॥ लुब्धक उवाच ॥ यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभं। कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी।
मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा। कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग।
किल्बिषी चापि मे वध्यः किल्बिषी चासि पन्नग। आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजङ्गम।
॥ सर्प उवाच ॥ सर्व्व एते ह्यस्ववशा दण्डचक्रादयो यथा। तथाहमपि तस्मान्मे नैव दोषो मतस्तव।
अथ वा मतमेतत्ते तेऽप्यन्योन्यप्रयोजकाः। कार्य्यकारणसन्देहो भवत्यन्योन्यचोदनात्। ४०
एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी। किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषं।
॥ लुब्धक उवाच ॥ कारणं यदि न स्याद्वै न कर्त्ता स्यास्त्वमप्युत। विनाशकारणं त्वञ्च तस्माद्वध्योऽसि मे मतः।

असत्यपि कृते कार्य्ये नेह पन्नग लिप्यते। तस्मान्नात्रैव हेतुः स्यादथ किं बहु मन्यसे।
॥ सर्प उवाच ॥ कार्य्याभावे क्रिया न स्यात्सत्यं सत्यपि कारणे। तस्मात्समेऽस्मिन् हेतौ मे वाच्यो हेतुर्व्विशेषतः। ४५
यद्यहं कारणत्वेन मतो लुब्धक तत्त्वतः। अन्यः प्रयोगे स्यादत्र किल्विषी जन्तुनाशने।
॥ लुब्धक उवाच ॥ वध्यस्त्वं मम दुर्ब्बुद्धे बालघाती नृशंसकृत्। भाषसे किं बहु पुनर्व्वध्यः सन् पन्नगाधम।
॥ सर्प उवाच ॥ यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः। न फलं प्राप्नुवन्त्यत्र फलयोगे तथा ह्यहं।
॥ भीष्म उवाच ॥ तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते। आजगाम ततो मृत्युः पन्नगं चेदमब्रवीत्।
॥ मृत्युरुवाच ॥ प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदं। विनाशहेतुर्न्नास्य त्वमहं न प्राणिनः शिशोः। ५०
यथा वायुर्ज्जलधरान् विकर्षति ततस्ततः। तद्वज्जलदवत्सर्प कालस्याहं वशानुगः।
सात्त्विका राजसाश्चैव तामसा ये च केचन। भावाः कालात्मकाः सर्व्वे प्रवर्त्तन्ते ह जन्तुषु।
जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि। सर्व्वे कालात्मकाः सर्प कालात्मकमिदं जगत्।
प्रवृत्तयश्च लोकेऽस्मिंस्तथैव च निवृत्तयः। तासां विकृतयो याश्च सर्व्वं कालात्मकं स्मृतं।
आदित्यश्चन्द्रमा वायुरापो विष्णुः शतक्रतुः। अग्निः खं पृथिवी मित्रः पर्ज्जन्यो वसवो दितिः। ५५
सरितः सागराश्चैव भावाभावौ च पन्नग। सर्व्वे कालेन सृज्यन्ते ह्रियन्ते च पुनः पुनः।
एवं ज्ञात्वा कथं मां त्वं सदोषं सर्प मन्यसे। अथ चैवं गते दोषे मयि त्वमपि दोषवान्।
॥ सर्प उवाच ॥ निर्द्दोषं दोषवन्तं वा न त्वां मृत्यो ब्रवीम्यहं। त्वयाहं चोदित इति ब्रवीम्येतावदेव तु।
यदि काले तु दोषोऽस्ति यदि तत्रापि नेष्यते। दोषो नैव परीक्ष्यो मे न ह्यत्राधिकृता वयं।
निर्मोक्षस्त्वस्य दोषस्य मया कार्य्यो यथा तथा। मृत्योरपि न दोषः स्यादिति मेऽत्र प्रयोजनं। ६०
॥ भीष्म उवाच ॥ सर्पोऽथार्ज्जुनकं प्राह श्रुतं ते मृत्युभाषितं। नानागसं मां पाशेन सन्तापयितुमर्हसि।
॥ लुब्धक उवाच ॥ मृत्योः श्रुतं मे वचनं तव चैव भुजङ्गम। नैव तावददोषत्वं भवति त्वयि पन्नग।
मृत्युस्त्वञ्चैव हेतुर्हि बालस्यास्य विनाशने। उभयं कारणं मन्ये न कारणमकारणं।
धिङ्मृत्युञ्च दुरात्मानं क्रूरं दुःखकरं सतां। त्वाञ्चैवाहं वधिष्यामि पापं पापस्य कारणं।
॥ मृत्युरुवाच ॥ विवशौ कालवशगावावां निर्द्दिष्टकारिणौ। नावां दोषेण गन्तव्यौ यदि सम्यक् प्रपश्यसि। ६५
॥ लुब्धक उवाच ॥ युवामुभौ कालवशौ यदि मे मृत्युपन्नगौ। हर्षक्रोधौ यथा स्यातामेतदिच्छामि वेदितुं।
॥ मृत्युरुवाच ॥ या काचिदेव चेष्टा स्यात्सर्व्वा कालप्रचोदिता। पूर्व्वमेवैतदुक्तं हि मया लुब्धक कालतः।
तस्मादुभौ कालवशावावां निर्द्दिष्टकारिणौ। नावां दोषेण गन्तव्यौ त्वया लुब्धक कर्हिचित्।
॥ भीष्म उवाच ॥ अथोपगम्य कालस्तु तस्मिन्धर्म्मार्थसंशये। अब्रवीत्पन्नगं मृत्युं लुब्धं चार्ज्जुनकं तथा।
॥ काल उवाच ॥ नह्यहं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः। किल्विषी जन्तुमरणे न वयं हि प्रयोजकाः। ७०
अकरोद्यदयं कर्म्म तन्नोऽर्ज्जुनक चोदकं। विनाशहेतुर्नान्योऽस्य वध्यतेऽयं स्वकर्म्मणा।
यदनेन कृतं कर्म्म तेनायं निधनं गतः। विनाशहेतुः कर्म्मास्य सर्व्वे कर्म्मवशा वयं।
कर्म्मदायादवाँल्लोकः कर्म्मसम्बन्धलक्षणः। कर्म्माणि चोदयन्तीह यथान्योऽन्यं तथा वयं।

यथा मृत्पिण्डत कर्त्ता कुरुते यद्यदिच्छति। एवमात्मकृत कर्म्म मानव प्रतिपद्यते।
यथा च्छायातपौ नित्य सुसम्बद्धौ निरन्तर। यथा कर्म्म च कर्त्ता च सम्बद्धावात्मकर्म्मभि । ५
एव नाऽह न वै मृत्युर्न सर्पो न त्वया भव न्। न चेय ब्राह्मणी वृद्धा शिशुरेवात्र कारण।
तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप । स्वकर्म्मप्रत्ययाल्लोकान्मत्वार्जुनकमब्रवीत् ।
॥ गौतम्युवाच ॥ नैव कालो न भुजगो न मृत्युरिह कारण । स्वकर्म्मभिरय बाल कालेन निधन गत ।
मया च तत्कृत कर्म्म येनाय मे मृत सुत । यातु कालस्तथा मृत्युर्मुञ्चार्ज्जुनक पन्नग ।
॥ भीष्म उवाच ॥ ततो यथागत जग्मुर्मृत्यु कालोऽथ पन्नग । अभूद्विशोकोऽर्जुनको विशोका चैव गौतमी। १०
एतच्छ्रुत्वा शम गच्छ माभू शोकपरो नृप। स्वकर्म्मप्रत्ययाल्लोकान्सर्व्वे गच्छन्ति वै नृप ।
नैव त्वया कृत कर्म्म नापि दुर्य्योधनेन वै, कालेन तत्कृत विद्धि निहता येन पार्थिवा ।
॥ वैशम्पायन उवाच ॥ इत्येतद्वचन श्रुत्वा बभूव विगतज्वर, युधिष्ठिरो महातेजा पप्रच्छेदञ्च धर्म्मवित्।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि गौतमीलुब्धकव्यालमृत्युकालसवादे प्रथमोऽध्याय ॥ १ ॥
॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्व्वशास्त्रविशारद । श्रुत मे महदाख्यानमिद मतिमताम्वर ।
भूयस्तु श्रोतुमिच्छामि धर्म्मार्थसहित नृप। कथ्यमान त्वया किञ्चित्तन्मे व्याख्यातुमर्हसि। १५
केन मृत्युर्गृहस्थेन धर्म्ममाश्रित्य निर्जित इत्येतत्सर्व्वमाचक्ष्व तत्त्वेनापि च पार्थिव।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहास पुरातन । यथा मृत्युर्गृहस्थेन धर्म्ममाश्रित्य निर्जित ।
मनो प्रजापते राजन्निक्ष्वाकुरभवत्सुत । तस्य पुत्रशत जज्ञे नृपते सूर्य्यवर्चस ।
दशमस्तत्र पुत्रस्तु दशाश्वो नाम भारत। माहिष्मत्यामभूद्राजा धर्म्मात्मा सत्यविक्रम ।
दशाश्वस्य सुतस्त्वासीद्राजा परमधार्म्मिक । सत्ये तपसि दाने च यस्य नित्य रत मन । २०
मदिराश्व इति ख्यात पृथिव्या पृथिवीपति । धनुर्व्वेदे च वेदे च निरतो योऽभवत्सदा।
मदिराश्वस्य पुत्रोऽभूद्द्युतिमान्नाम पार्थिव । महाभागो महातेजा महासत्त्वो महाबल ।
पुत्रो द्युतिमतस्त्वासीद्राजा परमधार्म्मिक । सर्व्वलोकेषु विख्यात सुवीरो नाम नामत ।
धर्म्मात्मा कोषवांश्चापि देवराज इवापर । सुवीरस्य तु पुत्रोऽभूत्सर्व्वसग्रामदुर्ज्जय ।
सुदुर्जय इति ख्यात सर्व्वशस्त्रभृताम्वर । दुर्ज्जयस्येन्द्रवपुष पुत्रोऽग्निसदृशद्युति । २५
दुर्य्योधनो नाम महान् राजा राजर्षिसत्तम । तस्येन्द्रसमवीर्य्यस्य सग्रामेष्वनिवर्त्तिन ।
विषये वासवस्तस्य सम्यगेव प्रवर्षति । रत्नैर्धनैश्च पशुभि सस्यैश्चापि पृथग्विधै ।
नगर विषयश्चास्य प्रतिपूर्णं तदाभवत । न तस्य विषये चाभूत्कृपणो नापि दुर्गत ।
व्याधितो वा कृशो वापि तस्मिन्नाभून्नर क्वचित्। सुदक्षिणो मधुरवागनसूयुर्जितेन्द्रिय ।
धर्म्मात्मा चानृशसश्च विक्रान्तोऽथाविकत्थन । यज्वा च दान्तो मेधावी ब्रह्मण्य सत्यसङ्गर । ३०
न चावमन्ता दाता च वेदवेदाङ्गपारग । त नर्म्मदा देवनदी पुण्या शीतजला शिवा।
चकमे पुरुषव्याघ्र स्पृहेन मनसा भारत। तस्या जज्ञे तदा नद्या कन्या राजीवलोचना

नाम्ना सुदर्शना राजन् रूपेण च सुदर्शना। तादृग्रूपा न नारीषु भूतपूर्व्वा युधिष्ठिर।
दुर्य्योधनसुता यादृगभवद्वरवर्णिनी। तामग्निश्चकमे साक्षाद्राजकन्यां सुदर्शनां।
भूत्वा च ब्राह्मणो राजन् वरयामास तं नृपं। दरिद्रश्चासवर्णश्च ममायमिति पार्थिवः। १०५
न दित्सति सुतां तस्मै तां विप्राय सुदर्शनां। ततोऽस्य वितते यज्ञे नष्टोऽभूद्धव्यवाहनः।
ततः सुदुःखितो राजा वाक्यमाह द्विजांस्तदा। दुष्कृतं मम किन्नु स्याद्भवतां वा द्विजर्षभाः।
येन नाशं जगामाग्निः कृतं कुपुरुषेष्विव। न ह्यल्पं दुष्कृतं नोऽस्ति येनाग्निर्नाशमागतः।
भवतां वाथ वा मह्यं तत्त्वेनैतद्विमृश्यतां। तत्र राज्ञो वचः श्रुत्वा विप्रास्ते भरतर्षभ।
नियता वाग्यताश्चैव पावकं शरणं ययुः। तान्दर्शयामास तदा भगवान् हव्यवाहनः। ११०
स्वं रूपं दीप्तिमत्कृत्वा शरदर्कसमद्युति। ततो महात्मा तानाह दहनो ब्राह्मणर्षभान्।
वरयाम्यात्मनोऽर्थाय दुर्य्योधनसुतामिति। ततस्ते कल्यमुत्थाय तस्मै राज्ञे न्यवेदयन्।
ब्राह्मणा विस्मिताः सर्व्वे यदुक्तं चित्रभानुना। ततः स राजा तच्छ्रुत्वा वचनं ब्रह्मवादिनां।
अवाप्य परमं हर्षं तथेति प्राह बुद्धिमान्। प्रायाचत च तं शुल्कं भगवन्तं विभावसुं।
नित्यं सान्निध्यमिह ते चित्रभानो भवेदिति। तमाह भगवानग्निरेवमस्त्विति पार्थिवं। ११५
ततः सान्निध्यमद्यापि माहिष्मत्यां विभावसोः। दृष्टं हि सहदेवेन दिशो विजयता तदा।
ततस्तां समलङ्कृत्य कन्यामाहतवाससं। ददौ दुर्य्योधनो राजा पावकाय महात्मने।
प्रतिजग्राह चाग्निस्तु राजकन्यां सुदर्शनां। विधिना वेददृष्टेन वसोर्द्धारामिवाध्वरे।
तस्या रूपेण शीलेन कुलेन वपुषा श्रिया। अभवत् प्रीतिमानग्निर्गर्भं चास्या मनो दधे।
तस्यां समभवत्पुत्रो नाम्नाग्नेयः सुदर्शनः। सुदर्शनस्तु रूपेण पूर्णेन्दुसदृशोपमः। १२०
शिशुरेवाध्यगात्सर्व्वं परं ब्रह्म सनातनं। अथौघवान्नाम नृपो नृगस्यासीत्पितामहः।
तस्याप्योघवती कन्या पुत्रश्चौघरथोऽभवत्। तामोघवान् ददौ तस्मै स्वयमोघवतीं सुतां।
सुदर्शनाय विदुषे भार्य्यार्थे देवरूपिणीं। स गृहस्थाश्रमरतस्तया सह सुदर्शनः।
कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः। गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो।
प्रतिज्ञामकरोद्धीमान् दीप्ततेजा विशाम्पते। तामथौघवतीं राजन् स पावकसुतोऽब्रवीत्। १२५
अतिथेः प्रतिकूलं ते न कर्त्तव्यं कथञ्चन। येन येन च तुष्येत नित्यमेव त्वयातिथिः।
अप्यात्मनः प्रदानेन न ते कार्य्या विचारणा। एतद्व्रतं मम सदा हृदि संपरिवर्त्तते।
गृहस्थानां हि सुश्रोणि नातिथेर्व्विद्यते परं। प्रमाणं यदि वामोरु वचस्ते मम शोभने।
इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा। निष्क्रान्ते मयि कल्याणि तथा सन्निहितेऽनघे।
नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव। तमब्रवीदोघवती तथा मूर्ध्नि कृताञ्जलिः। १३०
न मे त्वद्वचनात्किञ्चिदकर्त्तव्यं कथञ्चन। जिगीषमाणस्तु गृहे तदा मृत्युः सुदर्शनं।
पृष्ठतोऽन्वगमद्राजन् रन्ध्रान्वेषी तदा सदा। इध्मार्थन्तु गते तस्मिन्नग्निपुत्रे सुदर्शने।

अतिथिर्ब्राह्मण श्रीमांस्तामाहौघवती तदा । आतिथ्य कृतमिच्छामि त्वयाद्य वरवर्णिनि।
प्रमाण यदि धर्म्मस्ते गृहस्थाश्रमसम्मत । इत्युक्ता तेन विप्रेण राजपुत्री यशस्विनी ।
विधिना प्रतिजग्राह वेदोक्तेन विशाम्पते । आसनञ्चैव पाद्यञ्च तस्मै दत्त्वा द्विजातये । १६५
प्रोवाचौघवती विप्र केनार्थ किं ददामि ते। तामब्रवीत्ततो विप्रो राजपुत्री सुदर्शनां ।
त्वया ममार्थ कल्याणि निर्व्विशङ्कैतदाचर। यदि प्रमाणं धर्म्मस्ते गृहस्थाश्रमसम्मत ।
प्रदानेनात्मनो राज्ञि कर्तुमर्हसि मे प्रियं । स तया छन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया ।
नान्यमात्मप्रदानात्स तस्या वव्रे वर द्विज । सा तु राजसुता स्मृत्वा भर्तुर्व्वचनमादित ।
तथेति लज्जमाना सा तमुवाच द्विजर्षभ। ततो विहस्य विप्रर्षि सा चैवोपविवेश ह। १७०
संस्मृत्य भर्त्तुर्व्वचन गृहस्थाश्रमकाङ्क्षिण । अथेध्मानुपादाय स पावकिरुपागमत्।
मृत्युना रौद्रभावेन नित्य बन्धुरिवान्वित । ततस्त्वाश्रममागम्य स पावकसुतस्तदा।
ता व्याजहारौघवती क्वासि यातेति चासकृत। तस्मै प्रतिवच सा तु भर्त्रे न प्रददौ तदा ।
कराभ्या तेन विप्रेण स्पृष्टा भर्तृव्रता सती । उच्छिष्टास्मीति मन्वाना लज्जिता भर्तुरेव च।
तूष्णीम्भूताऽभवत्साध्वी नचोवाचार्थऽयं किञ्चन। अथ तां पुनरेवेद प्रोवाच स सुदर्शन । १७५
क सा साध्वी कुतो याता गरीय किमतो मम । पतिव्रता सत्यशीला नित्यं चैवार्जवे रता।
कथ न प्रत्युदेत्यद्य स्मयमाना यथा पुरा। उटजस्थस्तु त विप्र प्रत्युवाच सुदर्शन।
अतिथि विद्धि सम्प्राप्त ब्राह्मण पावके च मा। अनया छन्द्यमानोऽह भार्य्यया तव सत्तम ।
तैस्तैरतिथिसत्कारैर्ब्रह्मन्नेषा वृता मया। अनेन विधिना सेय मामर्च्चति शुभानना।
अनुरूप यदत्रान्यत्तद्भवान् कर्तुमर्हति । कूटमुद्गरहस्तस्तु मृत्युस्त वै समन्वगात्। १८०
हीनप्रतिज्ञमत्रैन वधिष्यामीति चिन्तयन। सुदर्शनस्तु मनसा कर्म्मणा चक्षुषा गिरा ।
त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिद । सुरतं तेऽस्तु विप्राग्र्य प्रीतिर्हि परमा मम।
गृहस्थस्य तु धर्म्मोऽग्र्य सम्प्राप्तोऽतिथिपूजनं। अतिथि पूजितो यस्य गृहस्थस्य हि गच्छति।
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिण । प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु ।
अतिथिभ्यो मया देयमिति मे व्रतमाहित। नि सन्दिग्ध मया वाक्यमेतत्ते समुदाहृत। १८५
तेनाह विप्र सत्येन स्वयमात्मानमालभे । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चम ।
बुद्धिरात्मा मन कालो दिशश्चैव गुणा दश। नित्यमेते हि पश्यन्ति देहिनां देहसंश्रिता ।
सुकृत दुष्कृत चापि कर्म्म धर्म्मभृताम्वर। यथैषा नानृता वाणी मयाद्य समुदीरिता ।
तेन सत्येन मा देवा पालयन्तु दहन्तु वा। ततो नाद समभवद्दिक्षु सर्व्वासु भारत ।
असकृत् सत्यमित्येवं नैतन्मिथ्येति सर्व्वत । उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विज । १९०
वपुषा द्याञ्च भूमिञ्च व्याप्य वायुरिवोद्यत । स्वरेण विप्र शैक्ष्येण त्रीँल्लोकाननुनादयन्।
उवाच चैन धर्म्मज्ञ पूर्व्वमामन्त्र्य नामत । धर्म्मोऽहमस्मि भद्रन्ते जिज्ञासार्थं तवागम ।

प्राप्त. सत्यञ्च ते ज्ञात्वा प्रीतिर्मे परमा त्वयि। विजितश्च त्वया मृत्युर्योऽयं त्वामनुगच्छति।
रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृत.। न चास्ति शक्तिस्त्रैलोक्ये कस्यचित्पुरुषोत्तम।
पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमप्युत। रक्षिता त्वद्गुणैरेषा पतिव्रतगुणैस्तथा।
अधृष्या यदियं ब्रूयात्तथा तन्नान्यथा भवेत्। एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी।
पावनार्थञ्च लोकस्य सरिच्छ्रेष्ठा भविष्यति। अनेन चैव देहेन लोकांस्त्वमिह पत्स्यसे।
अर्द्धेनौघवती नाम त्वामर्द्धेनानुयास्यति। शरीरेण महाभागा योगो ह्यस्या वशे स्थितः।
अनया सह लोकांश्च गन्तासि तपसार्जितान्। यत्र नावृत्तिमभ्येति शाश्वतांस्तान् सनातनान्।
अनेन चैव देहेन लोकांस्त्वमभिपत्स्यसे। निर्जितश्च त्वया मृत्युरैश्वर्यञ्च तवोत्तमं।
पञ्चभूतान्यतिक्रान्तः स्ववीर्य्याच्च मनोजव.। गृहस्थधर्म्मेणानेन कामक्रोधौ च ते जितौ।
स्नेहो रागश्च तन्द्री च मोहोद्रेकश्च केवल.। तव शुश्रूषया राजन् राजपुत्र्या विनिर्जिताः।
॥ भीष्म उवाच ॥ शुक्लानान्तु सहस्रेण वाजिनां रथमुत्तमं। युक्तं प्रगृह्य भगवान् वासवोऽप्याजगाम तं।
मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च। बुद्धिः कालो मनो व्योम कामक्रोधौ तथैव च।
तस्माद्गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै। ऋते ऽतिथिं नरव्याघ्र मनसैतद्विचारय।
अतिथि पूजितो यद्धि ध्यायते मनसा शुभं। न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिण.।
पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत्। स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति।
एतत्ते कथितं पुत्र मयाख्यानमनुत्तमं। यथाहि विजितो मृत्युर्गृहस्थेन पुराभवत्।
धन्यं यशस्यमायुष्यमिदमाख्यानमुत्तमं। बुभूषताभिमन्तव्यं सर्व्वदुश्चरितापहं।
इदं यः कथयेद्विद्वानहन्यहनि भारत। सुदर्शनस्य चरितं पुण्याल्लोकानवाप्नुयात्।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि सुदर्शनोपाख्याने द्वितीयोऽध्याय.॥ २ ॥
॥ युधिष्ठिर उवाच ॥ ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्व्वर्णैर्नराधिप। कथं प्राप्तं महाराज क्षत्रियेण महात्मना।
विश्वामित्रेण धर्म्मात्मन् ब्राह्मणत्वं नरर्षभ। श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह।
तेन ह्यमितवीर्य्येण वशिष्ठस्य महात्मन.। हतं पुत्रशतं सद्यस्तपसापि पितामह।
यातुधानाश्च बहवो राक्षसास्तिग्मतेजसः। मन्युनाविष्टदेहेन सृष्टाः कालान्तकोपमा.।
महान् कुशिकवंशश्च ब्रह्मर्षिशतसङ्कुल.। स्थापितो नरलोकेऽस्मिन्विद्वान् ब्राह्मणसंस्तुत.।
ऋचीकस्यात्मजश्चैव शुनःशेफो महातपाः। विमोक्षितो महासत्रात्पशुतामप्युपागत.।
हरिश्चन्द्रः क्रतौ देवांस्तोषयित्वात्मतेजसा। पुत्रतामनुसम्प्राप्तो विश्वामित्रस्य धीमत.।
नाभिवादयते ज्येष्ठं देवरातं नराधिप। पुत्राः पञ्चाशदेवापि शप्ताः श्वपचतां गताः।
त्रिशङ्कुर्बन्धुभिर्मुक्त ऐक्ष्वाकुः प्रीतिपूर्व्वकं। अवाक्शिरा दिवं नीतो दक्षिणामाश्रितो दिशं।
विश्वामित्रस्य विपुला नदी देवर्षिसेविता। कौशिकी च शिवा पुण्या ब्रह्मर्षिसुरसेविता।
ततो त्रिपुरकरी चैव पद्मचूडा शुभव्रता। रम्भा नामाप्सराः शापाद्यस्य शैलत्वमागता।

तथैवास्य भयाद्बध्वा वशिष्ठ सलिले पुरा । आत्मानंमज्जयन् श्रीमान् विपाश पुनरुत्थित ।
तदाप्रभृति पुण्या हि विपाशाभून्महानदी । विख्याता कर्मणा तेन वशिष्ठस्य महात्मन ।
वाग्भिश्च भगवान् येन देवसेनाग्रग प्रभु । स्तुत प्रीतमनाश्चासीच्छापाथैनममुञ्चत ।
ध्रुवस्योत्तानपादस्य ब्रह्मर्षीणां तथैव च । मध्ये ज्वलति यो नित्यमुदीचीमाश्रितो दिशं । १९५
तस्यैतानि च कर्माणि तथान्यानि च कौरव । क्षत्रियस्यात्मनो जातमिद कौतूहलं मम ।
किमेतदिति तत्त्वेन प्रब्रूहि भरतर्षभ । देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत् ।
एतत्तथ्येन मे तात सर्व्वमाख्यातुमर्हसि । मतङ्गस्य यथा तत्त्वं तथैवैतद्वदस्व मे ।
स्थाने मतङ्गो ब्राह्मण्यं नालभद्भरतर्षभ । चण्डालयोनौ जातो हि कथं ब्राह्मण्यमाप्तवान ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि विश्वामित्रोपाख्याने तृतीयोऽध्याय ॥ ३ ॥
॥ भीष्म उवाच ॥ श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा । ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च । २००
भरतस्यान्वये चैवाजमीढो नाम पार्थिव. । बभूव भरतश्रेष्ठ यज्वा धर्म्मभृताम्वर ।
तस्य पुत्रो महानासीज्जह्नुर्नाम नरेश्वर. । दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मन ।
तस्यात्मजस्तुल्यगुण. सिन्धुद्वीपो महायशा । सिन्धुद्वीपाच्च राजर्षिर्व्बलाकाश्वो महाबल ।
वल्लभस्तस्य तनय. साक्षाद्धर्म्म इवापर । कुशिकस्तस्य तनय. सहस्राक्षसमद्युति ।
कुशिकस्यात्मज श्रीमान् गाधिर्नाम जनेश्वर । अपुत्र प्रसवेनार्थी वनवासमुदावसत् । २०५
कन्या जज्ञे सुता तस्य वने निवसत सत । नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि ।
तां वव्रे भार्गव श्रीमांश्च्यवनस्यात्मसम्भव । ऋचीक इति विख्यातो विपुले तपसि स्थित ।
स तां न प्रददौ तस्मै ऋचीकाय महात्मने । दरिद्र इति मत्वा वै गाधि शत्रुनिबर्हण ।
प्रत्याख्याय पुनर्यान्तमब्रवीद्राजसत्तम । शुल्कं प्रदीयतां मह्यं ततो वेत्स्यसि मे सुता ।
॥ ऋचीक उवाच ॥ किं प्रयच्छामि राजेन्द्र तुभ्य शुल्कमहं नृप । दुहितुर्ब्रूहि संसक्तो माभूत्तत्र विचारणा । २१०
॥ गाधिरुवाच ॥ चन्द्ररश्मिप्रकाशानां हयानां वातरंहसां । एकत श्यामकर्णानां सहस्रं देहि भार्गव ।
॥ भीष्म उवाच ॥ तत स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभु । अब्रवीद्वरुणं देवमादित्यं पतिमम्भसां ।
एकत श्यामकर्णानां हयानां चन्द्रवर्चसां । सहस्रं वातवेगानां भिक्षे त्वां देवसत्तम ।
तथेति वरुणो देव आदित्यो भृगुसत्तमं । उवाच यत्र ते छन्दस्ततोत्थास्यन्ति वाजिन ।
ध्यातमात्रे ऋचीकेन हयाना चन्द्रवर्चसां । गङ्गाजलात्समुत्तस्थौ सहस्रं विपुलौजसां । २१५
अदूरे कान्यकुब्जस्य गङ्गायास्तीरमुत्तमं । अश्वतीर्थं तदद्यापि मानवै. परिचक्ष्यते ।
ततो वै गाधये तात सहस्रं वाजिनां शुभं । ऋचीक प्रददौ प्रीत शुल्कार्थं तपतांवर ।
तत. स विस्मितो राजा गाधि. शापभयेन वै । ददौ तां समलङ्कृत्य कन्यां भृगुसुताय वै ।
जग्राह विधिवत्पाणिं तस्या ब्रह्मर्षिसत्तम । सा च तं पतिमासाद्य परं हर्षमवाप ह ।
सन्तुतोष च ब्रह्मर्षिस्तस्या वृत्तेन भारत । छन्दयामास चैवैनां वरेण वरवर्णिनी । २२०

मात्रे तत्सर्व्वमाचख्यौ सा कन्या राजसत्तम । अथ तामब्रवीन्माता सुतां किञ्चिदवाङ्मुखी ।
ममापि पुत्त्रि भर्त्ता ते प्रसादं कर्त्तुमर्हसि । अपत्यस्य प्रदानेन समर्थस्य महातपाः ।
ततः सा त्वरितं गत्वा तत्सर्व्वं प्रत्यवेदयत् । मातुश्चिकीर्षितं राजन्नृचीकस्तामथाब्रवीत् ।
गुणवत्तमपत्यं सा अचिराज्जनयिष्यति । मम प्रसादात्कल्याणि माभूत्ते प्रणयोऽन्यथा ।
तत्र चैव गुणश्लाघी पुत्त्र उत्पत्स्यते महान् । अस्मद्वंशकरः श्रीमान् सत्यमेतद्ब्रवीमि ते । १२५
ऋतुस्नाता च साश्वत्थं त्वञ्च वृक्षमुडुम्बरं । परिष्वजेथाः कल्याणि तत एवमवाप्स्यथः ।
चरुद्वयमिदञ्चैव मन्त्रपूतं शुचिस्मिते । त्वञ्च सा चोपभुञ्जीतं ततः पुत्त्राववाप्स्यथ ।
ततः सत्यवती हृष्टा मातरं प्रत्यभाषत । यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयं ।
तामुवाच ततो माता सुतां सत्यवतीं तदा । पुत्त्रि पूर्व्वोपपन्नायाः कुरुष्व वचनं मम ।
भर्त्ता य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः । एनं मह्यं प्रयच्छ त्वं मदीयं त्वं गृहाण च । १३०
व्यत्यासं वृक्षयोश्चैव करवाव शुचिस्मिते । यदि प्रमाणं वचनं मम मातुरनिन्दिते ।
त्वमपत्यं विशिष्टं हि सर्व्वं इच्छत्यनाविलं । व्यक्तं भगवता चात्र कृतमेवं भविष्यति ।
ततो मे त्वच्चरौ भावः पादपे च सुमध्यमे । कथं विशिष्टो भ्राता मे भवेदित्येव चिन्तय ।
तथा च कृतवत्यौ ते माता सत्यवती च सा । अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ।
दृष्ट्वा गर्भमनुप्राप्तं भार्य्यां स च महानृषिः । उवाच तां सत्यवतीं दुर्म्मना भृगुसत्तम । १३५
व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति । व्यत्यासः पादपे चापि सुव्यक्तं ते कृतः शुभे ।
मयाहि विश्वं यत् ब्रह्म त्वच्चरौ संनिवेशितं । क्षत्त्रवीर्य्यञ्च सकलं चरौ तस्या निवेशितं ।
त्रैलोक्यविख्यातगुणं त्वं विप्रं जनयिष्यसि । सा च क्षत्त्रं विशिष्टं वै तत एतत्कृतं मया ।
व्यत्यासस्तु कृतो यस्मात्त्वया मात्रा च ते शुभे । तस्मात् सा ब्राह्मणश्रेष्ठं माता ते जनयिष्यति ।
क्षत्त्रियन्तूग्रकर्म्माणं त्वं भद्रे जनयिष्यसि । न हि ते तत्कृतं साधु मातृस्नेहेन भाविनि । १४०
सा श्रुत्वा शोकसन्तप्ता पपात वरवर्णिनी । भूमौ सत्यवती राजंश्छिन्नेव रुचिरा लता ।
प्रतिलभ्य च सा संज्ञां शिरसा प्रणिपत्य च । उवाच भार्य्या भर्त्तारं गाधेयी भार्गवर्षभं ।
प्रसादयन्त्यां भार्य्यायां मयि ब्रह्मविदाम्वर । प्रसादं कुरु विप्रर्षे न मे स्यात्क्षत्त्रियः सुतः ।
कामं ममोग्रकर्म्मा वै पौत्त्रो भवितुमर्हति । न तु मे स्यात्सुतो ब्रह्मन्नेष मे दीयतां वरः ।
एवमस्त्विति होवाच स्वां भार्य्यां सुमहातपाः । ततः सा जनयामास जमदग्निं सुतं शुभं । १४५
विश्वामित्रञ्चाजनयद्गाधिभार्य्या यशस्विनी । ऋषेः प्रसादाद्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनं ।
ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः । क्षत्त्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ।
तस्य पुत्त्रा महात्मानो ब्रह्मवंशविवर्द्धनाः । तपस्विनो ब्रह्मविदो गोत्रकर्त्तार एव च ।
मधुच्छन्दश्च भगवान्देवरातश्च वीर्य्यवान् । अक्षीणश्च शकुन्तश्च वभ्रुः कालपथस्तथा ।
याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः । उलूकोऽथ मुद्गलश्च तथर्षिः सैन्धवायनः । १५०

वल्गुजङ्घश्च भगवान् गालवश्च महानृषिः । ऋषिर्वज्रस्तथा ख्यातः सालङ्कायन एव च ।
लीलाढ्यो नारदश्चैव तथा कूर्चामुखः स्मृतः । वादुलिर्मुसलश्चैव वक्षोग्रीवस्तथैव च ।
आङ्घ्रिको नैकदृक् चैव शिलायूपः शितः शुचिः । चक्रको मारुतन्तव्यो वातघ्नोऽथाश्वलायनः ।
श्यामायनोऽथ गार्ग्यश्च जाबालिः सुश्रुतस्तथा । कारीषिरथ संश्रुत्यः परपौरवतन्तवः ।
महानृषिश्च कपिलस्तथर्षिस्ताडकायनः । तथैव चोपगहनस्तथर्षिश्चासुरायणिः । ११५
मार्गमर्षिर्हिरण्याक्षो जङ्घारिर्बाभ्रवायणिः । भूतिर्विभूतिः सूतश्च सुरकृत्तु तथैव हि ।
अरालिर्नाचिकश्चैव चाम्पेयोज्जयनौ तथा । नवतन्तुर्वकनखः शयनो यतिरेव च ।
अम्भोरुहश्चामत्स्याशी शिरीषी चाथ गार्द्दभिः । उज्जयोनिरदापेक्षी नारदी च महानृषी ।
विश्वामित्रात्मजाः सर्व्वे मुनयो ब्रह्मवादिनः । तथैव क्षत्त्रियो राजन् विश्वामित्रो महातपाः ।
ऋचीकेनाहितं ब्रह्म परमेतद्युधिष्ठिर । एतत्ते सर्व्वमाख्यातं तत्त्वेन भरतर्षभ । १२०
विश्वामित्रस्य वै जन्म सोमसूर्य्याग्नितेजसः । यत्र यत्र च सन्देहो भूयस्ते राजसत्तम ।
तत्र तत्र च मां ब्रूहि छेत्तास्मि तव संशयान् ।

इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि विश्वामित्रोपाख्याने चतुर्थोऽध्यायः ॥ ४ ॥

॥ युधिष्ठिर उवाच ॥ आनृशंस्यस्य धर्म्मस्य गुणान् भक्तजनस्य च । श्रोतुमिच्छामि धर्म्मज्ञ तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । वासवस्य च संवादं शुकस्य च महात्मनः ।
विषये काशिराजस्य ग्रामान्निष्क्राम्य लुब्धकः । सविषं काण्डमादाय मृगयामास वै मृगं । १२५
तत्र चामिषलुब्धेन लुब्धकेन महावने । अविदूरे मृगान् दृष्ट्वा बाणः प्रतिसमाहितः ।
तेन दुर्व्वारितास्त्रेण निमित्तचपलेषुणा । महान् वनतरुस्तत्र विद्धो मृगजिघांसया ।
स तीक्ष्णविषदिग्धेन शरेणातिबलात्कृतः । उत्सृज्य फलपत्राणि पादपः शोषमागतः ।
तस्मिन् वृक्षे तथाभूते कोटरेषु चिरोषितः । न जहाति शुको वासं तस्य भक्त्या वनस्पतेः ।
निष्प्रचारो निराहारो ग्लानः शिथिलवागपि । कृतज्ञः सह वृक्षेण धर्म्मात्मा सोऽप्यशुष्यत । १३०
तमुदारं महासत्त्वमतिमानुषचेष्टितं । समदुःखसुखं दृष्ट्वा विस्मितः पाकशासनः ।
ततश्चिन्तामुपगतः शक्रः कथमयं द्विजः । तिर्य्यग्योनावसम्भाव्यमानृशंस्यं समवस्थितः ।
अथ वा नात्र चित्रं हि अभवद्वासवस्य तु । प्राणिनामपि सर्व्वेषां सर्व्वं सर्व्वत्र दृश्यते ।
ततो ब्राह्मणवेशेन मानुषं रूपमास्थितः । अवतीर्य्य महीं शक्रस्तं पक्षिणमुवाच ह ।
शुक भोः पक्षिणां श्रेष्ठ दाक्षेयी सुप्रजास्त्वया । पृच्छे त्वां शुकमेनं त्वं कस्मान्न त्यजसि द्रुमं । १३५
अथ पृष्टः शुकः प्राह मूर्द्ध्ना समभिवाद्य तं । स्वागतं देवराज त्वं विज्ञातस्तपसा मया ।
ततो दशशताक्षेण साधु साध्विति भाषिते । अहो विज्ञानमित्येवं मनसा पूजितस्ततः ।
तमेवं शुभकर्म्माणं शुकं परमधार्म्मिकं । विजानन्नपि तां प्रीतिं पप्रच्छ बलसूदनः ।
निष्पत्रमफलं शुष्कमशरण्यं पतत्रिणां । किमर्थं सेवसे वृक्षं यदा महदिदं वनं ।

अन्येऽपि बहवो वृक्षाः पत्रसञ्छन्नकोटराः । शुभाः पर्य्याप्तसञ्चारा विद्यन्तेऽस्मिन् महावने । २८०
गतायुषमसामर्थ्यं क्षीणसारं हतश्रियं । विमृश्य प्रज्ञया धीर जहीमं स्थविरं द्रुमं ।
॥ भीष्म उवाच ॥ तदुपश्रुत्य धर्म्मात्मा शुकः शक्रेण भाषितं । सुदीर्घमभिनिःश्वस्य दीनो वाक्यमुवाच ह ।
अनतिक्रमणीयानि दैवतानि शचीपते । यत्राभवत्तत्र प्रश्नस्तन्निबोध सुरोत्तम ।
अस्मिन्नहं द्रुमे जातः साधुभिश्च गुणैर्युतः । बालभावेन सङ्गुप्तः शत्रुभिश्च न धर्षितः ।
किमनुक्रोश्य वैफल्यमुत्पादयसि मेऽनघ । आनृशंस्याभियुक्तस्य भक्तस्यानन्यगस्य च । २८५
अनुक्रोशो हि साधूनां महद्धर्म्मस्य लक्षणं । अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति ।
त्वमेव दैवतैः सर्व्वैः पृच्छ्यसे धर्म्मसंशयान् । अतस्त्वं देवदेवानामाधिपत्ये प्रतिष्ठितः ।
नार्हसे मां सहस्राक्ष द्रुमं त्याजयितुं चिरात् । समर्थमुपजीव्येमं त्यजेयं कथमद्य वै ।
तस्य वाक्येन सौम्येन हर्षितः पाकशासनः । शुकं प्रोवाच धर्म्मात्मा आनृशंस्येन तोषितः ।
वरं वृणीष्वेति तदा स च वव्रे वरं शुकः । आनृशंस्यपरो नित्यं तस्य वृक्षस्य सम्भवं । २९०
विदित्वा च दृढां भक्तिं तां शुके शीलसम्पदं । प्रीतः क्षिप्रमथो वृक्षममृतेनावसिक्तवान् ।
ततः फलानि पत्राणि शाखाश्चापि मनोहराः । शुकस्य दृढभक्तित्वात् श्रीमत्तां प्राप स द्रुमः ।
शुकश्च कर्म्मणा तेन आनृशंस्येन तेन वै । आयुषोऽन्ते महाराज प्राप शक्रसलोकतां ।
एवमेव मनुष्येन्द्र भक्तिमन्तं समाश्रितः । सर्व्वार्थसिद्धिं लभते शुकं प्राप्य यथा द्रुमः ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि शुकवासवसंवादे पञ्चमोऽध्यायः ॥ ५ ॥
॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्व्वशास्त्रभृताम्वर । दैवे पुरुषकारे च किंस्विच्छ्रेष्ठतरं भवेत् । २९५
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । वशिष्ठस्य च संवादं ब्रह्मणश्च युधिष्ठिर ।
दैवमानुषयोः किंस्वित्कर्म्मणोः श्रेष्ठ उच्यते । पुरा वसिष्ठो भगवान् पितामहमपृच्छत ।
ततः पद्मोद्भवो राजन् देवदेवः पितामहः । उवाच मधुरं वाक्यमर्थवद्धेतुभूषितं ।
॥ ब्रह्मोवाच ॥ नावीजं जायते किञ्चिन्न वीजेन विना फलं । वीजाद्वीजं प्रभवति वीजादेव फलं स्मृतं ।
यादृशं वपते वीजं क्षेत्रमासाद्य कर्षकः । सुकृते दुष्कृते वापि तादृशं दृश्यते फलं । ३००
यथा वीजं विना क्षेत्रमुप्तं भवति निष्फलं । तथा पुरुषकारेण विना दैवं न सिध्यति ।
क्षेत्रं पुरुषकारस्तु दैवं वीजमुदाहृतं । क्षेत्रवीजसमायोगात्ततः सस्यं समृध्यते
कर्म्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः । प्रत्यक्षं दृश्यते लोके कृतस्यापकृतस्य च ।
शुभेन कर्म्मणा सौख्यं दुःखं पापेन कर्म्मणा । कृतं फलति सर्व्वत्र नाकृतं भुज्यते क्वचित् ।
कृती सर्व्वत्र लभते प्रतिष्ठां भाग्यसंयुतां । अकृती लभते भ्रष्टः क्षते क्षारावसेचनं । ३०५
तपसा रूपसौभाग्यं रत्नानि विविधानि च । प्राप्यते कर्म्मणा सर्व्वं न दैवादकृतात्मना ।
तथा स्वर्गश्च भोगाश्च निष्ठा या च मनीषिता । सर्व्वं पुरुषकारेण कृतेनेहोपलभ्यते ।
ज्योतींषि त्रिदशा नागा यक्षाश्चन्द्रार्कमारुताः । सर्व्वे पुरुषकारेण मानुष्याद्देवतां गताः ।

अर्थो वा मित्रवर्गो वा ऐश्वर्यं वा कुलान्वितं। श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्मभिः।
शौचेन लभते विप्रः क्षत्रियो विक्रमेण तु।वैश्यः पुरुषकारेण शूद्रः शुश्रूषया श्रियं। २१०
नादातारं भजन्त्यर्था न क्लीबं नातिनिष्क्रियं। नाकर्मशीलं नाशूरं तथा नैवातपस्विनं।
येन लोकास्त्रय. सृष्टा दैत्याः सर्वाश्च देवताः। स एष भगवान् विष्णुः समुद्रे तप्यते तप.।
स्वं चेत्कर्मफलं न स्यात्सर्वमेवाफलं भवेत्। लोको दैवं समालम्ब्य उदासीनो भवेन्नु।
अकृत्वा मानुषं कर्म यो दैवमनुवर्त्तते। वृथा श्राम्यति सम्प्राप्य पतिं क्लीवमिवाङ्गना।
न तथा मानुषे लोके भयमस्ति शुभाशुभे। यथा त्रिदशलोकेषु भयमल्पेन जायते। २११
कृत पुरुषकारस्तु दैवमेवानुवर्त्तते। न दैवमकृते किञ्चित्कस्यचिद्दातुमर्हति।
यथा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि। कथं कर्म विना दैवं स्थास्यति स्थापयिष्यते।
न दैवतानि लोकेऽस्मिन् व्यापारं यान्ति कस्यचित्। व्यासङ्गञ्जनयन्त्युग्रमात्माभिभवशङ्कया।
ऋषीणां देवतानाञ्च सदा भवति विग्रहः। कस्य वाचा ह्यदैवं स्याद्यतो दैवं प्रवर्त्तते।
कथं तस्य समुत्पत्तिर्यतो दैवं प्रवर्त्तते। एवं त्रिदशलोकेऽपि प्राप्यन्ते बहवो गुणाः। २१२
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः। आत्मैव ह्यात्मनः साक्षी कृतस्याप्यकृतस्य च।
कृतञ्चाप्यकृतं किञ्चित्कृते कर्मणि सिध्यति। सुकृतं दुष्कृतं कर्म न यथार्थं प्रपद्यते।
देवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते। पुण्यशीलं नरं प्राप्य किं दैवं प्रकरिष्यति।
पुरा ययातिर्विभ्रष्टश्च्यावितः पतितः क्षितौ। पुनरारोपित. स्वर्गं दौहित्रैः पुण्यकर्मभिः।
पुरूरवाश्च राजर्षिर्द्विजैरभिहित. पुरा। ऐल इत्यभिविख्यातः स्वर्गं प्राप्तो महीपतिः। २१३
अश्वमेधादिभिर्यज्ञैः सत्कृतः कोशलाधिपः। महर्षिशापात्सौदासः पुरुषादत्वमागत।
अश्वत्थामा च रामश्च मुनिपुत्रौ धनुर्द्धरौ। न गच्छतः स्वर्गलोकं सुकृतेनेह कर्मणा।
वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासव। मिथ्याभिधानेनैकेन रसातलतलङ्गतः।
बलिर्वैरोचनिर्बद्धो धर्मपाशेन दैवत.। विष्णो. पुरुषकारेण पातालशयनः कृतः।
शक्रस्योद्दम्य चरणं प्रस्थितो जनमेजयः। द्विजस्त्रीणां वधं कृत्वा किं दैवेन नवारितः। २१४
अज्ञानाद्ब्राह्मणं हत्वा स्पृष्टो बालवधेन च। वैशम्पायनविप्रर्षिः किं दैवेन मवारित.।
गोप्रदानेन मिथ्या च ब्राह्मणेभ्यो महामखे। पुरा नृगश्च राजर्षि. कृकलासत्वमागत।
धुन्धुमारश्च राजर्षि. सत्रेष्वेव जराङ्गतः। प्रीतिदायं परित्यज्य सुष्वाप स गिरिव्रजे।
पाण्डवानां हृतं राज्यं धार्त्तराष्ट्रैर्महाबलै.। पुन. प्रत्याहृतञ्चैव न दैवाद्भुजसंश्रयात्।
तपोनियमसंयुक्ता मुनयः संशितव्रताः। किन्ते दैवबलाच्छापमुत्सृजन्ते न कर्मणा। २१५
पापमुत्सृजते लोके सर्वं प्राप्य सुदुर्लभं। लोभमोहसमापन्नं न दैवं त्रायते नरं।
यथाग्निः पवनोद्धूत. सूक्ष्मोऽपि सुमहान् भवेत्। तथा कर्मसमायुक्तं दैवं साधु विवर्द्धते।
यथा तैलक्षयाद्दीप. प्रह्रासमुपगच्छति। तथा कर्मक्षयाद्दैवं प्रह्रासमुपगच्छति।

विपुलमपि धनौघं प्राप्य भोगान् स्त्रियो वा पुरुष इह न शक्तः कर्म्महीनो हि भोक्तुं । सुनिहितमपि चार्थं दैवतै रक्ष्यमाणं पुरुष इह महात्मा प्राप्नुते नित्ययुक्तः ।

व्ययगुणमपि साधुं कर्म्मणा संश्रयन्ते भवति मनुजलोकाद्देवलोको विशिष्टः । बहुतरसुसमृद्धा मानुषाणां गृहाणि पितृवन भवनाभं दृश्यते चामराणां । ३१०

न च फलति विकर्म्मा जीवलोके न दैवं व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वं । गुरुमिव कृतमग्र्यं कर्म्म संयाति दैवं नयति पुरुषकारः सञ्चितस्तत्र तत्र ।

एतत्ते सर्व्वमाख्यातं मया वै मुनिसत्तम । फलं पुरुषकारस्य सदा सन्दृश्य तत्त्वतः ।
अभ्युत्थानेन दैवस्य समारब्धेन कर्म्मणा । विधिना कर्म्मणा चैव स्वर्गमार्गमवाप्नुयात् ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि दैवपुरुषकारे षष्ठोऽध्यायः ॥ ६ ॥
॥ युधिष्ठिर उवाच ॥ कर्म्मणाञ्च समस्तानां शुभानां भरतर्षभ । फलानि भरतश्रेष्ठ प्रब्रूहि परिपृच्छतः ।
॥ भीष्म उवाच ॥ हन्त ते कथयिष्यामि यन्मां पृच्छसि भारत । रहस्यं यदृषीणान्तु तच्छृणुष्व युधिष्ठिर । ३१५
या गतिः प्राप्यते येन प्रेत्यभावे चिरेप्सिता । येन येन शरीरेण यद्यत्कर्म्म करोति यः ।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते । यस्यां यस्यामवस्थायां यत्करोति शुभाशुभं ।
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि । न नश्यति कृतं कर्म्म सदा पञ्चेन्द्रियैरिह ।
ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा तथैव च । चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृतां ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः । यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते । ३२०
श्रान्तायादृष्टपूर्व्वाय तस्य पुण्यफलं महत् । स्थण्डिलेषु शयानानां गृहाणि शयनानि च ।
चीरवल्कलसंवीते वासांस्याभरणानि च । वाहनानि च यानानि योगात्मनि तपोधने ।
अग्नीनुपशयानस्य राज्ञः पौरुषमेव च । रसानां प्रतिसंहारे सौभाग्यमनुगच्छति ।
आमिषप्रतिसंहारे पशून् पुत्रांश्च विन्दति । अवाक्छिरास्तु यो लम्बेदुदवासञ्च यो वसेत् ।
सततञ्चैकशायी यः स लभेतेप्सितां गतिं । पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयं । ३२५
दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः । वीरासनं वीरशय्यां वीरस्थानमुपागतः ।
अक्षयास्तस्य वै लोकाः सर्व्वकामगमास्तथा । धनं लभेत दानेन मौनेनाज्ञां विशाम्पते ।
उपभोगांश्च तपसा ब्रह्मचर्य्येण जीवितं । रूपमैश्वर्य्यमारोग्यमहिंसाफलमश्नुते ।
फलमूलाशिनो राज्यं स्वर्गः पर्णाशिना भवेत् । प्रायोपवेशिनो राजन्सर्व्वत्र सुखमश्नुते ।
गवाढ्यः शाकदीक्षायां स्वर्गगामी तृणाशनः । स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् । ३३०
स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमं । सलिलाशी भवेद्यस्तु सदाग्निः संस्कृतो द्विज ।
मनुं साधयते राज्यं नाकपृष्ठमनाशके । उपवासञ्च दीक्षायां अभिषेकञ्च पार्थिव ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते । अधीत्य सर्व्ववेदान्वै सद्यो दुःखाद्विमुच्यते ।
मानसं हि चरन् धर्म्मं स्वर्गलोकमुपाश्नुते । या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः ।

योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजत सुखं । यथा धेनुसहस्रेषु वत्सो विन्दति मातरं । १६५
एवं पूर्व्वकृतं कर्म्म कर्त्तारमनुगच्छति । अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्त्तन्ते तथा कर्म्म पुरा कृतं । जीर्य्यन्ति जीर्य्यत केशा दन्ता जीर्य्यन्ति जीर्य्यत ।
चक्षु श्रोत्रे च जीर्य्येते तृष्णैका न तु जीर्य्यते । येन प्रीणाति पितरं तेन प्रीत प्रजापति ।
प्रीणाति मातरं येन पृथिवी तेन पूजिता । येन प्रीणात्युपाध्यायं तेन स्यात् ब्रह्म पूजितं ।
सर्व्वे तस्यादृता धर्म्मा यस्यैते त्रय आदृता । अनादृतास्तु यस्यैते सर्व्वास्तस्याफला क्रिया । १७०
॥ वैशम्पायन उवाच ॥ भीष्मस्यैतद्वच श्रुत्वा विस्मिता कुरुपुङ्गवा । आसन् प्रहृष्टमनस प्रीतिमन्तोऽभवंस्तदा ।
यन्मन्त्रे भवति वृथोपयुज्यमाने यत्सोमे भवति वृथाभिषूयमाणे । यच्चाग्नौ भवति वृथाभिहूयमाने तत्सर्व्वं भवति वृथा
भिधीयमाने ।
इत्येतदृषिणा प्रोक्तमुक्तवानस्मि यद्विभो । शुभाशुभफलप्राप्तौ किमत श्रोतुमिच्छसि ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि फलिकोपाख्याने सप्तमोऽध्याय ॥ ७ ॥
॥ युधिष्ठिर उवाच ॥ के पूज्या के नमस्कार्य्या कान्नमस्यसि भारत । एतन्मे सर्व्वमाचक्ष्व येभ्य स्पृहयसे नृप ।
उत्तमापद्गतस्यापि यत्र ते वर्त्तते मन । मनुष्यलोके सर्व्वेऽस्मिन् यदमुत्रेह चाच्युत । १७५
॥ भीष्म उवाच ॥ स्पृहयामि द्विजातिभ्यो येषां ब्रह्म परं धनं । येषां स्वप्रत्यय स्वर्गस्तप स्वाध्यायसाधनं ।
येषां बालाश्च वृद्धाश्च पितृपैतामहीं धुरं । उद्वहन्ति न सीदन्ति तेभ्यो वै स्पृहयाम्यहं ।
विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणां । श्रुतवृत्तोपपन्नानां सदाक्षरविदां सतां ।
संसत्सु वदतां तात हंसानामिव संघश । मङ्गल्यरूपा रुचिरा दिव्यजीमूतनिस्वना ।
सम्यगुच्चारिता वाच श्रूयन्ते हि युधिष्ठिर । शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहा । १८०
ये चापि तेषां श्रोतार सदा सदसि सम्मता । विज्ञानगुणसम्पन्नास्तेभ्यश्च स्पृहयाम्यहं ।
सुसंस्कृतानि प्रयत शुचीनि गुणवन्ति च । ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर ।
ये चापि सततं राजंस्तेभ्यश्च स्पृहयाम्यहं । शक्यं ह्येवाहवे योद्धुं न दातुमनसूयितं ।
शूरा वीराश्च शतश सन्ति लोके युधिष्ठिर । तेषां सङ्ख्यायमानानां दानशूरो विशिष्यते ।
धन्य स्यां यद्यहं भूय सौम्य ब्राह्मणकोऽपि वा । कुले जातो धर्म्मगतिस्तपोविद्यापरायण । १८५
न मे त्वत्त प्रियतरो लोकेऽस्मिन् पाण्डुनन्दन । त्वत्तश्चापि प्रियतरा ब्राह्मणा भरतर्षभ ।
यथा मम प्रियतमास्त्वत्तो विप्रा कुरूत्तम । तेन सत्येन गच्छेय लोकान् यत्र स शान्तनु ।
न मे पिता प्रियतरो ब्राह्मणेभ्यस्तथाभवत् । न मे पितु पिता वापि ये चान्येऽपि सुहृज्जना ।
न हि मे वृजिनं किञ्चिद्विद्यते ब्राह्मणेष्विह । अणु वा यदि वा स्थूलं विद्यते साधुकर्म्मसु ।
कर्म्मणा मनसा वापि वाचा वापि परन्तप । यन्मे कृतं ब्राह्मणेभ्यस्तेनाद्य न तपाम्यहं । १९०
ब्रह्मण्य इति मामाहुस्तया वाचास्मि तोषित । एतदेव पवित्रेभ्य सर्व्वेभ्य परमं स्मृतं ।
पश्यामि लोकानमलान् शुचीन् ब्राह्मणयायिन । तेषु मे तात गन्तास्म्यहमद्य च चिराय च ।

यथा भर्त्ताश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर । स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः ।
क्षत्रियः शतवर्षी च दशवर्षी द्विजोत्तमः । पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणो गुरुः ।
नारी तु पत्यभावे वै देवरं कुरुते पतिं । पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिं । ३९५
पुत्त्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते । अग्निवच्चोपचर्य्या वै ब्राह्मणाः कुरुसत्तम ।
ऋजून्सतः सत्यशीलान्सर्व्वभूतहिते रतान् । आशीविषानिव क्रुद्धान् द्विजान् परिचरेत्सदा ।
तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर । उभे चैते परित्यज्ये तेजश्चैव तपस्तथा ।
व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते । हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः ।
भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात् । कुर्य्यादुभयतः शेषं दत्तशेषं न शेषयेत् । ४००
दण्डपाणिर्य्यथा गोषु पालो नित्यं हि रक्षयेत् । ब्राह्मणान् ब्रह्म च तदा क्षत्रियः परिपालयेत् ।
पितेव पुत्त्रान् रक्षेथा ब्राह्मणान् धर्म्मचेतसः । गृहे चैषामवेक्षेथाः किञ्चिदस्तीति जीवनं ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि भीष्मनिर्य्येऽष्टमोऽध्यायः ॥ ८ ॥
॥ युधिष्ठिर उवाच ॥ ब्राह्मणानान्तु ये लोकाः प्रतिश्रुत्य पितामह । न प्रयच्छन्ति मोहात्ते के भवन्ति महाद्युते ।
एतन्मे तत्त्वतो ब्रूहि धर्म्मं धर्म्मभृतांवर । प्रतिश्रुत्य दुरात्मानो न प्रयच्छन्ति ये नराः ।
॥ भीष्म उवाच ॥ यो न दद्यात्प्रतिश्रुत्य स्वल्पं वा यदि वा बहु । आशास्तस्य हताः सर्व्वाः क्लीवस्येव प्रजाफलं । ४०५
यां रात्रिं जायते जीवो यां रात्रिञ्च विनश्यति । एतस्मिन्नन्तरे यद्यत्सुकृतं तस्य भारत ।
यच्च तस्य कृतं किञ्चिद्दत्तं वा भरतर्षभ । तपस्तप्तमथो वापि सर्व्वं तस्योपहन्यते ।
अथैतद्वचनं प्राहुर्धर्म्मशास्त्रविदो जनाः । निशम्य भरतश्रेष्ठ बुद्ध्या परमयुक्तया ।
अपिचोदाहरन्तीमं धर्म्मशास्त्रविदो जनाः । अश्वानां श्यामकर्णानां सहस्रेण समुच्यते ।
अत्रैवोदाहरन्तीममितिहासं पुरातनं । शृगालस्य च संवादं वानरस्य च भारत । ४१०
तौ सखायौ पुरा ह्यास्तां मानुषत्वे परन्तप । अन्यां योनिं समापन्नौ शार्गालीं वानरीं तथा ।
ततः परासून् खादन्तं शृगालं वानरोऽब्रवीत् । श्मशानमध्ये संप्रेक्ष्य पूर्व्वजातिमनुस्मरन् ।
किं त्वया पापकं पूर्व्वं कृतं कर्म्म सुदारुणं । यस्त्वं श्मशाने मृतकान् पूतिकानत्सि कुत्सितान् ।
एवमुक्तः प्रत्युवाच शृगालो वानरं तदा । श्मशानमध्ये संप्रेक्ष्य पूर्व्वजातिमनुस्मरन् ।
ब्राह्मणस्य प्रतिश्रुत्य न मया तदुपाहृतं । तत्कृते पापकीं योनिमापन्नोऽस्मि प्लवङ्गम । ४१५
तस्मादेवंविधं भक्ष्यं भक्षयामि बुभुक्षितः ।
॥ भीष्म उवाच ॥ शृगालो वानरं प्राह पुनरेव नरोत्तम । किं त्वया पापकं कर्म्म कृतं येनासि वानरः ।
॥ वानर उवाच ॥ सदा चाहं फलाहारो ब्राह्मणानां विहङ्गम । तस्मान्न ब्राह्मणस्वन्तु हर्त्तव्यं विदुषा सदा ।
समं विवादो मोक्तव्यो दातव्यञ्च प्रतिश्रुतं ।
॥ भीष्म उवाच ॥ इत्येतद्ब्रुवतो राजन् ब्राह्मणस्य मया श्रुतं । कथां कथयतः पुण्यां धर्म्मज्ञस्य पुरातनीं । ४२०
श्रुतश्चापि मया भूयः कृष्णस्यापि विशाम्पते । कथां कथयतः पूर्व्वं ब्राह्मणं प्रति पाण्डव ।

न हर्त्तव्यं विप्रधनं चन्तव्यं तेषु नित्यश । बालाश्च नावमन्तव्या दरिद्रा कृपणा अपि ।
एवमेव च मां नित्यं ब्राह्मणा सन्दिशन्ति वै । प्रतिश्रुत्य भवेद्देयं नाशा कार्य्या द्विजोत्तमे ।
ब्राह्मणो ह्याशया पूर्व्वं कृतया पृथिवीपते । सुसमिद्धो यथा दीप्त पावकस्तद्विध स्मृत ।
यं निरीक्षेत सक्रुद्ध आशया पूर्व्वजातया । प्रदहेच्च हितं राजन् कक्षमेवाक्षयभुग्यथा ।
स एव हि यदा तुष्टो वचसा प्रतिनन्दति । भवत्यगदसङ्काशो विषये तस्य भारत
पुत्त्रान् पौत्त्रान् पशूंश्चैव बान्धवान् सचिवांस्तथा । पुरञ्जनपदञ्चैव शान्तिरिष्टेव पोषयेत् ।
एतद्धि परमन्तेजो ब्राह्मणस्येह दृश्यते । सहस्रकिरणस्येह सवितुर्द्धरणीतले ।
तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर । यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम ।
ब्राह्मणस्य हि दत्तेन ध्रुव स्वर्गो ह्यनुत्तम । शक्य प्राप्तुं विशेषेण दानं हि महती क्रिया ।
इतो दत्तेन जीवन्ति देवता. पितरस्तथा । तस्माद्दानानि देयानि ब्राह्मणेभ्यो विजानता ।
महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते । वेलायां न तु कस्याञ्चिद्गच्छेद्विप्रो ह्यपूजित ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि शृगालवानरसंवादे नवमोऽध्याय. ॥ ९ ॥
॥ युधिष्ठिर उवाच ॥ मित्त्रसौहार्द्दयोगेन उपदेशं करोति य । जात्याधमस्य राजर्षे दोषस्तस्य भवेन्न वा ।
एतदिच्छामि तत्त्वेन व्याख्यातं वै पितामह । सूक्ष्मा गतिर्हि धर्म्मस्य यत्र मुह्यन्ति मानवा: ।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि शृणु राजन् यथाक्रमं । ऋषीणां वदतां पूर्व्वं श्रुतमासीद्यथा पुरा ।
उपदेशो न कर्त्तव्यो जातिहीनस्य वै क्वचित् । उपदेशे महान् दोष उपाध्यायस्य भाष्यते ।
निदर्शनमिदं राजन् शृणु मे भरतर्षभ । दुरुक्तवचनो राजन्यथा पूर्व्वं युधिष्ठिर ।
ब्राह्माश्रमपदे वृत्तं पार्श्वे हिमवत शुभे । तत्राश्रमपदं पुण्य नानावृक्षगणायुतं ।
नानागुल्मलताकीर्णं मृगद्विजनिषेवितं । सिद्धचारणसंयुक्तं रम्य पुष्पितकाननं ।
व्रतिभिर्बहुभि कीर्णं तापसैरुपसेवितं । ब्राह्मणैश्च महाभागै सूर्य्यज्वलनसन्निभै ।
नियमव्रतसम्पन्नै समाकीर्णं तपस्विभि. । दीक्षितैर्भरतश्रेष्ठ यताहारै कृतात्मभि ।
तपोऽध्ययनघोषैश्च नादितं भरतर्षभ । वालखिल्यैश्च बहुभिर्यतिभिश्च निषेवितं ।
तत्र कश्चित्समुत्साहं कृत्वा शूद्रो दयान्वित । आगतो ह्याश्रमपदं पूजितश्च तपस्विभि ।
तांस्तु दृष्ट्वा मुनिगणान् देवकल्पान् महौजस । विविधा: वहतो दीक्षा सम्प्रहृष्यत भारत ।
अथास्य बुद्धिरभवत्तपस्ये भरतर्षभ । ततोऽब्रवीत् कुलपतिं पादौ सङ्गृह्य भारत ।
भवत्प्रसादादिच्छामि धर्म्मं वक्तुं द्विजर्षभ । तन्मां त्वं भगवन् वक्तुं प्रव्राजयितुमर्हसि ।
वर्णावरोहं भगवञ्छूद्रो जात्यास्मि सत्तम । शुश्रूषां कर्त्तुमिच्छामि प्रपन्नाय प्रसीद मे ।
॥ कुलपतिरुवाच ॥ न शक्यमिह शूद्रेण लिङ्गमाश्रित्य वर्त्तितुं । आस्यतां यदि ते बुद्धि. शुश्रूषानिरतो भव ।
शुश्रूषया परान् लोकानवाप्स्यसि न संशय ।
॥ भीष्म उवाच ॥ एवमुक्तस्तु मुनिना स शूद्रोऽचिन्तयन्नृप । कथमत्र मया कार्य्यं श्रद्धा धर्म्मे परा च मे ।

विज्ञातमेवं भवतु करिष्ये प्रियमात्मन । गत्वाश्रमपदाद्दूरमुटजं कृतवांस्तु स ।
तत्र वेदीश्च भूमिश्च देवतायतनानि च । निवेश्य भरतश्रेष्ठ नियमस्थोऽभवन्मुनि ।
अभिषेकांश्च नियमान् देवतायतनेषु च । बलिञ्च कृत्वा हुत्वाच देवताश्चाप्यपूजयत् ।
सङ्कल्पनियमोपेत फलाहारो जितेन्द्रिय । नित्य सन्निहिताभिस्तु ओषधीभि फलैस्तथा ।
अतिथीन् पूजयामास यथावत्समुपागतान् । एवं हि सुमहान् कालो व्यत्यक्रामत तस्य वै ।
अथास्य मुनिरागच्छत्सङ्गत्या वै तमाश्रमं । सम्पूज्य स्वागतेनर्षिं विधिवत्समतोषयत् ।
अनुकूला कथा कृत्वा यथागतमपृच्छत । ऋषि परमतेजस्वी धर्म्मात्मा संशितव्रत ।
एवं सुबहुशस्तस्य शूद्रस्य भरतर्षभ । सोऽगच्छदाश्रममृषि शूद्रन्द्रष्टुं नरर्षभ ।
अथ त तापसं शूद्र सोऽब्रवीद्भरतर्षभ । पितृकार्य्यं करिष्यामि तत्र मेऽनुग्रहं कुरु ।
वाढमित्येव त विप्र उवाच भरतर्षभ । शुचिर्भूत्वा स शूद्रस्तु तस्यर्षे पाद्यमानयत् ।
अथ दर्भांश्च वन्याश्च ओषधीर्भरतर्षभ । पवित्रमासनञ्चैव वृषीञ्च समुपानयत् ।
अथ दक्षिणमावृत्य वृषीञ्चरमशीर्षिकी । कृतामन्यायतो दृष्ट्वा त शूद्रमृषिरब्रवीत् ।
कुरुष्वैतां पूर्व्वशीर्षां भवांश्चोदङ्मुख शुचि । स च तत्कृतवान् शूद्र सर्व्वं यदृषिरब्रवीत् ।
यथोपदिष्ट मेधावी दर्भार्घ्यादि यथातथ । हव्यकव्यविधि कृत्स्नमुक्तं तेन तपस्विना ।
ऋषेर्णां पितृकार्य्ये च स च धर्म्मपथे स्थित । पितृकार्य्ये कृते चापि विसृष्ट स जगाम ह ।
अथ दीर्घस्य कालस्य स तप्यन् शूद्रतापस । वने पञ्चत्वमगमत्सुकृतेन च तेन वै ।
अजायत महाराजवंशे स च महाद्युति । तथैव स ऋषिस्तात कालधर्म्ममवाप ह ।
पुरोहितकुले विप्र सञ्जातो भरतर्षभ । एवन्तौ तत्र सम्भूतावुभौ शूद्रमुनी तदा ।
क्रमेण वर्द्धितौ चापि विद्यासु कुशलावुभौ । अथर्व्ववेदे वेदे च बभूवर्षि सुनिष्ठित ।
कल्पप्रयोगे चोत्पन्ने ज्योतिषे च परङ्गत । साङ्ख्ये चैव परा प्रीतिस्तस्य चैव व्यवर्द्धत ।
पितर्य्युपरते चापि कृतशौचस्तु पार्थिव । अभिषिक्त प्रकृतिभी राजपुत्त्र स पार्थिव ।
अभिषिक्तेन स ऋषिरभिषिक्त पुरोहित । स तं पुरोधाय सुखमवसद्भरतर्षभ ।
राज्यं शशास धर्म्मेण प्रजाश्च परिपालयन् । पुण्याहवाचने नित्य धर्म्मकार्य्येषु चासकृत् ।
उत्स्मयन् प्राहसच्चापि दृष्ट्वा राजा पुरोहित । एव स बहुशो राजन् पुरोधसमुपाहसत् ।
लक्षयित्वा पुरोधास्तु बहुशस्तं नराधिप । उत्स्मयन्तञ्च सततं दृष्ट्वाऽसौ मन्युमाविशत् ।
अथ शून्ये पुरोधास्तु सह राज्ञा समागत । कथाभिरनुकूलाभी राजानञ्चाभ्यरामयत ।
ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ । वरमिच्छाम्यहं त्वेकं त्वया दत्त महाद्युते ।
॥ राजोवाच ॥ वराणां ते शतं दद्यां किमुतैकं द्विजोत्तम । स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ।
॥ पुरोहित उवाच ॥ एकं वै वरमिच्छामि यदि तुष्टोऽसि पार्थिव । प्रतिजानीहि तावत्त्वं सत्य तद्वद नानृत ।
॥ भीष्म उवाच ॥ वाढमित्येव त राजा प्रत्युवाच युधिष्ठिर । यदि ज्ञास्यामि वक्ष्यामि अजानन्तु न संवदे ।

॥ पुरोहित उवाच ॥ पुण्याहवाचने नित्यं धर्म्मकृत्येषु चासकृत् । शान्तिहोमेषु च सदा किं त्वं हससि वीक्ष्य माम् ।
सव्रीडं वै भवति हि मनो मे हसता त्वया । कामया शापितो राजन्नान्यथा वक्तुमर्हसि ।
सुव्यक्तं कारणं ह्यत्र न ते हास्यमकारणम् । कौतूहलं मे सुभृशं तत्त्वेन कथयस्व वै ।
॥ राजोवाच ॥ एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि । अवश्यमेव वक्तव्यं शृणुष्वैकमना द्विज ।
पूर्व्वदेहे यथावृत्तं तन्निबोध द्विजोत्तम । जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे शृणु ।
शूद्रोऽहमभवं पूर्व्वं तपस्वी भृशसंयुतः । ऋषिरुग्रतपास्त्वञ्च तदाऽभूर्द्विजसत्तम ।
प्रीयता हि तदा ब्रह्मन्मयानुग्रहबुद्धिना । पितृकार्य्ये त्वया पूर्व्वमुपदेशः कृतोऽनघ ।
बृष्यां दर्भेषु हव्येषु कव्ये च मुनिसत्तम । एतेन कर्म्मदोषेण पुरोधास्त्वमजायथाः ।
अहं राजा च विप्रेन्द्र पश्य कालस्य पर्य्ययम् । मत्कृतस्योपदेशस्य त्वयावाप्तमिदं फलम् ।
एतस्मात्कारणात् ब्रह्मन् प्रहसे त्वां द्विजोत्तम । न त्वां परिभवन् ब्रह्मन् प्रहसामि गुरुर्भवान् ।
विपर्य्ययेण मे मन्युस्तेन सन्तप्यते मनः । जातिं स्मराम्यहं तुभ्यमतस्त्वां प्रहसामि वै ।
एवं तवोग्रं हि तप उपदेशेन नाशितम् । पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे ।
इतस्त्वमधमामन्यां मा योनिं प्राप्स्यसे द्विज । गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम ।
॥ भीष्म उवाच ॥ ततो विसृष्टो राज्ञा तु विप्रो दानान्यनेकशः । ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामांश्च सर्व्वशः ।
कृच्छ्राणि चीर्त्वा च ततो यथोक्तानि द्विजोत्तमैः । तीर्थानि चापि गत्वा वै दानानि विविधानि च ।
दत्त्वा गाश्चैव विप्रेभ्यः पूतात्माभवदात्मवान् । तमेव चाश्रमं गत्वा चचार विपुलं तपः ।
ततः सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम । सम्मतश्चाभवत्तेषामाश्रमे तन्निवासिनाम् ।
एवं प्राप्तो महत्कृच्छ्रमृषिः स नृपसत्तम । ब्राह्मणेन न वक्तव्यं तस्मादवरवर्णजे ।
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः । एतेषु कथयन् राजन् ब्राह्मणो न प्रदुष्यति ।
तस्मात्सद्भिर्न वक्तव्यं कस्यचित्किञ्चिदग्रतः । सूक्ष्मा गतिर्हि धर्म्मस्य दुर्ज्ञेया ह्यकृतात्मभिः ।
तस्मान्मौनेन मुनयो दीक्षां कुर्व्वन्ति चादृताः । दुरुक्तस्य भयाद्राजन्नाभाषन्ते च किञ्चन ।
धार्म्मिका गुणसम्पन्नाः सत्यार्ज्जवसमन्विताः । दुरुक्तवाचाभिहिताः प्राप्नुवन्ति सुदुष्कृतम् ।
उपदेशो न कर्त्तव्यः कदाचिदपि कस्यचित् । उपदेशाद्धि तत्पापं ब्राह्मणः समवाप्नुयात् ।
विमृश्य तस्मात्प्राज्ञेन वक्तव्यं धर्म्ममिच्छता । सत्यानृतेन हि कृत उपदेशो हिनस्ति हि ।
वक्तव्यमिह पृष्टेन विनिश्चित्य विनिश्चयम् । स चोपदेशः कर्त्तव्यो येन धर्म्ममवाप्नुयात् ।
एतत्ते सर्व्वमाख्यातमुपदेशे कृते मया । महान्क्लेशो हि भवति तस्मान्नोपदिशेदिह ।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि शूद्रमुनिसंवादे दशमोऽध्यायः ॥ १० ॥
॥ युधिष्ठिर उवाच ॥ कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ । श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि यथावृत्तं यथाश्रुतम् । रुक्मिणी देवकीपुत्रसन्निधौ पर्य्यपृच्छत ।
नारायणस्याङ्कगतां ज्वलन्तीं दृष्ट्वा श्रियं पद्मसमानवर्णाम् । कौतूहलाद्विस्मितचारुनेत्रा पप्रच्छ माता मकरध्वजस्य ।

कानीह भूतान्युपसेवसे त्वं सन्तिष्ठसे कानि न सेवसे त्वं। तानि त्रिलोकेश्वरभूतकान्ते तत्त्वेन मे ब्रूहि महर्षिकन्ये। ५१०
एवं तदा श्रीरभिभाष्यमाणा देव्या समक्षं गरुडध्वजस्य। उवाच वाक्यं मधुराभिधानं मनोहरं चन्द्रमुखी प्रसन्ना।
॥ श्रीरुवाच ॥ वसामि नित्यं सुभगे प्रगल्भे दक्षे नरे कर्म्मणि वर्त्तमाने। अक्रोधने देवपरे कृतज्ञे जितेन्द्रिये नित्य
मुदीर्णसत्त्वे।
नाकर्म्मशीले पुरुषे वसामि न नास्तिके साङ्करिके कृतघ्ने। नभिन्नवृत्ते न नृशंसवर्णे न चापि चौरे न गुरुष्वसूये।
ये चाल्पतेजोबलसत्त्वमाना. क्लिश्यन्ति कुप्यन्ति च यत्र तत्र। न चैव तिष्ठामि तथाविधेषु नरेषु सङ्गुप्तमनोरथेषु।
यश्चात्मनि प्रार्थयते न किञ्चिद्यश्च स्वभावोपहतान्तरात्मा। तेष्वल्पसन्तोषपरेषु नित्यं नरेषु नाहं निवसामि सम्यक्। ५१५
स्वधर्म्मशीलेषु च धर्म्मवित्सु वृद्धोपसेवानिरतेषु दान्ते। कृतात्मनि क्षान्तिपरे समर्थे क्षान्तासु दान्तासु तथाबलासु।
सत्यस्वभावार्जवसंयुतासु वसामि देवद्विजपूजिकासु। प्रकीर्णभाण्डामनवेक्ष्यकारिणीं सदा च भर्त्तुः प्रतिकूलवादिनीं।
परस्य वेश्माभिरतामलज्जामेवंविधां स्त्रीं परिवर्ज्जयामि। वसामि नारीषु पतिव्रतासु कल्याणशीलासु विभूषितासु।
सत्यासु नित्यं प्रियदर्शनासु सौभाग्ययुक्तासु गुणान्वितासु। पापामचोक्षामवलेहिनीञ्च व्यपेतधैर्य्यां कलहप्रियाञ्च।
निद्राभिभूतां सततं शयानामेवंविधां तां परिवर्जयामि। यानेषु कन्यासु विभूषणेषु यज्ञेषु मेघेषु च वृष्टिमत्सु। ५२०
वसामि फुल्लासु च पद्मिनीषु नक्षत्रवीथीषु च शारदीषु। गजेषु गोष्ठेषु तथासनेषु सरःसु फुल्लोत्पलपङ्कजेषु।
नदीषु हंसस्वननादितासु क्रौञ्चावघुष्टासु सुशोभितासु। विकीर्णकूलद्रुमराजितासु तपस्विसिद्धद्विजसेवितासु।
वसामि नित्यं सुबहूदकासु सिंहैर्गजैश्चाकुलितोदकासु। मत्ते गजे गोवृषभे नरेन्द्रे सिंहासने सत्पुरुषेषु नित्यं।
यस्मिन् जनो हव्यभुजं जुहोति गोब्राह्मणं चार्च्चति देवताश्च। काले च पुष्पैर्बलयः क्रियन्ते तस्मिन् गृहे नित्यमुपैमि वासं।
स्वाध्यायनित्येषु सदा द्विजेषु क्षात्रे च धर्म्माभिरते सदैव। वैश्ये च कृष्याभिरते वसामि शूद्रे च शुश्रूषणनित्ययुक्ते। ५२५
नारायणे त्वेकमना वसामि सर्व्वेण भावेन शरीरभूता। तस्मिन् हि धर्म्मः सुमहान्निविष्टो ब्रह्मण्यता चात्र तथा प्रियत्वं।
नाहं शरीरेण वसामि देवि नैवं मया शक्यमिहाभिधातुं। भावेन यस्मिन्निवसामि पुंसि स वर्द्धते धर्म्मयशोऽर्थकामैः।
इति श्रीमहाभारते अनुशासनपर्व्वणि आनुशासनिके पर्व्वणि रुक्मिणीश्रीसंवादे एकादशोऽध्यायः॥ ११॥
॥ युधिष्ठिर उवाच॥ स्त्रीपुंसयोः संप्रयोगे स्पर्शः कस्याधिको भवेत्। एतस्मिन् संशये राजन् यथावद्वक्तुमर्हसि।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। भङ्गास्वनेन शक्रस्य यथा वैरमभूत्पुरा।
पुरा भङ्गास्वनो नाम राजर्षिरतिधार्म्मिकः। अपुत्रः पुरुषव्याघ्र पुत्रार्थं यज्ञमाहरत्। ५३०
अग्निष्टुतं स राजर्षिरिन्द्रद्विष्टं महाबलः। प्रायश्चित्तेषु मर्त्यानां पुत्रकामेषु चेष्यते।
इन्द्रो ज्ञात्वा तु तं यज्ञं महाभाग सुरेश्वरः। अन्तरं तस्य राजर्षेरन्विच्छन्नियतात्मनः।
नचैवास्यान्तरं राजन् स ददर्श महात्मनः। कस्यचित्त्वथ कालस्य मृगयाङ्गमवान्नृप।
इदमन्तरमित्येव शक्रो नृपममोहयत्। एकाश्वेन च राजर्षिर्भ्रान्त इन्द्रेण मोहितः।
न दिशोऽविन्दत नृप क्षुत्पिपासार्द्दितस्तदा। इतश्चेतश्च वै धावन् श्रमतृष्णार्द्दितो नृप। ५३५
सरोऽपश्यत् सुरुचिरं पूर्णं परमवारिणा। सोऽवगाह्य सरस्तात पाययामास वाजिनं।
अथ पीतोदकं सोऽश्वं वृक्षे बद्ध्वा नृपोत्तमः। अवगाह्य ततः स्नातस्तत्र स्त्रीत्वमवाप्तवान्।

नृणामिन्द्रियपूर्व्वेण योगेन रमते च य । गतागतिभ्यां यो नेता सर्व्वत्र जगतीश्वर ।
यो गतिर्द्धर्म्मयुक्तानामगति पापकर्म्मणा । चातुर्वर्ण्यस्य प्रभवश्चातुर्होत्रस्य रक्षिता ।
चातुर्विद्यस्य यो वेत्ता चातुराश्रम्यसंश्रय । दिगन्तरो नभो भूमिरापो वायुर्विभावसु ।
चन्द्रसूर्य्ययोर्ज्योतिर्य्योगीश चणदान्तक । य परं श्रूयते ज्योतिर्य परं श्रूयते तम । ११७०
य परं शङ्करपरं य पर परमात्मन । नारायणपरा वेदा नारायणपरा क्रिया ।
नारायणपरो धर्म्मो नारायणपरा गति । नारायणपरं सत्यं नारायणपरं तप ।
नारायणपरो मोक्षो नारायणपरं पर । आदित्यादिश्च यो दिव्यो यश्च दैत्यान्तको विभु ।
युगान्तेष्वन्तको यश्च यश्च लोकान्तकान्तक । सेतुर्यो लोकसेतूनां मेध्यो यो मेध्यकर्म्मणां ।
वेद्यो यो वेदविदुषां य प्रभु प्रभवात्मनां । सोमभूतस्तु सौम्यानामग्निभूतोऽग्निवर्च्चसां । ११७५
मनुष्याणां मनोभूतस्तपोभूतस्तपस्विनां । विनयो नयवृत्तानां तेजस्तेजस्विनामपि ।
सर्गाणां सर्गकारश्च लोकहेतुरनुत्तम । विग्रहो विग्रहार्हाणां गतिर्गतिमतामपि ।
आकाशप्रभवो वायुर्व्वायुप्राणो हुताशन । देवा हुताशनप्राणा प्राणोऽग्नेर्म्मधुसूदन ।
रसाद्धि शोणितं जातं शोणितान्मांसमुच्यते । मांसात्तु मेदसो जन्म मेदसोऽस्थि निरुच्यते ।
अस्थ्नो मज्जा समभवन्मज्जात शुक्रसम्भव । शुक्राद्गर्भ समभवद्रसमूलेन कर्म्मणा । ११८०
तत्राप प्रथमो भाग स सौम्यो राशिरुच्यते । गर्भोष्मसम्भवोऽग्निर्य्यो द्वितीयो राशिरुच्यते ।
शुक्रं सोमात्मकं विद्यादार्त्तवं पावकात्मकं । भावा रसात्मकास्तेषां बीर्य्यञ्च शशिपावकौ ।
कफवर्गेऽभवच्छुक्रं पित्तवर्गे च शोणितं । कफस्य हृदयं स्थानं पित्तं नाभ्यां प्रतिष्ठितं ।
देहस्य मध्ये हृदयं स्थानं तन्मनस स्मृतं । नाभीकोष्ठान्तरं यत्तु तत्र देवो हुताशन ।
मन प्रजापतिर्ज्ञेय कफ सोमो विभाव्यते । पित्तमग्नि स्मृतो ह्येवमग्नीषोमात्मकं जगत् । ११८५
एवं प्रवर्त्तिते गर्भे वर्द्धितेऽर्ब्बुदसन्निभे । वायु प्रवेशनं चक्रे सङ्गत परमात्मना ।
ततोऽङ्गानि विसृजति बिभर्त्ति परिवर्त्तयन । स पञ्चधा शरीरस्थो भिद्यते वर्द्धयन पुन ।
प्राणोऽपान समानश्च उदानो व्यान एव च । प्राणोऽस्य प्रथमं स्थानं वर्द्धयन परिवर्द्धते ।
अपान पश्चिमं कायमुदानोर्द्ध्वं शरीरिण । व्यानो व्यायच्छते येन समान सन्निवर्त्तते ।
भूतावाप्तिस्ततस्तस्य जायतेन्द्रियगोचरा । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चम । ११९०
तस्येन्द्रियनिविष्टानि स्वं स्वं योगं प्रचक्रिरे । पार्थिवं देहमाहुस्तु प्राणात्मानञ्च मारुतं ।
छिद्राण्याकाशयोनीनि जलात् स्राव प्रवर्त्तते । ज्योतिश्चक्षुस्तेज आत्मा तेषां यन्तृ मन स्मृतं ।
ग्रामाश्च विषयाश्चैव यस्य वीर्य्यात् प्रवर्त्तिता । इत्येतान् पुरुष सर्व्वान् सृजन् लोकान् सनातनान् ।
नैधनेऽस्मिन् कथं लोके नरत्वं विष्णुरागत । एष मे संशयो ब्रह्मन्नेष मे विस्मयो महान् ।
कथं गतिर्गतिमतामापन्नो मानुषीं तनुं । श्रुतो मे स्वस्य वंशस्य सर्व्वेषाञ्चैव सम्भव । ११९५
श्रोतुमिच्छामि विष्णोस्तु वृष्णीनाञ्च यथाक्रमं । आश्चर्य्यं परमं विष्णुर्देवैर्दैत्यैश्च कथ्यते ।

विष्णोरुत्पत्तिमाश्चर्य्यं ममाचक्ष्व महामुने । एतदाश्चर्य्यमाख्यानं कथयस्व सुखावहं ।
प्रख्यातबलवीर्य्यस्य विष्णोरमिततेजसः । कर्म्मणाश्चर्य्यभूतस्य विष्णोस्तत्त्वमिहोच्यतां ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ वैशम्पायन उवाच ॥ प्रश्नभारो महांस्तात त्वयोक्तः शार्ङ्गधन्वनि । यथाशक्ति प्रवक्ष्यामि शृणुतां वैष्णवं यशः ।
विष्णोः प्रभावश्रवणे दिष्ट्या ते मतिरुत्थिता । हन्त विष्णोः प्रवृत्तिं त्वं शृणु दिव्यां मयेरितां ।
सहस्रास्यं सहस्राक्षं सहस्रचरणञ्च यं । सहस्रशिरसं देवं सहस्रकरमव्ययं ।
सहस्रबाहुं भास्वन्तं सहस्रमुकुटं प्रभुं । सहस्रदं सहस्रादिं सहस्रभुजमव्ययं ।
हवनं सवनञ्चैव हव्यं होतारमेव च । पात्राणि च पवित्राणि वेदीं दीक्षां चरुं स्रुवं ।
स्रुक्सोमसूर्पमुषलं प्रोक्षणीं दक्षिणायनं । अध्वर्य्युं सामगं विप्रं सदस्यं सदनं तथा ।
यूपं शमित्रुवं दर्व्वीं चमसोलूखलानि च । प्राग्वंशं यज्ञभूमिञ्च होतारं चयमञ्च यत् ।
रहस्यानि प्रमाणानि चराणि स्थावराणि च । प्रायश्चित्तानि चार्घ्यञ्च स्थण्डिलानि कुशांस्तथा ।
मन्त्रं यज्ञवहं वह्निं भागं भागवहञ्च यत् । अग्रेभुजं सोमभुजं ऊर्द्धार्च्चिषमुदायुधं ।
आहुर्व्वेदविदो विप्रा यं यज्ञं शाश्वतं विभुं । तस्य विष्णोः सुरेशस्य श्रीवत्साङ्कस्य धीमतः ।
प्रादुर्भावसहस्राणि समतीतान्यनेकशः । भूयश्चैव भविष्यन्तीत्येवमाह प्रजापतिः ।
यत् पृच्छसि महाराज पुण्यां दिव्यां कथां शुभां । यदर्थं भगवान् विष्णुर्वसुदेवकुले ऽभवत् ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणु सर्व्वमशेषतः । वासुदेवस्य माहात्म्यं चरितञ्च महाद्युतेः ।
हितार्थं सुरमर्त्यानां लोकानां प्रभवाय च । बहुशः सर्व्वभूतात्मा प्रादुर्भवति कार्य्यतः ।
प्रादुर्भावांश्च वक्ष्यामि पुण्यान्दिव्यान् गुणैर्युतान् । शुचिः प्रयतवान् भूत्वा निबोध जनमेजय ।
इदं पुराणं परमं पुण्यं वेदैश्च सम्मितं । हन्त ते कथयिष्यामि विष्णोर्दिव्यां कथां शृणु ।
यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत । धर्म्मसंस्थापनार्थाय तदा सम्भवति प्रभुः ।
तस्य ह्येका महाराज मूर्त्तिर्भवति सत्तमा । नित्यं दिविष्ठा या राजंस्तपश्चरति दुश्चरं ।
द्वितीया चास्य शयने निद्रायोगमुपाययौ । प्रजासंहारसर्गार्थं किमध्यात्मविचिन्तकं ।
सुप्त्वा युगसहस्रं स प्रादुर्भवति कार्य्यतः । पूर्णे वर्षसहस्रे तु देवदेवो जगत्प्रभुः ।
पितामहो लोकपालाश्चन्द्रादित्यौ हुताशनः । ब्रह्मा च कपिलश्चैव परमेष्ठी तथैव च ।
देवाः सप्तर्षयश्चैव त्र्यम्बकश्च महायशाः । वायुः समुद्राः शैलाश्च तस्य देहे समाश्रिताः ।
सनत्कुमारश्च महानुभावो मनुर्म्महात्मा भगवान् प्रजाकरः । पुराणदेवोऽथ पुराणि चक्रे प्रदीप्तवैश्वानरतुल्यतेजाः ।
येन चार्णवमध्यस्था नष्टे स्थावरजङ्गमे । नष्टे देवासुरगणे प्रनष्टोरगराक्षसे ।
योद्धुकामौ दुराधर्षौ दानवौ मधुकैटभौ । हतौ भगवता तेन तयोर्दत्त्वामितं वरं ।
पुरा कमलनाभस्य स्वपतः सागराम्भसि । पुष्करेयत्र सम्भूता देवाः सर्षिगणाः पुरा ।
स एष पौष्करो नाम प्रादुर्भावो महात्मनः । पुराणं कथ्यते यत्र वेदश्रुतिसमाहितं ।

वराहस्तु श्रुतिसुखः प्रादुर्भावो महात्मनः । यत्र विष्णुः सुरश्रेष्ठो वाराहं रूपमास्थितः ।
महीं सागरपर्य्यन्तां सशैलवनकाननां । वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः । अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः ।
आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् । धर्म्मसत्यमयः श्रीमान् कर्म्मविक्रमसत्क्रियः ।
प्रायश्चित्तनखो घोरः पशुजानुर्महाभुजः । उद्गात्रन्त्रो होमलिङ्गः फलबीजमहौषधिः । ११३०
वाय्वन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः । वेदीस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरर्च्चितः । दक्षिणाहृदयो योगी महासत्रमयो महान् ।
उपाकर्म्मोष्ठरुचकः प्रवर्ग्यावर्त्तभूषणः । नानाछन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायो वै मेरुशृङ्ग इवोच्छ्रितः । महीं सागरपर्य्यन्तां सशैलवनकाननां ।
एकार्णवजले भ्रष्टामेकार्णवगतः प्रभुः । दंष्ट्रया गां समुद्धृत्य लोकानां हितकाम्यया । ११३५
सहस्रशीर्षो लोकादिश्चकार पृथिवीं पुनः । एवं यज्ञवराहेण भूत्वा भूतहितार्थिना ।
उद्धृता पृथिवी देवी सागराम्बुधरा पुरा । वाराह एष कथितो नारसिंहमतः शृणु ।
यत्र भूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः । पुरा कृतयुगे राजन् सुरारिर्बलदर्पितः ।
दैत्यानामादिपुरुषश्चकार तप उत्तमं । दशवर्षसहस्राणि दशवर्षशतानि च ।
जलोपवासस्तत्रासीत् स्थानमौनदृढव्रतः । ततः शमदमाभ्याञ्च ब्रह्मचर्य्येण चानघ । ११४०
ब्रह्मा प्रीतमनास्तस्य तपसा नियमेन च । तं वै स्वयम्भूर्भगवान् स्वयमागम्य भूपते ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता । आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैः सह ।
रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिन्नरैः । दिशाभिर्विदिशाभिश्च नदीभिः सागरैस्तथा ।
नक्षत्रैश्च मुहूर्त्तैश्च खेचरैश्च महाग्रहैः । देवर्षिभिस्तपोवृद्धैः सिद्धैः सप्तर्षिभिस्तथा ।
राजर्षिभिः पुण्यतमैर्गन्धर्व्वैरप्सरोगणैः । चराचरगुरुः श्रीमान् वृतः सर्व्वैः सुरैस्तथा । ११४५
ब्रह्मा वेदविदां श्रेष्ठो दैत्यं वचनमब्रवीत् । प्रीतोऽस्मि तव भक्तस्य तपसानेन सुव्रत ।
वरं वरय भद्रं ते यथेष्टं काममाप्नुहि ।
॥ हिरण्यकशिपुरुवाच ॥ न देवासुरगन्धर्व्वा न यक्षोरगराक्षसाः । न मानुषाः पिशाचा वा हन्युर्मां देवसत्तम ।
ऋषयो वा न मां शापैः क्रुद्धा लोकपितामह । शपेयुस्तपसा युक्ता वरमेवं वृणोम्यहं ।
न शस्त्रेण न चास्त्रेण गिरिणा पादपेन वा । न शुष्केण न चार्द्रेण स्यान्न चान्येन मे वधः । ११५०
पाणिप्रहारेणैकेन सभृत्यबलवाहनं । यो मां नाशयितुं शक्तः स मे मृत्युर्न संशयः ।
भवेयमहमेवार्कः सोमो वायुर्हुताशनः । सलिलञ्चान्तरीक्षञ्च नक्षत्राणि दिशो दश ।
अहं क्रोधश्च कामश्च वरुणो वासवो यमः । धनदश्च धनाध्यक्षो यक्षः किंपुरुषाधिपः ।
॥ ब्रह्मोवाच ॥ एते दिव्या वरास्तात मया दत्तास्तवाद्भुताः । सर्व्वान् कामानिमांस्तात प्राप्स्यसि त्वं न संशयः ।
एवमुक्त्वा तु भगवान् जगामाकाशमेव तु । वैराजं ब्रह्मसदनं ब्रह्मर्षिगणसेवितं । ११५५

श्रुत्वा चैव वरं तस्य दत्तं कमलयोनिना । ततो देवाश्च नागाश्च गन्धर्व्वामुनयस्तथा ।
वरप्रदानं श्रुत्वैव पितामहमुपस्थिताः । विभुं विज्ञापयामासुर्द्देवा इन्द्रपुरोगमाः ।
॥ देवा ऊचुः ॥ वरेणानेन भगवन् बाधिष्यति स नोऽसुरः । तत् प्रसीदस्व भगवन् वधोऽप्यस्य विचिन्त्यतां ।
भगवन् सर्व्वभूतानां स्वयम्भूरादिरुद्भिभुः । स्रष्टा च हव्यकव्यानामव्यक्तप्रकृतिर्ध्रुवः ।
ततो लोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः । प्रोवाच भगवान् वाक्यं सर्व्वान्देवगणांस्तदा । २२१०
॥ ब्रह्मोवाच ॥ अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलं । तपसोऽन्तेऽस्य भगवान् वधं विष्णुः करिष्यति ।
एतच्छ्रुत्वा सुराः सर्व्वे वाक्यं पङ्कजजन्मनः । स्वानि स्थानानि दिव्यानि जग्मुस्ते वै मुदायुताः ।
लब्धमात्रे वरे चापि सर्व्वाः सोऽबाधत प्रजाः । हिरण्यकशिपुर्द्दैत्यो वरदानेन दर्पितः ।
आश्रमेषु महाभागान् मुनीन् वै संशितव्रतान् । सत्यधर्म्मरतान्दान्तान् पुरा धर्षितवांस्तु सः ।
देवांस्त्रिभुवनस्थांश्च पराजित्य महाबलः । त्रैलोक्यं वशमानीय स्वर्गेऽवसदथासुरः । २२१५
यदा वरमदोन्मत्तो न्यवसद्दानवो दिवि । यज्ञियान् कृतवान् दैत्यान् देवांश्चैवाप्ययज्ञियान् ।
आदित्याश्च तथा रुद्रा विश्वे च वसवस्तथा । शरण्यं शरणं विष्णुमुपतस्थुर्म्महाबलं ।
वेदयज्ञमयं ब्रह्म ब्रह्मदेवं सनातनं । भूतं भव्यं भविष्यञ्च प्रभुं लोकनमस्कृतं ।
नारायणं विभुं देवं शरण्यं शरणं गताः ।
॥ देवा ऊचुः ॥ त्रायस्व नोऽद्य देवेश हिरण्यकशिपोर्भयात् । त्वं हि नः परमो देवस्त्वं हि नः परमो गुरुः । २२२०
त्वं हि नः परमो धाता ब्रह्मादीनां सुरेश्वर । उत्फुल्लाम्बुजपत्राक्ष शत्रुपक्षभयावह ।
क्षयाय दितिवंशस्य शरणं त्वं भवाद्य नः ।
॥ विष्णुरुवाच ॥ भयं त्यजध्वममरा अभयं वो ददाम्यहं । तथैव त्रिदिवं देवाः प्रतिपद्यत मा चिरं ।
एष त्वं सगणं दैत्यं वरदानेन दर्पितं । अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहं ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा स भगवान् विसृज्य त्रिदशेश्वरान् । सभां हिरण्यकशिपोर्ज्जगाम हरिरीश्वरः । २२२५
नरस्य कृत्वार्द्धतनुं सिंहस्यार्द्धतनुं तथा । नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना ।
जीमूतघनसङ्काशो जीमूतघननिस्वनः । जीमूतघनदीप्तौजा जीमूत इव वेगवान् ।
दैत्यं सोऽतिबलं दृप्तं दृप्तशार्द्दूलविक्रमं । दृप्तैर्द्दैत्यगणैर्गुप्तं हतवानेकपाणिना ।
नृसिंह एष कथितो भूयोऽयं वामनोऽपरः । यत्र वामनमाश्रित्य रूपं दैत्यविनाशनं ।
बलेर्ब्बलवतो यज्ञे बलिना विष्णुना पुरा । विक्रमैस्त्रिभिरक्षोभ्याः क्षोभितास्ते महासुराः । २२३०
विप्रचित्तिः शिविः शङ्कुरयःशङ्कुस्तथैव च । अयःशिरा अश्वशिरा हयग्रीवश्च वीर्य्यवान् ।
वेगवान् केतुमानुग्रः सोग्रव्यग्रो महासुरः । पुष्करः पुष्कलश्चैव साश्वोऽश्वपतिरेव च ।
प्रह्लादोऽश्वशिराः कुम्भः संह्रादो गगनप्रियः । अनुह्रादो हरिहरो वराहः संहरो रुजः ।
शरभः शलभश्चैव कुपनः कोपनः क्रथः । बृहत्कीर्त्तिर्म्महाजिह्वः शङ्कुकर्णो महास्वनः ।
दीर्घजिह्वोऽर्कनयनो मृदुचापो मृदुप्रियः । वायुर्गविष्ठो नमुचिः शम्बरो विचरो महान् । २२३५

चन्द्रहन्ता क्रोधहन्ता क्रोधवर्द्धन एव च। कालकः कालकेयश्च वृत्रः क्रोधो विरोचनः।
गविष्ठश्च वरिष्ठश्च प्रलम्बनरकावुभौ। इन्द्रतापनवातापी केतुमान् बलदर्पितः।
असिलोमा पुलोमा च वास्कलः प्रमदो मदः। खसृमः शालवदनः करालः कौशिकः शरः।
एकाक्षश्चन्द्रहा राहुः संह्रादो मृदुरस्वनः। शतघ्नीचक्रहस्ताश्च तथा परिघपाणयः।
अश्मयन्त्रायुधोपेता भिन्दिपालायुधास्तथा। शूलोलूखलहस्ताश्च परश्वधधरास्तथा। १२८०
पाशमुद्गरहस्ताश्च तथा मुषलपाणयः। महाशिलाप्रहरणाः शूलहस्ताश्च दानवाः।
नानाप्रहरणा घोरा नानावेशा महाजवाः। कूर्म्मकुक्कुटवक्त्राश्च काकोलूकमुखास्तथा।
खरोष्ट्रवदनाश्चैव वराहवदनास्तथा। भीमा मकरवक्त्राश्च क्रोष्टुवक्त्राश्च दानवाः।
आखुदर्दुरवक्त्राश्च घोरा वृकमुखास्तथा। मार्ज्जारशशवक्त्राश्च महावक्त्रास्तथापरे।
नक्रमेषाननाः शूरा गोजाविमहिषाननाः। गोधाशल्यकवक्त्राश्च क्रौञ्चवक्त्राश्च दानवाः। १२८५
गरुडाक्षाः खड्गिमुखा मयूरवदनास्तथा। गजेन्द्रचर्म्मवसनास्तथा कृष्णाजिनाम्बराः।
चीरसंवृतगात्राश्च तथा वल्कलवाससः। उष्णीषिणो मुकुटिनस्तथा कुण्डलिनोऽसुराः।
कवचिनो लम्बशिखाः कम्बुग्रीवाः सुवर्चसः। नानावेशधरा दैत्या नानामाल्यानुलेपनाः।
स्वान्यायुधानि संगृह्य प्रदीप्तानीव तेजसा। क्रममाणं हृषीकेशमुपावर्त्तन्त सर्व्वशः।
प्रमथ्य सर्व्वान्दैतेयान् पादहस्ततलैस्ततः। रूपं कृत्वा महाभीमं जहाराशु स मेदिनीम्। १२९०
तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे। नभः प्रक्रममाणस्य नाभ्यां किल समास्थितौ।
परमाक्रममाणस्य जानुदेशे व्यवस्थितौ। विष्णोरतुलवीर्य्यस्य वदन्त्येवं द्विजातयः।
हृत्वा स मेदिनीं कृत्स्नां हत्वा चासुरपुङ्गवान्। ददौ शक्राय त्रिदिवं विष्णुर्बलवतांवरः।
एष ते वामनो नाम प्रादुर्भावो महात्मनः। वेदविद्भिर्द्विजैरेतत् कथ्यते वैष्णवं यशः।
भूयो भूतात्मनो विष्णोः प्रादुर्भावो महात्मनः। दत्तात्रेय इति ख्यातः क्षमया परया युतः। १२९५
तेन नष्टेषु वेदेषु प्रक्रियासु मखेषु च। चातुर्वर्ण्ये च संकीर्णे धर्म्मे शिथिलतां गते।
अभिवर्द्धति चाधर्म्मे सत्ये नष्टेऽनृते स्थिते। प्रजासु शीर्य्यमाणासु धर्म्मे चाकुलतां गते।
सयज्ञाः सक्रिया वेदाः प्रत्यानीता हि तेन वै। चातुर्वर्ण्यमसङ्कीर्णं कृतं तेन महात्मना।
तेन हैहयराजस्य कार्त्तवीर्य्यस्य धीमतः। वरदेन वरो दत्तो दत्तात्रेयेण धीमता।
एतद्बाहुद्वयं यत्ते तत्ते मत्कृते नृप। शतानि दश बाहूनां भविष्यन्ति न संशयः। १३००
पालयिष्यसि कृत्स्नाञ्च वसुधां वसुधेश्वर। दुर्निरीक्ष्योऽरिवृन्दानां युद्धस्थश्च भविष्यसि।
एष ते वैष्णवः श्रीमान् प्रादुर्भावोऽद्भुतः शुभः। कथितो वै महाराज यथाश्रुतमरिन्दम।
भूयश्च जामदग्न्योऽपि प्रादुर्भावो महात्मनः। यत्र बाहुसहस्रेण विस्मितं दुर्जयं रणे।
रामोऽर्जुनमनीकस्थं जघान नृपतिं प्रभुः। रथस्थं पार्थिवं रामः पातयित्वार्जुनं भुवि।
धर्षयित्वा यथाकामं क्रोशमानस्य मेघवत्। कृत्स्नं बाहुसहस्रञ्च चिच्छेद भृगुनन्दनः। १३०५

परश्वधेन दीप्तेन ज्ञातिभिः सहितस्य वै । कीर्णा क्षत्रियकोटीभिर्मेरुमन्दरभूषणा ।
त्रिः सप्तकृत्वः पृथिवी तेन निःक्षत्रिया कृता । कृत्वा निःक्षत्रियाञ्चैव भार्गवः सुमहाबलः ।
सर्व्वपापविनाशाय वाजिमेधेन चेष्टवान् । तस्मिन् यज्ञे महादाने दक्षिणां भृगुनन्दनः ।
मारीचाय ददौ प्रीतः कश्यपाय वसुन्धरां । वारणांस्तुरगान् शुभ्रान्रथांश्च रथिनाम्वरः ।
हिरण्यमक्षयं धेनूर्गजेन्द्रांश्च महामनाः । ददौ तस्मिन्महायज्ञे वाजिमेधे महायशाः । २२२०
अद्यापि च हितार्थाय लोकानां भृगुनन्दनः । चरमाणस्तपो दीप्तं जामदग्न्यः पुनः प्रभुः ।
तिष्ठते देववच्छ्रीमान्महेन्द्रे पर्व्वतोत्तमे । एष विष्णोः सुरेशस्य श्रीवत्साङ्कस्य धीमतः ।
जामदग्न्य इति ख्यातः प्रादुर्भावो महात्मनः । चतुर्विंशे युगे चापि विश्वामित्रपुरःसरः ।
राज्ञो दशरथस्याथ पुत्त्रः पद्मदलेक्षणः । कृत्वात्मानं महाबाहुश्चतुर्द्धा प्रभुरीश्वरः ।
लोके राम इति ख्यातस्तेजसा भास्करोपमः । प्रसादनार्थं लोकस्य रक्षसां निग्रहाय च । २२२५
धर्म्मस्य च विवृद्ध्यर्थं जज्ञे तत्र प्रतापवान् । तमप्याहुर्मनुष्येन्द्रं सर्व्वभूतपतेस्तनुं ।
तस्मै दत्तानि शस्त्राणि विश्वामित्रेण धीमता । वधार्थं देवशत्रूणां दुर्द्धर्षाणि सुरैरपि ।
यज्ञविघ्नकरौ येन मुनीनां भावितात्मना । मारीचश्च सुबाहुश्च बलेन बलिनाम्वरौ ।
निहतौ च निराशौ च कृतौ तेन महात्मना । वर्त्तमाने मखे येन जनकस्य महात्मनः ।
भग्नं माहेश्वरं चापं क्रीडता लीलया पुरा । यः समाः सर्व्वधर्म्मज्ञश्चतुर्द्दश वनेऽवसत् । २२३०
लक्ष्मणानुचरो रामः सर्व्वभूतहिते रतः । रूपिणी यस्य पार्श्वस्था सीतेति प्रथिता जनैः ।
पूर्व्वोचितत्वात्सा लक्ष्मीर्भर्त्तारमनुगच्छति । चतुर्द्दश वने तप्त्वा तपो वर्षाणि राघवः ।
जनस्थाने वसन् कार्य्यं त्रिदशानां चकार ह । सीतायाः पदमन्विच्छन् लक्ष्मणानुचरो विभुः ।
विराधश्च कबन्धश्च राक्षसौ भीमविक्रमौ । जघान पुरुषव्याघ्रो गन्धर्व्वौ शापविक्षतौ ।
हुताशनार्कांशुतडिद्घनाभैः प्रतप्तजाम्बूनदचित्रपुङ्खैः । महेन्द्रवज्राशनितुल्यसारैः शरैः शरीरेण वियोजितो बलात् । २२३५
सुग्रीवस्य कृते येन वानरेन्द्रो महाबलः । वाली विनिहतो युद्धे सुग्रीवश्चाभिषेचितः ।
देवासुरगणानां वै यक्षराक्षसपक्षिणां । यत्नावध्यं राक्षसेन्द्रं रावणं युद्धदुर्म्मदं ।
युक्तं राक्षसकोटीभिर्नीलाञ्जनचयोपमं । त्रैलोक्यद्रावणं क्रूरं दुराचारं महाबलं ।
दुर्जयं दुर्द्धरं दृप्तं शार्दूलसमविक्रमं । दुर्निरीक्ष्यं सुरगणै र्वरदानेन दर्पितं ।
महाभ्रघनसंकाशं महाकायं महाबलं । तमागस्कारिणं पौलस्त्यं युधि दुर्ज्जयं । २२४०
सभ्रातृपुत्त्रसचिवंससैन्यं क्रूरनिश्चयं । रावणं निजघानाजौ रामो भूतपतिः पुरा ।
मधोश्च तनयो दृप्तो लवणो नाम राक्षसः । हतो मधुवने भीमो वरदत्तो महासुरः ।
समरे युद्धशौण्डेन तथान्येऽपि च राक्षसाः । एतानि कृत्वा कर्म्माणि रामो धर्म्मभृताम्वरः ।
दशाश्वमेधान् जारूथ्यानाजहार निरर्गलान् । नाश्रूयन्ताशुभा वाचो नाकुलो मारुतो ववौ ।
न वित्तहरणञ्चासीद्रामे राज्यं प्रशासति । पर्य्यदेवन्न विधवा नानाथाश्चाभवन् क्वचित् । २२४५

सर्व्वमासीत्तदा दान्तं रामे राज्यं प्रशासति । न प्राणिनां भयञ्चासीज्जलानिलविघातजं ।
न च स्म वृद्धा बालानां प्रेतकार्य्याणि कुर्व्वते । ब्रह्म पर्य्यचरत् चत्त्रं विशः चत्त्रमनुव्रताः ।
शूद्राश्चैव हि वर्णांस्त्रीन् शुश्रूषन्त्यनहङ्कृताः । भार्य्यां नात्यचरद्भर्त्ता भार्य्या नात्यचरत् पतिं ।
सर्व्वमासीज्जगद्दान्तं निर्द्दस्युरभवन्मही । राम एकोऽभवद्भर्त्ता रामः पालयिताऽभवत् ।
सहस्रपुत्त्रिणश्चासंस्तथा वर्षसहस्रिणः । अरोगाः प्राणिनश्चासन् रामे राज्यं प्रशासति । २२१०
देवतानामृषीणाञ्च मानुषाणाञ्च सर्व्वशः । पृथिव्यां समवायोऽभूद्रामे राज्यं प्रशासति ।
गाथाश्चाप्यत्र गायन्ति ये पुराणविदो जनाः । रामे निबद्धास्तत्त्वार्थां माहात्म्यं तस्य धीमतः ।
श्यामो युवा लोहिताक्षो दीप्तास्यो मितभाषणः । आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ।
दशवर्षसहस्राणि दशवर्षशतानि च । अयोध्यायामयोध्यायां रामो राज्यमकारयत् ।
ऋक्सामयजुषां घोषो ज्याघोषश्च महात्मनः । अव्युच्छिन्नोऽभवद्राष्ट्रे दीयतां भुज्यतामिति । २२१५
सत्त्ववान् गुणसम्पन्नो दीप्यमानः स्वतेजसा । अतिसूर्य्यश्च चन्द्रश्च रामो दाशरथिर्बभौ ।
ईजे क्रतुशतैः पुण्यैः समाप्तवरदक्षिणैः । हित्वाऽयोध्यां दिवं यातो राघवः सुमहाबलः ।
एवमेष महाबाहुरिक्ष्वाकुकुलनन्दनः । रावणं सगणं हत्वा दिवमाचक्रमे प्रभुः ।
॥ वैशम्पायन उवाच ॥ अपरः केशवस्यायं प्रादुर्भावो महात्मनः । विख्यातो माथुरे कल्पे सर्व्वलोकहिताय वै ।
यत्र शाल्वञ्च मैन्दञ्च कंसं द्विविदमेव च । अरिष्टं वृषभं केशिं पूतनां दैत्यदारिकां ।
नागं कुवलयापीडं चानूरं मुष्टिकं तथा । दैत्यान्मानुषदेहस्थान् सूदयामास वीर्य्यवान् ।
छिन्नं बाहुसहस्रञ्च बाणस्याद्भुतकर्म्मणः । नरकश्च हतः सङ्ख्ये यवनश्च महाबलः ।
हृतानि च महीपानां सर्व्वरत्नानि तेजसा । दुराचाराश्च निहताः पार्थिवा ये महीतले ।
नवमे द्वापरे विष्णोरष्टाविंशे पुराभवत् । वेदव्यासस्तथा जज्ञे जातूकर्ण्यपुरःसरः ।
एको वेदश्चतुर्द्धा तु कृतस्तेन महात्मना । जनितो भारतश्चैव सत्यवत्याः सुतेन च । २२२५
एते लोकहितार्थाय प्रादुर्भावा महात्मनः । अतीताः कथिता राजन् कथ्यन्ते चाप्यनागताः ।
कल्की विष्णुयशा नाम शम्भलग्रामको द्विजः । सर्व्वलोकहितार्थाय भूयश्चोत्पत्स्यते प्रभुः ।
दशमो भाव्यसम्पन्नो याज्ञवल्क्यपुरःसरः । क्षपयित्वा च तान् सर्व्वान् भाविनोऽर्थेन चोदितान् ।
गङ्गायमुनयोर्मध्ये निष्ठां प्राप्स्यति सानुगः । ततः कुले व्यतीते तु सामात्ये सहसैनिके ।
नृपेष्वथ प्रनष्टेषु तदा त्वप्रग्रहाः प्रजाः । रक्षणे निवृत्ते चैव हत्वा चान्योन्यमाहवे । २२३०
परस्परहृतस्वाश्च निराक्रन्दाः सुदुःखिताः । एवं कष्टमनुप्राप्ताः कलिसन्ध्यांशके तदा ।
प्रजाः क्षयं प्रयास्यन्ति सार्द्धं कलियुगेन ह । क्षीणे कलियुगे तस्मिंस्ततः कृतयुगं पुनः ।
प्रपत्स्यते यथान्यायं स्वभावादेव नान्यथा । एते चान्ये च बहवो दिव्या दिव्यगणैर्युताः ।
प्रादुर्भावाः पुराणेषु गीयन्ते ब्रह्मवादिभिः । यत्र देवा विमुह्यन्ते प्रादुर्भावानुकीर्त्तने ।
पुराणं वर्त्तते यत्र वेदश्रुतिसमाहितं । एतदुद्देशमात्रेण प्रादुर्भावानुकीर्त्तनं । २२३५

कीर्त्तितं कीर्त्तनीयस्य सर्व्वलोकगुरोः प्रभोः । प्रीयन्ते पितरस्तस्य प्रादुर्भावानुकीर्त्तनात् ।
विष्णोरमितवीर्य्यस्य वदन्त्येवं द्विजातयः ।
एतास्तु योगेश्वरयोगमाया श्रुत्वा विमुच्येत नरस्तु पापैः । ऋद्धिं समृद्धिं विपुलांश्च भोगान् प्राप्नोति दीर्घं भगवत्प्रसादात् ।

इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

॥ वैशम्पायन उवाच ॥ विस्तरं शृणु मे विष्णोर्हरित्वस्य कृते युगे । वैकुण्ठत्वञ्च देवेषु कृष्णत्वं मानुषे युगे ।
ईश्वरत्वं हि तस्येदं कर्म्मणा गहनां गतिं । समत्यतीतां भाव्यांश्च शृणु राजन् यथातथं । ११८०
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान् प्रभुः । नारायणो ह्यनन्तात्मा प्रभवोऽव्यय एव च ।
एष नारायणो भूत्वा हरिरासीत् कृते युगे । ब्रह्मा शक्रश्च सोमश्च धर्म्मः शुक्रो बृहस्पतिः ।
अदितेरपि पुत्रत्वमेत्य यादवनन्दनः । एष विष्णुरिति ख्यात इन्द्रादवरजोऽभवत् ।
प्रसादजं ह्यस्य विभोरादित्याः पुत्रजन्म तत् । वधार्थं सुरशत्रूणां दैत्यदानवरक्षसां ।
प्रधानात्मा पुरा ह्येष ब्रह्माणमसृजत् प्रभुः । सोऽसृजत् पूर्व्वपुरुषः प्रजाकल्पे प्रजापतीन् । ११८५
ते तन्वानास्तनूस्तत्र ब्रह्मवंशाननुत्तमान् । तेभ्योऽभवन्महात्मभ्यो बहुधा ब्रह्म शाश्वतं ।
एतदाश्चर्य्यभूतस्य विष्णोः कर्म्मानुकीर्त्तनं । कीर्त्तनीयस्य लोकेषु कीर्त्यमानं निबोध मे ।
वृत्ते वृत्रवधे तात वर्त्तमाने कृते युगे । आसीत् त्रैलोक्यविख्यातः संग्रामस्तारकामयः ।
यत्र ते दानवा घोराः सर्व्वे संग्रामदर्पिताः । घ्नन्ति देवगणान् सर्व्वान् सयक्षोरगराक्षसान् ।
ते बध्यमाना विमुखाः क्षीणप्रहरणा रणे । त्रातारं मनसा जग्मुर्देवं नारायणं प्रभुं । ११९०
एतस्मिन्नन्तरे मेघा निर्व्वाणाङ्गारवर्चसः । सार्कचन्द्रग्रहगणं छादयामासुरम्बरं ।
चलद्विद्युद्गणाविद्धा घोरा निर्ह्रादकारिणः । तेऽन्योन्यवेगाभिहता प्रववुः सप्त मारुताः ।
दीप्ततोयाशनीपातैर्वज्रवेगानिलानलैः । रराष घोरैरुत्पातैर्दह्यमानमिवाम्बरं ।
पेतुरुल्कासहस्राणि पेतुराकाशगान्यपि । न्युब्जानि च विमानानि प्रपतन्त्युत्पतन्ति च ।
चतुर्युगान्तपर्य्याये लोकानां यद्भयं भवेत् । तादृशान्येव रूपाणि तस्मिन्नुत्पातदर्शने । ११९५
तमसा निष्प्रभं सर्व्वं न प्राज्ञायत किञ्चन । तिमिरौघपरिक्षिप्ता न रेजुश्च दिशो दश ।
निशेव रूपिणी काली कालमेघावगुण्ठिता । द्यौर्न भात्यभिभूतार्का घोरेण तमसा वृता ।
तान् घनौघान् सतिमिरान् दोर्भ्यां क्षिप्य स प्रभुः । वपुः सन्दर्शयामास दिव्यं कृष्णवपुर्हरिः ।
बलाहकाञ्जननिभं बलाहकतनूरुहं । तेजसा वपुषा चैव कृष्णं कृष्णमिवाचलं ।
दीप्तपीताम्बरधरं तप्तकाञ्चनभूषणं । धूमान्धकारवपुषं युगान्ताग्निमिवोत्थितं । १२००
चतुर्द्विगुणपीनांसं किरीटच्छन्नमूर्द्धजं । चामीकरकराकारैरायुधैरुपशोभितं ।
चन्द्रार्ककिरणोद्योतं गिरिकूटमिवोच्छ्रितं । नन्दकानन्दितकरं शराशीविषधारिणं ।
शक्तिचित्रं हलोदग्रं शङ्खचक्रगदाधरं । विष्णुशैलं क्षमामूलं श्रीवृक्षं शार्ङ्गधन्विनं ।
हर्य्यश्ववरयुक्ते सुपर्णध्वजशोभिते । चन्द्रार्कचक्ररचिते मन्दराक्षधृतान्तरे ।

अनन्तरश्मिसंयुक्ते दुर्द्दर्शे मरुत्कूबरे। तारकाचित्रकुसुमे ग्रहनक्षत्रबन्धुरे। २१०५
भयेष्वभयदं व्योम्नि देवा दैत्यपराजिता.। ददृशुस्ते स्थितं देवं दिव्यलोकमये रथे।
ते कृताञ्जलयः सर्व्वे देवा. शक्रपुरोगमा.। जयशब्दं पुरस्कृत्य शरण्यं शरणङ्गता.।
स तेषां ता गिरः श्रुत्वा विष्णुर्द्दैवतदैवत। मनश्चक्रे विनाशाय दानवानां महामृधे।
आकाशे तु स्थितो विष्णुरुत्तमे पुरुषोत्तम। उवाच देवता. सर्व्वा सप्रतिज्ञमिदं वचः।
शान्तिं भजत भद्रं वो माभैष्ट मरुतांगणाः। जिता मे दानवाः सर्व्वे त्रैलोक्यं प्रतिगृह्यताम्। २११०
ते तस्य सत्यसन्धस्य विष्णोर्वाक्येन तोषिता। देवाः प्रीतिं परां जग्मुः प्राप्यैवामृतमुत्तमम्।
ततस्तमः संह्रियते विनेशुश्च सलाहकाः। प्रववुश्च शिवा वाताः प्रसन्नाश्च दिशो दश।
ज्योतींषि च प्रभावन्ति चन्द्रञ्चक्रुः प्रदक्षिणं। प्रदीप्तानिच तेजांसि चक्रुरर्कं प्रदक्षिणं।
न विग्रहं ग्रहाश्चक्रुः प्रशेमुश्चापि सिन्धव। नीरजस्का बभुर्म्मार्गा नाकमार्गादयस्त्रयः।
यथार्थमूहुः सरितो नापि चुक्षुभिरेऽर्णवा.। शुभा भूतेन्द्रियगणा नराणामन्तरात्मसु। २११५
महर्षयो वीतशोका वेदानुच्चैरधीयत। यज्ञेषु च हविः स्वादु शिवमश्नाति पावकः।
प्रवृत्तधर्म्मा. संवृत्ता लोका मुदितमानसा। प्रीत्या परमया युक्ता देवदेवस्य भूपते।
विष्णोर्द्दत्तप्रतिज्ञस्य श्रुत्वारिनिधने गिरं।

इतिश्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि त्रिचत्वारिंशोऽध्याय ॥ ४३ ॥

॥ वैशम्पायन उवाच ॥ ततोऽभयं विष्णुमयं श्रुत्वा दैतेयदानवा। उद्योगं परमञ्चक्रुर्युद्धाय युधि दुर्ज्जयाः।
मयस्तु काञ्चनमयं त्रिनल्वान्तरमव्ययं। चतुश्चक्रं सुविपुलं सुकल्पितमहायुधं। २१२०
किङ्किणीजालनिर्घोषं द्वीपिचर्म्मपरिष्कृतं। खचितं रत्नजालैश्च हेमजालैश्च भूषितं।
ईहामृगगणाकीर्णं पक्षिभिश्च विराजितं। दिव्यास्त्रतूणीरधरं पयोधरनिनादितं।
स्वक्षं ध्वजवरं धूर्य्यं सूपस्थमगमोपमं। गदापरिघसम्पूर्णं मूर्त्तिमन्तमिवार्णवं।
हेमकेयूरवलयं स्वर्णमण्डलकूबरं। सपताकध्वजोदग्रं सादित्यमिव मन्दरं।
गजेन्द्राम्भोदसदृशं लम्बकेयूरवर्च्चसं। युक्तंऋक्षसहस्रेण सहस्रामुदनादितं। २१२५
दीप्तमाकाशगं दिव्यं रथं पररथारुजं। अध्यतिष्ठद्रणाकाङ्क्षी मेरुं दीप्त इवांशुमान्।
तारस्तु क्रोशविस्तारमायसं वायसध्वजं। शैलात्करममाकीर्णं नीलाञ्जनचयोपमम्।
काललोहाष्टचरणं लोहेशायुगकूबरं। तिमिरोद्गारकिरणं गर्ज्जन्तमिव तोयदं।
लोहजालेन महता सगवाक्षेण दंशितं। आयसैः परिघैः शूलैः क्षेपणीयैश्च लेष्टुभिः।
प्रासैः पाशैश्च विततैरवसक्तैश्च मुद्गरैः। शोभितं चासनीयैश्च तोमरैः सपरश्वधैः। २१३०
उद्यतं द्विषतां घोरं द्वितीयमिव मन्दरं। युक्तं खरसहस्रेण सोऽध्यारोहद्रथोत्तमं।
विरोचनस्तु संक्रुद्धो गदापाणिरवस्थित। प्रमुखे तस्य सैन्यस्य दीप्तशृङ्ग इवाचलः।
युक्तंहयसहस्रेण हयग्रीवस्तु दानव। स्यन्दनं वाहयामास सपत्नानीकमर्द्दनं।

व्यायतं बङ्कबाहुस्तं धनुर्विस्फारयन्महत् । वराहः प्रमुखे तस्थौ सावरोह इवाचलः ।
हरस्तु विचरन्दर्पान्निवाभ्यां रोषजं जलं । स्फुरद्दन्तोष्ठवदनः संग्रामं सोऽभ्यकाङ्क्षत । २४४५
त्वष्टा त्वष्टादशहयं यानमास्थाय दानवः । व्यूहितो दानवैर्व्यूहैः परिचक्राम वीर्य्यवान् ।
विप्रचित्तिसुतः श्वेतः श्वेतकुण्डलभूषणः । श्वेतशैलप्रतीकाशो युद्धायाभिमुखः स्थितः ।
अरिष्टो बलिपुत्रस्तु वरिष्ठोऽद्रिशिलायुधः । युद्धायाभिमुखस्तस्थौ धराधर इवाचलः ।
किशोरस्त्वतिसंहर्षात् किशोर इव चोदितः । अभवद्दैत्यसैन्यस्य मध्ये रविरिवोदितः ।
लम्बस्तु लम्बमेघाभ प्रलम्बाम्बरभूषणः । दैत्यव्यूहगतो भाति सनीहार इवांशुमान् । २४५०
स्वर्भानुर्वक्त्रयोधी च दशनोष्ठेक्षणायुधः । हसंस्तिष्ठति दैत्यानां प्रमुखे सुमहाग्रहः ।
अन्ये हयगता भान्ति नागस्कन्धेषु चापरे । सिंहव्याघ्रगताश्चान्ये वराहर्क्षेषु चापरे ।
केचित् खरोष्ट्रयातारः केचित्तोयदवाहनाः । नानापक्षिगताश्चान्ये केचित् पवनवाहनाः ।
पत्तिमन्त्स्वपरे दैत्या भीषणा विकृताननाः । एकपादा द्विपादाश्च नर्दन्तो युद्धकाङ्क्षिणः ।
प्रक्ष्वेलमाना बहवः स्फोटयन्तश्च ते भुजान् । दृप्तशार्दूलनिर्घोषा नेदुर्दानवपुङ्गवाः । २४५५
ते गदापरिघैरुग्रैर्धनुर्भ्यायामशालिनः । बाहुभिः परिघाकारैस्तर्ज्जयन्ति स्म देवताः ।
प्रासैः पाशैश्च खड्गैश्च तोमराङ्कुशपट्टिशैः । चिक्रीडुस्ते शतघ्नीभिः शितधारैश्च मुद्गरैः ।
गण्डशैलैश्च शैलैश्च परिघैश्चोत्तमायुधैः । चक्रैश्च दैत्यप्रवराश्चक्रुरानन्दितं बलं ।
एवं दानवसैन्यन्तत् सर्व्वं युद्धमदोत्कटं । देवताभिमुखं तस्थौ मेघानीकमिवोद्धतं ।
तदद्भुतं दैत्यसहस्रगाढं वाय्वग्नितोयाम्बुदशैलकल्पं । बलं रणायाभ्युदयादुदीर्णं युयुत्सयोन्मत्तमिवावभासे । २४६०
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ वैशम्पायन उवाच ॥ श्रुतस्ते दैत्यसैन्यस्य विस्तरस्तात विग्रहे । सुराणां सर्व्वसैन्यस्य वैष्णवं विस्तरं शृणु ।
आदित्या वसवो रुद्रा अश्विनौ च महाबलौ । सबलाः सानुगाश्चैव सन्नह्यन्त यथाक्रमं ।
पुरुहूतस्तु पुरतो लोकपालः सहस्रदृक् । ग्रामणीः सर्व्वदेवानामारुरोह सुरद्विपं ।
सव्ये चास्य रथः पार्श्वे पक्षिप्रवरवेगवान् । सुचारुचक्रचरणो हेमवज्रपरिष्कृतः ।
देवगन्धर्व्वयक्षौघैरनुयातः सहस्रशः । दीप्तिमद्भिः सदस्यैश्च महर्षिभिरभिष्टुतः । २४६५
वज्रविस्फूर्ज्जितोद्धूतैर्विद्युदिन्द्रायुधार्पितैः । गुप्तो बलाहकगणैः पर्व्वतैरिव कामगैः ।
यमारूढः स भगवान् पर्य्येति मघवान् जगत् । हविर्द्धाने स्म गायन्ति विप्रा मखमुखे स्थिताः ।
स्वर्गे शक्रानुयानेषु देवतूर्य्यनिनादिषु । येन्द्रं समुपनृत्यन्ति शतशोऽप्सरोगणाः ।
केतुना वंशराजेन भ्राजमानो यथा रविः । युक्तो हयसहस्रेण मनोमारुतरंहसा ।
स स्यन्दनवरो भाति युक्तो मातलिना सदा । कृत्स्नः परिवृतो मेरुर्भास्करस्येव तेजसा । २४७०
यमस्तु दण्डमुद्यम्य कालयुक्तश्च मुद्गरं । तस्थौ सुरगणानीके दैत्यान्नादेन भीषयन् ।
चतुर्भिः सागरैर्गुप्तो लेलिहद्भिश्च पन्नगैः । शङ्खमुक्ताङ्गदधरो बिभ्रत्तोयमयं वपुः ।

भुजगेन्द्रेण वदने निविष्टेन विराजित । अमृतारम्भनिर्मुक्तं मन्दराद्रिमिवोच्छ्रित ।
देवासुरविमर्देषु शतशो दृष्टविक्रम । महेन्द्रेणामृतस्यार्थे वज्रेण कृतलक्षण ।
शिखिनं चूलिनञ्चैव तप्तकुण्डलभूषणं । विचित्रपत्रवसनं धातुमन्तमिवाचलं । २४९५
स्फीतक्रोडावलम्बिन शीतांशुसमतेजसा । भोगिभोगावसक्तेन मणिरत्नेन भास्वता ।
पक्षाभ्याञ्चारुपत्राभ्यां छादयन्तञ्च लीलया । युगान्ते सेन्द्रचापाभ्यां तोयदाभ्यामिवाम्बरं ।
नीललोहितपीताभि. पताकाभिरलङ्कृतं । केतुवेशप्रतिच्छन्नं महाकायनिकेतन ।
अरुणावरज श्रीमानारुरोह रणे हरि । सुवर्णं स्वेन वपुषा सुपर्णं खेचरोत्तमं ।
तमन्वयुर्देवगणा मुनयश्च समाहिता । गीर्भि परमसन्त्राभिस्तुष्टुवुश्च गदाधरं । २५००
तद्वैश्रवणसंश्लिष्टं वैवस्वतपुर सरं । वारिराजपरिक्षिप्तं देवराजविराजितं ।
चन्द्रप्रभाभिर्विमल युद्धमत्सरवेगितं । पवनाविद्धनिर्घोषं सम्प्रदीप्तहुताशन ।
विष्णोर्जिष्णो सहिष्णोश्च भ्राजिष्णोस्तेजसा हतं । बलं बलवदुद्धूतं युद्धाय समवर्त्तत ।
स्वस्त्यस्तु देवेभ्य इति बृहस्पतिरथाङ्गिरा जगौ । स्वस्त्यस्तु दैत्येभ्य इति उशना वाक्यमब्रवीत् ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि पञ्चचत्वारिंशोऽध्याय ॥ ४५ ॥

॥ वैशम्पायन उवाच ॥ ताभ्यां बलाभ्यां संजज्ञे तुमुलो विग्रहस्तदा । असुराणां सुराणाञ्च परस्परजयैषिणा । २५०५
दानवा दैवतै सार्द्धं नानाप्रहरणोद्यता । समीयुर्युध्यमाना वै पर्व्वता इव पर्व्वतै ।
तत्सुरासुरसंयुक्तं युद्धमत्यद्भुतं ह्यभूत् । धर्म्माधर्म्मेण संयुक्तं दर्पेण विनयेन च ।
ततो रथै प्रजवितैर्व्वाहनैश्च प्रचोदितै । उत्पतद्भिश्च गगनं सासिहस्तै समन्तत ।
विक्षिप्यमाणैर्मुषलै प्रेष्यमाणैश्च सायकै । चापैर्विस्फार्य्यमाणैश्च पात्यमानैश्च मुद्गरै ।
तद्युद्धमभवद्घोरं देवदानवसङ्कुलं । जगतस्त्रासजननं युगसम्वर्त्तकोपमं । २५१०
स्वहस्तमुक्तै परिघै क्षिप्रमुक्तैश्च पर्व्वतै । दानवा समरे जघ्नुर्द्देवानिन्द्रपुरोगमान ।
ते वध्यमाना बलिभिर्द्दानवैर्जितकाशिभि । विषण्णमनसो देवा जग्मुरार्त्तिं परां मृधे ।
तेऽस्त्रजालै प्रमथिता परिघैर्भग्नमस्तका । भिन्नोरस्का दितिसुतैर्व्वमुरक्त व्रणैर्बहु ।
वन्दिता पाशजालैश्च निष्प्रयत्ना सुरा कृता । प्रविष्टा दानवीं मायां न शेकुस्ते विचेष्टितुं ।
संस्तम्भितमिवाभाति निष्प्राणसदृशाकृति । बलं सुराणामसुरैर्निष्प्रयत्नायुधं कृतं । २५१५
मायापाशान् विकर्षंश्च छिन्दन् वज्रेण ताञ्छरान् । शक्रो दैत्यबलं घोरं विवेश बहुलोचन ।
स दैत्यान् प्रमुखे हत्वा तद्दानवबलं महत् । तामसेनास्त्रजालेन तमोभूतमथाकरोत् ।
तेऽन्योन्यञ्चावबुध्यन्त देवा वा दानवास्तथा । घोरेण तमसा विष्टा पुरुहूतस्य तेजसा ।
मायापाशैर्व्विमुक्ताश्च यत्नवन्त सुरोत्तमा । वपूंषि दैत्यमुख्यानां तमोभूतान्यपातयन् ।
अपध्वस्ता विसंज्ञाश्च तमसा नीलवर्चस । पेतुस्ते दानवगणाश्छिन्नपक्षा इवाचला । २५२०
दैत्यानां तद्घनीभूतमन्धकारमहार्णवं । प्रविष्टं बलमुख्यं तत् तमोभूतमिवाबभौ ।

अथासृजन्महामाया मयस्तां तामसीं दहन्। युगान्ते लोकदहनी सृष्टामौर्व्वेण वह्निना।
सा ददाह तम सर्व्वं मायामयविकल्पिता। दैत्याश्चादित्यवपुष सद्य उत्तस्थुराहवे।
मायामौर्व्वीं समासाद्य दह्यमाना दिवौकस। भेजिरे चन्द्रविषयं शीतांशुसलिलं ह्रद।
ते दह्यमाना और्व्वेण तेजसा भ्रष्टतेजस। शंसुर्व्वज्रिणे देवा सन्तप्ता शरणैषिण। ११२५
सन्तप्ते मायया सैन्ये दह्यमाने च दानवै। चोदितो देवराजेन वरुणो वाक्यमब्रवीत्।
॥ वरुण उवाच ॥ पुरा ब्रह्मर्षिज शक्र तपस्तेपे सुदारुण। ऊर्व्व पूर्व्वं स तेजस्वी सदृशो ब्रह्मणो गुणै।
तं तपन्तमिवादित्य तपसा जगदव्यय। उपतस्थुर्मुनिगणा देवा देवर्षिभि सह।
हिरण्यकशिपुश्चैव दानवो दानवेश्वर। ऋषिं विज्ञापयामास पुरा परमतेजसं।
ते तमूचुर्ब्रह्मर्षयो वचनं धर्म्मसंहितं। ऋषिवंशेषु भगवंश्छिन्नमूलमिदं कुलं। ११३०
एकस्त्वमनपत्यश्च गोत्रं यन्नानुवर्त्तसे। कौमारं व्रतमास्थाय क्लेशमेवानुवर्त्तसे।
बहूनि विप्रगोत्राणि मुनीनां भावितात्मनां। एकदेहानि तिष्ठन्ति विभक्तानि विना प्रजा।
कुलेषूच्छिन्नभूतेषु तेषु नो नास्ति कारणं। भवांश्च तपसा श्रेष्ठ प्रजापतिसमद्युति।
तत् प्रवर्त्तस्व वंशाय वर्द्धयात्मानमात्मना। त्वमाधत्स्वोर्ज्जितं तेजो द्वितीयां कुरु वै तनुं।
स एवमुक्तो मुनिभिर्मुनिर्मर्मसि ताडित। जगर्हे तानृषिगणान् वचनञ्चेदमब्रवीत्। ११३५
यथायं शाश्वतो धर्म्मो मुनीनां विहित पुरा। आर्षं हि सेवता कर्म्म वन्यमूलफलाशिनां।
ब्रह्मयोनौ प्रसूतस्य ब्राह्मणस्यात्मवर्त्तिन। ब्रह्मचर्य्यं सुचरितं ब्रह्माणमपि चालयेत्।
द्विजानां वृत्तयस्तिस्रो ये गृहाश्रमवासिन। अस्माकन्तु वने वृत्तिर्वन्याश्रमनिवासिनां।
अब्भक्षा वायुभक्षाश्च दन्तोलूखलिकास्तथा। अश्मकुट्टा निरशना दशपञ्चतपाश्च ये।
एते तपसि तिष्ठन्तो व्रतैरपि सुदुश्चरै। ब्रह्मचर्य्यं पुरस्कृत्य प्रार्थयन्ते परां गतिं। ११४०
ब्रह्मचर्य्याद्ब्राह्मणस्य ब्राह्मणत्वं विधीयते। एवमाहु परे लोके ब्रह्म ब्रह्मविदो जना।
ब्रह्मचर्य्ये स्थितं धैर्य्यं ब्रह्मचर्य्ये स्थितं तप। ये स्थिता ब्रह्मचर्य्येषु ब्राह्मणास्ते दिवि स्थिता।
नास्ति योगं विना सिद्धिं नास्ति सिद्धिं विना यश। नास्ति लोके यशोमूलं ब्रह्मचर्य्यात् परं तप।
यन्निगृह्येन्द्रियग्रामं भूतग्रामञ्च पञ्चकं। ब्रह्मचर्य्यं समाधत्ते किमत परमं तप।
अयोगे केशधरणमसङ्कल्पे व्रतक्रिया। अब्रह्मचर्य्यं चर्य्या च त्रयं स्याद्दम्भसंज्ञितं। ११४५
क्व दारा क्व च संयोग क्व च भावविपर्य्यय। यथेयं ब्रह्मणा सृष्टा मनसा मानसी प्रजा।
यद्यस्ति तपसो वीर्य्यं युष्माकममितात्मना। सृजध्वं मानसान् पुत्त्रान् प्राजापत्येन कर्म्मणा।
मनसा निर्म्मिता योनिराधातव्या तपस्विना। न दारयोगो बीजं वा व्रतयुक्तं तपस्विना।
यदिदं लुप्तधर्म्मार्थं युष्माभिरपि निर्भयै। व्याहृतं सद्भिरत्यर्थमसद्भिरिव मे मतं।
वपुर्दीप्तान्तरात्मानमेष कृत्वा मनोमय। दारयोगं विना स्रक्ष्ये पुत्त्रमात्मतनूरुहं। ११५०
एवमात्मानमात्मा मे द्वितीयं जनयिष्यति। वन्येनानेन विधिना दिधक्षन्तमिव प्रजा।

ऊर्व्वस्तु तपसा विष्टो निवेश्योरुं हुताशने । ममन्थैकेन दर्भेण सुतस्य प्रभवारणिं ।
तस्योरुं सहसा भित्त्वा ज्वालामाली निरिन्धनः । जगतो दहनाकाङ्क्षी पुत्त्रोऽग्निः समपद्यत ।
ऊर्व्वस्योरुं विनिर्भिद्य और्व्वो नामान्तको ऽनलः । दिधक्षन्निव लोकांस्त्रीन् जज्ञे परमकोपनः ।
उत्पन्नमात्रश्चोवाच पितरं दीनया गिरा । क्षुधा मे वर्त्तते तात जगद्भक्ष्ये त्यजस्व मां । १५८५
त्रिदिवारोहिभिर्ज्वालैर्जृम्भमाणो दिशो दश । निर्द्दहन् सर्व्वभूतानि ववृधे सोऽन्तकोऽनलः ।
एतस्मिन्नन्तरे ब्रह्मा सर्व्वलोकहितः प्रभुः । आजगाम मुनिर्यत्र व्यसृजत् पुत्त्रमुत्तमं ।
स ददर्शोरुमूर्व्वस्य दीप्यमानं सुताग्निना । और्व्वकोपाग्निसन्तप्तान् लोकांश्च ऋषिभिः सह ।
तमुवाच ततो ब्रह्मा मुनिमूर्व्वं सभाजयन् । पुत्त्रेदं धार्य्यतां तेजो लोकानां क्रियतां दया ।
अस्यापत्यस्य ते विप्र करिष्ये स्थानमुत्तमं । निवासं तस्य दास्यामि भोजनं चाम्बुरूपमं । १५९०
तथ्यमेतन्मम वचः शृणु त्वं वदतांवर ।
॥ ऊर्व्व उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे भगवान् शिशोः । मतिमेतां ददातीह परमानुग्रहाय वै ।
प्रभातकाले सम्प्राप्ते काङ्क्षितव्ये समागमे । भगवंस्तर्पितः पुत्त्रः कैर्हव्यैः प्राप्स्यते सुखं ।
कुत्र वास्य निवासः स्याद्भोजनञ्च किमात्मकं । विधास्यति भवानस्य वीर्य्यतुल्यं महौजसः ।
॥ ब्रह्मोवाच ॥ वडवामुखेऽस्य वसतिः समुद्रास्ये भविष्यति । मम योनिर्ज्जलं विप्र तस्य तोयमयं वपुः । १५९५
तत्रायमास्तां निरतः पिबन् वारिमयं हविः । तद्धविस्तव पुत्त्रस्य विसृजाम्यालयश्च तत् ।
ततो युगान्ते भूतानामेष चाहञ्च सुव्रत । सहितौ विचरिष्यावो निष्पुत्राणकरावुभौ ।
एषोऽग्निरन्तकाले तु सलिलाशी मया कृतः । दहनः सर्व्वभूतानां सदेवासुररक्षसां ।
एवमस्त्विति सोऽप्यग्निः संवृतज्वालमण्डलः । प्रविवेशार्णवमुखं निक्षिप्य पितरि प्रभां ।
प्रतियातस्ततो ब्रह्मा ते च सर्व्वे महर्षयः । और्व्वस्याग्नेः प्रभावज्ञाः स्वां स्वां गतिमुपाश्रिताः । १६००
हिरण्यकशिपुर्दृष्ट्वा तदद्भुतमपूजयत् । ऊर्व्वं प्रणतसर्व्वाङ्गो वाक्यञ्चेदमुवाच ह ।
॥ हिरण्यकशिपुरुवाच ॥ भगवन्नद्भुतमिदं निर्वृत्तं लोकसाक्षिकं । तपसा ते मुनिश्रेष्ठ परितुष्टः पितामहः ।
अहन्तु तव पुत्त्रस्य तव चैव महाव्रत । भृत्य इत्यवगन्तव्यः साध्योऽस्मि यदि कर्म्मणा ।
मम तस्मात्समापन्नस्तथैवाराधने रतः । सीदेयञ्च मुनिश्रेष्ठ तवैव स्यात् पराजयः ।
॥ ऊर्व्व उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यस्य तेऽहं गुरुर्म्मतः । नास्ति ते मत्प्रसादेन भयमद्येह सुव्रत । १६०५
इमाञ्च मायां गृह्णीष्व मम पुत्त्रेण निर्म्मितां । निरिन्धनामग्निमयीं दुःस्पर्शां पावकैरपि ।
एषा ते स्वस्य वंशस्य वशगारिविनिग्रहे । रक्षिष्यत्यात्मपक्षञ्च परञ्च प्रहरिष्यति ।
एवमस्त्विति तं गृह्य प्रणम्य मुनिपुङ्गवं । जगाम त्रिदिवं हृष्टः कृतार्थो दानवेश्वरः ।
सैषा दुर्व्विषहा माया देवैरपि दुरासदा । और्व्वेण निर्म्मिता पूर्व्वं पावकेनार्व्वसूनुना ।
तस्मिंस्तु व्युत्थिते दैत्ये निर्व्वीर्य्या न संशयः । शापो ह्यस्याः पुरा दत्तः सृष्टा येनैव तेजसा । १६१०
यद्येषा प्रतिहन्तव्या कर्त्तव्यश्च भवान् सुखी । दीयतां मे सखा शक्र तोययोनिर्निशाकरः ।

तेनाहं सहितः सङ्ख्ये यादोभिश्च समाहितः । मायामेतां हनिष्यामि त्वत्प्रसादान्न संशयः ।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ वैशम्पायन उवाच ॥ एवमस्त्विति संहृष्टः शक्रस्त्रिदशवर्द्धनः । सन्दिदेशागतं सोमं युद्धाय शिशिरायुधं ।
॥ शक्र उवाच ॥ गच्छ सोम सहायत्वं कुरु पाशधरस्य वै । असुराणां विनाशाय जयार्थञ्च दिवौकसां ।
त्वमप्रतिमवीर्य्यश्च ज्योतिषाञ्चेश्वरेश्वरः । त्वन्मयं सर्व्वलोकानां रसं रसविदो विदुः ।
क्षयवृद्धी तवाख्याते सागरस्येव मण्डले । परिवर्त्तस्यहोरात्रं कालं जगति योजयन् ।
लोकच्छायामयं लक्ष्म तवाङ्के शशसंज्ञितं । न विदुः सोम देवाश्च ये च नक्षत्रयोगिनः ।
त्वमादित्यपथादूर्द्ध्वं ज्योतिषाञ्चोपरि स्थितः । तमः प्रोत्सार्य्य सहसा भासयस्यखिलं जगत् ।
श्वेतभानुर्हिमज्योतिर्ज्योतिषामधिपः शशी । अब्दकृत् कालयोगात्मा इज्यो यज्ञरसोऽव्ययः ।
ओषधीशः क्रियायोनिरब्जयोनिरनुष्णभाक् । शीतांशुरमृताधारश्चपलः श्वेतवाहनः ।
त्वं कान्तिः कान्तवपुषां त्वं सोमः सोमपायिनां । सौम्यस्त्वं सर्व्वलोकानां तिमिरघ्नस्त्वमृक्षराट् ।
तद्गच्छ त्वं सहानेन वरुणेन वरूथिना । शमयस्वासुरीं मायां यया दह्याम संयुगे ।
॥ सोम उवाच ॥ यन्मां वदसि युद्धार्थे देवराज वरप्रद । एष वर्षामि शिशिरं दैत्यमायापकर्षणं ।
एतान्मच्छीतनिर्दग्धान् पश्यस्व हिमवेष्टितान् । विमायान् विमदांश्चैव दानवांस्तु महामृधे ।
॥ वैशम्पायन उवाच ॥ ततो हिमकरोत्सृष्टाः सबाष्पा हिमवृष्टयः । वेष्टयन्ति स्म तान् घोरान् दैत्यान्मेघगणा इव ।
तौ पाशशुक्लांशुधरौ वरुणेन्दू महाहवे । जघ्नतुर्हिमपातैश्च पाशपातैश्च दानवान् ।
द्वावम्बुनाथौ समरे तौ पाशहिमयोधिनौ । मृधे चेरतुरम्भोभिः क्षुब्धाविव महार्णवौ ।
ताभ्यामाप्लावितं सैन्यं तद्दानवमदृश्यत । जगत्संवर्त्तकाम्भोदैः प्रवृष्टैरिव संवृतं ।
तावुद्यतांशुपाशौ तु शशाङ्कवरुणावुभौ । शमयामासतुर्मायां देवौ तां दैत्यनिर्म्मितां ।
शीतांशुजालनिर्दग्धाः पाशैश्च स्पन्दिता मृधे । न शेकुश्चलितुं दैत्या विशिरस्का इवाद्रयः ।
शीतांशुनिहतास्ते तु पेतुर्दैत्या हिमार्द्दिताः । हिमप्लावितसर्व्वाङ्गा निरूष्माण इवाग्नयः ।
तेषान्तु दिवि दैत्यानां विपरीतप्रभाणि ह । विमानानि विचित्राणि पतन्ति चोत्पतन्ति च ।
तान् पाशहस्तग्रथितांश्छादितान् शीतरश्मिना । मयो ददर्श मायावी दानवान्दिवि दानवः ।
स शिलाजालविततां गण्डशैलाट्टहासिनीं । पादपोत्कटकूटाग्रां कन्दराकीर्णकाननां ।
सिंहव्याघ्रगणाकीर्णां नदन्तीं दैत्ययूथपैः । ईहामृगगणाकीर्णां पवनाघूर्णितद्रुमां ।
निर्म्मितां स्वेन पुत्रेण क्रौञ्चेन दिवि कामगां । प्रथितां पार्व्वतीं मायां सृजते स समन्ततः ।
सा सशब्दैः शिलावर्षैः संपतद्भिश्च पादपैः । निजघ्ने देवसङ्घांस्तान्दानवांश्चाप्यजीवयत् ।
नैशाकरी वारुणी च माये अन्तर्दधतुस्ततः । अश्मभिश्चायसघनैः कीर्णा देवगणा रणे ।
साश्मवृक्षान्तविषमा द्रुमपर्व्वतसङ्कटा । अभवद्घोरसञ्चारा पृथिवी पर्व्वतैरिव ।
नानाहतोऽश्मनिकरैः कश्चिच्छिलाहतः पराजितः । नानिरुद्धो द्रुमगणैर्देवोऽदृश्यत संयुगे ।

तदपभ्रष्टधनुषं भग्नप्रहरणाविलं । निष्प्रयत्नं सुरानीकं वर्जयित्वा गदाधरं ।
स हि युद्धगतः श्रीमानीशो न स्म व्यकम्पत । सहिष्णुत्वाज्जगत् स्वामी न चुक्रोध गदाधरः ।
कालज्ञः कालमेघाभः समैक्षत् कालमाहवे । देवासुरविमर्द्दं स द्रष्टुकामो जनार्द्दनः ।
ततो भगवता दिष्टौ रणे पावकमारुतौ । मायाया मयसृष्टायाः प्रवृद्धायाः शमाय वै ।
ततः प्रवृत्तावन्योन्यं प्रहृष्टौ ज्वालवेगिनौ । चोदितौ विष्णुवाक्येन तां मायामपकर्षतां । ११५५
ताभ्यामुद्भ्रान्तमेघाभ्यां प्रवृद्धाभ्यां महामृधे । दग्धा सा पार्व्वती माया भस्मीभूता ननाश ह ।
सोऽनिलोऽनलसंयुक्तः सोऽनलश्चानिलाकुलः । दैत्यसेनां ददहतुर्युगान्तेष्विव मूर्च्छितौ ।
वायुः प्रधावितस्तत्र पश्चादग्निश्च मारुतात् । चेरतुर्द्दानवानीके क्रीडन्तावनिलानलौ ।
भस्मावयवभूतेषु प्रपतत्सु पतत्सु च । दानवानां विमानेषु हतकर्म्मणि पावके ।
वातस्कन्धापविद्धेषु विमानेषु समन्ततः । मायावधे विनिर्वृत्ते स्तूयमाने गदाधरे । ११६०
निष्प्रयत्नेषु दैत्येषु त्रैलोक्ये मुक्तबन्धने । संप्रहृष्टेषु देवेषु साधु साध्विति सर्व्वशः ।
जये दशशताक्षस्य मयस्य च पराजये । दिक्षु सर्व्वासु शुद्धासु प्रवृत्ते धर्मसंस्तरे ।
अपावृते चन्द्रपथे स्वयनस्थे दिवाकरे । प्रकृतिस्थेषु लोकेषु त्रिषु चारित्रबन्धुषु ।
अभिन्नबन्धने मृत्यौ हूयमाने हुताशने । यज्ञभागिषु देवेषु स्वर्गार्थं दर्शयत्सु च ।
लोकपालेषु सर्व्वेषु दिक्षु संयानवर्त्तिषु । भावे तपसि शुद्धानामभावे पापकर्म्मिणां । ११६५
देवपक्षे प्रमुदिते दैत्यपक्षे पराजिते । त्रिपादविग्रहे धर्मे अधर्म्मे पादविग्रहे ।
अपावृतमहाद्वारे वर्त्तमाने च सत्पथे । स्वधर्म्मस्थेषु वर्णेषु लोकेऽस्मिन्नाश्रमेषु च ।
प्रजारक्षणयुक्तेषु भ्राजमानेषु राजसु । गीयमानासु गाथासु देवसंस्तवमादिषु ।
प्रशान्तकल्मषे लोके शान्ते तमसि दारुणे । अग्निमारुतयोस्तस्मिन् वृत्ते संग्रामकर्म्मणि ।
तन्मया विमला लोकास्ताभ्यां जयकृतप्रियाः । पूर्व्वदैत्यभयं श्रुत्वा मारुताग्निकृतं महत् । ११७०
कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यत । भास्कराकारमुकुटः शिञ्जिताङ्गदभूषणः ।
मन्दराचलसङ्काशो महारजतसंवृतः । शतप्रहरणोदग्रः शतबाहुः शताननः ।
शतशीर्षः स्थितः श्रीमान् शतशृङ्ग इवाचलः । कक्षे महति संवृद्धो निदाघ इव पावकः ।
धूम्रकेशो हरिच्छ्मश्रुर्द्दंष्ट्रौष्ठपुटाननः । त्रैलोक्यान्तरविस्तारी धारयन् वपुषा स्थितिं ।
बाहुभिस्तुलयन् व्योम क्षिपन् पद्भ्यां महीधरान् । ईरयन्मुखनिश्वासैर्वृष्टिमन्तो बलाहकान् । ११७५
तिर्य्यगायतरक्ताक्षं मन्दरोदग्रवर्च्चसं । दिधक्षन्तमिवायान्तं सर्व्वान् देवगणान्मृधे ।
तर्ज्जयन्तं सुरगणान् छादयन्तं दिशो दश । संवर्त्तकाले तृषितं दृप्तं मृत्युमिवोत्थितं ।
सुतलेनोच्छ्रयवता विपुलाङ्गुलिपर्व्वणा । लम्बाभरणपूर्णेन किञ्चिच्चलितवर्म्मणा ।
उच्छ्रितेनाग्रहस्तेन दक्षिणेन वपुष्मता । दानवान् देवनिहतानुत्तिष्ठध्वमिति ब्रुवन् ।
समरे कालनेमिं तं दिपतां कालनेमिनं । वीक्षन्ति स्म सुराः सर्व्वे भयवित्रस्तलोचनाः । ११८०

तं स्म वीक्षन्ति भूतानि क्रमन्तं कालनेमिनं। त्रिविक्रमं विक्रमन्तं नारायणमिवापरं।
सोऽच्छ्रयन् प्रथमं पादं मारुताघूर्णिताम्बरः। प्राक्रामदसुरो युद्धे त्रासयन् सर्व्वदेवताः।
मयेनासुरेन्द्रेण परिष्वक्तः क्रमन् रणे। कालनेमिर्बभौ दैत्यः सविष्णुरिव मन्दरः।
अथ विव्यथिरे देवाः सर्व्वे सेन्द्रपुरोगमाः। दृष्ट्वा कालमिवायान्तं कालनेमिं भयावहं।
इति श्रीमहाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

वैशम्पायन उवाच ॥ दानवांस्तांस्तु पिप्रीषुः कालनेमिर्महासुरः। व्यवर्द्धत महातेजास्तपान्ते जलदो यथा। २८१५
तं त्रैलोक्यान्तरगतं दृष्ट्वा ते दानवेश्वराः। उत्तस्थुरपरिश्रान्ताः प्राप्येवामृतमुत्तमं।
ते वीतभयसंत्रासा मयतारपुरोगमाः। तारकामयसंग्रामे सततं जितकाशिनः।
रेजुरायोधनगता दानवा युद्धदुर्मदाः। अस्त्रमभ्यसतां तेषां व्यूहांश्च परिधावतां।
प्रेक्षतां चाभवत् प्रीतिर्दानवं कालनेमिनं। ये तु तत्र मयस्यासन् मुख्या युद्धविशारदाः।
तेऽपि सर्व्वे भयं त्यक्त्वा हृष्टा योद्धुमुपस्थिताः। मयस्तारो वराहश्च हयग्रीवश्च वीर्य्यवान्। २८२०
विप्रचित्तिसुतः श्वेतः खरलम्बावुभावपि। अरिष्टो बलिपुत्रश्च किशोरोष्ट्रौ तथैव च।
स्वर्भानुश्चामरप्रख्यो वक्रयोधी महासुरः। एते चास्त्रविदः सर्व्वे सर्व्वे तपसि संस्थिताः।
दानवाः कृतिनो जग्मुः कालनेमिनमुत्तमं। ते गदाभिश्च गुर्व्वीभिश्चक्रैश्च सपरश्वधैः।
कालकल्पैश्च मुसलैः क्षेपणीयैश्च मुद्गरैः। अश्मभिश्चाद्रिसदृशैर्गण्डशैलैश्च दंशितैः।
पट्टिशैर्भिन्दिपालैश्च परिघैश्चोत्तमायुधैः। घातनीभिश्च गुर्व्वीभिः शतघ्नीभिस्तथैव च। २८२५
युगैर्यन्त्रैश्च निर्मुक्तैरर्गलैश्चायताडितैः। दोर्भिश्चायतपीनांसैः पाशैः प्रासैश्च मूर्च्छितैः।
सर्पैर्लेलिह्यमानैश्च विसर्पद्भिश्च सायकैः। वज्रैः प्रहरणीयैश्च दीप्यमानैश्च तोमरैः।
विकोषैश्चासिभिर्नीलैः शूलैश्च शितनिर्मलैः। ते वै सन्दीप्तमनसः संप्रदीप्तोत्तमायुधाः।
कालनेमिं पुरस्कृत्य तस्थुः संग्राममूर्द्धनि। सा दीप्तशस्त्रप्रवरा दैत्यानां रुरुचे चमूः।
द्यौर्निमीलितनक्षत्रा घनैरिवाम्बुदागमे। देवतानामपि चमूर्मुमुदे शक्रपालिता। २८३०
दीप्ताग्नेतोप्यरूपेण चन्द्रभास्करवर्च्चसा। वायुवेगवती सौम्या तारागणपताकिनी।
तोयदाविद्धवसना ग्रहनक्षत्रहासिनी। यमेन्द्रवरुणैर्गुप्ता धनदेन च धीमता।
सम्प्रदीप्ताग्निपवना नारायणपरायणा। सा समुद्रौघसदृशी दिव्या देवमहाचमूः।
रराजास्त्रवती भीमा यक्षगन्धर्व्वशालिनी। तयोश्चम्वोस्तदानीन्तु बभूव स समागमः।
द्यावापृथिव्योः संयोगे यथा स्यात् युगपर्य्यये। तद्युद्धमभवद्घोरं देवदानवसंकुलं। २८३५
क्षमापराक्रमप्रायं दर्पस्य विनयस्य च। निश्चक्रमुर्बलाभ्यान्तु ताभ्यां भीमाः सुरासुराः।
पूर्व्वापराभ्यां संरब्धाः सागराभ्यामिवाम्बुदाः। ताभ्यां बलाभ्यां संहृष्टाश्चेरुस्ते देवदानवाः।
वनाभ्यां पर्व्वतीयाभ्यां पुष्पिताभ्यां यथा गजाः। समाजघ्नुस्तदा भेरीः शङ्खान्दध्मुश्च नैकशः।
स शब्दो द्यां भुवञ्चैव दिशश्च समपूरयत्। ज्याघाततलनिर्घोषो धनुषामपि निःस्वनः।

दुन्दुभीनाञ्च नदतां दैत्यानन्तर्द्दधुः स्वनाः । तेऽन्योन्यमभिसम्पेतुः पातयन्तः परस्परं । ११७०
बभञ्जुर्ब्बाहुभिर्बाहून् द्वन्द्वमन्ये युयुत्सव. । देवताश्चासृजन् घोरान् परिघांश्चोत्तमायसान् ।
ससृजुराजौ निस्त्रिंशान् गदा गुर्व्वीश्च दानवाः । गदानिपातैर्भग्नाङ्गा बाणैश्च शकलीकृताः ।
परिपेतुर्भृशं केचित् न्युब्जाः केचित् समभ्जिरे । ततोरथैः सतुरगैर्विमानैश्चाशुगामिभिः ।
संपेतुस्ते सुसंरब्धा रोषादन्योन्यमाहवे । संवर्त्तमानाः समरे निवर्त्तन्तस्तथापरे ।
रथा रथैर्न्यरुध्यन्त पदातास्च पदातिभिः । तेषां रथानां तुमुलः स शब्दः शब्दवाहिनां । ११७५
बभूवाथ प्रसक्तानां नभसीव पयोमुचां । बभञ्जिरे रथान् केचित् केचित् संम्दिता रथैः ।
सम्बाधमेके संप्राप्य न शेकुश्चलितुं रथाः । अन्योऽन्यं समरेऽन्ये तु दोर्भ्यामुत्क्षिप्य दर्पिताः ।
संह्रादमानाभरणा जघ्नुस्तत्रासिचर्म्मिणः । अस्त्रैरन्ये विनिर्भिन्ना वेमू रक्तं हता युधि ।
क्षरज्जलानां सदृशा जलदानां समागमे । तदस्त्रशस्त्रग्रथितं क्षिप्तोत्क्षिप्तगदाविलं ।
देवदानवसंक्षुब्धं सङ्कुलं युद्धमाबभौ । तद्दानवमहामेघं देवायुधतडित्प्रभं । ११८०
अन्योऽन्यबाणवर्षन्तत् युद्धदुर्द्दिनमाबभौ । एतस्मिन्नन्तरे क्रुद्धः कालनेमिर्म्महासुरः ।
व्यवर्द्धत समुद्रौघैः पूर्य्यमाण इवाम्बुदः । तस्य विद्युच्चलापीडाः प्रदीप्ताशनिवर्षिणः ।
गात्रान्नगशिरप्राप्ताद्विनिस्चेरुर्बलाहकाः । क्रोधान्निश्वसतस्तस्य भ्रुभेदस्वेदवर्षिणः ।
साग्निनिर्घोषपवनान्मुखान्निश्चेरुरर्चिषः । तिर्य्यगूर्द्धञ्च गगणे ववृधुस्तस्य बाहवः ।
पञ्चास्याः कृष्णवपुषो लेलिहाना इवोरगाः । सोऽस्त्रजालैर्बहुविधैर्द्धनुर्भिः परिघैरपि । ११८५
दिव्यमाकाशमावव्रे पर्व्वतैरुच्छ्रितैरिव । सोऽनिलोद्धूतवसनस्तस्थौ संग्राममूर्द्धनि ।
सन्ध्यातपग्रस्तशिखः शाखाम्मेरुरिवाचलः । ऊरुवेगपरिक्षिप्तैः शैलशृङ्गाग्रपादपैः ।
अपातयद्देवगणान् वज्रेणेव महागिरीन् । बाहुभिः शस्त्रनिस्त्रिंशैश्छिन्नभिन्नशिरोरसः ।
न शेकुश्चलितुं देवाः कालनेमिहता युधि । मुष्टिभिर्न्निहताः केचित् केचिच्च विदलीकृताः ।
यक्षगन्धर्व्वपतयः पेतुः सह महोरगैः । तेन वित्रासिता देवाः समरे कालनेमिना । ११९०
न शेकुर्य्यत्नवन्तोऽपि यत्नं कर्त्तुं विचेतसः । तेन शक्रः सहस्राक्षः स्यन्दितः शरबन्धनैः ।
ऐरावतगतः सङ्ख्ये चलितुं न शशाक ह । निर्ज्जलाम्भोदसदृशो निर्जलार्णवसप्रभः ।
निर्व्यापारः कृतस्तेन विपाशो वरुणो मृधे । रणे वैश्रवणस्तेन परिघैः कालरूपिभिः ।
विलपन् लोकपालेशस्त्याजितो धनदः क्रियां । यमः सर्व्वहरस्तेन मृत्युप्रहरणो रणे ।
याम्यामवस्थाममरोनीतः स्वां दिशमाविशत् । स लोकपालान्निर्जित्य कृत्वा तेषाञ्च कर्म्म तत् । ११९५
दिक्षु सर्व्वासु देहं स्वं चतुर्द्धा विदधे तदा । स नक्षत्रपथं गत्वा दिव्यं स्वर्भानुदर्शितं ।
जहार लक्ष्मीं सोमस्य यश्चास्य विषयं महत् । चालयामास दीप्तांशुं स्वर्गद्वारात् सभास्करं ।
सायनञ्चास्य विषयं जहार दिनकर्म्म च । सोऽग्निं देवमुखे दृष्टा चकारात्ममुखे शयं ।
वायुञ्च तरसा जित्वा चकारात्मवशानुगं । स समुद्रात् समानीय सर्व्वाश्च सरितो बलात् ।

चकारात्मवशे वीर्य्याद्देवभूतांश्च विश्वव । अथ स वशगाः कृत्वा दिविजांश्च भूमिजान् । २७००
स्थापयामास जगतीं सुगुप्तां धरणीधरे । स स्वयम्भूरिवाभाति महाभूतपतिर्महान् ।
सर्व्वलोकमयो दैत्य सर्व्वलोकभयावह । स लोकपालैकवपुश्चन्द्रसूर्य्यग्रहात्मवान् ।
पावकानिलसङ्घातो रराज युधि दानव । पारमेष्ठ्ये स्थितं स्थाने लोकानां प्रभवाप्यये ।
तं तुष्टुवुर्दैत्यगणा देवा इव पितामहं ।
इति श्री महाभारते खिलेषु हरिवंशे हरिवंशपर्व्वणि अष्टचत्वारिंशोऽध्याय ॥ ४८ ॥
॥ वैशम्पायन उवाच ॥ पश्य तं नाभ्यवर्त्तन्त विपरीतेन कर्म्मणा । वेदा धर्म्माः क्षमा सत्यं श्रीश्च नारायणाश्रया । २७०५
स तेषामनुपस्थानात् सक्रोधो दानवेश्वरः । वैष्णवं पदमन्विच्छन् ययौ नारायणान्तिकं ।
स ददर्श सुपर्णस्थं शङ्खचक्रगदाधरं । दानवानां विनाशाय भ्रामयन्तं गदां शुभां ।
सजलाम्भोदसदृशं विद्युत्सदृशवाससं । स्वारूढं स्वर्णपत्राढ्यं शिखिनं काश्यपं खगं ।
दृष्ट्वा दैत्यविनाशाय रणे सुस्थमिव स्थितं । दानवो विष्णुमक्षोभ्यं बभाषे क्षुब्धमानसः ।
अयं स रिपुरस्माकं पूर्व्वेषां दानवर्षिणां । अर्णवावासिनश्चैव मधोर्वै कैटभस्य च । २७१०
अयं सविग्रहोऽस्माकमशाम्य किल कथ्यते । येन न संयुगेष्वद्य बहवो दानवा हताः ।
अयं स निर्घृणो युद्धे स्त्रीबालवधकारक । येन दानवनारीणां सीमन्तोद्धरणं कृतं ।
अयं स विष्णुर्देवानां वैकुण्ठश्च दिवौकसां । अनन्तो भोगिनामप्सु स्वयम्भूश्च स्वयम्भुव ।
अयं स नाथो देवानामस्माकं विप्रिये स्थित । अस्य क्रोधेन महता हिरण्यकशिपुर्हत ।
अस्य छायामपाश्रित्य देवा मखमुखे स्थिता । आज्यं महर्षिभिर्दत्तमश्नुवन्ति त्रिधा कृत । २७१५
अयं नो निधने हेतु सर्व्वेषां देववद्विषां । अस्य चक्रे प्रविष्टानि कुलान्यस्माकमाहवे ।
अयं स किल युद्धेषु सुरार्थे त्यक्तजीवित । सवितुस्तेजसा युक्तं चक्रं क्षिपति शत्रुषु ।
अयं स कालो दैत्यानां कालभूते मयि स्थिते । अतिक्रान्तस्य कालस्य फलं प्राप्स्यति दुर्म्मति ।
दिष्ट्येदानीं समक्षं मे विष्णुरेष समागत । अद्य मद्बाणनिष्पिष्टो मामेव प्रणमिष्यति ।
यास्याम्यपचितिं दिष्ट्या पूर्व्वेषामद्य संयुगे । इमं नारायणं हत्वा दानवानां भयावहं । २७२०
क्षिप्रमेव वधिष्यामि रणे नारायणाश्रयान् । जात्यन्तरगतोऽप्येष मृधे बाधति दानवान् ।
एषोऽनन्त पुरा भूत्वा पद्मनाभ इति स्मृत । जघानैकार्णवे घोरे तावुभौ मधुकैटभौ ।
विनिवेश्य स्वके ऊरौ निहतौ दानवेश्वरौ । द्विधा भूतं वपु कृत्वा सिंहार्द्धं नरसंस्थितं ।
पितरं मे जघानैको हिरण्यकशिपुं पुरा । शुभं गर्भमधत्तैनमदितिर्देवतारणि ।
यज्ञकाले बलेर्य्यो वै कृत्वा वामनरूपतां । त्रीन् लोकानाजहारैष क्रममाणस्त्रिभिः क्रमै । २७२५
भूयस्त्विदानीं समरे सम्प्राप्ते तारकामये । मया सह समागम्य सह देवैर्विनङ्क्ष्यति ।
स एवमुक्त्वा बहुधा क्षिपन्नारायणं रणे । वाग्भिरप्रतिरूपाभिर्युद्धमेवाभ्यरोचयत् ।
क्षिप्यमाणोऽसुरेन्द्रेण न चुकोप गदाधर । क्षमाबलेन महता सस्मितं वाक्यमब्रवीत् ।

श्रूयन्ते गिरयश्चापि वनेऽस्मिन् कामरूपिणः । प्रविश्य तास्तास्तनवो रमन्ते स्वेषु सानुषु ।
भूत्वा केशरिणः सिंहा व्याघ्राश्च नखिनाम्वराः । वनानि स्वानि रक्षन्ति चासयन्तो वनच्छिदः ।
यदा चैषां विकुर्व्वन्ति ते वनालयजीविनः । घ्नन्ति तानेव दुर्वृत्तान् पौरुषादेन कर्म्मणा । ३८८५
मन्त्रयज्ञपरा विप्राः सीतायज्ञाश्च कर्षकाः । गिरियज्ञा वयं गोपा इज्योऽस्माभिर्गिरिर्व्वने ।
तन्मह्यं रोचते गोपा गिरियज्ञः प्रवर्त्त्यतां । कर्म्म कृत्वा सुखं स्थाने पादपेऽथवा गिरौ ।
तत्र हत्वा पशून् मेध्यान् वितर्द्यायतने शुभे । सर्व्वघोषस्य सन्दोहः क्रियतां किं विचार्य्यते ।
तं शरत्कुसुमापीडाः परिवार्य्य प्रदक्षिणं । गावो गिरिवरं सर्व्वास्ततो यान्तु पुनर्व्वनं ।
प्राप्ता किलेयं हि गवां स्वादुतोयतृणा गुणैः । शरत्प्रमुदिता रम्या गतमेघजलाशया । ३८९०
प्रियकैः पुष्पितैर्गौरं श्यामं वाणासनैः क्वचित् । कठोरतृणमाभाति निर्म्मयूररुतं वनं ।
विजला विमला व्योम्नि विबलाका विविद्युतः । विवर्त्तन्ते जलधरा विदन्ता इव कुञ्जराः ।
पटुना मेघवातेन नवतोयानुकर्षिणा । पर्णोत्करघनाः सर्व्वाः प्रसादं यान्ति निम्नगाः ।
सितवर्षाम्बुदोष्णीषं हंसचामरवीजितं । पूर्णचन्द्रामलच्छत्रं साभिषेकमिवाम्बरं ।
हर्षैर्व्विहसितानीव समुत्कृष्टानि सारसैः । सर्व्वाणि तनुतां यान्ति जलानि जलदक्षये । ३८९५
चक्रवाकस्तनतटाः पुलिनश्रोणिमण्डलाः । हंसलक्षणहासिन्यः पतिं यान्ति समुद्रगाः ।
कुमुदोत्फुल्लमुदकं ताराभिश्चित्रमम्बरं । सममभ्युत्स्मयन्तीव शर्व्वरीष्वितरेतरं ।
मत्तक्रौञ्चावघुष्टेषु कलमापक्वपाण्डुषु । निर्वृष्टरमणीयेषु वप्रेषु रमते मनः ।
पुष्करिण्यस्तडागानि वाप्यश्च विकचोत्पलाः । केदाराः सरितश्चैव सरांसि च श्रिया ज्वलन् ।
पङ्कजानि च ताम्राणि तथाऽन्यानि सितान्यपि । उत्पलानि च नीलानि भेजिरे वारिजां श्रियं । ३९००
मदं जह्रुः शिताप्राङ्गा मन्दं ववृधिरेऽनिलाः । अभवद्व्यभ्रमाकाशमभूच्च निभृतोऽर्णवः ।
ऋतुपर्य्यायशिथिलैर्वृत्तनृत्यसमुज्झितैः । मयूराङ्गरुहैर्भूमिर्व्वहुनेत्रेव लक्ष्यते ।
सुपङ्कमलिनैस्तीरैः काशपुष्पलताकुलैः । हंससारसविन्यासैर्यमुना साऽतिशोभना ।
कालदकेषु शस्येषु केदारेषु वनेषु च । शस्यादा जलजादाश्च मत्ता विरुरुवुः खगाः ।
सिषिचुर्यानि जलदा जलेन जलदागमे । तानि शस्यानि बालानि कठिनत्वङ्गतानि वै । ३९०५
त्यक्त्वा मेघमयं वासः शरद्गुणविदीपितः । एष वै विमले व्योम्नि हृष्टो वसति चन्द्रमाः ।
क्षीरिण्यो द्विगुणं गावः प्रमत्ता द्विगुणं वृषाः । वनानां द्विगुणा लक्ष्मीः शस्यैर्गुणवती मही ।
ज्योतींषि घनमुक्तानि पद्मवन्ति जलानि च । मनांसि च मनुष्याणां प्रसादमुपयान्ति वै ।
असृजत् सविता व्योम्नि निर्मुक्तो जलदैर्भृशं । शरत्प्रज्वलितं तेजस्तीक्ष्णरश्मिर्व्विशोषयन् ।
नीराजयित्वा सैन्यानि प्रयान्ति विजिगीषवः । अन्योन्यराष्ट्राभिमुखाः पार्थिवाः पृथिवीक्षितः । ३९१०
बन्धुजीवाभिताम्रासु बहुपङ्कवतीषु च । मनस्तिष्ठति कान्तासु चित्रासु वनराजिषु ।
वनेषु च विराजन्ते पादपा वनशोभिनः । असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः ।

बलेनायं हतो दैत्यो बालेनाक्लिष्टकर्म्मणा । बलदेवेति नामास्य देवैरुक्तं दिवि स्थितैः । ३७८६
बलन्तु बलदेवस्य तदा भुवि जना विदुः । कर्म्मणं निहते दैत्ये देवैरपि दुरासदे ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां प्रलम्बवधे एकसप्ततीऽध्यायः ॥ ७१ ॥
॥ वैशम्पायन उवाच ॥ तयोः प्रवृत्तयोरेवं कृष्णस्य च बलस्य च । वने विचरतोर्म्मासौ व्यतियातौ स्म वार्षिकौ।
व्रजमाजग्मतुस्तौ तु व्रजे शुश्रुवतुस्तदा । प्राप्तं शक्रमहं वीरौ गोपांश्चोत्सवलालसान् ।
कौतूहलादिदं वाक्यं कृष्णः प्रोवाच तत्र तान् । कोऽयं शक्रमहो नाम येन वो हर्ष आगतः ।
तत्र वृद्धतमस्त्वेको गोपो वाक्यमुवाच ह । श्रूयतां तात शक्रस्य यदर्थं ध्वज इज्यते । ३७९०
देवानामीश्वरः शक्रो मेघानाञ्चारिसूदन । तस्य चायं महः कृष्ण लोकनाथस्य शाश्वतः ।
तेन सञ्चोदिता मेघास्तस्य चायुधभूषिताः । तस्यैवाज्ञाकराः शस्यं जनयन्ति नवाम्बुभिः ।
मेघस्य पयसो दाता पुरुहूतः पुरन्दरः । संप्रहृष्टः स भगवान् प्रीणयत्यखिलं जगत् ।
तेन सम्पादितं शस्यं वयमन्ये च देहिनः । वर्त्तयामोपयुञ्जानास्तर्पयामश्च देवताः ।
देवे वर्षति लोकेऽस्मिंस्तत शस्यं प्रवर्द्धते । पृथिव्यां तर्पितायान्तु शाश्वतं सस्यते जगत् । ३७९१
क्षीरवत्यस्त्विमा गावो वत्सवत्यश्च निर्वृताः । तेन संवर्द्धितास्तात तृणैः पुष्टाः सपुङ्गवाः ।
नाशस्या नातृणा भूमिर्न बुभुक्षार्द्दितो जनः । दृश्यते यत्र दृश्यन्ते वृष्टिमन्तो बलाहकाः ।
दुदोह सवितुर्गा वै शक्रो दिव्याः पयस्वलाः । ताः क्षरन्ति नवं क्षीरं मेध्यं मेघौघधारितं ।
वाय्वीरितन्तु मेघेषु करोति कदनं महत् । जवेनावर्ज्जितञ्चैव गर्ज्जतीति जना विदुः ।
तस्य चैवोह्यमानस्य वायुयुक्तैर्बलाहकैः । वज्राशनिसमाः शब्दाः श्रूयन्तेऽगमभेदिन । ३८००
तज्जलं वज्रनिष्पेषैर्विमुञ्चति नभोगतैः । बहुभिः कामगैर्मेघैः शक्रो भृत्यैरिवेश्वरः ।
क्वचिद्दुर्द्दिनसङ्काशैः क्वचिच्छिन्नाभ्रसन्निभैः । क्वचिन्निम्नाञ्जनाकारैः क्वचिच्छीकरवर्षिभिः ।
मण्डयतीव देवेन्द्रो विश्वमेवं नभोघनैः । क्वचिच्छीकरमूकलं कुर्व्वन्निर्गुणे घने ।
एवमेतत्पयो दुग्धं गोभिः सूर्य्यस्य शाश्वतं । पर्ज्जन्यः सर्व्वभूतानां भवाय भुवि वर्षति ।
यस्मात् प्रावृडियं कृष्ण शक्रस्य भुवि भाविनी । तस्मात् प्रावृषि राजानः सर्व्वे शक्रं मुदा युताः । ३८०१
महैः सुरेशमर्च्चन्ति वयमन्ये च मानवाः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शिशुचर्य्यायां घोषवाक्ये द्विसप्ततीऽध्यायः ॥ ७२ ॥
॥ वैशम्पायन उवाच ॥ गोपवृद्धस्य वचनं श्रुत्वा शक्रपरिग्रहे । प्रभावज्ञोऽपि शक्रस्य वाक्यं दामोदरोऽब्रवीत् ।
वयं वनचरा गोपाः सदा गोधनजीविनः । गावोऽस्मद्दैवतं विद्धि गिरयश्च वनानि च ।
कर्षकाणां कृषिर्वृत्तिः पण्यं विपणिजीविनां । गावोऽस्माकं परा वृत्तिरेतत्त्रैविद्यमुच्यते ।
विद्यया यो यया युक्तस्तस्य सा दैवतं परं । सैव पूज्यार्च्चनीया च सैव तस्योपकारिणी । ३८१०
योऽन्यस्य फलमश्नानः करोत्यन्यस्य सत्क्रियां । द्वावनर्थौ स लभते प्रेत्य चेह च मानवः ।
कृष्यन्ता प्रथिता सीमा सीमन्तां श्रूयते वनं । वनान्ता गिरयः सर्व्वे सा चास्माकं गतिर्ध्रुवा ।

श्रूयन्ते गिरयश्चापि वनेऽस्मिन् कामरूपिणः। प्रविश्य तांस्तांस्तनवो रमन्ते स्वेषु सानुषु।
भूत्वा केशरिणः सिंहा व्याघ्राश्च नखिनाम्बराः। वनानि स्वानि रक्षन्ति त्रासयन्तो वनच्छिदः।
यदा चैषां विकुर्व्वन्ति ते वनालयजीविनः। घ्नन्ति तानेव दुर्वृत्तान् पौरुषादेन कर्म्मणा।
मन्त्रयज्ञपरा विप्राः सीतायज्ञाश्च कर्षकाः। गिरियज्ञा वयं गोपा इज्योऽस्माभिर्गिरिर्व्वने।
तन्मह्यं रोचते गोपा गिरियज्ञः प्रवर्त्यतां। कर्म्म कृत्वा सुखं स्थाने पादपेऽप्यथ वा गिरौ।
तत्र हत्वा पशून् मेध्यान् वितर्द्यायतने शुभे। सर्व्वघोषस्य सन्दोहः क्रियतां किं विचार्य्यते।
तं शरत्कुसुमापीडाः परिवार्य्य प्रदक्षिणं। गावो गिरिवरं सर्व्वास्ततो यान्तु पुनर्व्वनं।
प्राप्ता किलेयं हि गवां स्वादुतोयतृणा गुणैः। शरत्प्रमुदिता रम्या गतमेघजलाशया।
प्रियकैः पुष्पितैर्गौरं श्यामं बाणासनैः क्वचित्। कठोरतृणमाभाति निर्म्मयूररुतं वनं।
विजला विमला व्योम्नि विबलाका विविद्युतः। विवर्त्तन्ते जलधरा विदन्ता इव कुञ्जराः।
पटुना मेघवातेन नवतोयानुकर्षिणा। पर्णोत्करघनाः सर्व्वाः प्रसादं यान्ति निम्नगाः।
सितवर्षाम्बुदोष्णीषं हंसचामरवीजितं। पूर्णचन्द्रामलच्छत्रं साभिषेकमिवाम्बरं।
हंसैर्व्विहसितानीव समुत्कृष्टानि सारसैः। सर्व्वाणि तनुतां यान्ति जलानि जलदक्षये।
चक्रवाकस्तनतटाः पुलिनश्रोणिमण्डलाः। हंसलक्षणहासिन्यः पतिं यान्ति समुद्रगाः।
कुमुदोत्फुल्लमुदकं ताराभिश्चित्रमम्बरं। सममभ्युत्स्मयन्तीव शर्व्वरीष्वितरेतरं।
मत्तक्रौञ्चावघुष्टेषु कलमापक्वपाण्डुषु। निर्दिष्टरमणीयेषु वप्रेषु रमते मनः।
पुष्करिण्यस्तडागानि वाप्यश्च विकचोत्पलाः। केदाराः सरितश्चैव सरांसि च श्रिया ज्वलन्।
पङ्कजानि च ताम्राणि तथाऽन्यानि सितान्यपि। उत्पलानि च नीलानि भेजिरे वारिजां श्रियं।
मदं जहुः शितापाङ्गा मन्दं ववृधिरेऽनिलाः। अभवद्व्यभ्रमाकाशमभूच्च निभृतोऽर्णवः।
ऋतुपर्य्यायशिथिलैर्नृत्तनृत्यसमुच्छ्रितैः। मयूराङ्गरुहैर्भूमिर्व्विकृतेनेव लक्ष्यते।
सुपङ्कमलिनैस्तीरैः काशपुष्पलताकुलैः। हंससारसविन्यासैर्यमुना साऽतिशोभना।
कालपक्वेषु शस्येषु केदारेषु वनेषु च। शस्यादा जलजादाश्च मत्ता विरुरुवुः खगाः।
सिषिचुर्यानि जलदा जलेन जलदागमे। तानि शस्यानि बालानि कठिनत्वङ्गतानि वै।
त्यक्त्वा मेघमयं वासं शरद्गुणविदीपितः। एष वै विमले व्योम्नि हृष्टो वसति चन्द्रमाः।
क्षीरिण्यो द्विगुणं गावः प्रमत्ता द्विगुणं वृषाः। वनानां द्विगुणा लक्ष्मीः शस्यैर्गुणवती मही।
ज्योतींषि घनमुक्तानि पद्मवन्ति जलानि च। मनांसि च मनुष्याणां प्रसादमुपयान्ति वै।
असृजत् सविता व्योम्नि निर्मुक्तो जलदैर्भृशं। शरत्प्रज्वलितं तेजस्तीक्ष्णरश्मिर्व्विशोषयन्।
नीराजयित्वा सैन्यानि प्रयान्ति विजिगीषवः। अन्योन्यराष्ट्राभिमुखाः पार्थिवाः पृथिवीक्षितः।
बन्धुजीवाभिताम्रासु बहुपङ्कवतीषु च। मनस्तिष्ठति कान्तासु चित्रासु वनराजिषु।
वनेषु च विराजन्ते पादपा वनशोभिनः। असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः।

इषुसाह्वा निकुम्भाश्च प्रियकाः स्वर्णकास्तथा । भ्रमराः पेचिकाश्चैव क्रीडन्त्यत्र समन्ततः ।
व्रजेषु च विशेषेण गर्गरोद्गारहासिषु । शक्रकाशयोश्चैव गोष्ठेष्वटति रूपिणी ।
नूनं त्रिदशभूयिष्ठं मेघकालमुखोषितं । पतत्त्रिकेतनं देवं बोधयन्ति दिवौकसः । ३८४५
शरद्येवं सुशस्यायां मासायां माहवः घने । नीलचन्द्रार्कवर्णैश्च रचितं सुरभिर्दिशे ।
फलैः प्रवालैश्च घनमिन्द्रचापघनोपमं । भवनाकारविटपं लतापरमसण्डितं ।
विशालमूलावनतं पवनाभोगधारिणं । अर्च्चयामो गिरिं देवं गाश्चैव सविशेषत ।
सावतंसैर्व्विषाणैश्च वर्हापीडैश्च दंशितैः । घण्टाभिश्च प्रलम्बाभिः पुष्पैः शारदिकैस्तथा ।
शिवाय गावः पूज्यन्तां गिरियज्ञः प्रवर्त्यतां । पूज्यतां त्रिदशैः शक्रो गिरिरस्माभिरिज्यतां । ३८५०
गोयज्ञं कारयिष्यामि बलादेव न संशयः । यद्यस्ति मयि वः प्रीतिर्यदि वा सुहृदो वयं ।
गावो हि पूज्याः सततं सर्व्वेषां नात्र संशयः । स्यात्तु साम्ना भवेत् प्रीतिर्भवतां वै भवाय च ।
एतन्मम वचस्तथ्यं क्रियतामविचारितं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शरद्वर्णने त्रिसप्ततोऽध्याय ॥ ७३ ॥

॥ वैशम्पायन उवाच ॥ दामोदरवचः श्रुत्वा हृष्टास्ते गोषु जीविनः । तद्वागमृतमश्नाना प्रत्यूचुरविशङ्कया ।
तवैषा बाल महती गोपानां हर्षवर्द्धिनी । प्रीणयत्येव नः सर्व्वान् बुद्धिर्वृद्धिकरी गवां । ३८५५
त्वं गतिस्त्वं रतिश्चैव त्वं वेत्ता त्वं परायणं । भयेष्वभयदस्त्वञ्च त्वमेव सुहृदां सुहृत् ।
त्वत्कृते कृष्ण घोषोऽयं क्षेमी मुदितगोकुलः । हृष्टो वसति शान्तारिर्यथा स्वर्गगतस्तथा ।
जन्मप्रभृतिदिव्यैस्ते विक्रान्तैर्भुवि दुष्करैः । मे द्रव्याश्चाभिमनाश्च विस्मितानि मनांसि नः ।
बलेन च परार्द्ध्येन यशसा विक्रमेण च । उत्तमस्त्वञ्च मर्त्येषु देवेष्विव पुरन्दरः ।
प्रतापेन च तीक्ष्णेन दीप्त्या पूर्णतयाऽपि च । उत्तमस्त्वञ्च मर्त्येषु देवेष्विव दिवाकरः । ३८६०
कान्त्या लक्ष्म्या प्रसादेन वदनेन स्मितेन च । उत्तमस्त्वञ्च मर्त्येषु देवेष्विव निशाकरः ।
बलेन वपुषा चैव बाल्येन चरितेन च । स्यात्ते शक्तिधरस्तुल्यो न तु कश्चन मानुषः ।
यत्त्वयाऽभिहितं वाक्यं गिरियज्ञं प्रति प्रभो । कस्तल्लङ्घयितुं शक्तो वेलामिव महोदधेः ।
स्थितः शक्रमहस्तात श्रीमान् गिरिमहस्त्वयं । त्वत्प्रणीतोऽद्य गोपानां गवां हेतोः प्रवर्त्यतां ।
भाजनान्युपकल्प्यन्तां पयसः पेशलानि च । कुम्भाश्च विनिवेश्यन्तामुदपानेषु शोभनाः । ३८६५
पूर्य्यन्तां पयसा नद्यो द्रोण्यश्च विपुलायताः । भक्ष्यं भोज्यञ्च पेयञ्च तत्सर्व्वमुपनीयतां ।
भाजनानि च मांसस्य न्यस्यन्तामोदनस्य च । त्रिरात्रश्चैव सन्दोहः सर्व्वघोषस्य गृह्यतां ।
विशस्यन्ताञ्च पशवो भोज्या ये महिषादयः । प्रवर्त्यताञ्च यज्ञोऽयं सर्व्वगोपसुसङ्कुलः ।
आनन्दजननो घोषो महान्मुदितगोकुलः । तूर्य्यप्रणादघोषैश्च वृषभाणाञ्च गर्ज्जितैः ।
हम्भारवैश्च वत्सानां गोपानां हर्षवर्द्धनः । दधिह्रदः शरावर्त्तः पयःकुल्यासमावृतः । ३८७०
मांसराशिप्रकूटाढ्यः प्रकाशौदनपर्व्वतः । संप्रावर्त्तत यज्ञः स गिरेर्गोभिः समाकुलः ।

तुष्टगोपगणाकीर्णो गोपनारीमनोहरः । अथाधिष्ठितपर्य्यन्ते पर्य्याप्ते यज्ञसंविधौ ।
यज्ञं गिरेस्तियौ सौम्ये चक्रुर्गोपा द्विजैः सह । यजनान्ते तदन्नन्तु तत्पयो दधि चोत्तमं ।
मांसञ्च मायया कृष्णो गिरिर्भूत्वा समश्नुते । तर्पिताश्चापि विप्राग्र्यास्तुष्टाः सम्पूर्णभोजनाः ।
उत्तस्थुः प्रीतमनसः स्वस्ति वाच्य यथासुखं । भुक्ता चावभृथे कृष्णः पयः पीत्वा च कामतः । १८७५
संतृप्तोऽस्मीति दिव्येन रूपेण प्रजहास वै । तं गोपाः पर्व्वताकारं दिव्यस्रगनुलेपनं ।
गिरिमूर्द्धि स्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः । भगवानपि तेनैव रूपेणाच्छादितः प्रभुः ।
सह तैः प्रणतो गोपैर्व्ववन्दात्मानमात्मना । तमूचुर्व्विस्मिता गोपा देवं गिरिवरे स्थितं ।
भगवंस्त्वद्वशे युक्ता दासाः किं कुर्म्म किङ्कराः । स उवाच ततो गोपान् गिरिप्रभवया गिरा ।
अद्यप्रभृति याज्योऽहं गोषु यद्यस्ति वो दया । अहं वः प्रथमो देवः सर्व्वकामकरः शुभः । १८८०
मम प्रभावाच्च गवामयुतान्युपभोक्ष्यथ । शिवश्च वो भविष्यामि मद्भक्तानां वने वने ।
रंस्येऽहं सह युष्माभिर्यथा दिवि गतस्तथा । ये चेमे प्रथिता गोपा नन्दगोपपुरोगमाः ।
एषां प्रीतः प्रयच्छामि गोपानां विपुलं धनं । पर्य्याप्नुवन्तु चिप्रं मां गावो वत्ससमाकुलाः ।
एवं मम परा प्रीतिर्भविष्यति न संशयः । ततो नीराजनार्थं वै वृन्दशो गोकुलानि च ।
परिसर्गुर्गिरिवरं सवृषाणि समन्ततः । ता गावः प्रद्रुता हृष्टाः सापीडस्तवकाङ्गदाः । १८८५
सस्रगापीडशृङ्गाग्राः शतशोऽथ सहस्रशः । अनुजग्मुश्च गोपालाः कालयन्तो धनानि च ।
भक्तिच्छेदानुलिप्ताङ्गा रक्तपीतासिताम्बराः । मयूरचित्राङ्गदिनो भुजैः प्रहरणावृतैः ।
मयूरचित्रपत्रैस्तु केशबन्धैः सुयोजितैः । बभ्राजुरधिकं गोपाः समवाये तदाऽद्भुते ।
अन्ये वृषानारुरुहुर्नृत्यन्ति चापरे मुदा । गोपालास्त्वपरे गा वै जगृहुर्व्वेगगामिनः ।
अस्मिन् पर्य्यायनिर्व्वृत्ते गवां नीराजनोत्सवे । अन्तर्द्धानं जगामाशु तेन देहेन सोऽचलः । १८९०
कृष्णोऽपि गोपसहितो विवेश व्रजमेव ह । गिरियज्ञप्रवृत्तेन तेनाश्चर्य्येण विस्मिताः ।
गोपाः सबालवृद्धा वै तुष्टुवुर्मधुसूदनं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गिरियज्ञप्रवर्त्तने चतुःसप्ततोऽध्यायः ॥ ७४ ॥
॥ वैशम्पायन उवाच ॥ मखे प्रतिहते शक्रः सक्रोधस्त्रिदशेश्वरः । संवर्त्तकं नाम गणं तोयदानामथाब्रवीत् ।
भो बलाहकमातङ्गाः श्रूयतां मम भाषितं । यदि वो मत्प्रियं कार्य्यं राजभक्तिपुरस्कृतं ।
एते वृन्दावनगता दामोदरपरायणाः । नन्दगोपादयो गोपा विद्विषन्ति ममोत्सवं । १८९५
आजीवो यः परस्तेषां गोपत्वञ्च यतः स्मृतं । ता गावः सप्तरात्रेण पीड्यन्तां वृष्टिमारुतैः ।
ऐरावतगतश्चाहं स्वयमेवाम्बु दारुणं । स्रक्ष्यामि वृष्टिवातञ्च वज्राशनिसमस्वनं ।
भवद्भिश्चण्डवर्षेण चरता मारुतेन च । हतास्ताः सव्रजा गावस्त्यक्ष्यन्ति भुवि जीवितं ।
एवमाज्ञापयामास सर्व्वान् स जलदान् प्रभुः । प्रत्याहते वै कृष्णेन शासने पाकशासनः ।
ततस्ते जलदाः कृष्णा घोरनादा भयावहाः । आकाशं छादयामासुः सर्व्वतः पर्व्वतोपमाः । १९००

विद्युत्सम्पातजननाः शक्रचापविभूषिताः । तिमिरावृतमाकाशं चक्रुस्ते जलदास्तदा ।
गजा इवान्ये संसक्ताः केचिन्मकरवर्चसः । नागा इवान्ये गगणे चेरुर्जलदपुङ्गवाः ।
तेऽन्योन्यवपुषा बद्धा नागयूथायुतोपमाः । दुर्द्दिनं विपुलं चक्रुश्छादयन्तो नभस्तलं ।
नृहस्तनागहस्तानां वेणूनाञ्चैव सर्व्वशः । धाराभिस्तुल्यरूपाभिर्व्ववृषुस्ते बलाहकाः ।
समुद्रं मेनिरे तद्धि खमारूढं नृचक्षुषः । दुर्व्विगाह्यमपर्य्यन्तमगाधं दुर्द्दिनं महत् । ३९४५
नैवापतन्वै खगमा दुद्रुवुर्मृगजातयः । पर्व्वताभेषु मेघेषु खे नदत्सु समन्ततः ।
नष्टसूर्य्येन्दुनक्षत्रैर्मेघैर्नभसि दारुणैः । अतिवृष्टेन लोकस्य विरूपमभवद्वपुः ।
मेघौघैर्निष्प्रभाकारमदृश्यग्रहतारकं । चन्द्रसूर्य्यांशुरहितं खं बभूवातिनिष्प्रभं ।
वारिणा मेघमुक्तेन मुच्यमानेन चासकृत् । आबभौ सर्व्वतस्तत्र भूमिस्तोयमयी यथा ।
विनेदुर्व्बर्हिणस्तत्र स्तोककाः स्पृहताः खगाः । विवृद्धिं निम्नगा याताः प्लवगाः संप्लवं गताः । ३९५०
गर्ज्जितेन च मेघानां पर्ज्जन्यनिनदेन च । तर्ज्जितानीव कम्पन्ते तृणानि तरुभिः सह ।
प्राप्तोऽन्तकालो लोकानां व्यक्तमेकार्णवा मही । इति गोपगणा वाक्यं व्याहरन्ति भयार्द्दिताः ।
तेनोत्पाताम्बुवर्षेण गावो विप्रहता भृशं । हम्बारवैः क्रन्दमाना न चेलुस्तम्भितोपमाः ।
निष्कम्पसक्थिचरणा निभृतस्तब्धखुराननाः । हृष्टरोमार्द्रतनवः क्षामकुक्षिपयोधराः ।
काश्चित् प्राणान् जहुः श्रान्ता निपेतुः काश्चिदातुराः । काश्चित् सवत्साः पतिता गावः शीकरवेपिताः । ३९५५
काश्चिदाक्रम्य क्रोडेन वत्सांस्तिष्ठन्ति मातरः । विमुखाः श्रान्तसक्थ्यश्च निराहाराः कृशोदराः ।
पेतुरार्त्ता वेपमाना गावो वर्षपराजिताः । वत्साश्चोन्मुखका बाला दामोदरमुखाः स्थिताः ।
त्राहीति वदनैर्द्दीनैः कृष्णमूचुरिवार्द्दिताः । गवां तत्कदनं दृष्ट्वा दुर्द्दिनागमजं महत् ।
गोपांश्चासन्ननिधनान् कृष्णः कोपं समादधे । स चिन्तयित्वा संरब्धो दृष्टोपायो मयेति च ।
आत्मानमात्मना वाक्यमिदमूचे प्रियंवदः । अथाहमिममुत्पाट्य सकाननवनं गिरिं । ३९६०
कल्पयेयं गवां स्थानं वर्षत्राणाय दुर्द्धरं । अयं धृतो मया शैलः पृथ्वीमृद्धमिवापरं ।
त्रास्यते सव्रजा गा वै मद्वश्यश्च भविष्यति । एवं संचिन्तयित्वा तु कृष्णः सत्यपराक्रमः ।
बाह्वोर्व्बलं दर्शयिष्यन् समीपे तं महीधरं । दोर्भ्यामुत्पाटयामास कृष्णो गिरिरिवापरः ।
स धृतः सङ्गतो मेघैर्गिरिः सव्येन पाणिना । गृहभावङ्गतस्तत्र गृहाकारेण वर्ष्मणा ।
भूमेरुत्पाट्यमानस्य तस्य शैलस्य सानुषु । शिलाः प्रशिथिलाश्चेलुर्निपेतुश्च सपादपाः । ३९६५
शिखरैर्घूर्णमानैश्च शीर्य्यमाणैश्च सर्व्वशः । विटपैश्चोत्सृतैः प्रकीर्णैरगमः खगमोऽभवत् ।
चलत्प्रस्रवणैः पार्श्वे मेघौघैरेकताङ्गतैः । भिद्यमानाश्मनिचयश्चचाल धरणीधरः ।
न मेघानां प्रवृष्टानां न शैलस्याश्मवर्षिणः । न विदुस्ते जना रूपं वायोस्तस्य च गर्ज्जतः ।
मेघैश्च शैलसंस्थानैर्जलप्रस्रवणार्पितैः । मिश्रीकृत इवाभाति गिरिरुद्दामवर्द्धिमान् ।
आधुतोऽयं गिरिः पक्षैरिति विद्याधरोरगाः । गन्धर्व्वाप्सरसश्चैव वाचोऽमुञ्चन्त सर्व्वशः । ३९७०

स हस्ततलविन्यस्तो मुक्तमूल क्षितेस्तलात्। रेजे निर्व्वर्त्तयामास काञ्चनाञ्जनराजतैः।
कानिचिच्छिथिलानीव भग्नश्रृङ्गाणि कानिचित्। गिरेर्मेघप्रहृष्टानि तस्य श्रृङ्गाणि चाभवन्।
गिरिणा कम्पमानेन कम्पितानाञ्च शाखिनां। पुष्पमुच्चावचं भूमौ व्यशीर्य्यत समन्ततः।
निःसृताः पृथुमूर्द्धानः स्वस्तिकाङ्कविभूषिताः। द्विजिह्वपतयः क्रुद्धाः खेचराः खे समन्ततः।
आर्त्तिं जग्मुः खगगणा वर्षेण च भयेन च। उत्पत्योत्पत्य गगणात् पुनः पेतुरवाङ्मुखाः। ३९३५
रेसुश्चारोषिताः सिंहाः सजला इव तोयदाः। गर्गरा इव मथ्यन्तो नेदुः शार्दूलपुङ्गवाः।
विषमैश्च समीभूतैः समैश्चात्यन्तदुर्गमैः। व्यावृत्तदेहः स गिरिरन्य एवोपलक्ष्यते।
अतिवृष्टस्य तैर्मेघैस्तस्य रूपं बभूव ह। स्तम्भितस्येव रुद्रेण त्रिपुरस्य विहायसि।
बाहुदण्डेन कृष्णस्य विधृतं सुमहत्तदा। नीलाभ्रपटलच्छन्नं तद्गिरिच्छत्रमाबभौ।
स्वप्नायमानो जलदैर्निमीलितगुहामुखः। बाहूपधाने कृष्णस्य प्रसुप्त इव खे गिरिः। ३९४०
निर्व्विहङ्गरुतैर्वृक्षैर्निर्मयूररुतैर्व्वनैः। निरालम्ब इवाभाति स गिरिः खचरैर्वृतः।
पर्य्यस्तैर्घूर्णमानैश्च प्रचलद्भिश्च सानुभिः। मज्जराणीव शैलस्य वनानि शिखराणि च।
उत्तमाङ्गगतास्तस्य मेघाः पवनवाहनाः। तर्ज्यमाना महेन्द्रेण तोयं मुमुचुरव्ययम्।
स लम्बमानः कृष्णस्य भुजाग्रे सघनो गिरिः। चक्रारूढ इवाभाति देशो नृपतिपीडितः।
स मेघनिचयस्तस्थौ गिरिं तं परिवार्य्य च। पुरं पुरस्कृत्य यथा स्फीतो जनपदो महान्। ३९४५
निवेश्य तं करे शैलं तुलयित्वा च सस्मितं। प्रोवाच गोप्ता गोपानां प्रजापतिरिव स्थितः।
एतद्देवैरसम्भाव्यं दिव्येन विधिना मया। कृतं गिरिगृहं गोपा निवातशरणं गवां।
क्षिप्रं विशन्तु यूथानि गवामिह हि शान्तये। निवातेषु च देशेषु निवसन्तु यथासुखं।
यथाश्रेष्ठं यथायूथं यथासारं यथासुखं। विभज्यतामयं देशः कृतं वर्षनिवारणं।
शैलोत्पाटनभूरेषा महती निर्म्मिता मया। त्रैलोक्यमप्युत्सहते रक्षितुं किं पुनर्व्रजं। ३९५०
ततः किलकिलाशब्दो गवां हम्भारवैः सह। गोपानां तुमुलो जज्ञे मेघनादश्च वारुणः।
प्रविशन्ति ततो गावो गोपैर्यूथप्रकल्पिताः। तस्य शैलस्य विपुलं विमलं गह्वरोदरं।
कृष्णोऽपि मूले शैलस्य शैलस्तम्भ इवोच्छ्रितः। दधारैकेन हस्तेन शैलं प्रियमिवातिथिं।
ततो व्रजस्य भाण्डानि युक्तानि शकटानि च। विविशुर्वर्षभीतानि तद्गृहं गिरिनिर्म्मितं।
अतिदैवन्तु कृष्णस्य दृष्ट्वा तत् कर्म्म वज्रभृत्। मिथ्याप्रतिज्ञो जलदान् वारयामास वै विभुः। ३९५५
सप्तरात्रे तु निर्वृत्ते धरण्यां विगतोत्सवे। जगाम सहितो मेघैर्वृत्रहा स्वर्गमेव च।
निवृत्ते सप्तरात्रे तु निष्फले शतक्रतौ। गताभ्रे विमले व्योम्नि दिवसे दीप्तभास्करे।
गावस्तेनैव मार्गेण परिजग्मुर्गतश्रमाः। स्वञ्च स्थानं गतो घोषः प्रत्ययात् पुनरेव सः।
कृष्णोऽपि तं गिरिश्रेष्ठं स्वे स्थाने स्थावरात्मवान्। प्रीतो निवेशयामास ध्रुवाय वरदो विभुः।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गोवर्द्धनधारणे पञ्चसप्ततितमोऽध्यायः॥ ७५॥

॥ वैशम्पायन उवाच ॥ धृतं गोवर्द्धनं दृष्ट्वा परित्रातञ्च गोकुलं । कृष्णस्य दर्शनं शक्रो रोचयामास विस्मितः ।
स निर्जलाम्बुदाकारं मत्तं मदजलोचितं । आरुह्यैरावतं नागमाजगाम महीतलं ।
स ददर्शोपविष्टं वै गोवर्द्धनशिलातले । कृष्णमक्लिष्टकर्म्माणं पुरुहूतः पुरन्दरः ।
तं वीक्ष्य बालं महता तेजसा दीप्तमव्ययं । गोपवेशधरं विष्णुं प्रीतिं लेभे पुरन्दरः ।
तं साम्बुजलदश्यामं कृष्णं श्रीवत्सलक्षणं । पर्य्याप्तनयनः शक्रः सर्व्वैर्नेत्रैरुदैक्षत ।
दृष्ट्वा चैनं श्रिया जुष्टं मर्त्यलोकेऽमरोपमं । सूपविष्टं शिलापृष्ठे शक्रः स व्रीडितोऽभवत् ।
तस्योपविष्टस्य सुखं पक्षाभ्यां पक्षिपुङ्गवः । अन्तर्द्धानगतश्छायां चकारोरगभोजनः ।
तं विविक्ते वनगतं लोकवृत्तान्ततत्परं । उपतस्थे गजं हित्वा कृष्णं बलनिसूदनः ।
स समीपगतस्तस्य दिव्यस्रगनुलेपनः । रराज देवराजो वै वज्रपूर्णकरः प्रभुः ।
किरीटेनार्कतुल्येन विद्युदुद्योतकारिणा । कुण्डलाभ्यां सवज्राभ्यां सततं शोभिताननः ।
सहस्रपत्रकान्तेन देहभूषणकारिणा । पद्मस्तवकलम्बेन हारेणोरसि भूषितः ।
ईक्षमाणः सहस्रेण नेत्राणां कामरूपिणा । त्रिदशाश्रयिनीत्येन मेघनिर्घोषघोषिणा ।
अथ दिव्येन मधुरं व्याजहार स्वरेण तं । कृष्ण कृष्ण महाबाहो ज्ञातीनां नन्दिवर्द्धन ।
अतिदैवं कृतं कर्म्म त्वया प्रीतिमता गवां । मयोत्सृष्टेषु मेघेषु युगान्तावर्त्तकारिषु ।
यत्त्वया रक्षिता गावस्तेनास्मि परितोषितः । स्वायम्भुवेन योगेन यश्चायं पर्व्वतोत्तमः ।
धृतो वेश्मवदाकाशे को ह्येतेन न विस्मयेत् । प्रतिषिद्धं मम महे मयेयं रुषितेन वै ।
अतिवृष्टिः कृता कृष्ण गवां वै सप्तरात्रिकी । सा त्वया प्रतिषिद्धेयं मेघवृष्टिर्दुरासदा ।
देवैः सदानवगणैर्दुर्निर्व्वार्य्या मयि स्थिते । अहो मे सुप्रियं कृष्ण यत्त्वं मानुषदेहवान् ।
समग्रं वैष्णवं तेजो विनिगूहसि रोषितः । साधितं दैवतानां हि मन्येऽहं कार्य्यमव्ययं ।
त्वयि मानुष्यमापन्ने युक्ते चैवं स्वतेजसा । सेत्स्यते वीर कार्य्यार्थो न किञ्चित् परिहास्यते ।
देवानां यत्त्वमन्नेता सर्व्वकार्य्यपुरोगमः । एकस्त्वमसि देवानां लोकानाञ्च सनातनः ।
द्वितीयं नानुपश्यामि धुरं यस्ते समुद्वहेत् । यथा हि पुङ्गवः श्रेष्ठो मग्ने धुरि नियुज्यते ।
एवं त्वमसि देवानां मग्नानां द्विजवाहनः । तच्छरीरगतं कृष्ण जगत्सर्व्वमिदं ।
ब्रह्मणा साधु निर्द्दिष्टं धातुभ्य इव काञ्चनं । स्वयं स्वयम्भूर्भगवान् बुद्ध्याऽथ वयसाऽपि वा ।
न त्वानुगन्तुं शक्नोति पङ्गुर्द्रुतगतिं यथा । स्थाणुभ्यो हिमवान् श्रेष्ठो ह्रदानां वरुणालयः ।
गरुत्मान् पक्षिणां श्रेष्ठो देवानाञ्च भवान् वरः । अपामधस्तान्लोको वै तस्योपरि महीधराः ।
नागानामुपरिष्टाद्भूः पृथिव्युपरि मानुषाः । मनुष्यलोकादूर्द्ध्वन्तु खगानां गतिरुच्यते ।
आकाशस्योपरि रविर्द्वारं स्वर्गस्य भानुमान् । देवलोकः परस्तस्माद्विमानगमनो महान् ।
यत्राहं कृष्ण देवानामैन्द्रे विनिहितः पदे । स्वर्गादूर्द्ध्वं ब्रह्मलोको महर्षिगणपूजितः ।
तत्र सोमगतिश्चैव ज्योतिषाञ्च महात्मनां । तस्योपरि गवां लोकः साध्यास्तं पालयन्ति ह ।

स हि सर्व्वगतः कृष्ण महाकाशगतो महान् । उपर्य्युपरि तत्रापि गतिस्तव तपोमयी । ३९९०
यां न विद्म वयं सर्व्वे पृच्छन्तोऽपि पितामहं । लोकास्त्वधो दुष्कृतिनां नागलोकस्तु दारुणः ।
पृथिवीकर्म्मशीलानां क्षेत्रं सर्व्वस्य कर्म्मणः । खमस्थिराणां विषयो वायुना तुल्यवृत्तिनां ।
गतिः समदमाढ्यानां स्वर्गः सुकृतकर्म्मणां । ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परा गतिः ।
गवामेव तु गोलोको दुरारोहा हि सा गतिः । स तु लोकस्त्वया कृष्ण सीदमानः कृतात्मना ।
धृतो धृतिमता वीर निघ्नतोपद्रवं गवां । तदहं समनुप्राप्तो गवां वाक्येन चोदितः । ३९९५
ब्रह्मणश्च महाभाग गौरवात्तव चानघ । अहं भूतपतिः कृष्ण देवराजः पुरन्दरः ।
अदितेर्गर्भपर्य्याये पूर्व्वजस्ते पुरातनः । तेजस्तेजस्विनश्चैव यत्ते दर्शितवानहं ।
मेघरूपेण तत्सर्व्वं क्षन्तुमर्हसि मे विभो । एवं शान्तमनाः कृष्ण स्वेन सौम्येन तेजसा ।
ब्रह्मणः शृणु मे वाक्यं गवाञ्च गजविक्रमः । आह त्वां भगवान् ब्रह्मा गावश्चाकाशगा दिवि ।
कर्म्मभिस्तोषिता दिव्यैस्तव संरक्षणादिभिः । भवता रक्षिता लोका गोलोकस्य महानयं । ४०००
यदयं पुङ्गवैः सार्द्धं वर्द्धामः प्रसवैस्तथा । कर्षकान् पुङ्गवैश्चान्यैर्मेध्येन हविषा सुरान् ।
श्रियं शकृत्प्रवृत्तेन तर्पयिष्यामि कामदाः । तदस्माकं गुरुस्त्वं हि प्राणदश्च महाबल ।
अद्यप्रभृति नो राजा त्वमिन्द्रो वै भव प्रभो । तस्मात्त्वं काञ्चनैः पूर्णैर्दिव्यस्य पयसो घटैः ।
एभिरद्याभिषिच्यस्व मया हस्तावनामितैः । अहं किलेन्द्रो देवानां त्वङ्गवामिन्द्रतां गतः ।
गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतं । ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । ४००५
उपेन्द्र इति कृष्ण त्वां गास्यन्ति दिवि देवताः । ये चेमे वार्षिका मासाश्चत्वारो विहिता मम ।
एषामर्द्धं प्रयच्छामि शरत्कालन्तु पश्चिमं । अद्यप्रभृति मासौ द्वौ ज्ञास्यन्ति मम मानवाः ।
वर्षार्द्धे च ध्वजो मह्यं ततः पूजामवाप्स्यसि । ममाम्बुप्रभवं दर्पं तदा त्यक्ष्यन्ति बर्हिणः ।
अल्पपादमदाश्चैव ये चान्ये मेघनादिनः । शान्तिं सर्व्वे गमिष्यन्ति मम कालविचारिणः ।
त्रिशङ्कुचरितामाशामगस्त्यो विचरिष्यति । सहस्ररश्मिरादित्यस्तापयन् स्वेन तेजसा । ४०१०
ततः शरदि युक्तायां सौनकाशेषु बर्हिषु । याचमाने खगे तोयं विघ्नेषु श्रुतेषु च ।
हंससारसपूर्णेषु नदीनां पुलिनेषु च । मत्तक्रौञ्चप्रणादेषु मत्तेषु वृषभेषु च ।
गोषु चैव प्रहृष्टासु क्षरन्तीषु पयो बहु । निवृत्तेषु च मेघेषु निर्यात्य जगतो जलं ।
आकाशे शस्त्रसङ्काशे हंसेषु विचरत्सु च । जातपद्मेषु तोयेषु वापीषु च सरःसु च ।
तडागेषु च कान्तेषु तोयेषु विमलेषु च । कलमावनताग्रासु पक्वकेदारपङ्क्तिषु । ४०१५
मध्यस्थं सलिलारम्भं कुर्व्वन्तीषु नदीषु च । सुशस्यायाञ्च सीमायां मनोहर्य्यां मुनेरपि ।
पृथिव्यां प्रयुराशायां रम्यायां वर्षसंक्षये । श्रीमत्सु पङ्क्तिमार्गेषु फलवत्सु तृणेषु च ।
इक्षुमत्सु च देशेषु प्रवृत्तेषु मखेषु च । ततः प्रवर्त्स्यते पुण्या शरत् सुप्रीत्यिते त्वयि ।
लोकेऽस्मिन् कृष्ण निखिले यथैव त्रिदिवे तथा । नरास्त्वाश्चैव माञ्चैव ध्वजाकारासु यष्टिषु ।

महेन्द्रश्चाप्युपेन्द्रश्च पूजयन्तु महीतले । ये चावयोः स्थिरे वृत्ते महेन्द्रोपेन्द्रसंज्ञिते । ४०१०
मानवाः प्रणमिष्यन्ति तेषां नास्त्यनयागमः । ततः शक्रस्तु तान् गृह्य घटान् दिव्यपयोधरान् ।
अभिषेकेण गोविन्दं योजयामास योगवित् । दृष्ट्वाऽभिषिच्यमानं तं गावस्ताः सह यूथपैः ।
स्तनैः प्रस्रवसंयुक्तैः सिषिचुः कृष्णमव्ययं । मेघाश्च दिवि मुक्ताभिः सामृताभिः समन्ततः ।
सिषिचुस्तोयधाराभिः सिच्यमानं तमव्ययं । वनस्पतीनां सर्व्वेषां सुस्राविन्दुनिभं पयः ।
ववर्ष पुष्पवर्षञ्च नेदुस्तूर्य्याणि चाम्बरे । स्तुवन्ति मुनयः सर्व्वे वाग्भिर्मन्त्रपरायणाः । ४०१५
एकार्णवविविक्तश्च दधार वसुधा वपुः । प्रसादं सागरा जग्मुर्व्ववुर्व्वाता जगद्धिताः ।
मार्गस्थो विबभौ भानुः सोमो नक्षत्रसंयुतः । ईतयः प्रशमं जग्मुर्जग्मुर्निर्व्वैरतां नृपाः ।
प्रवालपत्रशबलाः पुष्पवन्तश्च पादपाः । मदं प्रसुस्रुवुर्नागा यातास्तोषं वने मृगाः ।
अलङ्कृता गात्ररुहैर्धातुभिर्भान्ति पर्व्वताः । देवलोकोपमो लोकस्तृप्तोऽमृतरसैरिव ।
आसीत् कृष्णाभिषेके हि दिव्यः स्वर्गरसोक्षितः । अभिषिक्तन्तु तं गोभिः शक्रो गोविन्दमव्ययं । ४०२०
दिव्यमाल्याम्बरधरं देवदेवोऽब्रवीदिदं । एष ते प्रथमः कृष्ण नियोगो गोषु यः कृतः ।
श्रूयतामपरश्चापि ममागमनकारणं । क्षिप्रं संसाध्यतां कंसः केशी च तुरगाधमः ।
अरिष्टश्च सदाऽरिष्टो राजराज्यं ततः कुरु । पितृष्वसरि जातस्ते ममांशोऽहमिव स्थितः ।
स ते रक्ष्यश्च मान्यश्च सख्ये च विनियुज्यतां । त्वया ह्यनुगृहीतः स तव वृत्तानुवर्त्तकः ।
त्वद्वशे वर्त्तमानश्च प्राप्स्यते विपुलं यशः । भारतस्य च वंशस्य स धरिष्ठो धनुर्द्धरः । ४०२५
भविष्यत्यनुरूपश्च त्वद्वृते न च रंस्यते । भारतं त्वयि चायत्तं तस्मिंश्च पुरुषोत्तमे ।
उभाभ्यामपि संयोगे यास्यन्ति निधनं नृपाः । प्रतिज्ञातश्च मे कृष्ण ऋषिमध्ये सुरेषु च ।
मम पुत्रोऽर्ज्जुनो नाम सृष्टः कुन्त्यां कुलोद्वहः । सोऽस्त्राणां पारतत्त्वज्ञः श्रेष्ठश्चापरिकर्षणे ।
तं प्रवेक्ष्यन्ति वै सर्व्वे राजानः शस्त्रयोधिनः । अक्षौहिणीस्तु शूराणां राज्ञां संग्रामयोधिनां ।
सैकः क्षत्त्रियधर्म्मेण योजयिष्यति मृत्युना । तस्यास्त्रचरितं मार्गं धनुषो लाघवस्य च । ४०३०
नानुयास्यन्ति राजानो देवा वा त्वां विना प्रभो । स ते बन्धुः सहायश्च संग्रामेषु भविष्यति ।
तस्य योगो विधातव्यस्तथा गोविन्द मत्कृते । द्रष्टव्यः स यथाऽहं वै त्वया मान्यश्च नित्यशः ।
ज्ञाता त्वमेव लोकानामर्ज्जुनस्य च नित्यशः । त्वया च नित्यं संरक्ष्य आहवेषु महत्सु सः ।
रक्षितस्य त्वया तस्य न मृत्युः प्रभविष्यति । अर्ज्जुनं विद्धि मां कृष्ण माञ्चैवात्मानमात्मना ।
आत्मा तेऽहं यथा शश्वत्तथैव तव सोऽर्ज्जुनः । त्वया लोकानिमान् जित्वा बलेर्हस्तात्त्रिभिः क्रमैः । ४०३५
देवतानां कृतो राजा पुरा ज्येष्ठक्रमादहं । त्वाञ्च सत्यमयं ज्ञात्वा सर्व्वेष्टं सत्यविक्रमं ।
सत्येनोत्पत्य देवा वै योजयन्ति रिपुक्षये । सोऽर्ज्जुनो नाम मे पुत्रः पितुस्ते भगिनीसुतः ।
इह सौहार्द्दमायातु भूत्वा सहचरस्तव । तस्य ते युध्यतः कृष्ण स्वे स्थाने ऽथ गृहेऽपि वा ।
वोढव्या पुङ्गवेनेव धूः सदा रणमूर्द्धनि । कंसे विनिहते कृष्ण त्वया भाव्यर्थदर्शिना ।

कृष्णस्तु यौवनं दृष्ट्वा निशि चन्द्रमसो नवं । शारदीश्च निशां रम्यां मनश्चक्रे रतिम्प्रति ।
स करीषाङ्गरागासु व्रजरथ्यासु वीर्य्यवान् । वृषाणां जातदर्पाणां युद्धानि समयोजयत् ।
गोपालांश्च बलोदग्रान् योधयामास वीर्य्यवान् । वने स वीरो गाश्चैव जग्राह ग्राहवद्विभुः । ४०८०
युवतीर्गोपकन्याश्च रात्रौ सङ्काल्य कालवित् । कैशोरकं मानयन्वै सह ताभिर्मुमोद ह ।
तास्तस्य वदनं कान्तं कान्ता गोपस्त्रियो निशि । पिबन्ति नयनाक्षेपैर्गाङ्गतं शशिनं यथा ।
हरितालार्द्रपीतेन सकौशेयेन वाससा । वसानो भद्रवसनं कृष्णः कान्ततरोऽभवत् ।
स बद्धाङ्गदनिर्व्यूहश्चित्रया वनमालया । शोभमानो हि गोविन्दः शोभयामास तं व्रजं ।
नाम दामोदरेत्येवं गोपकन्यास्तदाऽब्रुवन् । विचित्रं चरितं घोषे दृष्ट्वा तत्तस्य भास्वतः । ४०८५
तास्तं पयोधरोत्तानैरुरोभिः समपीडयन् । भ्रामिताक्षैश्च वदनैर्निरीक्षन्ते वराङ्गनाः ।
ता वार्य्यमाणाः पितृभिर्भ्रातृभिर्मातृभिस्तथा । कृष्णं गोपाङ्गना रात्रौ मृगयन्ते रतिप्रियाः ।
तास्तु पङ्क्तीकृताः सर्व्वा रमयन्ति मनोरमं । गायन्त्यः कृष्णचरितं द्वन्द्वशो गोपकन्यकाः ।
कृष्णलीलानुकारिण्यः कृष्णप्रणिहितेक्षणाः । कृष्णस्य गतिगामिन्यस्तरुण्यस्ता वराङ्गनाः ।
वनेषु तालहस्ताग्रैः कुट्टयन्त्यस्तथाऽपराः । चेरुर्वै चरितं तस्य कृष्णस्य व्रजयोषितः । ४०९०
तास्तस्य नृत्यं गीतञ्च विलासस्मितवीक्षितं । मुदिताश्चानुकुर्व्वन्त्यः क्रीडन्त्यो व्रजयोषितः ।
भावनिस्यन्दमधुरं गायन्त्यस्ता वराङ्गनाः । व्रजं गताः सुखं चेरुर्दामोदरपरायणाः ।
करीषपांशुदिग्धाङ्गास्ताः कृष्णमनुवव्रिरे । रमयन्त्यो यथा नागं सम्प्रमत्तं करेणवः ।
तमन्या भावविक्षेपैर्नेत्रैः प्रहसिताननाः । पिबन्त्यतृप्ता वनिताः कृष्णं कृष्णमृगेक्षणाः ।
मुखमस्याब्जसङ्काशं तृषिता गोपकन्यकाः । रत्यन्तरगता रात्रौ पिबन्ति रतिलालसाः । ४०९५
हाहेति कुर्व्वतस्तस्य प्रहृष्टास्ता वराङ्गनाः । जगृहुर्निःसृतां वाणीं साम्ना दामोदरेरिताम् ।
तासां ग्रथितसीमन्ता रतिश्रान्त्याकुलीकृताः । चारु विस्रंसिरे केशाः कुचाग्रे गोपयोषितां ।
एवं स कृष्णो गोपीनां चक्रवालैरलङ्कृतः । शारदीषु सचन्द्रासु निशासु मुमुदे सुखी ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि हल्लीशक्रीडने सप्तसप्ततोऽध्यायः ॥ ७७ ॥
॥ वैशम्पायन उवाच ॥ प्रदोषार्द्धे कदाचित्तु कृष्णे रतिपरायणे । त्रासयन् समदो गोष्ठानरिष्टः प्रत्यदृश्यत ।
निर्म्माणाङ्गारमेघाभस्तीक्ष्णशृङ्गोऽर्कलोचनः । क्षुरतीक्ष्णाग्रचरणः कालः काल इवापरः । ४१००
लेलिहानः सनिष्पेषं जिह्वयोष्ठ पुनः पुनः । गर्व्विताविद्धलाङ्गूलः कठिनस्कन्धबन्धनः ।
ककुदोदग्रनिर्म्माणः प्रमाणादुरतिक्रमः । शकृन्मूत्रोपलिप्ताङ्गो गवामुद्वेजनो भृशं ।
महाकटिः स्थूलमुखो गूढजानुर्महोदरः । विषाणावलिताग्रतिर्लम्बता कण्ठचर्म्मणा ।
गवाङ्गदेषु चपलस्तरुघाताङ्कितानन । युद्धसज्जविषाणाग्रो द्विषद्वृषभसूदनः ।
अरिष्टो नाम हि गवामरिष्टो दारुणाकृतिः । दैत्यो वृषभरूपेण गोष्ठान् विपरिधावति । ४१०५
पातयन् स गवां गर्भान् दृप्तो गच्छत्यनार्त्तवं । भजमानश्च धेनूर्वै रष्टोः स प्रचचार ह ।

कर्त्तव्यानाञ्च कर्त्तारो लोकस्य विबुधोपमाः । पर्व्वता इव निष्कम्पाः वृत्ते महति तस्थुषः ।
अदम्भवृत्तयः सर्व्वे सर्व्वे गुरुकुलोषिताः । राजमन्त्रधराः सर्व्वे सर्व्वे धनुषि पारगाः ।
यशःप्रदीपा लोकानां वेदार्थानां विचक्षणाः । आश्रमाणां निसर्गज्ञा वर्णानां क्रमपारगाः ।
प्रवक्तारः सुनियमा नेतारो नयदर्शिनां । भेत्तारः परराष्ट्राणां त्रातारः शरणार्थिनां ।
एवमच्युतचारित्रैः श्रीमद्भिरुदितोदितैः । धारयद्भिर्नृपश्रेष्ठ सान्त्ववद्भिः किं पुनर्महीं । ४११०
ऋषीणामिव वो वृत्तं प्रभावो मरुतामिव । रुद्राणामिव वः क्रोधो दीप्तिरङ्गिरसामिव ।
व्यावृत्तमानन्तु महद्भवद्भिः पुण्यकीर्त्तिभिः । धृतं यदुकुलं वीरैर्भूतलं पर्व्वतैरिव ।
एवं भवत्सु युक्तेषु मम चित्तानुवर्त्तिषु । वर्द्धमानो ममानर्थो भवद्भिः किमुपेक्षितः ।
एष कृष्ण इति ख्यातो नन्दगोपसुतो व्रजे । वर्द्धमान इवाम्भोदो मूलं नः परिकृन्तति ।
अनमात्यस्य शून्यस्य चारान्धस्य ममैव तु । कारणान्नन्दगोपस्य स सुतो गोपितो गृहे । ४११५
उपेक्षित इव व्याधिः पूर्य्यमाण इवाम्बुधिः । नदन्मेघ इवोष्णान्ते स दुरात्मा विवर्द्धते ।
तस्य नाहं गतिं जाने न योगं न पराक्रमं । नन्दगोपस्य भवने जातस्याद्भुतकर्म्मणः ।
किं तद्भूतं समुद्भूतं देवापत्यं न विद्महे । अतिदैवैरमानुष्यैः कर्म्मभिः सोऽनुमीयते ।
पूतना शकुनी बाल्ये शिशुनोत्तानशायिना । स्तनपानेप्सुना पीता प्राणैः सह दुरासदा ।
यमुनाया ह्रदे नागः कालियो दमितस्तया । रसातलचरो नीतः क्षणेनादर्शनं ह्रदात् । ४१२०
नन्दगोपसुतो योगं कृत्वा च पुनरुत्थितः । धेनुकस्तालशिखरात् पातितो जीवितं विना ।
प्रलम्बं यं मृधे देवा न शेकुरभिवर्त्तितुं । बालेन मुष्टिनैकेन स हतः प्राकृतो यथा ।
वासवस्योत्सवं भङ्क्त्वा वर्षं वासवरोषजं । निर्जित्य गोग्रहार्थाय धृतो गोवर्द्धनो गिरिः ।
हतस्त्वरिष्टो बलवान् विशृङ्गस्तु कृतो व्रजे । अबालो बाल्यमास्थाय रमते शिशुलीलया ।
प्रत्यक्षः कर्म्मणामेष तस्य गोव्रजवासिनः । सन्निकृष्टं भयञ्चैव केशिनो मम च ध्रुवं । ४१२५
भूतपूर्व्वश्च मे मृत्युः स नूनं पौर्व्वदेहिकः । युद्धाकाङ्क्षी स च यथा तिष्ठतीह ममाग्रतः ।
क्व च गोपत्वमशुभं मानुष्यं प्राप्य दुर्लभं । क्व च देवप्रभावेण क्रीडितव्यं व्रजे मम ।
अहो नीचेन वपुषा च्छादयित्वात्मनो वपुः । कोऽप्येष रमते देवः श्मशानस्थ इवानलः ।
श्रूयते हि पुरा विष्णुः सुराणां कारणान्तरे । वामनेन तु रूपेण जहार पृथिवीमिमां ।
कृत्वा केशरिणो रूपं विष्णुना प्रभविष्णुना । हतो हिरण्यकशिपुर्दानवानां पितामहः । ४१३०
अचिन्त्यं रूपमास्थाय श्वेतशैलस्य मूर्द्धनि । भवेन च्याविता दैत्याः पुरा तत्त्रिपुरं हता ।
चालितो गुरुपुत्त्रेण भार्गवोऽङ्गिरसेन वै । प्रविष्टो दार्दुरीं मायामनावृष्टिञ्चकार ह ।
अनन्तः शाश्वतो देवः सहस्रशिरसोऽव्ययः । वाराहं रूपमास्थाय शोभ्यं हारार्णवान्महीं ।
अमृते निर्म्मिते पूर्व्वं विष्णुः स्त्रीरूपमास्थितः । सुराणामसुराणाञ्च युद्धञ्चक्रे सुदारुणं ।
अमृतार्थे पुरा चापि देवदैत्यसमागमे । दधार मन्दरं विष्णुरकूपार इति श्रुतिः । ४१३५

मेव वामनमास्थाय निन्दनीयं पुरा वपु. । त्रिभि क्रमैश्च त्रीँल्लोकान् जहार त्रिदिवालयं ।
चतुर्थं तेजसो भागं कृत्वा दाशरथे गृहे । स एव रामसंज्ञो वै रावणं व्यपसत्तदा ।
एवमेष निकृत्या वै तत्तद्रूपमुपागत । साधयत्यात्मन. कार्य्यं सुराणामर्थसिद्धये ।
तदेष नूनं विष्णुर्व्वा शक्रो वा मरुताम्पति. । मत्साधनेऽस्तथा प्राप्तो नारदो मां यदुक्तवान् । ४१७०
अत्र मे शङ्कते बुद्धिर्व्वसुदेवं प्रति ध्रुवं । अस्य बुद्धिविशेषेण वयं कातरतां गताः ।
अहं हि खट्वाङ्गवने नारदेन समागतः । द्वितीयं स हि मां विप्र. पुनरेवाब्रवीद्वचः ।
यस्त्वयाऽनुष्ठितो यत्न. कंस गर्भकृते महान् । वसुदेवेन ते रात्रौ तत्कर्म्म विफलीकृतं ।
दारिका या त्वया रात्रौ शिलायां कंस पातिता । तां यशोदासुतां विद्धि कृष्णञ्च वसुदेवजं ।
रात्रौ व्यावर्त्तितावेतौ गर्भौ तव वधाय वै । वसुदेवेन सन्धाय मित्ररूपेण शत्रुणा ।
सा तु कन्या यशोदाया विन्ध्ये पर्व्वतसत्तमे । हत्वा शुम्भनिशुम्भौ द्वौ दानवौ नगचारिणौ । ४१७५
कृताभिषेका वरदा भूतसङ्घनिषेविता । अर्च्यते दस्युभिर्घोरैर्महापशुबलिप्रिया ।
सुरापिशितपूर्णाभ्यां कुम्भाभ्यामुपशोभिता । मयूराङ्गजचित्रैश्च बर्हभारैर्व्विभूषिता ।
हृष्टकुक्कुटसन्नादं वनं वायसनादितं । छागयूथैश्च संपूर्णमविरुद्धैश्च पक्षिभि. ।
सिंहव्याघ्रवराहाणां नादेन प्रतिनादितं । वृक्षगम्भीरनिविडं कान्तारै. सर्व्वतो वृतं ।
दिव्यभृङ्गारचमरैरादर्शैश्च विभूषितं । देवतूर्य्यनिनादैश्च शतश प्रतिनादितं । ४१८०
स्थाने तस्या नगे विन्ध्ये निर्म्मितं स्वेन तेजसा । रिपूणां त्रासजननी नित्यं तत्र मनोरमे ।
वसते परमप्रीता दैवतैरभिपूजिता । यस्त्वयं नन्दगोपस्य कृष्ण इत्युच्यते सुत. ।
अत्र मे नारदः प्राह सुमहत् कार्य्यकारणं । द्वितीयो वसुदेवाद्धि वासुदेवो भविष्यति ।
स हि ते सहजो मृत्युर्ब्बान्धवश्च भविष्यति । स एव वासुदेवो वै वसुदेवसुतो बली ।
बान्धवो धर्म्मतो मह्यं हृदयेनान्तको रिपु । यथा हि वायसो मूर्द्ध्नि पद्भ्यां यस्यावतिष्ठते । ४१८५
नेत्रे तुदति तस्यैव सकोपामिषगर्द्धिना । वसुदेवस्तथैवाय सपुत्रज्ञातिबान्धव. ।
छिनत्ति मम मूलानि भुङ्क्ते च मम पार्श्वतः । भ्रूणहत्याऽपि सन्तार्य्या गोवध. स्त्रीवधोऽपि वा ।
न कृतघ्नस्य लोकोऽस्ति बान्धवस्य विशेषत । पतितानुगतं मार्गन्निषेवत्यचिरेण स ।
य· कृतघ्नोऽनुबन्धेन प्रीतिं वहति दारुणां । नरकाध्युषित. पन्था गन्तव्यस्तेन दारुण ।
अपारे पापहृदयो यः पापमनुतिष्ठति । अहं वा स्वजनज्ञ्यय स वा साध्यन्तर सुतः । ४१९०
नियमैर्गुणयुक्तेन मया बान्धवकाम्यया । हस्तिनां कलहे घोरे वधमर्हन्ति वीरुध ।
युद्धयुग्मे ते तु महान्त्यन्ति महावने । बान्धवानामपि तथा भेदकाले समुत्थिते ।
मध्ये योऽन्तरमेषु स्वजनो यदि वेतरः । कालस्त्वं हि विनाशाय मया पुष्टो विजानता ।
वसुदेव कुलस्यास्य यद्विरोधयसे भृशं । अमर्षी वैरशीलश्च सदा पापमति. शठ ।
स्थाने यदुकुलं मूढ शोचनीयं मया कृतं । वसुदेव त्वया वृद्धो यन्मया त्वं पुरस्कृत । ४१९५

श्वेतेन शिरसा वृद्धो नैव वर्षशती भवेत् । यस्य बुद्धिः परिणता स वै वृद्धतरो नृणां ।
त्वन्तु कर्कशशीलश्च बुद्धा च न बहुश्रुतः । केवलं वयसा वृद्धो यथा शरदि तोयदः ।
किञ्च त्वं साधु जानीषे वसुदेव वृथामते । हते कंसे मम सुतो मथुरां पालयिष्यति ।
छिन्नाशस्त्वं वृथावृद्धो मिथ्या ह्येतद्विचारितं । जिजीविषुर्न स ह्यस्ति यो वै तिष्ठेन्ममाग्रतः ।
प्रहर्त्तुकामो विश्वस्ते यस्त्वं दुष्टेन चेतसा । तत्ते प्रतिकरिष्येऽहं पुत्रयोस्तव पश्यतः ।
न मे वृद्धवधः कश्चिद्द्विजस्त्रीवध एव च । कृतपूर्व्वः करिष्ये वा विशेषेण तु बान्धवे ।
इह त्वं जातसंवृद्धो मम पित्रा विवर्द्धितः । पितृष्वसुश्च मे भर्त्ता यदूनां प्रथमो गुरुः ।
कुले महति विख्यातः प्रथिते चक्रवर्त्तिनां । गुर्व्वर्थं पूजितः सद्भिर्यदुभिर्धर्म्मबुद्धिभिः ।
किं करिष्यामहे सर्व्वे सत्सु वक्तव्यताङ्गताः । यदूनां यूथमुख्यस्य यस्य ते वृत्तमीदृशं ।
मद्वधो वा जयो वाऽथ वसुदेवस्य दुर्नयैः । सत्सु यास्यन्ति पुरुषा यदूनामवगुण्ठिताः ।
मया हि मद्वधोपायं तर्कयामेन वै मृधे । अविश्वास्यं कृतं कर्म वाच्याश्च यादवाः कृताः ।
अशाम्यं वैरमुत्पन्नं मम कृष्णस्य चोभयोः । शान्तिमेकतरे शान्ति गते यास्यन्ति यादवाः ।
गच्छत्वयं दानपतिः शिघ्रमानयितुं व्रजात् । नन्दगोपञ्च गोपांश्च करदान्मम शासनात् ।
वाच्यश्च नन्दगोपो वै करमादाय वार्षिकं । शीघ्रमागच्छ नगरं गोपैः सर्व्वैः समन्वितः ।
कृष्णसङ्कर्षणौ चैव वसुदेवसुतावुभौ । द्रष्टुमिच्छति वै कंसः सभृत्यः सपुरोहितः ।
एतौ युद्धविदौ रङ्गे कालनिर्म्माणयोधिनौ । दृढप्रतिकृती चैव शृणोमि व्यायतोद्यमौ ।
अस्माकमपि मल्लौ द्वौ सज्जौ युद्धकृतोद्यमौ । ताभ्यां सह नियोत्स्येते तौ युद्धकुशलावुभौ ।
द्रष्टव्यौ च मयाऽवश्यं साधू तावमरोपमौ । पितृष्वसृसुतौ वीरौ व्रजवासौ वनेचरौ ।
वक्तव्यश्च व्रजे तस्मिन् समीपे व्रजवासिनां । राजा धनुर्म्महं नाम कारयिष्यति वै सुखी ।
अस्मिन् राष्ट्रे प्रजास्तत्र निवसन्तु यथासुखं । जनस्यामन्त्रितस्यार्थे यथा स्यात् सर्व्वमव्ययं ।
पयसः सर्पिषश्चैव दध्नो दध्युत्तरस्य च । यथाकामं प्रदानाय भोज्याधिश्रयणाय च ।
अक्रूर गच्छ शीघ्रं त्वं तावानय ममाज्ञया । सङ्कर्षणस्य कृष्णस्य द्रष्टुं कौतूहलं हि मे ।
तयोरागमने प्रीतिः परा मम कृता भवेत् । दृष्ट्वा तु तौ महावीर्यौ तद्विधास्यामि यद्धितं ।
श्राव्यास वाक्यं श्रुत्वैव मम तौ परिभाषितं । नागच्छेतां यथाकामं निग्राह्यावपि तौ मया ।
सान्त्वमेव तु बालेषु प्रधानं प्रथमो नयः । मधुरेणैव तौ मत्तौ त्वयमेवानयाशु वै ।
अक्रूर कुरु मे प्रीतिमेतां परमदुर्ल्लभां । यदि वा नोपजप्तोऽसि वसुदेवेन सुव्रत ।
तथा कर्त्तव्यमेतद्धि यथा तावागमिष्यतः । एवमाक्रुश्यमानस्तु वसुदेवो वसूपमः ।
सागराकारमात्मानं निष्प्रकम्पमधारयत् । वाक्शल्यैस्तुद्यमानस्तु कंसेनादीर्घदर्शिना ।
क्षमां मनसि सन्धाय नोत्तरं प्रत्यपद्यत । ये तु तं ददृशुस्तत्र धिक्शब्दमसकृत्क्षपा ।
धिग्धिगित्यसकृत्ते वै शनैरूचुरवाङ्मुखाः । अक्रूरस्तु महातेजा जानन्दिव्येन चक्षुषा ।

जलं दृष्ट्वैव हर्षितः प्रेषितः प्रीतिमानभूत् । तस्मिन्नेव मुहूर्त्ते तु मथुरायाः स निर्ययौ ।
प्रीतिमान् पुण्डरीकाक्षं द्रष्टुं दानपतिः स्वयं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अक्रूरप्रस्थापने ऊनाशीतोऽध्यायः ॥ ७९ ॥
॥ वैशम्पायन उवाच ॥ चित्रं यदुसदं दृष्ट्वा सर्व्वे ते यदुपुङ्गवाः । निपीय श्रवणान् हृष्टैर्मेनिरे तं गतायुषं ।
अभ्यस्त्वन्तःप्रमना धैर्य्यादविकृतं वचः । प्रोवाच वदतां श्रेष्ठः समाजे कंसमोजसा ।
अश्लाघ्यो वदतः पुत्र तवायं वाक्परिश्रमः । अयुक्तो गर्हितः सद्भिर्ब्बान्धवेषु विशेषतः । ४४०५
अयादवो यदि भवान् शृणु तावद्यदुच्यते । न हि त्वा यादवा वीर बलात् कुर्व्वन्ति यादवं ।
अश्लाघ्या वृष्णयः पुत्र येषां त्वमनुशासिता । इक्ष्वाकुवंशजो राजा विनिवृत्तः स्ववंशकृत् ।
भोजो वा यादवो वाऽसि कंसो वाऽसि यथा तथा । सहजन्ते शिरस्तात जटी मुण्डोऽपि वा भव ।
उग्रसेनस्त्वयं श्लाघ्यो योऽस्माकं कुलशासनः । दुर्ज्जातो येन येन त्वमीदृशो जनितः सुतः ।
न चात्मना गुणांस्तात प्रवदन्ति मनीषिणः । परेणोक्ता गुणा गौण्यं यान्ति सर्व्वार्थसम्मिताः । ४४१०
पृथिव्यां यदुवंशोऽयं निन्दनीयो महीक्षितां । बालः कुलान्तकृन्मूढो येषां त्वमनुशासिता ।
एतैरसाधुभिर्व्वाक्यैस्त्वया साध्विति भाषितैः । न चाप्यवसितं कार्य्यमात्मा च विवृतः कृतः ।
गुरोरनवलिप्तस्य मान्यस्य महतामपि । क्षेपणं कः शुभं मन्येद्द्विजस्येव वधं कृतं ।
मान्यायैवाभिगम्याय वृद्धास्तात यथाऽप्रियं । क्रोधो हि तेषां प्रदहेल्लोकानन्तर्गतानपि ।
बुधेन तात दान्तेन नित्यमभ्युत्थितात्मना । धर्म्मस्य गतिरन्वेष्या मत्स्यस्य गतिरप्स्विव । ४४१५
केवलं त्वन्तु दर्पेण वृद्धानभिमानिह । वाचा तुदसि मर्म्मघ्न्या अप्रशस्ता यथाकृतिः ।
वसुदेवस्य पुत्रार्थे यदिमं परिगर्हसि । तेन मिथ्याप्रलापन्ते निन्दामि कृपणं वचः ।
दारुणेऽपि पिता पुत्रे नैव दारुणतां व्रजेत् । पुत्रार्थे ह्यापदः कष्टाः पितरः प्राप्नुवन्ति च ।
कारितो वसुदेवेन यदि पुत्र, शिशुः पुरा । मन्यसे यद्यकर्त्तव्यं तत्पृच्छ पितरं स्वकं ।
गर्हिता वसुदेवस्य यदुवंशस्य निन्दता । त्वया यादवपुत्राणां वैरजं विषमर्जितं । ४४२०
अकर्त्तव्यं यदि कृतं वसुदेवेन पुत्रजं । किमर्थमुपपेषेण शिशुस्त्वं न विनाशितः ।
पुन्नाम्नो नरकात् पुत्रो यस्मात्त्राति पितॄन् सदा । तस्माद्ब्रुवन्ति पुत्रेति पूर्व्वं धर्म्मविदो जनाः ।
ज्ञात्वा हि यादवः कृष्णः स च सङ्कर्षणो युवा । मत्स्यापि विघ्नतस्ताभ्यां ज्ञातवैरेण चेतसा ।
उद्भूतानीह सर्व्वेषां यदूनां हृदयानि वै । वसुदेवे त्वयाक्षिप्ते वासुदेवे च कोपिते ।
कृष्णे च भवतो द्वेष्ये वसुदेवविगर्हणात् । शंसन्ति चेमानि भयं निमित्तान्यशिवानि ते । ४४२५
सर्पाणां दर्शनं तीक्ष्णं स्वप्नान्ताय निशाक्षये । पुर्य्यां वैधव्यशंसीनि कारणैरनुमीमहे ।
एष घोरो ग्रहः स्वातिमुल्लिखन् स्वैर्गभस्तिभिः । वक्रमङ्गारको यस्ते चित्रायां घोरदर्शनः ।
बुधेन पश्चिमा सन्ध्या व्याप्ता घोरेण तेजसा । वैश्वानरपथे शुक्रो ह्यतिचारञ्चचार ह ।
केतुना धूमकेतोस्तु नक्षत्राणि चयोदश । भरण्यादीनि भिन्नानि नानुयान्ति निशाकरं ।

प्राक्सन्ध्यापरिघग्रस्ता ताभिर्व्याधति भास्करं। शिवा श्मशानान्निष्क्रम्य निश्वासाङ्गारवर्षिणी। ३२९९
उभे सन्ध्ये पुरी घोरा पर्येति वक्र,वाशती। उल्कानिर्घातनादेन पपात धरणीतले।
चलत्यपर्व्वणि मही गिरीणां शिखराणि च। प्रतिलोमं प्रजल्पेते व्याहरन्तो मृगद्विजाः।
ग्रस्त. स्वर्भानुना सूर्य्यो दिवा नक्तमजायत। धूमोत्पातैर्द्दिशो व्याप्ताः शुष्काशनिसमाहताः।
प्रस्रवन्ति घना रक्तं साशनिस्तनयित्नव.। चलिताः देवताः स्थानात्त्यजन्ति विहगा नगान्।
यानि राजविनाशाय दैवज्ञा. कथयन्ति ह। तानि सर्व्वाणि पश्यामि निमित्तान्यशुभानि वै। ३२९६
तथापि स्वजनद्वेषी राजधर्मपराङ्मुखः। अनिमित्तागतक्रोधः सन्निकृष्टभयो ह्यसि।
यस्त्वं देवोपमं दृद्धं वसुदेवं वसूपमं। मोहात् विपसि दुर्बुद्धे कुतस्ते शान्तिरात्मन.।
त्वद्धेतो यो हि नः स्नेहः सम्प्रयाशमोऽद्य तं बध। अश्वितं स्वस्य वंशस्य न त्वां वयमुपास्महे।
स हि दासपतिर्दूत्यो यो द्रक्ष्यति वने गतं। पुण्डरीकपलाशाक्षं कृष्णमक्लिष्टकारिणं।
छिन्नमूलो ह्ययं वंशो यदूनां त्वत्कृते हत। कृष्णो ज्ञातीन् समानाय्य स सन्धानं करिष्यति। ३२७०
शान्तमेव तवानेन वसुदेवेन धीमता। कालसम्पक्वविज्ञानो ब्रूहि त्वं यद्यदिच्छसि।
मह्यम्तु रोचते कंस वसुदेवसहायवान्। गच्छ कृष्णस्य निलयं प्रीतिस्ते तेन रोचतां।
इति श्रीमहाभारते,खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकवाक्ये अशीतितमोऽध्यायः॥ ८०॥
॥ वैशम्पायन उवाच ॥ अन्धकस्य वचः श्रुत्वा कंस. संरक्तलोचन.। न किञ्चिदब्रवीत् क्रोधाद्विवेश स्वं निवेशनं।
ते तु सर्व्वे यथावेश्म यादवाः श्रुतविस्तराः। जग्मुर्व्विदितसङ्कल्पाः कंसवैक्लव्यशंसिनः।
अक्रूरोऽपि यथाज्ञप्त कृष्णदर्शनलालस.। जगाम रथमुख्येन मनसस्तुल्यगामिना। ३२७५
कृष्णस्यापि निमित्तानि शुभान्यङ्गगतानि वै। पितृतुल्येन,शंसन्ति बान्धवेन समागमं।
प्रागेव तु नरेन्द्रेण मायुरेणोग्रसेनिना। केशिनः प्रेषितो दूतो वधायोपेन्द्रकारणात्।
स तु दूतश्च. श्रुत्वा केशी क्लेशकरो नृणां। वृन्दावनगतो गोपान् बाधते स्म दुरासदः।
मानुषं मांसमश्नान क्रुद्धो दुष्टपराक्रमः। दुर्दान्तो वाजिदैत्योऽधावकरोत् कदनं महत्।
निघ्नन् गा वै सगोपालान् गवां पिशितभोजन। उद्दामः कामचारी च स केशी निरवग्रहः। ३२८०
तदरण्यं श्मशानाभं नृणामस्थिभिरावृतं। यत्रास्ते स हि दुष्टात्मा केशी तुरगदानव.।
खुरैर्द्दारयते भूमिं वेगेनारुजते द्रुमान्। हेषितै. स्पर्द्धते वायुं प्लुतैर्लङ्घयते नभः।
अतिप्रवृद्धो मत्तश्च दुष्टाश्वो वनगोचर.। प्रकम्पितसटो रौद्रः कंसस्य चरितानुगः।
ईरिणं तद्वनं सर्व्वं तेनासीत पापकारिणा। हतं तुरगदैत्येन सर्व्वान् गोपान्,जिघांसता।
तेन दुष्टप्रचारेण दूषितं तद्वनं महत्। न नृभिर्गोधनैर्वापि सेव्यते वनवृत्तिभि। ३२८५
नि.सम्पात. हत पन्थास्तेन तद्विषयाश्रित.। मदाचलितवृत्तेन नृमांसान्यश्नता भृशं।
नृशब्दानुसर, क्रुद्ध स कदाचिद्दिनागमे। जगाम घोषसंवा.सं चोदितः कालधर्म्मणा।
तं दृष्ट्वा दुद्रुवुर्गोपा स्त्रियश्च शिशुभि. सह। क्रन्दमा.ना जगन्नाथं कृष्णं नाथमपाश्रिताः।

तासां रुदितशब्देन गोपानां क्रन्दितेन च। दत्त्वाऽभयन्तु कृष्णो वै केशिनं सोऽभिदुद्रुवे।
केशी चाप्युद्धतग्रीवः प्रकाशदशनेक्षणः। हेषमाणो जवोदग्रो गोविन्दाभिमुखो ययौ। ४२८०
तमापतन्तं सम्प्रेक्ष्य केशिनं हयदानवं। प्रत्युज्जगाम गोविन्दस्तोयदः शशिनं यथा।
केशिनस्तु तमभ्याशे दृष्ट्वा कृष्णमवस्थितं। मनुष्यबुद्ध्या गोपाः कृष्णमूचुर्हितैषिणः।
कृष्ण तात न खल्वेष सहसा ते हयाधमः। उपसर्प्यो भवान् बालः पापश्चैष दुरासदः।
एष कंसस्य सहजः प्राणस्तात बहिश्चरः। उत्तमश्च हयेन्द्राणां दानवोऽप्रतिमो युधि।
त्रासनः परसैन्यानां तुरगाणां महाबलः। अवध्यः सर्व्वभूतानां प्रथमः पापकर्म्मणां। ४२८५
गोपानां तद्वचः श्रुत्वा वदतां मधुसूदनः। केशिना सह युद्धाय मतिञ्चक्रेऽरिसूदनः।
ततः सव्यं दक्षिणञ्च मण्डलानि परिभ्रमन्। पद्भ्यामुभाभ्यां स हयः क्रोधेनारुजते द्रुमान्।
मुखे लम्बसटे चास्य स्कन्धे केशघनावृते। वलयो भूतरङ्गाभाः सुस्रुवुः क्रोधजं जलं।
सफेनं वक्त्रमस्यैव वभौ रजसावृतं। हिमकाले यथा व्योम्नि नीहारमिव चन्द्रमाः।
गोविन्दमरविन्दाक्षं हेषितोद्गारशीकरैः। सफेनैर्वक्त्रनिर्गतैः सेचयामास भारत। ४२९०
खुरोद्धतावसक्तेन मधूकक्षोदपाण्डुना। रजसा स हयः कृष्णं चकारारुणमूर्द्धजं।
प्लुतावल्गितपादस्तु तक्षमाणो धरां खुरैः। दन्तान् निर्दशमानस्तु केशी कृष्णमुपाद्रवत्।
स संसक्तस्तु कृष्णेन केशी तुरगसत्तमः। पूर्व्वाभ्याञ्चरणाभ्यां वै कृष्णं वक्षस्यताडयत्।
पुनः पुनश्च स बली प्राहिणोत्पार्श्वतः खुरान्। कृष्णस्य दानवो घोरं प्रहारममितौजसः।
वक्त्रेण चास्य घोरेण तीक्ष्णदंष्ट्रायुधेन वै। अदशद्बाहुशिखरं कृष्णस्य रुषितो हयः। ४२९५
स लम्बकेसरसटः कृष्णेन सह सङ्गतः। रराज केशी मेघेन संयुक्तः ख इवांशुमान्।
उरसा चोरसा हन्तुमियेष बलवान् हयः। वेगेन वासुदेवस्य क्रोधाद्द्विगुणविक्रमः।
तस्योत्सिक्तस्य बलवान् कृष्णोऽप्यमितविक्रमः। बाहुमाभोगिनं कृत्वा मुखे क्रुद्धः समादधत्।
स तं बाहुमशक्तो वै खादितुं भेत्तुमेव वा। दशनैर्मूलनिर्मुक्तैः सफेनं रुधिरं वमन्।
विपाटिताभ्यामोष्ठाभ्यां कटाभ्यां विदलीकृतः। अक्षिणी विवृते चक्रे विसृते मुक्तबन्धने। ४३००
निरस्तहनुराविष्टः शोणिताक्तविलोचनः। उत्कर्णो नष्टचेतास्तु स केशी बह्वचेष्टत।
उत्पतन्नसकृत् पादैः शकृन्मूत्रं समुत्सृजन्। स्विन्नाङ्गरोमा श्रान्तस्तु निर्यत्नचरणोऽभवत्।
केशिवक्त्रविलग्नस्तु कृष्णबाहुरशोभत। व्याभुग्न इव घर्मान्ते चन्द्रार्द्धकिरणैर्घनः।
केशी च कृष्णसंसक्तः श्रान्तगात्रो व्यरोचत। प्रभातावनतश्चन्द्रः श्रान्तो मेरुमिवाश्रितः।
तस्य कृष्णभुजोद्धूताः केशिनो दशना मुखात्। पेतुः शरदि निस्तोयाः सिताभ्रावयवा इव। ४३०५
स तु केशी भृशं श्रान्तः कृष्णेन क्लिष्टकर्मणा। स्वभुजं स्वायतं कृत्वा पाटितो बलवत्तदा।
स पाटितो भुजेनाजौ कृष्णेन विकृताननः। केशी नदन्महानादं दानवो व्यथितस्तदा।

विघूर्णमानः स्रस्ताङ्गो मुखाद्रुधिरमुद्वमन् । भृशं वक्रीकृतवपुर्निकृत्ताङ्ग इवाचलः ।
व्यादितास्यो महारौद्रः सोऽसुरः कृष्णबाहुना । निपपात यथा कृत्तो नागो द्विविदलीकृतः ।
बाहुना कृत्तदेहस्य केशिनो रूपमाबभौ । पशोरिव महाघोरं निहतस्य पिनाकिना । ॥११०
द्विपादपृष्ठपुच्छार्द्धे श्रवणैकाक्षिनासिके । केशिनस्ते द्विधाभूते द्वे अर्द्धे रेजतुः क्षितौ ।
केशिदन्तक्षतश्चापि कृष्णस्य शुशुभे भुजः । वृद्धसाल इवारण्ये गजेन्द्रदशनाङ्कितः ।
तं हत्वा केशिनं युद्धे कल्पयित्वा च भागशः । कृष्णः पद्मपलाशाक्षो हसंस्तत्रैव तस्थिवान् ।
तं हतं केशिनं दृष्ट्वा गोपा गोपस्त्रियस्तथा । बभूवुर्मुदिताः सर्व्वे हतविघ्ना हतक्लमाः ॥
दामोदरन्तु श्रीमन्तं यथास्थानं यथावयः । अभ्यनन्दन् प्रियैर्व्वाक्यैः पूजयन्तः पुनः पुनः । ॥११५
॥ गोपा ऊचुः ॥ अहो तात कृतं कर्म्म हतोऽयं लोककण्टकः । दैत्यः क्षितिचरः कृष्ण हयरूपं समास्थितः ।
कृतं वृन्दावनं चेदं सेव्यं नृमृगपक्षिणां । घ्नता पापमिमं तात केशिनं हयदानवं ।
हता नो बहवो गोपा गावो वत्सेषु वत्सलाः । नैके चान्ये जनपदा हतानेन दुरात्मना ।
एष सम्वर्त्तकं कर्त्तुमुद्यतः किल पापकृत् । नृलोकं निर्नरं कृत्वा चर्त्तुकामो यथासुखं ।
नैतस्य प्रमुखे स्थातुं कश्चिच्छक्तो जिजीविषुः । अपि देवसमूहेषु किं पुनः पृथिवीतले । ॥१२०
॥ वैशम्पायन उवाच ॥ अथाहान्तर्हितो विप्रो नारदः खगमो मुनिः । प्रीतोऽस्मि विष्णो देवेति कृष्ण कृष्णेति चाब्रवीत् ।
यदिदं दुष्करं कर्म्म कृतं केशिजिघांसया । त्वय्येव केवलं युक्तं त्रिदिवे त्र्यम्बकेऽपि वा ।
अहं युद्धोत्सुकस्तात त्वद्गतेनान्तरात्मना । इदं नरहयं युद्धं द्रष्टुं स्वर्गादिहागतः ।
पूतनानिधनादीनि कर्म्माणि तव दृष्टवान् । अहं त्वनेन गोविन्द कर्म्मणा परितोषितः ।
हयादस्मान्महेन्द्रोऽपि बिभेति बलसूदनः । कुर्व्वाणाद्वपुर्घोरं केशिनो दुष्टचेतसः । ॥१२५
यत्त्वया पाटितं देहं भुजेनायतपर्व्वणा । एषोऽस्य मृत्युरन्ताय विहितो विश्वयोनिना ।
यस्मात्त्वया हतः केशी तस्मान्मच्छासनं शृणु । केशवो नाम नाम्ना त्वं ख्यातो लोके भविष्यसि ।
स्वस्त्यस्तु भवतो लोके साधु याम्यहमाशुगः । कृत्यशेषश्च ते कार्य्यो यत्नस्त्वमसि मा चिरं ।
त्वयि कार्य्यान्तरगते नरा इव दिवौकसः । विडम्बयन्तः क्रीडन्ति लीलां त्वद्गतमाश्रिताः ।
अभ्याशे वर्त्तते कालो भारतस्याहवोदधेः । हस्तप्राप्तानि युद्धानि राज्ञां त्रिदिवगामिनाम् । ॥१३०
पन्थानः शोधिता व्योम्नि विमानारोहिणोऽध्वगाः । अवकाशा विभज्यन्ते शक्रलोके महीक्षितां ।
उग्रसेनसुते प्राप्ते पदस्थे त्वयि केशव । अभितस्त्वद्भयं युद्धं भविष्यति महीक्षितां ।
त्वामप्रतिमकर्म्माणं संश्रयिष्यन्ति पाण्डवाः । भेदकाले नरेन्द्राणां पक्षग्राही भविष्यसि ।
त्वयि राजासनस्थे हि राजश्रियमनुत्तमां । शुभां त्यक्ष्यन्ति राजानस्त्वत्प्रभावाच्च संशयः ।
एष मे कृष्ण सन्देशः श्रुतिभिः ख्यातिमेष्यति । देवतानां दिविष्ठानां जगतश्च जगत्पते । ॥१३५
दृष्टं मे भवतः कर्म्म द्रष्टव्यानि मया प्रभो । कंसे भूयः समेष्यामि साधिते साधयाम्यहं ।

निवृत्तो भुजगेन्द्रस्य यावदस्मि ह्रदोत्तमात्। तमाह कृष्णः संहृष्टो गच्छ धर्मिष्ठ माचिरं। ४४३५
आवां खलु न शक्तौ स्वस्त्वया हीनावुपासितुं। स ह्रदे यमुनायास्तु ममज्जामितदक्षिणः।
रसातले स ददृशे नागलोकमिमं यथा। तस्य मध्ये सहस्रास्यं हेमतालोच्छ्रितध्वजं।
३० लाङ्गलासक्तहस्ताग्रं मुषलापाश्रितोदरं। असिताम्बरसंवीतं पाण्डुरं पाण्डुराननं।
कुण्डलैकधरं मत्तं सुप्तमम्बुरुहेक्षणं। भोगोत्करासने शुभ्रे स्वेन देहेन शोभिते।
स्वासीनं स्वस्तिकाभ्याञ्च वराहाभ्यां महीधरं। किञ्चित्सव्यापवृत्तेन मौलिना हेमचूलिना। ४४४०
जातरूपमयैः पद्मैर्मालया छन्नवक्षसं। रक्तचन्दनदिग्धाङ्गं दीर्घबाहुमरिन्दमं।
पद्मनाभं सिताभ्राभं भाभिर्ज्वलितवर्चसं। ददर्श भोगिनां नाथमेकमेकार्णवेश्वरं।
पूज्यमानं द्विजिह्वैर्वासुकिप्रमुखैः प्रभुं। कम्बलाश्वतरौ नागौ तौ चामरकरावुभौ।
आवीजयेतां तं देवं धर्म्मासनगतं प्रभुं। तयाभ्यासगतो भाति वासुकिः पन्नगेश्वरः।
वृतोऽन्यैः सचिवैः सर्पैः कर्कोटकपुरःसरैः। तं घटैः काञ्चनैर्दिव्यैः पङ्कजोद्भतमस्तकैः। ४४४५
राजानं स्नापयामासुः स्नातमेकार्णवाम्बुभिः। तस्योत्सङ्गे घनश्यामं श्रीवत्साच्छादितोरसं।
पीताम्बरधरं विष्णुं सूपविष्टं ददर्श ह। अपरञ्चैव सोमेन तुल्यसंहननं प्रभुं।
सङ्कर्षणमिवासीनं तं दिव्यं विष्टरं विना। स कृष्णं तत्र तरसा व्याहर्त्तुमुपचक्रमे।
तस्य संस्तम्भयामास वाक्यं कृष्णः स्वतेजसा। सोऽनुभूय भुजङ्गानां तं भागवतमव्ययं।
उदतिष्ठत् पुनस्तोयात् विस्मितोऽमितदक्षिणः। स तौ रथस्थावासीनौ तत्रैव बलकेशवौ। ४४५०
निरीक्षमाणावन्योन्यं ददर्शाद्भुतरूपिणौ। अथामज्जत् पुनस्तत्र तदाऽक्रूरः कुतूहलात्।
दृश्यते यत्र देवोऽसौ नीलवासाः सिताननः। तथैवासीनमुत्सङ्गे सहस्रास्यधरस्य वै।
ददर्श कृष्णमक्रूरः पूज्यमानं तदा प्रभुं। भूयश्च सहसोत्थाय तन्मन्त्रं सहसा वहन्।
रथं तेनैव मार्गेण जगामामितदक्षिणः। तमाह केशवो हृष्टः स्थितमक्रूरमागतं।
कीदृशं नागलोकस्य वृत्तं भागवते ह्रदे। चिरन्तु भवता कालं व्याक्षेपेण विलम्बितं। ४४५५
मन्ये दृष्टं त्वयाश्चर्य्यं हृदयं ते यथाऽचलं। प्रत्युवाच स तं कृष्णमाश्चर्य्यं भवता विना।
किं भविष्यति लोकेषु स्थावरेषु चरेषु च। तत्राश्चर्य्यं मया दृष्टं कृष्ण यद्भुवि दुर्लभं।
तदिहापि यथा तत्र पश्यामि च रमामि च। सङ्गतश्चास्मि लोकानामाश्चर्य्येणेह रूपिणा।
अतः परतरं कृष्ण नाश्चर्य्यं द्रष्टुमुत्सहे। तदागच्छ गमिष्यामः कंसराजपुरीं प्रभो।
यावद्यास्तं सञ्चेयति दिवसान्ते दिवाकरः। ४४६०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अक्रूरस्य नागलोकदर्शने त्र्यशीतोऽध्यायः॥ ८३॥
॥ वैशम्पायन उवाच॥ स तु युक्ता रथवरमारुह्यामितदक्षिणः। कृष्णेन सार्द्धं संप्रायात्तथा सङ्कर्षणेन च।
आससाद पुरीं रम्यां मथुरां कंसपालितां। विविशुस्तां पुरीं रम्यां काले रक्तदिवाकरे।
तौ तु स्वभवनं वीरौ कृष्णसंकर्षणावुभौ। प्रवेशितौ बुद्धिमता ह्यक्रूरेणार्कतेजसा।

तावाह वरवर्णाभौ भीतो दामपतिस्तदा । त्यक्त्वा तात गमने वसुदेवगृहे स्पृहा ।
युवयोर्हि कृते वृद्धः कंसेन स निरस्यते । भर्त्स्यते च दिवारात्रौ नेह स्थातव्यमित्यपि ।
तद्युवाभ्यां हि कर्त्तव्यं पित्रर्थं सुखमुत्तमं । यथा सुखमवाप्नोति तद्धि कार्य्यं हितान्वितं ।
तमुवाच तत कृष्णो यास्यावावामतर्कितौ । प्रेक्षन्तौ मथुरां वीर राजमार्गस्य धार्म्मिक ।
तस्यैव तु गृहं साधो गच्छावो यदि मन्यसे ।
॥ वैशम्पायन उवाच ॥ अनुशिष्टौ च तौ वीरौ प्रस्थितौ प्रेक्षकावुभौ । आलानाभ्यामिवोन्मुक्तौ कुञ्जरौ युद्धकाङ्क्षिणौ ।
तौ तु मार्गगतं दृष्ट्वा रजकं रङ्गकारकं । अयाचेतां ततस्तानि वासांसि रुचिराणि वै ।
रजकः स तु तौ प्राह युवां कस्य वनेचरौ । राज्ञो वासांसि यौ मोर्ख्याद्याचेतां निर्भयावुभौ ।
अहं कंसस्य वासांसि नानादेशभवानि वै । कामरागाणि शतशो रञ्जयामि विशेषत ।
युवां कस्य वने जातौ मृगैः सह विवर्द्धितौ । जातरागाविदं दृष्ट्वा रक्तमाच्छादनं बहु ।
अहो वां जीवितं त्यक्तं यौ भवन्ताविहागतौ । मूर्खौ प्राकृतविज्ञानौ वासो याचितुमिच्छथ ।
तस्मै क्रुद्धोऽथ वै कृष्णो रजकायाल्पमेधसे । प्राप्तारिष्टाय मूर्खाय सृजते वाङ्मयं विषं ।
तलेनाशनिकल्पेन स तं मूर्द्ध्न्यताडयत । स गतासु पपातोर्व्यां रजको व्यस्तमस्तक ।
तं हतं परिदेवन्त्यो भार्य्यास्तस्य विमुक्तकुचः । त्वरितं मुक्तकेश्यश्च जग्मुः कंसनिवेशनं ।
तावुभौ सुवसनौ जग्मतुर्माल्यकारणात । वीर्यौ माल्यापणानां वै गन्धाघातौ द्विपाविव ।
गुणको नाम तत्रासीत् माल्यवृत्तिः प्रियवदः । प्रभूतमाल्यापणवान् लक्ष्मीवान् प्रियदर्शन ।
तं कृष्णः श्लक्ष्णया वाचा माल्यार्थमभिहृष्टया । देहीत्युवाच तत्कालं मालाकारमकातरं ।
ताभ्यां प्रीतो ददौ माल्यं प्रभूतं माल्यजीवक । भवतोः स्वमिदञ्चेति प्रोवाच प्रियदर्शनौ ।
प्रीतस्तु मनसा कृष्णो गुणकाय वरं ददौ । श्रीस्त्वां मत्कृतया सौम्य धनौघैरभिवर्त्स्यते ।
स लब्ध्वा वरमव्यग्रो माल्यवृत्तिरधोमुखः । कृष्णस्य पतितो मूर्ध्ना प्रतिजग्राह तं वरं ।
यथाविमाविति तदा स मेने माल्यजीवक । स भृशं भयसंविग्नो नोत्तरं प्रत्यपद्यत ।
वसुदेवसुतौ तौ च राजमार्गगतावुभौ । कुब्जां ददृशतुर्भूय सानुलेपनभाजनां ।
तामाह कृष्णः कुब्जेति कस्येदमनुलेपनं । नयस्यम्बुजपत्राक्षि क्षिप्रमाख्यातुमर्हसि ।
सा स्मितावेषणी भूत्वा प्रत्युवाचाम्बुजेक्षणं । कृष्ण जलदगम्भीरं विद्युत्कुटिलगामिनि ।
राज्ञः स्नानगृहं यामि तद्गृहाणानुलेपनं । स्थिताऽप्यागच्छ भद्रं ते हरयस्यामि मे प्रिय ।
कृतश्चागम्यते सौम्य यन्मां त्वं नावबुध्यसे । महाराजस्य दयिता नियुक्तामनुलेपने ।
तामुवाच हसन्नीमं कृष्णः कुब्जामवस्थितां । आवयोर्गात्रसदृशं दीयतामनुलेपनं ।
वयं हि देशातिथयो मल्ला प्राप्ता वरानने । द्रष्टुं धनुर्महं दिव्यं राष्ट्रश्चैव महर्द्धिमत् ।
मत्युवाचाथ सा कृष्ण प्रियोऽसि मम दर्शने । राजार्हमिदमव्यग्रं तद्गृहाणानुलेपनं ।
तावुभावनुलिप्ताङ्गौ वारणाविव रेजतु । तोयेनो पङ्कदिग्धाङ्गौ यमुनायां यथा वृषौ ।

ताश्च कुब्जां स्वडोर्मध्ये द्व्यङ्गुलेनाग्रपाणिना । शनैः सम्पीडयामास कृष्णो लीलाविधानवित् ।
सा तु मत्वा स्वकं मग्नं स्वायताङ्गी शुचिस्मिता । जहासोच्चस्तनतटी चञ्चुयष्टिर्लता यथा ।
प्रणयाच्चापि कृष्णं सा बभाषे मत्तकाशिनी । क्व यास्यसि मया रुद्धः कान्त तिष्ठ गृहाण माम् ।
तौ जातहर्षावन्योन्यं सतलाक्षेपमव्ययौ । वीक्षमाणौ प्रहसितौ कुब्जायाः श्रुतविस्तरौ ।
कृष्णस्तु कुब्जां कामार्त्तां सस्मितं विससर्ज्ज ह । ततस्तौ कुब्जया मुक्तौ प्रविष्टौ राजसंसदम् ।
तावुभौ प्रजसंवृद्धौ गोपवेशविभूषितौ । गूढचेष्टाननौ भूत्वा प्रविष्टौ नृपवेश्म तत् ।
धनुःशालाङ्गतौ तौ तु बालावपरितर्कितौ । हिमवद्वनसंभूतौ सिंहाविव बलोत्कटौ ।
दिदृक्षू तौ महत्तत्र धनुरायोगभूषितम् । पप्रच्छतुश्च तौ वीरावायुधागारिकं तदा ।
भोः कंसधनुषां पाल श्रूयतामावयोर्व्वचः । कतरत्तद्धनुः सौम्य महोऽयं यस्य वर्त्तते ।
आयोगभूतं कंसस्य दर्शयस्व यदीच्छसि । स तयोर्द्दर्शयामास तद्धनुः स्तम्भसन्निभम् ।
अनारोप्यमसम्भेद्यं देवैरपि सवासवैः । तद्गृहीत्वा ततः कृष्णस्तुलयामास वीर्य्यवान् ।
दोर्भ्यां कमलपत्राक्षः प्रहृष्टेनान्तरात्मना । तुलयित्वा यथाकामं तद्धनुर्दैत्यपूजितम् ।
आरोपयामास बली नामयामास चाप्यसौ । आनाम्यमानं कृष्णेन प्रहर्षाद्दुरगोपमम् ।
द्विधाभूतमभून्मध्ये धनुरायोगभूषितम् । भङ्क्त्वा तु तद्धनुःश्रेष्ठं कृष्णस्त्वरितविक्रमः ।
निश्चक्राम महावेगः स च संकर्षणो युवा । धनुषो भङ्गनादेन वायुनिर्घोषकारिणा ।
चचालान्तःपुरं सर्व्वं दिशश्चैव पुपूरिरे । स त्वायुधागारनरो भीतस्त्वरितविक्रमः ।
समीपं नृपतेर्गत्वा काकोच्छ्वासोऽभ्यभाषत । श्रूयतां मम विज्ञाप्यमाश्चर्य्यं धनुषो गृहे ।
निर्वृत्तमस्मिन् काले यज्जगतः संभ्रमोपमम् । नरौ कस्यापि सदितौ शिखावितितमूर्द्धजौ ।
नीलपीताम्बरधरौ सितश्वेतानुलेपनौ । तावन्तःपुरमज्ञातौ प्रविष्टौ कामवेशिनौ ।
देवपुत्रोपमौ वीरौ बालाविव हुताशनौ । स्थितौ धनुर्गृहे सौम्यौ सहसा खादिवागतौ ।
मया दृष्टौ परिव्यक्तं रुचिराच्छादनस्रजौ । तयोरेकस्तु पद्माक्षः श्यामः पीताम्बरस्रजः ।
जग्राह तद्धनूरत्नं दुर्ग्राह्यं दैवतैरपि । तत् स बालो महाचापं बलाद्यन्त्रमिवायसम् ।
आरोपयित्वा वेगेन नामयामास लीलया । आकृष्यमाणं तत्तेन विशाणं बाहुशालिना ।
मुष्टिदेशेन कुञ्जित्वा द्विधाभूतमभज्यत । ततः प्रचलिता भूमिर्न प्रभाति च भास्करः ।
धनुषो भङ्गनादेन भ्रमतीव नभस्तलम् । तदद्भुतमहं दृष्ट्वा विस्मयं परमं गतः ।
भयाद्भयद शत्रूणां तदिहाख्यातुमागतः । न जानामि महाराज कौ तावमितविक्रमौ ।
एकः कैलाससङ्काश एकोऽञ्जनगिरिप्रभः । स तु तच्चापरत्नं तु भङ्क्त्वा स्तम्भमिव द्विपः ।
निष्पपातानिलगतिः सानुगोऽमितविक्रमः । स धनुस्तद्द्विधाकृत्वा न जाने क्वापि निर्गतः ।
श्रुत्वैवं धनुषो भङ्गं कंसो विदितविस्तरः । विसृज्यायुधपालं वै प्रविवेश गृहोत्तमम् ॥
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि धनुर्भङ्गे चतुरशीतोऽध्यायः ॥ ८४ ॥

॥ वैशम्पायन उवाच ॥ स चिन्तयित्वा धनुषो भङ्गं भोजविवर्द्धनः । बभूव विमना राजा चिन्तयन् भयदुःखितः ।
कथं बालो विगतभीरवमन्य महाबलं । रक्ष्यमाणस्तु पुरुषैर्द्धनुर्भङ्क्त्वा विनिर्गतः ।
यस्यार्थे दारुणं कर्म्म कृत्वा लोकविगर्हितं । पितृष्वसात्मजान् भीतः षडेवाहं न्यपोथयं । ४११५
दैवं पुरुषकारेण न शक्यमतिवर्त्तितुं । नारदोक्तन्तु वचनं नूनं मह्यमुपस्थितं ।
एवं राजा विचिन्त्याथ निष्क्रम्य स गृहोत्तमात् । प्रेक्षागारं जगामाशु मल्लानामवलोककः ।
स दृष्ट्वा सर्व्वनिर्युक्तं प्रेक्षागारं नृपोत्तमः । श्रेणीनां दृढसंयुक्तैर्मञ्चवाटैर्निरन्तरं ।
उत्तरागारयुक्ताभिर्व्वलभीभिर्व्विभूषितं । कुटीभिश्च प्रदृष्टाभिरेकस्तम्भैश्च भूषितं ।
सर्व्वतः सारनिर्युक्तं स्वायतं सुप्रतिष्ठितं । उदग्राश्लिष्टसुश्लिष्टं मञ्चारोहणमुत्तमं । ४१२०
नृपासनपरिक्षिप्तं मञ्चारण्यसङ्कुलं । छन्नं तद्वेदिकाभिश्च सागरौघसमस्वनं ।
स दृष्ट्वा भूषितं रङ्गमाज्ञापयत बुद्धिमान् । श्वः सचित्राः समाख्याश्च सपताकास्तथैव च ।
सुवासिता वपुष्मन्त उपनीतोत्तरच्छदाः । क्रियन्तां मञ्चवाटाश्च वडभ्यो वीथयस्तथा ।
रङ्गवाटे करीषस्य कल्प्यन्तां राशयोऽव्ययाः । षण्डातोरणशोभाश्च बलयश्चानुरूपतः ।
स्थाप्यन्तां सुनिपानाश्च पानकुम्भा यथाक्रमं । उदभारसहाः सर्व्वे सकाञ्चनघटोत्तराः । ४१२५
मल्लपर्य्योपकल्प्यन्तां कषायाश्चैव कुम्भशः । प्राश्निकाश्च निमन्त्र्यन्तां श्रेण्यश्च सपुरोगमाः ।
आज्ञा च देया मल्लानां प्रेक्षकाणां तथैव च । समाजे मञ्चशोभाश्च कल्प्यन्तां सुपकल्पिताः ।
एवमाज्ञाप्य राजा स समाजविधिमुत्तमं । समाजवाटान्निष्क्रम्य विवेश स्वं निवेशनं ।
आह्वानं तत्र सञ्चक्रे तस्य मल्लवरस्य वै । चाणूरस्याप्रमेयस्य मुष्टिकस्य तथैव च ।
तौ मल्लौ सुमहावीर्य्यौ बलिनौ बाहुशालिनौ । कंसस्याज्ञां पुरस्कृत्य स्थितौ विविशतुस्तदा । ४१३०
तौ समीपगतौ दृष्ट्वा मल्लौ जगति विश्रुतौ । उवाच कंसो नृपतिः सोपन्यासमिदं वचः ।
भवन्तौ मम विख्यातौ मल्लौ वीरध्वजोषितौ । पूजितौ च यथान्यायं सत्काराहौं विशेषतः ।
तन्मत्तो यदि सत्काराः स्मर्य्यन्ते सुकृतानि वा । कर्त्तव्यं मे महत् कर्म्म भवद्भ्यां स्वेन तेजसा ।
यावेतौ मम संवृद्धौ व्रजे गोपालकावुभौ । सङ्कर्षणश्च कृष्णश्च बालावपि जितश्रमौ ।
एतौ रङ्गगतौ युद्धे युध्यमानौ वनेचरौ । निधनमनन्तरं शीघ्रं हन्तव्यौ नात्र संशयः । ४१३५
बालाविमौ चपलकावक्रियाविति सर्व्वथा । नावज्ञा तत्र कर्त्तव्या कर्त्तव्यौ यत्न एव हि ।
ताभ्यां युधि निरस्ताभ्यां गोपाभ्यां रङ्गसन्निधौ । आयत्यां च तदात्वे च श्रेयो मम भविष्यति ।
नृपते. श्रेयसं दृष्ट्वार्थंसाभिर्द्दृष्टमानसौ । जग्मतुर्युद्धसक्तौ तौ मल्लौ चाणूरमुष्टिकौ ।
यदावयोस्तौ प्रमुखे स्थास्येते गोपविग्रहौ । तदाविद्धवरस्तथ्यौ प्रेतरूपौ तपस्विनौ ।
यथा स्यात् प्रियो भद्रे नाथ रिष्टपरिप्लुतौ । आवाभ्यां रोषयुक्ताभ्यां प्रमुखे तौ यशोधनौ । ४१४०
एवं वाग्भिरमुस्त्यश्च तावुभौ मल्लपुङ्गवौ । प्रदुद्रुवतौ नरेन्द्रश्च स्वयं मतिमतां वरः ।
महामात्रं ततः कंसो बभाषे हस्तिजीविनं । हस्ती कुवलयापीडः समाजद्वारि तिष्ठतु ।

बलवान्मदलोलाक्षश्चपलः क्रोधनो नृप । दानोत्कटकटस्वच्छः प्रतिवारणवारणः ।
स सञ्चोदयितव्यस्तौ तावुद्दिश्य वनौकसौ । वसुदेवसुतौ नीचौ यथा स्यातां गतायुषौ ।
त्वया चैव गजेन्द्रेण यदि तौ गोपु जीविनौ । भवेतां घातितौ रङ्गे न परस्येयं मदोत्कटौ ।
ततस्तौ पातितौ दृष्ट्वा वसुदेवः सबान्धवः । छिन्नमूलो निरालम्बः सभार्य्यो विनशिष्यति ।
ये चेमे यादवा मूर्खाः सर्व्वे कृष्णपरायणाः । ते नशिष्यन्ति च्छिन्नाशा दृष्ट्वा कृष्णं निपातितं ।
एतौ हत्वा गजेन्द्रेण मल्लैर्वा स्वयमेव वा । पुरीं निर्यादवां कृत्वा विचरिष्याम्यहं सुखी ।
पिताऽपि मे परित्यक्तो यादवानां कुलोद्वहः । येशाश्च मे परित्यक्ता यादवा कृष्णपक्षिणः ।
न चाहमुग्रसेनेन जातः किल सुतार्थिना । मानुषेणाल्पवीर्य्येण यथा मामाह नारदः ।
॥ महामात्र उवाच ॥ कथमुक्तं नारदेन राजन् देवर्षिणा पुरा । आश्चर्य्यमेतत् कथितं त्वत्तः श्रुतमरिन्दम ।
कथमन्येन जातस्त्वमुग्रसेनात् पितुर्विना । तव माता कथं राजन् कृतं कर्म्मेदमीदृशम् ।
अन्याऽपि प्राकृता नारी न कुर्य्यात्तु जुगुप्सितं । विस्तरं श्रोतुमिच्छामि परं कौतूहलं हि मे ।
॥ कंस उवाच ॥ यथा कथितवान्विप्रो महर्षिर्नारदः प्रभुः । तथाऽहं सम्प्रवक्ष्यामि यदि ते श्रवणे मतिः ।
आगतः शक्रसदनात् स वै शक्रसखो मुनिः । चन्द्रांशुशुक्लवसनो जटामण्डलमुद्वहन् ।
कृष्णाजिनोत्तरीयेण रुक्मयज्ञोपवीतवान् । दण्डी कमण्डलुधरः प्रजापतिरिवापरः ।
गाता चतुर्णां वेदानां विद्वान् गन्धर्व्ववेदवित् । स नारदोऽथ देवर्षिर्ब्रह्मलोकचरोऽव्ययः ।
तमागतमृषिं दृष्ट्वा पूजयित्वा यथाविधि । पाद्यार्घमासनं दत्त्वा सम्प्रवेश्योपविश्य च ।
सुखोपविष्टोऽथ मुनिः पृष्ट्वा च कुशलं मम । उवाच मां प्रीतमना देवर्षिर्भावितात्मवान् ।
पूजितोऽहं त्वया वीर विधिदृष्टेन कर्म्मणा । इदमेकं मम वचः श्रूयतां प्रतिगृह्यतां ।
गतोऽहं देवसदनं सौवर्णं मेरुपर्व्वतं । सोऽहं कदाचिद्देवानां समाजे मेरुमूर्द्धनि ।
तत्र मन्त्रयतामेवं देवतानां मया श्रुतः । भवतः सानुगस्येह वधोपायः सुदारुणः ।
तत्रैष देवकीगर्भो विष्णुर्लोकनमस्कृतः । योऽस्या गर्भोऽष्टमः कंस स ते मृत्युर्भविष्यति ।
देवानां स तु सर्व्वस्वं त्रिदिवस्य गतिश्च सः । परं रहस्यं देवानां स ते मृत्युर्भविष्यति ।
यत्नश्च क्रियतां कंस गर्भाणां पातनं प्रति । नावज्ञा रिपवे कार्य्या दुर्ब्बले सजनेऽपि वा ।
न चायमुग्रसेनस्तु पिता तव महाबल । द्रुमिलो नाम तेजस्वी सौभस्य पतिरूर्ज्जितः ।
श्रुत्वाऽहं तद्वचस्तस्य किञ्चिद्रोषसमन्वितः । भूयोऽपृच्छं कथं ब्रह्मन् द्रुमिलो नाम दानवः ।
मम मात्रा कथं तस्य ब्रूहि विप्र समागमः । एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
॥ नारद उवाच ॥ हन्त ते वर्त्तयिष्यामि शृणु राजन् यथार्थतः । द्रुमिलस्य च मात्रा ते संवादश्च समागमं ।
सुयामुनं नाम गिरिं तव माता रजस्वला । प्रेक्षितुं सहिता स्त्रीभिर्गता वनकुतूहलात् ।
सा तत्र रमणीयेषु रुचिरद्रुमसानुषु । चचार नगशृङ्गेषु कन्दरेषु नदीषु च ।
किन्नरोद्गीतमधुराः प्रतिश्रुत्याऽभिनादिताः । शृण्वती कामजननीर्व्वाचः श्रोत्रसुखावहाः ।

बर्हिणाञ्चैव विरुतं खगानाञ्च विकूजितं। अभीक्ष्णमभिशृण्वन्ती स्त्रीधर्म्मं सा व्यरोचयत्।
एतस्मिन्नन्तरे वायुर्वनराजिविनिःसृत। हृद्य. कुसुमगन्धाढ्यो ववौ मन्मथबोधन.।
१२० द्विरेफाभरणाश्चैव कदम्बा वायुघट्टिता। मुमुचुर्गन्धमधिकं सन्ततासारमूर्च्छिता.। ८९८५
केशराः पुष्पवर्षैश्च वरपुष्पदबोधनाः। नीपा दीपा इवाभान्ति पुष्पकर्णिकधारिणः।
मही नवतृणच्छन्ना शक्रगोपविभूषिता। यौवनस्थेव वनिता सन्दधारार्त्तवं वपुः।
अथ सौभपति. श्रीमान् द्रुमिलो नाम दानवः। भविष्यद्दैवयोगेन विधात्रा यत्र नीयते।
कामगेन रथेनाशु तरुणादित्यवर्चसा। यदृच्छया गतस्तत्र सुयामुनदिदृक्षया।
विहायसा कामगमो मनसोऽप्याशुगामिना। स तं प्राप्य पर्व्वतेन्द्रं अवतीर्य्य रथोत्तमात्। ८९९०
पर्व्वतोपवने न्यस्य रथं पररथारुजं। उभौ तौ सूतसहितौ चेरतुर्नगमूर्द्धनि।
ततो बहून्यपश्येतां काननानि वनानि च। सर्व्वर्त्तुगुणसम्पन्ने नन्दनस्येव कानने।
चेरतुर्नगशृङ्गेषु कन्दरेषु नदीषु च। नानाधातुपिनद्धैश्च शृङ्गैर्व्वैडूर्य्यभिरञ्जितैः।
नानावर्णविचित्रैश्च काञ्चनाञ्जनराजतै.। नानाकुसुमगन्धाढ्यान्नानासत्त्वगणैर्युतान्।
नानाद्विजगणाक्रुष्टान्नानापुष्पफलद्रुमान्। नानौषधिसमायुक्तानृषिसिद्धानुसेवितान्। ८९९५
विद्याधरान् किम्पुरुषानृक्षवानरराक्षसान्। सिंहान् व्याघ्रान् वराहांश्च महिषान्शरभान्सृमरान्।
चमरांश्चमराढ्यद्रुमानङ्कान् यक्षराक्षसान्। एवं बहुविधान् पश्यंश्चरमाणो नगोत्तमं।
दूराद्ददर्श नृपतिर्द्देवीं सुरसुतोपमां। क्रीडमानां सखीभिश्च पुष्पैश्चैव प्रचिन्वतीं।
ततश्चरन्तीं सुश्रोणीं सखीभि. सह संवृतां। दृष्ट्वा सौभपतिर्दूराद्विस्मयन् सूतमब्रवीत्।
कस्येयं मृगशावाक्षी वनान्तरविचारिणी। रूपौदार्य्यगुणोपेता मन्मथस्य रतिर्यथा। ९०००
शचीव पुरुहूतस्य उताहो वा तिलोत्तमा। नारायणोरुं निर्भिद्य सम्भूता वरवर्णिनी।
ऐलस्य दयिता देवी यो षिद्रत्नं किमुर्व्वशी। क्षीरार्णवे मथ्यमाने सुरासुरगणै. सह।
मन्थानं मन्दरं कृत्वा अमृतार्थेति न श्रुतं। ततोऽमृतात् समुत्तस्थौ देवी श्रीर्लोकभाविनी।
नारायणाङ्कललिता किं श्रीरेषा वरानना। नीलमेघान्तरगता द्योतन्तीवाचिरप्रभा।
तथा योषिद्गणान्मध्ये रूपं प्रद्योतयद्वनं। अतीव सुकुमाराङ्गी सुप्रभेन्दुनिभानना। ९००५
दृष्ट्वा रूपमनिन्द्याङ्ग्या विभ्रान्तो व्याकुलेन्द्रिय.। कामस्य वशमापन्नो मनो विह्वलतीव मे।
भृशं दहन्ति मेऽङ्गानि कुसुमायुधसायकाः। भित्त्वा हृदि शराः पञ्च निर्द्दहन्तीव मे तनुं।
इच्छयाग्निर्व्वर्द्धयति आज्यसिक्त इवानल। कथमस्य भवेत् कार्य्यं प्रमाथं मन्मथाग्निना।
केनोपायेन किं कुर्म्मं भजेन्मां मत्तकामिनी। एवं बहुंश्चिन्तयानो नोपलभ्य च दानव।
सूतमाह मुहूर्त्तं त्वं तिष्ठ स्वैरमिहानघ। अहं यास्यामि तां द्रष्टुं कस्येयमिति सुन्दरी। ९०१०
प्रतीक्षमाणस्तिष्ठस्व यावदागमनं मम। श्रुत्वा तु वचनं सूतस्तथाऽस्त्विति च सोऽब्रवीत्।
एवमुक्त्वा दानवेन्द्रो गमनाय मनो दधे। इच्छयाविष्टहृदयो दृष्ट्वा तामसितेक्षणां।

वाय्युपस्पृश्य बलवान् ध्यानमेवान्वचिन्तयत् । मुहूर्त्तं ध्यातमात्रे तु दृष्टं ज्ञानबलोत्तमः ।
उग्रसेनस्य पत्नीति ज्ञात्वा हर्षमवाप सः । उग्रसेनस्य वै रूपं कृत्वा स्वं परिवर्त्य च ।
उपासर्पन्महाबाहुः प्रसभं दानवेश्वरः । स्मयमानस्तु शनकैर्भाषामितवीर्य्यवान् । ४८१५
उग्रसेनस्य रूपेण मातरं ते प्रधर्षयत् । सा पतिस्निग्धहृदया भावेनोपससर्प तं ।
शङ्किता चाभवत् पश्चात्तस्य गौरवदर्शनात् । सा तमाहोत्थिता भीता न त्वं मम पतिर्ध्रुवं ।
कस्य त्वं विकृताचारो येनास्मि मलिनीकृता । एकपत्नीव्रतमिदं मम संदूषितं त्वया ।
पत्युर्मे रूपमास्थाय नीच नीचेन कर्मणा । किं मां वक्ष्यन्ति रुषिता बान्धवाः कुलपांसिनीं ।
जुगुप्सिता च वत्स्यामि पतिपर्वैर्निराकृता । धिक् त्वामीदृशमत्यन्तं दुष्कुलं व्युत्थितेन्द्रियं । ४८२०
अविश्वास्यमनार्य्यञ्च परदाराभिमर्षणं । स तामाह प्रसज्जन्तीं क्षिप्तः क्रोधेन दानवः ।
अहं वै द्रुमिलो नाम सौभस्य पतिरूर्ज्जितः । किं मां क्षिपसि रोषेण मूढे पण्डितमानिनि ।
मानुषं पतिमाश्रित्य नीचं मृत्युवशे स्थितं । व्यभिचारान्न दुष्यन्ति स्त्रियः सौभाग्यगर्व्विते ।
न ह्यासां नियता बुद्धिर्मानुषीणां विशेषतः । श्रूयन्ते हि स्त्रियो बह्व्यो व्यभिचारव्यतिक्रमैः ।
प्रसूता देवसदृशान् पुत्रानमितविक्रमान् । अतीव हि त्वं स्त्रीलोके पतिधर्म्मव्रती सती । ४८२५
प्रउद्धा केशान् विधुन्वन्ती भाषसे यद्यदिच्छसि । कस्य त्वमिति यच्चाहं त्वयोक्तो मत्तकाशिनि ।
कंसस्तस्माद्रिपुध्वंसी तव पुत्रो भविष्यति । सा सरोषा पुनर्भूत्वा निन्दन्ती तस्य तं वरं ।
उवाच व्यथिता देवी दानवं दुष्टवादिनं । धिक् ते वृत्तं सुदुर्वृत्त यः सर्व्वा निन्दसि स्त्रियः ।
सन्ति स्त्रियो नीचवृत्ताः सन्ति चैव पतिव्रताः । यास्त्वेकपत्न्यः श्रूयन्ते अरुन्धतीप्रमुखाः स्त्रियः ।
याभिर्धृताः प्रजाः सर्व्वा लोकाश्चैव कुलाधम । यस्त्वया मम पुत्रो वै दत्तो वृत्तविनाशनः । ४८३०
न मे बहुमतस्त्वेष शृणु चापि यदुच्यते । उत्पत्स्यति पुमान्नीच पतिवंशे ममान्वयः ।
भविष्यति स ते मृत्युर्यस्ते दत्तस्त्वया सुतः । द्रुमिलस्त्वेवमुक्तस्तु जगामाकाशमेव तु ।
तेनैव रथमुख्येन दिव्येनाकाशगामिना । जगाम च पुरीं दीना माता तदहरेव ते ।
स एवमुक्त्वा भगवान्नारदो मुनिसत्तमः । दीप्यमानस्तपोवीर्य्यात् साक्षादग्निरिव ज्वलन् ।
वल्लकीवाद्यमातन्वन् सप्तस्वरविमूर्च्छनात् । गायनो लक्ष्मीयोगेन जगाम ब्रह्मणोऽन्तिकं । ४८३५
शृण्विदं महामात्र निबोध वचनं मम । तथ्यञ्चोक्तं नारदेन त्रैकालज्ञेन धीमता ।
अहं बलेन वीर्य्येण मदेन च नयेन च । प्रभावेणैव शौर्य्येण तेजसा विक्रमेण च ।
सत्येन चैव दानेन नान्योऽस्ति सदृशः पुमान् । विदित्वा सर्व्वमात्मानं वचनं श्रद्दधाम्यहं ।
क्षेत्रजोऽहं सुतस्त्वेवमुग्रसेनस्य हस्तिप । मातापितृभ्यां सन्त्यक्तः स्थितोऽहं स्वेन तेजसा ।
उभाभ्याञ्चैव विद्विष्टो बान्धवैश्च विशेषतः । एतानपि हनिष्यामि हत्वा वनचरावुभौ । ४८४०
तद्गच्छ गजमारुह्य साङ्कुशप्रासतोमरः । स्थिरो भव महामात्र समाजद्वारि माचिरं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कंसवाक्ये पञ्चाशीतोऽध्यायः ॥ ८५ ॥

॥ वैशम्पायन उवाच ॥ तस्मिन्नहनि निर्वृत्ते द्वितीये समुपस्थिते । आपूर्य्यत महारङ्गः पौरैर्युद्धदिदृक्षुभिः ।
स चित्राष्टास्रिचरणः सार्गलद्वारवेदिकः । सगवाक्षार्द्धचन्द्रश्च स तलोत्तमभूषितः ।
प्राङ्मुखैश्चारुनिर्मुक्तैर्माल्यदामावतंसितैः । अलङ्कृतैर्विराजद्भिः शारदैरिव तोयदैः ।
मञ्चागारैः सुनिर्युक्तैर्युद्धाय सुविभूषितैः । समाजवाटः शुशुभे समेघाघ इवार्णवः । ४९७५
स्वकर्मद्रव्ययुक्ताभिः पताकाभिर्निरन्तरं । श्रेणीनाञ्च गणानाञ्च मञ्चा भान्त्यचलोपमाः ।
अन्तःपुरगतानाञ्च प्रेक्षागाराण्यनेकशः । रेजुः काञ्चनचित्राणि रत्नज्वालाकुलानि च ।
तानि रत्नौघकूटानि सताडुपप्रहाणि च । रेजुर्व्यवनिकाक्षेपैः सपक्षा इव खे नगाः ।
तत्र चामरहासैश्च भूषणानाञ्च शिञ्जितैः । मणीनाञ्च वराङ्गानां विचित्रैश्चेतरर्चिषः ।
गणिकानां पृथङ्मञ्चाः शुभैरास्तरणाम्बरैः । शोभिता वारमुख्याभिर्विमानप्रतिमौजसः । ४९८०
तत्रासनानि मुख्यानि पर्य्यङ्कास्य हिरण्मयाः । प्रकीर्णाश्च कुथाश्चित्राः सपुष्पस्तवकैर्वृताः ।
सौवर्णाः पानकुम्भाश्च पानभूम्यश्च शोभिताः । फलावदंशपूर्णाश्च चाङ्गेय्यः पानयोजिताः ।
अन्ये च मञ्चा बहवः काष्ठसञ्चयबन्धनाः । रेजुः प्रस्तरणास्तत्र शतशोऽथ सहस्रशः ।
उत्तरागारिकाश्चान्ये सूक्ष्मजालावलोकिनः । स्त्रीणां प्रेक्षागृहा भान्ति राजहंसा इवाम्बरे ।
प्राङ्मुखश्चारुनिर्युक्तो मेरुशृङ्गसमप्रभः । रुक्मपत्रनिभस्तम्भश्चारुनिर्य्यूहशोभितः । ४९८५
प्रेक्षागारः स कंसस्य प्रेक्षकाणोऽधिकं श्रिया । शोभितो माल्यदामौघैर्निर्वासितसलक्षणः ।
तस्मिन्नाजाजनाकीर्णे जनौघप्रतिनादिते । समाजवाटे संक्षुब्धे कम्पमानार्णवप्रभे ।
राज्ञा कुवलयापीडः समाजद्वारि कुञ्जरः । तिष्ठत्विति समाज्ञाप्य प्रेक्षागारमुपाययौ ।
स शुक्ले वाससी बिभ्रच्छ्वेतव्यजनचामरः । शुशुभे श्वेतमुकुटः श्वेताभ्र इव चन्द्रमाः ।
तस्य सिंहासनस्थस्य सुखासीनस्य धीमतः । रूपमप्रतिमं दृष्ट्वा पौराः शोचुर्ज्जयाशिषः । ४९९०
ततः प्रविविशुर्मल्ला रङ्गमावल्गिताम्बराः । तिस्रश्च भागशः कक्षाः प्रविश्य बलशालिनः ।
ततस्तूर्य्यनिनादेन क्ष्वेडितास्फोटितेन च । वसुदेवसुतौ हृष्टौ रङ्गद्वारमुपस्थितौ ।
तावापतन्तौ त्वरितौ प्रतिषिद्धौ बरासनौ । तेन मत्तेन नागेन चोद्यमानेन वै भृशं ।
स मत्तहस्ती दुष्टात्मा कृत्वा कुण्डलिनं करं । चकार चोदितो यत्नं हिंसितुं यदुनन्दनौ ।
ततः प्रहसितः कृष्णस्त्वाक्ष्यमाणो गजेन वै । कंसस्य तन्मतञ्चैव गर्हन् सुदुरात्मनः । ४९९५
त्वरते खलु कंसोऽयं गन्तुं वैवस्वतक्षयं । यो मामनेन नागेन प्रधर्षयितुमिच्छति ।
सन्निकृष्टे ततो नागे गर्ज्जमाने यथा घने । सहसोत्पत्य गोविन्दश्चक्रे तालस्वनं प्रभुः ।
क्ष्वेडितास्फोटितरवं कृत्वा नागस्य सोऽग्रतः । करं सशीकरं तस्य प्रतिजग्राह वक्षसा ।
विषाणान्तरगो भूत्वा पुनश्चरणमध्यगः । बबाधे तं गजं कृष्णः पवनस्तोयदं यथा ।
स हस्ताग्रादिनिष्क्रान्तो विषाणाग्राच्च हस्तिनः । विमुक्तः पादमध्याच्च कृष्णो द्विपमबाधयत् । ५०००
षोडशिकाब्दस्तु संमूढो हन्तुं कृष्णमशक्नुवन् । गजः स्वेष्वेव गात्रेषु मथ्यमानो ररास ह ।

पपात भूमौ जानुभ्यां दशनाभ्यां तुतोद च । मदं सुस्राव रोषाच्च घर्मापाये यथा घन. ।
कृष्णस्तु तेन नागेन क्रीडित्वा शिशुलीलया । निधनाय मतिञ्चक्रे कंसद्दिष्टेन चेतसा ।
स तस्य प्रमुखे पादं कृत्वा कुम्भादनन्तरं । दोर्भ्यां विषाणमुत्पाट्य तेनैव प्राहरत्तदा ।
स तेन वज्रकल्पेन स्वेन दन्तेन कुञ्जर । हन्यमान शकृन्मूत्रं मुमोचार्त्तो ररास ह । ४८९५
कृष्णशर्म्मरिताङ्गस्य कुञ्जरस्यार्त्तचेतस । कटाभ्यामति सुस्राव वेगवद्भूरि शोणितं ।
लाङ्गूलञ्चास्य वेगेन निश्चकर्ष हलायुध. । शैलप्रष्ठार्द्धसंलीनं वैनतेय इवोरगं ।
तेनैव गजदन्तेन कृष्णो हत्वा तु कुञ्जरं । जघानैकप्रहारेण गजारोहणमुल्वणं ।
सोर्त्तनादं महत् कृत्वा विदन्तो दन्तिनाम्वर । पपात समहामात्रो वज्रभिन्न इवाचल ।
ततस्तौ तु गजाङ्गानि प्रगृह्य रणकर्क्कशौ । गजस्य पादरक्षांश्च जघ्नतु पुरुषर्षभौ । ४९००
तांश्च हत्वा विविशतुर्मध्यं रङ्गस्य तावुभौ । नासत्याविवाश्विनौ स्वर्गादवतीर्णौ विवेक्षया ।
वृष्ण्यन्धकाश्च भोजाश्च ददृशुर्व्वनमालिनौ । क्ष्वेडितोत्कृष्टनादेन वाहोरास्फोटितेन च ।
सिंहनादैश्च तालैश्च हर्षयामासतुर्जनं । तौ दृष्ट्वा भोजराजस्तु विषमाद् व्रयामति ।
पौराणामनुरागश्च हर्षश्चासीच्च भारत । तं हत्वा पुण्डरीकाक्षो मदन्तं दन्तिनाम्वरं ।
अवतीर्णोऽर्णवाकारं समाजं सह पूर्व्वज । ४९०५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कुवलयापीडवधे षडशीतितमोऽध्याय ॥ ८६ ॥
॥ वैशम्पायन उवाच ॥ प्रविशन्तन्तु वेगेन मारुतावलिताम्बरं । पूर्व्वजं पुरत. कृत्वा कृष्णं कमललोचनं ।
गजदन्तक्षतोरस्कं सुभुजं देवकीसुतं । लीलाक्षताङ्गदं वीरं मदेन रुधिरेण च ।
वल्गमानं यथा सिंहं व्यूहमानं यथा घन । वाहुशब्दप्रहारेण चालयन्तं वसुन्धरां ।
श्रोणमेति समालोक्य दन्तिदन्तोद्यतायुधं । कृष्णं भृशायसमुख सरोषं समुदैक्षत ।
भुजायतेन शुशुभे गजदन्तेन केशव । चन्द्रार्द्धविम्बसंसक्तो यथैकशिखरो गिरि । ४९१०
वल्गमाने तु गोविन्दे स कृत्स्नो रङ्गसागर । जनौघप्रतिनादेन पूर्य्यमाण इवावभौ ।
तत क्रोधाभिताम्राक्ष कंस परमकोपन । चाणूरमादिशद्युद्धे कृष्णस्य सुमहावलं ।
अन्ध्रमल्लञ्च निर्द्दिशत् मुष्टिकञ्च महावलं । वलदेवाय सक्रोधो दिदेशाद्रिचयोपमं ।
कंसेनापि समाज्ञप्तश्चाणूर पूर्व्वमेव तु । योद्धव्यं सह कृष्णेन त्वया यत्नवतेति वै ।
स रोषेण तु चाणूरः कषायीकृतलोचन । अभ्यवर्त्तत युद्धार्थमपां पूर्णो यथा घन. । ४९१५
अवघुष्टे समाजे तु निःशब्दस्तिमिते जने । यादवास्तत्र सहिता इदं वचनमब्रुवन् ।
वाहुयुद्धमिदं रङ्गे सप्राश्निकमकातरं । क्रियावलसमाज्ञातमशस्त्रं निर्म्मितं पुरा ।
अङ्गिरापि श्रमो नित्यं विनेय कालदर्शिभि । करीषेण च मल्लस्य सततं सत्क्रिया स्मृता ।
स्थितो भूमिगतश्चैव यो यथामार्गत स्थित । नियुध्यतश्च पर्य्याय प्राश्निकै समुदाहृत ।
बालो वा यदि वा मध्य. कृशो वा स्थविरोऽपि वा । वलस्थो वा स्थितो रङ्गे ज्ञेय कचान्तरेण वै । ४९२०

चलतश्च क्रियातश्च बाहुयुद्धविधिर्युधि । निपातानन्तरं किञ्चिन्न कर्त्तव्यं कदाचन ।
तदिदं प्रस्तुतं रङ्गे युद्धं कृष्णान्ध्रमल्लयोः । बालः कृष्णो महानन्ध्रः कथं न स्याद्विचारणा ।
ततः किलकिलाशब्दः समाजे समवर्त्तत । प्रावल्गत च गोविन्दो वाक्यञ्चेदमुवाच ह ।
अहं बालो महानन्ध्रो वपुषा पर्व्वतोपमः । युद्धं ममानेन सह रोचते बाहुशालिना ।
युद्धव्यतिक्रमः कश्चिन्न भविष्यति मत्कृतः । न ह्यहं बाहुयोधानां दूषयिष्यामि यन्मतं । ४७०५
योऽयं करीषधर्म्मश्च तोयधर्म्मश्च रङ्गजः । कषायस्य च संसर्गः समयो ह्येष कल्पितः ।
संयमः स्थिरता शौर्य्यं व्यायामः सत्क्रिया बलं । रङ्गे च नियता सिद्धिरेतद्युद्धविदां मतं ।
यदयं बाहुयुद्धं वै सवैरं कर्त्तुमुद्यतः । अत्र वै निग्रहः कार्य्यस्तोषयिष्याम्यहं जगत् ।
करूषेषु प्रसूतोऽयं चाणूरो नाम नामतः । बाहुयोधी शरीरेण कर्म्मभिश्चात्र चिन्त्यतां ।
एतेन बहवो मल्ला निपातानन्तरं हताः । रङ्गप्रतापकामेन मल्लमार्गश्च दूषितः । ४७१०
शस्त्रसिद्धिश्च योधानां संग्रामे शस्त्रयोधिनां । रङ्गे सिद्धिस्तु मल्लानां प्रतिमल्लनिपातजा ।
रणे विजयमानस्य कीर्त्तिर्भवति शाश्वती । हतस्यापि रणे शस्त्रैर्नाकपृष्ठं विधीयते ।
रणे ह्युभयतः सिद्धिर्हतस्येह मृतोऽपि वा । सा हि प्रात्यन्तिकी यात्रा महद्भिः साधुपूजिता ।
अयन्तु मार्गो मल्लानां क्रियातश्च विनिःसृतः । मृतस्य रङ्गे कः स्वर्गो जयतो वा कुतो रतिः ।
ये तु केचित् स्वदोषेण राज्ञः पण्डितमानिनः । मतापार्थे हता मल्ला मल्लहन्तुर्बधो हि सः । ४७१५
एवं सञ्जल्पतस्तस्य ताभ्यां युद्धं सुदारुणं । उभाभ्यामभवद्घोरं वारणाभ्यां यथा वने ।
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सकङ्कटैः । सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा ।
तावुभावपि संश्लिष्टौ यथा शैलमयौ तथा । क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिःस्वनैः ।
कीलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च । शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ।
जानुभिश्चाश्मनिर्घोषैः शिरोभ्याञ्चावघट्टितैः । तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा । ४७२०
बाहुप्राणेन शूराणां समाजोत्सवसन्निधौ । अरज्यत जनः सर्व्वः सोत्कुष्टनिनदोत्थितः ।
साधुवादांश्च मञ्चेषु घोषयन्त्यपरे जनाः । ततः प्रस्विन्नवदनः कृष्णार्पितदृशस्तथा ।
न्यवारयत तूर्य्याणि कंसः सव्येन पाणिना । प्रतिषिद्धेषु तूर्य्येषु मृदङ्गादिषु तेषु वै ।
खे सङ्गतान्यवाद्यन्त देवतूर्य्याण्यनेकशः । युध्यमाने हृषीकेशे पुण्डरीकनिभेक्षणे ।
स्वयमेव प्रवाद्यन्त तूर्य्यघोषास्तु सर्व्वशः । अन्तर्हितमगता देवा विमानैः कामरूपिणः । ४७२५
चेरुर्विद्याधरैः सार्द्धं कृष्णस्य जयकाङ्क्षिणः । जयस्व कृष्ण चाणूरं दानवं मल्लरूपिणं ।
इति सर्व्वेषु सर्व्वे ऊचुरेव नभोगताः । चाणूरेण चिरं कालं क्रीडित्वा देवकीसुतः ।
बलमाहारयामास कंसस्याभावदर्शिनात् । ततश्चचाल वसुधा मह्यादिव शुघूर्णिरे ।
मुकुटाच्चापि कंसस्य पपात मणिरुत्तम । दोर्भ्यामानम्य कृष्णस्तु चाणूरं पूर्णगोविन्दं ।
प्राहरन्मुष्टिना मूर्द्ध्नि वक्षस्याहत्य जानुना । निःसृते सरुधिरे तस्य नेत्रे सबन्धने । ४७३०

तापनीये यथा घण्टे कक्षोपरि विलम्बिते । पपात स तुरङ्गस्य मध्ये निःसृतलोचनः ।
चाणूरो विगतप्राणो जीवितान्ते महीतले । देहेन तस्य मल्लस्य चाणूरस्य गतासुषः ।
सन्निरुद्धो महारङ्गः स शैलेनेव सद्मते । रौहिणेये हते तस्मिंश्चाणूरे मल्लदर्पिते ।
जग्राह मुष्टिकं रङ्गे कृष्णस्तोषलकं पुनः । सन्निपाते तु तौ मल्लौ प्रथमे क्रोधमूर्च्छितौ ।
समेयातां रामकृष्णौ कालस्य वशवर्त्तिनौ । मिथोऽथानतौ भूत्वा रङ्गमध्ये ववल्गतुः । ४०३५
कृष्णस्तोषलमुद्यम्य गिरिकूटोपमं बली । भ्रामयित्वा शतगुणं निष्पिपेष महीतले ।
तस्य कृष्णाभिपन्नस्य पीडितस्य बलीयसः । मुखाद्रुधिरमत्यर्थमुज्जगाम मुमूर्षतः ।
सङ्कर्षणस्तु सुचिरं योधयित्वा महाबलः । अर्भमल्लं महामल्लो मण्डलानि व्यदर्शयत् ।
मुष्टिनैकेन तेजस्वी माननिःसमयिष्णुना । शिरस्यभ्यहनद्वीरो वज्रेणेव महागिरिं ।
स निष्पतितमस्तिष्को विस्तारितनयनाननः । पपात निहतस्तेन ततो नादो महानभूत् । ४०४०
अन्ततोयलकौ हत्वा कृष्णसङ्कर्षणावुभौ । क्रोधसंरक्तनयनौ रङ्गमध्ये ववल्गतुः ।
समाजवाटो निर्मल्लः सोऽभवद्भीमदर्शनः । अन्ध्रे तदा महामल्ले मुष्टिके च निपातिते ।
ये च सम्प्रेक्षका गोपा नन्दगोपपुरोगमाः । भयशोभितसर्वाङ्गाः सर्वे तत्रावतस्थिरे ।
हर्षजं वारि नेत्राभ्यां वर्षमाणा प्रवेपती । प्रस्नवोत्पीडिता कृष्णं देवकी समुदैक्षत ।
कृष्णदर्शनमुक्तेन बाष्पेणाकुलितेक्षणः । वसुदेवो जरां त्यक्त्वा स्नेहेन तरुणायते । ४०४५
वारमुख्याश्च ताः सर्वाः कृष्णस्य मुखपङ्कजं । पपुर्हि नेत्रभ्रमरैर्निमेषान्तरगामिभिः ।
कंसस्याथ मुखस्वेदो भ्रूभेदान्तरगोचरः । श्वभद्रोपनिश्वासः कृष्णसन्दर्शनेरितः ।
केशवायासधूमेन रोषनिश्वासवाहिना । दीप्तमन्तर्गतं तस्य हृदयं मानवाग्निना ।
तस्य प्रस्फुरितौष्ठस्य स्निग्धालिकतलस्य वै । कंसवक्त्रस्य रोषेण रक्तसूर्य्यायते वपुः ।
क्रोधरक्तान्मुखात्तस्य प्रसृताः स्वेदबिन्दवः । यथा रविकरस्पृष्टा हिमावश्यायबिन्दवः । ४०५०
सोऽज्ञापयत संक्रुद्धः पुरुषान् व्यायतान् बहून् । गोपावेतौ समाजौघान्निष्क्राम्येतां वनेचरौ ।
नैवैतौ द्रष्टुमिच्छामि विक्रतौ पापदर्शनौ । गोपानामपि मे राज्ये न कश्चित् स्थातुमर्हति ।
नन्दगोपश्च दुर्मेधाः पापेष्वभिरतो मम । आयसैर्निगडाकारैर्लोहपाशैर्निबध्यतां ।
वसुदेवश्च दुर्वृत्तो नित्यमङ्गचरो मम । अदृष्टार्हेण दण्डेन क्षिप्रमद्यैव शास्यतां ।
ये चेमे प्राकृता गोपा दामोदरपरायणाः । ह्रियन्तां गाव एतेषां यच्चास्ति वसु किञ्चन । ४०५५
एवमाज्ञापयानं तं कंसं परुषभाषिणं । ददर्शायस्तनयनः कृष्णः सत्यपराक्रमः ।
क्षिप्ते पितरि चुक्रोध नन्दगोपे च केशवः । ज्ञातीनाञ्च व्यथां दृष्ट्वा विसंज्ञाञ्चैव देवकीं ।
स सिंह इव वेगेन केशवो जातविक्रमः । आरुरुक्षुर्महाबाहुः कंसनाशार्थमच्युतः ।
रङ्गमध्यादुत्पपात कृष्णः कंसासनान्तिके । अवस्कन्दायुनाक्षिप्तो यथा खस्थो घनाघनः ।
ददृशुर्न हि तं सर्वे रङ्गमध्यादवप्लुतं । केवलं कंसपार्श्वस्थं ददृशुः पुरवासिनः । ४०६०

तापनीये यथा घण्टे कक्षोपरि विलम्बिते । पपात स तुरङ्गस्य मध्ये निःसृतलोचनः ।
चाणूरो विगतप्राणो जीवितान्ते महीतले । देहेन तस्य मल्लस्य चाणूरस्य गतायुषः ।
सन्निरुद्धो महारङ्गः स शैलेनेव लङ्घितं । रौहिणेयो हते तस्मिंश्चाणूरे बलदर्पिते ।
जग्राह मुष्टिकं रङ्गे कृष्णस्तोषलकं पुनः । सन्निपाते तु तौ मल्लौ प्रथमे क्रोधमूर्च्छितौ ।
समेयातां रामकृष्णौ कालस्य वशवर्त्तिनौ । निर्घातावनतो भूत्वा रङ्गमध्ये ववल्गतुः । ४८३५
कृष्णस्तोषलमुद्यम्य गिरिकूटोपमं बली । भ्रामयित्वा शतगुणं निष्पिपेष महीतले ।
तस्य कृष्णाभिपन्नस्य पीडितस्य बलीयसः । मुखाद्रुधिरमत्यर्थमुज्जगाम मुमूर्षतः ।
सङ्कर्षणस्तु सुचिरं योधयित्वा महाबलः । अन्ध्रमल्लं महामल्लो मण्डलानि व्यदर्शयत् ।
मुष्टिनैकेन तेजस्वी साशनिस्तनयित्नुना । शिरस्यभ्यहनद्वीरो वज्रेणेव महागिरिं ।
स निष्पतितमस्तिष्को निःसृतनयनाननः । पपात निहतस्तेन ततो नादो महानभूत् । ४८४०
अन्ध्रतोषलकौ हत्वा कृष्णसङ्कर्षणावुभौ । क्रोधसंरक्तनयनौ रङ्गमध्ये ववल्गतुः ।
समाजवाटो निर्मल्लः सोऽभवद्भीमदर्शनः । अन्ध्रे तदा महामल्ले मुष्टिके च निपातिते ।
ये च सम्प्रेक्षका गोपा नन्दगोपपुरोगमाः । भयक्षोभितसर्व्वाङ्गाः सर्व्वे तत्रावतस्थिरे ।
हर्षजं वारि नेत्राभ्यां वर्षमाणा प्रवेपती । प्रस्नवोत्पीडिता कृष्णं देवकी समुदैक्षत ।
कृष्णदर्शनमुक्तेन वाष्पेणाकुलितेक्षणः । वसुदेवो जरां त्यक्त्वा स्नेहेन तरुणायते । ४८४५
वारमुख्याश्च ताः सर्व्वाः कृष्णस्य मुखपङ्कजं । पपुर्हि नेत्रभ्रमरैर्निमेषान्तरगामिभिः ।
कंसस्याथ मुखस्वेदो भ्रूभेदान्तरगोचरः । अवभद्रोषनिर्य्यास कृष्णसन्दर्शनेरितः ।
केशवायासधूमेन रोषनिश्वासवाहिना । दीप्तमन्तर्गतं तस्य हृदयं मानसाग्निना ।
तस्य प्रस्फुरितौष्ठस्य स्विन्नालिकतलस्य वै । कंसवक्त्रस्य रोषेण रक्तसूर्य्यायते वपुः ।
क्रोधरक्तान्मुखात्तस्य प्रसृताः स्वेदविन्दवः । यथा रविकरस्पृष्टा द्रवावश्यायविन्दवः । ४८५०
सोऽज्ञापयत संक्रुद्धः पुरुषान् व्यायतान् बहून् । गोपावेतौ समाजौघान्निष्क्राम्येतां वनेचरौ ।
नैवैतौ द्रष्टुमिच्छामि विकृतौ पापदर्शनौ । गोपानामपि मे राज्ये न कश्चित् स्थातुमर्हति ।
नन्दगोपश्च दुर्म्मेधाः पापेष्वभिरतो मम । आयसैर्निगडाकारैर्लोहपाशैर्निबध्यतां ।
वसुदेवश्च दुर्वृत्तो नित्यमङ्गपरो मम । अवृद्धार्हेण दण्डेन क्षिप्रमद्यैव शास्यतां ।
ये चेमे प्राकृता गोपा दामोदरपरायणाः । ह्रियन्तां गाव एतेषां यच्चास्ति वसु किञ्चन । ४८५५
एवमाज्ञापयानं तं कंसं परुषभाषिणं । ददर्शायतनयनः कृष्णः सत्यपराक्रमः ।
क्षिप्ते पितरि चुक्रोध नन्दगोपे च केशवः । ज्ञातीनाञ्च व्यथां दृष्ट्वा विसंज्ञाञ्चैव देवकीं ।
स सिंह इव वेगेन केशवो शातविक्रमः । आरुरुक्षुर्महाबाहुः कंसनाशार्थमच्युतः ।
रङ्गमध्यादुत्पपात कृष्णः कंसासनान्तिके । अमध्यवायुनाक्षिप्तो यथा खस्थो घनाघनः ।
ददृशुर्न हि तं सर्व्वे रङ्गमध्यादवप्लुतं । केवलं कंसपार्श्वस्थं ददृशुः पुरवासिनः । ४८६०

ननु नाम स्त्रिय. साध्व्य प्रियभोगेष्ववस्थिताः। पतीनामपरित्याज्यास्त्वन्तु नस्त्यज्य गच्छसि। ४९८०
अहो कालो महावीर्यो येन पर्य्यायकर्म्मणा। कालतुल्य. सपत्नानां त्वं चिप्रमपनीयसे।
वयं दु:खेष्वनुचिताः सुखेष्वेव समेधिता। वत्स्याम विधवा नाथ कथं कार्पण्यमाश्रिताः।
स्त्रीणामचारित्रलुब्धानां पतिरेक परा गति। त्वं हि न सा गतिश्छिन्ना कृतान्तेन बलीयसा।
वैधव्येनाभिभूता. स्म शोकसन्तप्तमानसाः। अहो कृतान्तस्य वशं गन्तव्यं सर्व्वजन्तुभिः।
रोदितव्ये ध्रुवे मग्ना क्व गच्छामस्त्वया विना। सह त्वया गत कालस्त्वदङ्के क्रीडितं गतं। ४९८५
क्षणेनाद्य विहीना. स्म अनित्या हि नृणां गति। अहो वत विपन्ना. स्म विपन्ने त्वयि मानद।
एकदुष्कृतकारिण्य सर्व्वा वैधव्यलक्षणाः। त्वया स्वर्गप्रतिच्छन्दैर्लालिताः स्म रतिप्रिया.।
त्वयि कामवशा सर्व्वा. स नस्त्यज्य क्व गच्छसि। अस्माकं त्वमनाथानां नाथो ह्यसि सुरोपम।
आर्त्तं विलपमानानां कुररीणामिव प्रभो। प्रतिवाक्यं जगन्नाथ दातुमर्हसि मानद।
एवमार्त्तकलत्रस्य शाम्यमानेषु बन्धुषु। गमनं ते महाराज दारुणं प्रतिभाति न। ४९९०
नूनं कान्ततरा कान्त परलोके वरस्त्रिय। यतस्त्वं प्रस्थितो वीर विहायेमं गृहे जनं।
किन्न ते करुणा वीर भार्य्यास्वेतासु भूरिषु। आर्त्तनादं रुदन्तीषु यन्नेहाद्यावबुध्यसे।
अहो निष्करुणा याचा नराणामौर्द्धदेहिकी। यत् परित्यज्य दारान् स्वान्निरपेक्षा व्रजन्ति ह।
अप्रवृत्तिवं खलु श्रेयो न तु शूर. स्त्रिया, पति। स्वर्गस्त्रीणां प्रिया: शूरास्तेषामपि च ताः प्रिया।
अहो चिप्रमदृश्येन नयता त्वां रणप्रियं। प्रहृतं न कृतान्तेन सर्व्वासामन्तरात्मसु। ४९९५
हत्वा जरासन्धबलं जित्वा यवनं स्वयुगे। कथं मानुषमात्रेण हतस्त्वं जगतीपते।
इन्द्रेण सह गङ्गायां कृत्वा सायकविग्रहं। अमर्त्यैरजितो युद्धे मर्त्येनासि कथं हत.।
त्वया सागरमक्षोभ्यं विक्षोभ्य शरवृष्टिभि.। रत्नसर्व्वस्वहरणं जित्वा पाशधरं कृतं।
त्वया पौरजनस्यार्थे मन्दं वर्षति वासवे। सायकैर्जलदान् भित्त्वा बलाद्वर्षं प्रवर्त्तितं।
प्रतापावनता. सर्व्वे तव तिष्ठन्ति पार्थिवा। प्रेषयन्तो वरार्हाणि रत्नान्याच्छादनानि च। ५०००
तवैवं देवकल्पस्य दृष्टवीर्य्यस्य शत्रुभि। कथं प्राणान्तिकं घोरमीदृशं भयमागतं।
प्राप्ता. स्मो विधवाशब्दं त्वयि नाथे निपातिते। अप्रमत्ताः प्रमत्तेन कृतान्तेन निराकृता:।
यद्येवं नाथ गन्तव्यं यदि वा विस्मृता वयं। वाङ्मात्रेणापि याम्नोति वक्तव्ये कः परिश्रम।
प्रसीद नाथ भीत. स्म पादौ ते याम मूर्द्धभिः। अलं दूरप्रवासेन निवर्त्त मथुराधिप।
अहो वीर कथ शेषे निषन्नस्तृणपांशुषु। शयानस्य हि ते भूमौ कस्मान्नोद्विजते वपु.। ५००५
केन सुप्तप्रहारोऽयं दत्तोऽस्माकमतर्कित। प्रहृतं केन सर्व्वासु नारीष्वेवं सुदारुणं।
रुदितानुशयो भार्य्या जीवन्त्याः परिदेवनं। किं वयं सति गन्तव्ये सह भर्त्रा रुदामहे।
एतस्मिन्नन्तरे दीना कंसमाता प्रवेपती। क्व मे वत्स क्व मे पुत्त्र इति रोरुदती भृशं।
साऽपश्यन्निहतं पुत्रं निष्प्रभं शशिनं यथा। हृदयेनावदीर्णेन श्राम्यमाणा पुन पुन।

पुत्रं समभिवीचन्ती हा हताऽस्मीति वाशती । सुषाणामार्त्तनादेन विललाप रुरोद च । ४८१०
सा तस्य वदनं दीनमुत्सङ्गे पुत्रगृद्धिनी । कृत्वा पुत्रेति कारुण्यं विललापार्त्तया गिरा ।
पुत्र शूरव्रते युक्त ज्ञातीनां नन्दिवर्द्धन । किमिदं त्वरितं वत्स प्रस्थानं कृतवानसि ।
प्रसुप्तश्चासि विवृतो किं पुत्र नियमं विना । वत्स नैवंविधा भूमौ शेरते कृतलक्षणाः ।
रावणेन पुरा गीतः श्लोकोऽयं साधुसम्मतः । बलज्येष्ठेन लोकस्य राक्षसानां समागमे ।
एवमूर्ज्जितवीर्य्यस्य ममामरविघातिनः । बान्धवेभ्यो भयं घोरं दुर्निवार्य्यं भविष्यति । ४८१५
तथैव ज्ञातिलुब्धस्य मम पुत्रस्य धीमतः । ज्ञातिभ्यो भयमुत्पन्नं शरीरान्तकरं महत् ।
सा पतिं नृपतिं वृद्धमुग्रसेनं विचेतसं । उवाच रुदती वाक्यं वित्रस्ता हरिणी यथा ।
एह्येहि राजन् शुद्धात्मन् पश्य पुत्रं जनेश्वरं । शयानं वीरशयने वज्राहतमिवाचलं ।
अस्य कुर्म्मो महाराज निर्याणसदृशीं क्रियां । प्रेतत्वमुपपन्नस्य गतस्य यमसादनं ।
वीरभोज्यानि राज्यानि वयञ्चापि पराजिताः । गच्छ विज्ञापयितुं कृष्णः कंससत्कारकारणात् । ४८२०
मरणान्तानि वैराणि शान्ते शान्तिर्भविष्यति । प्रेतकार्य्याणि कार्य्याणि मृतः किमपराध्यति ।
एवमुक्त्वा पतिं भोजं केशानारुह्य दुःखिता । पुत्रस्य मुखमीक्षन्ती विललापैव सा भृशं ।
इमास्ते किं करिष्यन्ति भार्य्या राजन् सुखोषिताः । त्वां पतिं सुपतिं प्राप्य या विपन्नमनोरथाः ।
इमं ते पितरं वृद्धं कृष्णस्य वशवर्त्तिनं । कथं द्रक्ष्यसि शुष्यन्तं कासारसलिलं यथा ।
अहं ते जननी पुत्र किमर्थं नाभिभाषसे । प्रस्थितो दीर्घमध्वानं परित्यज्य प्रियं जनं । ४८२५
अहो वीराल्पभाग्यायाः कृतान्तेनानिवर्त्तिना । आच्छिद्य मम मन्दायां नीयसे नयकोविदः ।
दानमानगृहीतानि ह्यमान्येतानि ते गुणैः । रुदन्ति तव भृत्यानां कुलानि कुलयूथप ।
उत्तिष्ठ नृपशार्दूल दीर्घबाहो महाबल । त्राहि दीनं जनं सर्व्वं पुरमन्तःपुरं तथा ।
एवं विलपतीनान्तु कंसस्त्रीणां सुविस्तरं । जगामास्तं दिनकरः सन्ध्यारागेण रञ्जितः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कंसस्त्रीविलापे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

॥ वैशम्पायन उवाच ॥ उग्रसेनस्तु कृष्णस्य समीपं दुःखितो ययौ । पुत्रशोकाभिसन्तप्तो विषपीत इव स्खलन् । ४८३०
स ददर्श गृहे कृष्णं यादवैः परिवारितं । पश्चानुतापाद्ध्यायन्तं कंसस्य निधनाविलं ।
कंसनारीप्रलापांश्च श्रुत्वा सकरुणान् बहून् । गर्हमाणं तथात्मानं तस्मिन् यादवसंसदि ।
अहो मयाऽतिबालेन नैवरोषानुवर्त्तिना । वैधव्यं स्त्रीसहस्राणां कंसस्यास्य हते कृतं ।
कारुण्यं खलु नारीषु प्राकृतस्यापि जायते । एवमार्त्तं रुदन्तीषु मया भर्त्तरि पातिते ।
परिदेवितमात्रेण शोकः खलु विधीयते । कृतान्तस्यानभिज्ञानां स्त्रीणां कारुण्यसम्भवः । ४८३५
कंसस्य निधनः श्रेयान् भार्गवाभिमतो मम । मतामुद्वेजनीयस्य पापेष्वभिरतस्य च ।
लोके पतितवृत्तस्य परुषस्याप्यमेधसः । श्रक्लिष्टं मरणं श्रेयो न विद्विष्टस्य जीवितं ।
कंसः पापरुचिश्चैव साधूनामप्यसम्मतः । धिक् शब्दपतितस्येव जीविते तस्य का दया ।

स्वर्गे तपोभृतां वासः फलं पुण्यस्य कर्म्मणः । इहापि यशसा युक्तास्तस्यैरेव धार्य्यते ।
यदि स्युर्निर्भ्रता लोकाः स्युः स्वकर्म्मपरायणाः । नरा धर्म्मप्रवृत्ताश्च न राज्ञामनयः स्पृशेत् । ४८५०
निग्रहे दुष्टवृत्तीनां कृतान्तः कुरुते वधं । दृष्टधर्म्मेषु लोकेषु कर्त्तव्यं पारलौकिकं ।
अतीव देवा रक्षन्ति नरं धर्म्मपरायणं । कर्त्तारः सुलभा लोके दुष्कृतस्य हि कर्म्मणः ।
हतः सोऽयं मया कंस साध्वितदवगम्यतां । मूलच्छेदः कृतस्तस्य विपरीतस्य कर्म्मणः ।
मदेश सान्त्वयतां सर्व्वः शोकार्त्तः प्रमदाजनः । पौराश्च पुर्य्यां श्रेण्यश्च सान्त्वयतां सर्व्व एव हि ।
एवं ब्रुवति गोविन्दे विवेशावनताननः । उग्रसेनो यदून् गृह्य पुत्रकिल्विषशङ्कितः । ४८५५
स कृष्णं पुण्डरीकाक्षमुवाच यदुसंसदि । वाष्पसन्दिग्धया वाचा दीनया सज्जमानया ।
पुत्रो नियातितः क्रोधो नीतो याम्यां दिशं रिपुः । स्वधर्म्माधिगता कीर्त्तिर्नाम विश्रावितं भुवि ।
स्थापितं सत्सु माहात्म्यं शङ्किता रिपवः कृताः । स्थापितो यादवो वंशो गर्व्विताः सुहृदः कृताः ।
सामन्तेषु नरेन्द्रेषु प्रतापस्ते प्रकाशितः । मित्राणि त्वां भजिष्यन्ति संश्रयिष्यन्ति पार्थिवाः ।
प्रकृतयोऽनुयास्यन्ति स्तोष्यन्ति च द्विजातयः । सन्धिविग्रहमुख्यास्त्वां प्रणमिष्यन्ति मन्त्रिणः । ४८६०
हस्त्यश्वरथसंपूर्णं पदातिगणसङ्कुलं । प्रतिगृह्णीष्व कृष्णेदं कंसस्य बलमव्ययं ।
धनं धान्यञ्च यत्किञ्चिद्रत्नान्याच्छादनानि च । मतोऽत्र नु नियुक्ता वै त्वदीयाः कृष्ण पूरुषाः ।
स्त्रियो हिरण्यं यानानि यच्चान्यदस्ति किञ्चन । एवं सुविहिते योगे पर्य्याप्ते कृष्ण विग्रहे ।
प्रतिष्ठितायां मेदिन्यां यदूनां मधुसूदन । त्वं गतिश्चागतिश्चैव यदूनां यदुनन्दन ।
शृणुष्व ब्रुवतां वीर कृपणानामिदं वचः । अस्य त्वत्कोपदग्धस्य कंसस्याशुभकर्म्मणः । ४८६५
तव प्रसादाद्गोविन्द प्रेतकार्य्यं क्रियेत ह । तस्य कृत्वा नरेन्द्रस्य विपन्नस्यौर्द्ध्वदेहिकं ।
सस्नुषोऽहं सभार्य्यश्च चरिष्यामि मृगैः सह । प्रेतसत्कारमात्रेण कृते बान्धवकर्म्मणि ।
आनृण्यं लौकिकं कृष्ण गताः किल भवन्ति ह । अस्याग्निं पश्चिमं कृत्वा चितिस्थाने विधानतः ।
तोयप्रदानमात्रेण कंसस्यानृण्यमाप्नुयां । एतन्मे कृष्ण विज्ञाप्य स्नेहोऽत्र मयि युज्यतां ।
प्राप्नोतु सुगतिं तत्र कृष्ण पश्चिमां क्रियां । एतच्छ्रुत्वा वचस्तस्य कृष्णः परमविस्मितः । ४८७०
प्रत्युवाचोग्रसेनं वै सान्त्वपूर्व्वमिदं वचः । कालयुक्तमिदं तात त्वयैतत् प्रतिभाषितं ।
सदृशं राजशार्दूल वृत्तस्य च कुलस्य च । यत्त्वमेवंविधं भूपे गतेऽर्थे दुरतिक्रमे ।
प्राप्स्यते नृपसत्कारं कंस प्रेतगतोऽपि सन् । कुले महति ते जन्म वेद्यं विदितवानसि ।
कथं न ज्ञायते तात नियतिर्दुरतिक्रमा । स्थावराणाञ्च भूतानां जङ्गमानाञ्च पार्थिव ।
पूर्व्वजन्मकृतं कर्म्म कालेन परिपच्यते । श्रुतवन्तोऽर्थवन्तश्च दातारः प्रियदर्शनाः । ४८७५
ब्रह्मण्या नयसम्पन्ना दीनानुग्रहकारिणः । लोकपालसमास्तात महेन्द्रसमविक्रमाः ।
क्षितिपालाः कृतान्तेन नीयन्ते नृपसत्तम । धार्म्मिकाः सर्व्वभावज्ञाः प्रजापालनतत्पराः ।
क्षत्रधर्म्मरता दान्ताः कालेन निधनं गताः । स्वयमेव कृतं कर्म्म शुभं वा यदि वाऽशुभं ।

प्राप्तकालस्य तत् सर्व्वं दृश्यते खलु देहिनः । एषा ह्यन्तर्हिता माया दुर्व्विज्ञेया सुरैरपि ।
ययाऽयं मुह्यते लोको यत्र कर्म्मैव कारणं । कालेनाभिहतः कंसः पूर्व्वकर्म्मप्रचोदितः । ४८८०
न ह्यहं कारणं तत्र कालः कर्म्म च कारणं । सर्व्वमेतन्मयं तात कृत्स्नं स्थावरजङ्गमं ।
कालेन निधनं गत्वा कालेनैव च जायते । कालस्तु सर्व्वभूतानां निग्रहप्रग्रहे रतः ।
तस्मात् सर्व्वाणि भूतानि कालस्य वशगानि वै । स्वदोषेणैव दग्धस्य सूनोस्तव नराधिप ।
नाहं वै कारणं तत्र कालस्तत्र तु कारणं । अथवाऽहं भविष्यामि कारणं नात्र संशयः ।
परायणपरः कालः किं करिष्यत्यकारणः । कालस्तु बलवान्राजन् दुर्व्विज्ञेया हि सा गतिः । ४८८५
परावरविशेषज्ञा यां यान्ति समदर्शिनः । गतिं कालस्य ये सिद्धा मोक्षतत्त्वस्य पारगाः ।
ब्रवीमि यदहं तात तदनुष्ठीयतां वचः । न हि राज्येन मे कार्य्यं नाप्यहं नृप काङ्क्षितः ।
न चापि राज्यलुब्धेन मया कंसो निपातितः । किन्तु लोकहितार्थाय कीर्त्त्यर्थञ्च सुतस्तव ।
व्यङ्गभूतः कुलस्यास्य सानुगो विनिपातितः । अहं स एव गोमध्ये गोपैः सह वनेचरः ।
प्रीतिमान् विचरिष्यामि कामचारी यथा गजः । एतावच्छतशोऽप्येवं सत्येनैतद्ब्रवीमि ते । ४८९०
न मे कार्य्यं नृपत्वेन विज्ञाप्यं क्रियतामिदं । भवानाज्ञाऽस्तु मान्यो मे यदूनामग्रणीः प्रभुः ।
विजयायाभिषिच्यस्व स्वराज्ये राजसत्तम । यदि ते मत्प्रियं कार्य्यं यदि वा नास्ति ते व्यथा ।
मया निसृष्टं राज्यं स्वं चिराय प्रतिगृह्यतां ।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु वचनं नोत्तरं प्रत्यभाषत । व्रीडिताधोमुखं तत्तु राजानं यदुसंसदि ।
अभिषेकेण गोविन्दो योजयामास धर्म्मवित् । स बद्धमुकुटः श्रीमानुग्रसेनो महीपतिः । ४८९५
चकार सह कृष्णेन कंसस्य निधनक्रियां । तं सर्व्वे यादवा मुख्या राजानं कृष्णशासनात् ।
अनुजग्मुः पुरीमार्गे देवा इव शतक्रतुं । रजन्यान्तु निवृत्तायां ततः सूर्य्ये विराजति ।
पश्चिमं कंससत्कारं चक्रुस्ते यदुपुङ्गवाः । शिबिकायामथारोप्य कंसदेहं यथाक्रमं ।
नैष्ठिकेन विधानेन चक्रुस्ते तस्य सत्क्रियां । स नीतो यमुनातीरमुत्तरं नृपतेः सुतः ।
सत्कृतस्य यथान्यायं नैधनेन चिताग्निना । तथैव भ्रातरञ्चास्य सुनामानं महाभुजं । ४९००
सत्कारं लम्भयामासुः सह कृष्णेन यादवाः । ताभ्यान्ते सलिलञ्चक्रुर्वृष्ण्यन्धकपुरोगमाः ।
अव्ययञ्चापि प्रेतेभ्यो भाषमाणाः पुनः पुनः । तयोस्ते सलिलं दत्त्वा यादवा दीनमानसाः ।
पुरस्कृत्योग्रसेनं वै विविशुर्म्मथुरां पुरीं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कंससत्कारे उग्रसेनाभिषेके ऊननवतो ऽध्यायः ॥ ८९ ॥
॥ वैशम्पायन उवाच ॥ स कृष्णस्तत्र बलवान्वृष्णिभिः सङ्गतः । मथुरां यादवाकीर्णां पुरीं तां सुखमावसत् ।
प्राप्तयौवनदेहस्तु युक्तो राजश्रिया ज्वलन् । चचार मथुरां वीरः रत्नाकरभूषणां । ४९०५
कस्यचित्त्वथ कालस्य सहितौ रामकेशवौ । गुरुं सान्दीपनिं काश्यमवन्तिपुरवासिनं ।
धनुर्व्वेदचिकीर्षार्थमुभौ तावभिजग्मतुः । निवेद्य गोत्रं स्वाध्यायमाचारेणाभ्यलङ्कृतौ ।

शुश्रूषू निरहङ्कारावुभौ रामजनार्द्दनौ । प्रतिजग्राह तौ काश्यो विद्याः प्रादाच्च केवलाः ।
तौ च श्रुतिधरौ वीरौ यथावत् प्रत्यपद्यतां । अहोरात्रैश्चतुःषष्ट्या साङ्गं वेदमधीयतां ।
चतुष्पादं धनुर्वेदं शस्त्रग्रामं ससंग्रहं । अचिरेणैव कालेन गुरुस्तावभ्यशिक्षयत् । ४९९०
अतीवामानुषीं मेधां चिन्तयित्वा तयोर्गुरुः । मेने तावागतौ वीरौ देवौ चन्द्रदिवाकरौ ।
ददर्श च महात्मानावुभौ तावपि पर्व्वसु । पूजयन्तौ महादेवं साक्षाद्विष्णुमवस्थितं ।
गुरुं सान्दीपनिं कृष्णः कृतकृत्यो ऽभ्यभाषत । गुर्व्वर्थं किं ददामीति रामेण सह भारत ।
तयोः प्रभावं स ज्ञात्वा गुरुः प्रोवाच हृष्टवत् । पुत्त्रमिच्छाम्यहं दत्तं योऽमृतो लवणाम्भसि ।
पुत्त्र एको हि मे जातः स चापि तिमिना हृतः । प्रभासे तीर्थयात्रायां तमेव पुनरानय । ४९९५
तथेत्येवाब्रवीत् कृष्णो रामस्यानुमते स्थितः । गत्वा समुद्रं तेजस्वी विवेशान्तर्जलं हरिः ।
समुद्रः प्राञ्जलिर्भूत्वा दर्शयामास तत्तदा । तमाह कृष्णः क्वासौ भो पुत्त्रः सान्दीपनेरिति ।
समुद्रः प्रत्युवाचेदं दैत्यः पञ्चजनो महान् । तिमिरूपेण तं बालं ग्रस्तवानिति भारत ।
स पञ्चजनमासाद्य जघान पुरुषोत्तमः । न चाससाद तं बालं गुरुपुत्त्रं तदाऽच्युतः ।
स तु पञ्चजनं हत्वा शङ्खं लेभे जनार्द्दनः । यः स देवमनुष्येषु पाञ्चजन्य इति श्रुतः । ५०००
ततो वैवस्वतं देवं गतः स पुरुषोत्तमः । ततो यमोऽप्युपागम्य ववन्दे च गदाधरं ।
किमागमनकृत्यन्ते किङ्करोमीति चाब्रवीत् । तमुवाचाथ गोविन्दो गुरुपुत्त्रः प्रदीयतां ।
श्रुत्वा स तद्वचो युद्धमकरोत् सुमहत्तदा । ततो वैवस्वतं देवं निर्ज्जित्य पुरुषोत्तमः ।
आससाद च तं बालं गुरुपुत्त्रं तदाऽच्युतः । आनिनाय गुरोः पुत्त्रं चिरनष्टं यमक्षयात् ।
ततः सान्दीपनेः पुत्त्रः प्रसादादमितौजसः । दीर्घकालगतः प्रेतः पुनरासीच्छरीरवान् । ५००५
तदशक्यमचिन्त्यञ्च दृष्ट्वा सुमहदद्भुतं । सर्व्वेषामेव भूतानां विस्मयः समजायत ।
स गुरोः पुत्त्रमादाय पाञ्चजन्यञ्च माधवः । रत्नानि च महार्हाणि पुनरायाज्जगत्प्रभुः ।
राज्ञस्तस्य रत्नानि महार्हाणि बहूनि च । आनाय्य वेदयामास गुरवे वासवानुजः ।
गदापरिघयुद्धेषु सर्व्वास्त्रेषु च तावुभौ । अचिराच्छ्रुतां प्राप्तौ सर्व्वलोके धनुष्मतां ।
ततः सान्दीपनेः पुत्त्रं तद्रूपवयसं तथा । प्रादात् कृष्णः प्रतीतात्मा सह रत्नैरुदारधीः । ५०१०
चिरनष्टेन पुत्त्रेण काश्यः सान्दीपनिस्तदा । समेत्य मुमुदे राजन् पूजयमानकेशवौ ।
कृतास्त्रौ तावथो वीरौ गुरुमामन्त्र्य सुव्रतौ । आयातौ मथुरां भूयो वसुदेवसुतावुभौ ।
ततः प्रत्युद्ययुः सर्व्वे यादवा यदुनन्दनौ । सबला हृष्टमनस उग्रसेनपुरोगमाः ।
ऋत्विजः प्रकृतयश्चैव मन्त्रिणः सपुरोहिताः । सबालवृद्धयुवतिः पुरी समभिवर्त्तत ।
नन्दितूर्य्यान्यवाद्यन्त तुष्टुवुश्च जनार्द्दनं । रथ्याः पताकामालिन्यो भ्राजन्ते स्म समन्ततः । ५०१५
प्रहृष्टमुदितं सर्व्वमभूत् पुरमशोभत । गोविन्दागमनेऽप्यर्थं यथेन्द्रमहे तथा ।
मुदिताश्चाप्यगायन्त राजमार्गेषु गायनाः । स्तावाभिर्णिता गाथा यादवानां प्रियङ्कराः ।

गोविन्दरामौ सम्प्राप्तौ भ्रातरौ लोकविश्रुतौ। स्वपुरे निर्भयाः सर्व्वे क्रीडध्वं सह बान्धवैः।
न तत्र कश्चिद्दीनो वा मलिनो वा विचेतनः। मथुरायामभूद्राजन् गोविन्दे समुपस्थिते।
वयांसि साधुवाक्यानि प्रहृष्टा गोहृदयिनः। नरनारीगणाः सर्व्वे भेजिरे मनसः सुखं। ४८८०
शिवाश्च वाताः प्रववुर्विरजस्का दिशो दश। दैवतानि च हृष्टानि सर्व्वेष्वायतनेषु च।
यानि लिङ्गानि लोकस्य बभुः कृतयुगे पुरा। तानि सर्व्वाण्यदृश्यन्त पुरीं प्राप्ते जनार्द्दने।
ततः काले शिवे पुण्ये स्कन्दनेनारिमर्द्दनः। हरियुक्तेन गोविन्दो विवेश मथुरां पुरीं।
विशन्तं मथुरां रम्यां तमुपेन्द्रमरिन्दमं। अनुजग्मुर्यदुगणाः शक्रं देवगणा इव।
वसुदेवस्य भवनं ततस्तौ यदुनन्दनौ। प्रविष्टौ हृष्टवदनौ चन्द्रादित्याविवाचलं। ४८८५
परेण तेजसोपेतौ रवीन्द्राविव रूपिणौ। तावायुधानि विन्यस्य गृहे खे खेचारिणौ।
मुमुदाते यदुवरौ वसुदेवसुतावुभौ। उद्यानेषु विचित्रेषु फलपुष्पावनामिषु।
चेरतुः सुमहात्मानौ यादवैः परिवारितौ। रैवतस्य समीपे तु सरित्सु विमलासु च।
पद्मपत्रसमृद्धासु कारण्डवयुतासु च। एवं तावेकनिर्म्माणौ मथुरायां शुभाननौ।
उग्रसेनानुगौ भूत्वा किञ्चित् कालमयापतुः। ४८९०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कृष्णप्रत्यागमने नवतितमोऽध्यायः ॥ ९० ॥
॥ वैशम्पायन उवाच ॥ स कृष्णस्तत्र बलवान् रौहिणेयेन सङ्गतः। मथुरां यादवाकीर्णां पुरीं तां सुखमावसत्।
प्राप्तयौवनदेहस्तु युक्तो राजश्रिया विभुः। चचार मथुरां वीरः सवनाकरभूषणां।
कस्यचित्त्वथ कालस्य राजा राजगृहेश्वरः। शुश्राव निहतं कंसं दुहितृभ्यां महीपतिः।
ततो नातिचिरात् कालाज्जरासन्धः प्रतापवान्। आजगाम षडङ्गेन बलेन महता वृतः।
जिघांसुर्वै यदून् क्रुद्धः कंसस्यापचितिं स्मरन्। अस्तिः प्राप्तिश्च नाम्नास्तां मागधस्य सुते नृप। ४८९५
जरासन्धस्य कन्याद्यौ पीनश्रोणिपयोधरे। उभे कंसस्य ते भार्य्ये प्रादाद्बार्हद्रथो नृपः।
स ताभ्यां मुमुदे राजा मद्रा पितरमाश्रितः। समाश्रित्य जरासन्धमनादृत्य च यादवान्।
शूरसेनेश्वरो राजा यथा ते कथितः सुतः। ज्ञातिकार्य्यार्थसिद्ध्यर्थमुग्रसेनहिते रतः।
वसुदेवोऽभवत्तस्य कंसो न मन्यते च तं। रामकृष्णौ व्यपाश्रित्य हते कंसे दुरात्मनि।
उग्रसेनोऽभवद्राजा भोजवृष्ण्यन्धकैर्वृतः। दुहितृभ्यां जरासन्धः प्रियाभ्यां समवाप्नुतः। ४९००
चोदितो वीरपत्नीभ्यामुपायान्मथुरां ततः। कृत्वा सर्व्वसमुद्योगं क्रोधादग्निसमो ज्वलन्।
प्रतापावनता ये च जरासन्धस्य पार्थिवाः। मित्राणि ज्ञातयश्चैव संयुक्ताः सुहृदस्तथा।
समेतास्तमनुप्रयुः सर्व्वे सैन्यैः समुदितैर्वृताः। महेष्वासा महावीर्य्या जरासन्धप्रियैषिणः।
काश्यो दन्तवक्रश्च चेदिराजश्च वीर्य्यवान्। कलिङ्गाधिपतिश्चैव पौण्ड्रश्च बलिनाम्वरः।
आकृतिः कैशिकश्चैव भीष्मकश्च नराधिपः। पुत्रश्च भीष्मकस्यापि रुक्मी मुख्यो धनुर्भृतां। ४९०५
वासुदेवार्ज्जुनाभ्यां यः स्पर्द्धते स महाहवे। वेणुदारिः श्रुतर्व्वा च क्राथश्चैवांशुमानपि।

अङ्गराजश्च बलवान् वङ्गानामधिपस्तथा । कौशल्यः काशिराजश्च दशार्णाधिपतिस्तथा ।
सुह्मेश्वरश्च विक्रान्तो विदेहाधिपतिस्तथा । मद्रराजश्च बलवांस्त्रिगर्त्तानामधीश्वरः ।
शाल्वराजश्च विक्रान्तो दरदश्च महाबल । यवनाधिपतिश्चैव भगदत्तश्च वीर्य्यवान् ।
सौवीरराज. शैव्यश्च पाण्ड्यश्च बलिनाम्बरः । गन्धारराज सुबलो नग्नजिच्च महाबलः । ४९७०
काश्मीरराजो गोनर्दो दरदाधिपतिर्नृपः । दुर्य्योधनादयश्चैव धार्त्तराष्ट्रा महाबलाः ।
एते चान्ये च राजानो बलवन्तो महारथाः । तमन्वयुर्जरासन्धं विद्विषन्तो जनार्द्दनं ।
ते शूरसेनानाविश्य प्रभूतयवसेन्धनान् । जग्मुः संरुध्य मथुरां पुरस्कृत्य बलं तदा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मथुरोपरोधे जरासन्धोद्योगे एकनवतोऽध्यायः ॥ ९१ ॥
॥ वैशम्पायन उवाच ॥ मथुरोपवने मत्वा निविष्टांस्तान्नराधिपान् । अपश्यन् वृष्णय. सर्व्वे पुरस्कृत्य जनार्द्दनं ।
ततो हृष्टमना: कृष्णो रामं वचनमब्रवीत् । त्वरते खलु कार्य्यार्थी देवतानां न संशय. । ४९७५
यथाऽयं सन्निकृष्टो हि जरासन्धो नराधिपः । लक्ष्यन्ते हि ध्वजाग्राणि रथानां वातरंहसां ।
एतानि शशिकल्पानि नृपाणां विजिगीषतां । छत्राण्यार्य्य विराजन्ते प्रोच्छ्रितानि सितानि च ।
अहो नृपरथोदग्रा विमला स्वच्छपङ्क्तयः । अभिवर्त्तन्ति न. शुभ्रा यथा खे हंसपङ्क्तयः ।
काले खलु नृपः प्राप्तो जरासन्धो महीपतिः । आवयोर्युद्धनिकषः प्रथम समरातिथिः ।
आर्य्य तिष्ठाव सहितावनुप्राप्ते महीपतौ । युद्धारम्भ. प्रयोक्तव्यो बलन्तावत् विसृज्यतां । ४९८०
एवमुक्त्वा ततः कृष्णः सुस्थ. संग्रामलालसः । जरासन्धमभिप्रेप्सुश्चकार बलदर्शनं ।
वीक्षमाणश्च तान् सर्व्वान्नृपान् यदुवरोऽव्यय. । आत्मनैवात्मना वाक्यमुवाच हृदि मन्त्रवित् ।
इमे ते पृथिवीपालाः पार्थिवे वर्त्मनि स्थिताः । ये विनाशं गमिष्यन्ति शास्त्रदृष्टेन कर्म्मणा ।
प्रोक्षितान् खल्विमान्मन्ये मृत्युना नृपपुङ्गवान् । स्वर्गगामीनि चाप्येषां वपूंषि प्रचकाशिरे ।
स्थाने भारपरिश्रान्ता वसुधेयं दिवङ्गता । एषां नृपतिमुख्यानां सैन्यौघैरभिपीडिता । ४९८५
भूमिर्निरन्तरा चेयं बलराष्ट्राभिसन्तता । स्वल्पेन खलु कालेन विविक्तं पृथिवीतलं ।
भविष्यति नरेन्द्रौघे शस्त्रौ विनिपातिते. ।
॥ वैशम्पायन उवाच ॥ जरासन्धस्ततः क्रुद्धः प्रभुः सर्व्वमहीक्षितां । नराधिपसहस्रौघैरनुयातो महाद्युति. ।
आयतोदग्रतुरगै. सादिभिः सुसमाहितै. । रथै. सांग्रामिकैर्युक्तैरसङ्गगतिभिः क्वचित् ।
हेमकक्ष्यैर्महाघण्टैर्मदारपौर्वैरिवोपमैः । सहारोहैः समारूढै. कल्पितैरणकोविदैः । ४९९०
आरूढै. सादिभिर्युक्तै प्रेङ्खमाणै. प्रवल्गितै. । वाजिभिर्मेघसङ्काशैः प्लवद्भिरिव पर्व्वतै ।
खड्गचर्म्मधरोदग्रैः पत्तिभिर्म्वल्गिताम्बरैः । सहस्रसङ्ख्यासंयुक्तैरुत्पतद्भिरिवोरगैः ।
एवं चतुर्व्विधैः सैन्यैः कम्पमानैरिवाम्बुदै. । नृपोऽभियातो बलवान् जरासन्धो धृतव्रतः ।
स रथैर्घननिर्घोषैर्गजैश्च मदस्रविभिः । हेषमाणैश्च तुरगैः क्ष्वेडमानैश्च पत्तिभि. ।
नादयानो दिशः सर्व्वाः सशाखाः पुर्य्याः वनानि च । स राजा सागराकारः ससैन्य प्रत्यदृश्यत । ४९९५

कार्य्या भूमिसमा सर्व्वा भवद्भिर्वसुधाधिपैः । चतुरङ्गं बलं व्यूह्य जरासन्धो व्यवस्थितः ।
अथाभ्ययाद्यदून् क्रुद्धः सह सर्व्वैर्नराधिपैः । प्रतिजग्मुर्दशार्हास्तं व्यूढानीकाः प्रहारिणः ॥
तद्युद्धमभवद्घोरं तेषां देवासुरोपमं । अल्पानां बहुभिः सार्द्धं व्यतिषक्तरथद्विपं ।
नगराग्नि स्थतौ दृष्ट्वा वसुदेवसुतावुभौ । क्षुभितं नृपरानीकं त्रस्तसंमूढवाहनं ।
रथस्थौ दंशितौ चैव चेरतुस्तत्र यादवौ । मकराविव संरब्धौ समुद्रक्षोभणावुभौ । ५०१०
तयोः प्रयुध्यतोः संख्ये मतिरासीद्धृतात्मनोः । आयुधानां पुराणानामादानकृतलक्षणा ।
ततः खान्निष्पतन्ति स्म दिव्यान्याहवसंस्रवे । लेलिहानानि दीप्तानि महान्ति सुदृढानि च ॥
क्रव्यादैरनुयातानि मूर्त्तिमन्ति बृहन्ति च । तृषितान्याहवे भोक्तुं नृपमांसानि वै भृशं ।
दिव्यस्रग्दामधारीणि त्रासयन्ति च खेचरान् । प्रभया भासमानानि पतमानानि चाम्बरात् ॥
हलं संवर्त्तकं नाम सौनन्दं मुषलं तथा । धनुषां प्रवरं शार्ङ्गं गदा कौमोदकी तथा ॥ ५०१५
चत्वार्य्येतानि तेजांसि विष्णुप्रहरणानि च । ताभ्यां समवकीर्णानि यादवाभ्यां महामृधे ।
जग्राह प्रथमं रामो लाङ्गलमप्रतिमं हलं । सर्पन्तमिव सर्पेन्द्रं दिव्यमालाकुलं मृधे ।
सौनन्दञ्च ततः श्रीमान्निरानन्दकरं द्विषां । सव्येन सात्वतां श्रेष्ठो जग्राह मुषलोत्तमं ।
दर्शनीयञ्च लोकेषु धनुर्ज्जलदनिस्वनं । नाम्ना शार्ङ्गमिति ख्यातं कृष्णो जग्राह वीर्य्यवान् ।
देवैर्निगदितार्थस्य गदा तस्यापरे करे । निविष्टा कुमुदाक्षस्य नाम्ना कौमोदकीति सा । ५०२०
तौ सप्रहरणौ वीरौ साक्षाद्विष्णोस्तनूपमौ । समरे रामगोविन्दौ रिपूंस्तान् प्रत्ययुध्यतां ।
सायुधप्रग्रहौ वीरौ तावन्योन्यमथाग्रजौ । पूर्व्वजानुजसंज्ञौ तौ रामगोविन्दलक्षणौ ।
द्विषत्सु प्रतिकुर्व्वाणौ पराक्रान्तौ तथेश्वरौ । विचेरतुर्यथा देवौ वसुदेवसुतावुभौ ।
हलमुद्यम्य रामस्तु सर्पेन्द्रमिव कोपितं । चचार समरे वीरो द्विषतामन्तको यथा ।
विकर्षयन् वृन्दानि क्षत्रियाणां महात्मनां । चकार रोषं सफलं नागेषु च हयेषु च । ५०२५
कुञ्जरान् लाङ्गलाक्षिप्तान् मुषलाक्षेपताडितान् । रामो विराजन् समरे निर्ममन्थ यथाऽचलान् ।
ते वध्यमाना रामेण रणे क्षत्रियपुङ्गवाः । जरासन्धान्तिकं भीताः समरात् प्रतिजग्मिरे ।
तानुवाच जरासन्धः क्षत्रधर्म्मे व्यवस्थितः । धिगेतां क्षत्रवृत्तिं वः समरे कातरात्मनां ।
परावृत्तस्य समरे विरथस्य पलायतः । भ्रूणहत्यामिवाम्लानां प्रवदन्ति मनीषिणः ।
भीताः कस्मान्निवर्त्तध्वं धिगेतां क्षत्रवृत्तितां । क्षिप्रं सर्व्वे निवर्त्तध्वं मम वाक्येन चोदिताः । ५०३०
अथवा तिष्ठत रणे प्रेक्षकाः समवस्थिताः । यावदेतौ रणे गोपौ प्रेषयामि यमक्षयं ।
ततस्ते क्षत्रियाः सर्व्वे जरासन्धेन चोदिताः । सृजन्तः शरजालानि क्षिप्रं योद्धुं व्यवस्थिताः ।
ते रथैः काञ्चनापीडैरश्वैश्चाम्बुदनादिभिः । नागैश्चाभोदसङ्काशैर्महामात्रप्रचोदितैः ।
सतनुत्राः सनिस्त्रिंशाः सपताकायुधध्वजाः । स्फारोपितधनुष्मन्तः सतूणीराः सतोमराः ।
चक्रचापासिधिनः सर्व्वे चारुचामरवीजिताः । रणे तेऽधिगता रेजुः स्पन्दमाना महीक्षितः । ५०३५

ते युद्धरागाद्र्थिनो ध्यगाहन्त यथाम्बराः । गदाभिश्चैव गुर्व्वीभिः चित्रणीयैश्च मुद्गरैः ।
एतस्मिन्नन्तरे तत्र देवानां नन्दिवर्द्धनः । सुपर्णध्वजमास्थाय कृष्णस्तु रथमुत्तमं ।
तदाऽभ्ययाज्जरासन्धं शरैर्विव्याध चाष्टभिः । सारथिञ्चास्य विव्याध पञ्चभिर्निशितैः शरैः ।
जघान तुरगांश्चास्य यतमानस्य वीर्य्यवान् । तं कृच्छ्रगतमाज्ञाय चित्रसेनो महारथः ।
सेनानीः कैशिकश्चैव तूर्णं विविधतुः शरैः । त्रिभिर्विव्याध संक्रुद्धं बलदेवञ्च कैशिक । ५०१०
बलदेवो धनुस्तस्य भल्लेनाशु द्विधाऽकरोत् । जरासन्धस्तु यथापि तानरीन् शरवृष्टिभिः ।
बहुभिर्व्बहुधा वीरः समन्तात् सर्व्वभूषणैः । तं चित्रसेन संरम्भो विव्याध नवभिः शरैः ।
कैशिकः पञ्चभिश्चापि जरासन्धञ्च सप्तभिः । त्रिभिस्त्रिभिश्च नाराचैस्तान् त्रिभेद जनार्द्दनः ।
पञ्चभिः पञ्चभिश्चैव बलदेव शितैः शरैः । रथेषाञ्चैव चिच्छेद चित्रसेनस्य वीर्य्यवान् ।
बलदेवो धनुश्चाशे भल्लेनास्य द्विधाऽकरोत् । स छिन्नधन्वा विरथो गदामादाय वीर्य्यवान् । ५०१५
अभ्यद्रवत् सुसंरब्धो जिघांसुर्मुसलायुधं । भिन्नस्तत्र नाराचांश्चित्रसेनवधैषिण. ।
धनुश्चिच्छेद रामस्य जरासन्धो महाबलः । गदया चाशधानाश्चाम् क्रोधात् स मगधेश्वरः ।
रामश्चाभ्यद्रवद्वीरो जरासन्धो महाबलः । आदाय मुसलं रामो जरासन्धमुपाद्रवत् ।
तयोस्तद्युद्धमभवत् परस्परवधैषिणोः । चित्रसेनस्तु संक्रुद्धं दृष्ट्वा रामेण मागधं ।
रथमन्यं समारुह्य जरासन्धमवारयत् । ततो बलेन महता गजानीकेन चाप्यथ । ५०२०
उभयोरन्तरे ताभ्यां सङ्कुलं समपद्यत । तत सैन्येन महता जरासन्धोऽभिसंवृतः ।
रामकृष्णावयगान् योजानामथाद् महाबलः । ततः प्रक्षुभितस्येव सागरस्य महास्वन. ।
प्रादुर्ब्बभूव तुमुलः सेनयोरुभयोरपि । वेणुभेरीमृदङ्गानां शङ्खानाञ्च महस्वनः ।
उभयोः सेनयो राजन् प्रादुरासीन्महास्वनः । क्ष्वेडितास्फोटितोत्कृष्टैस्तुमुलः सर्व्वतोऽभवत् ।
उत्पपात रजश्चापि खुरनेमिसमुद्धतं । समुद्यतमहाशस्त्राः प्रस्तहीनशरासनाः । ५०२५
अन्योन्यमभिगर्ज्जन्तः प्रहरास्ततावतस्थिरे । रथिन. सादिनश्चैव पत्तयश्च महस्वनः ।
गजाश्चाचलसङ्काशाः सन्निपेतुः समन्ततः । स सम्प्रहारस्तुमुलस्त्यक्त्वा प्राणानवर्त्तत ।
वृष्णिभिः सह योधानां जरासन्धस्य दारुणः । ततः शिशिरनाशृष्टिभ्र्ज्जैर्व्विपृथुराद्यक. ।
बलदेवं पुरस्कृत्य सैन्यस्यार्द्धेन दंशिताः । वृष्णिषु पश्चमाभेदुः शत्रुसैन्यस्य भारत ।
पालितं चेदिराजेन जरासन्धेन च प्रभो । उदीच्यैश्च महावीर्य्यैः शल्यशाल्वादिभिर्नृपैः । ५०३०
सृजन्त. शरवर्षाणि समभित्यक्तजीविताः । अगावहः पृथु. कङ्कः शतद्युम्नो विदूरथः ।
हृषीकेशं पुरस्कृत्य सैन्यस्यार्द्धेन दंशिताः । भीष्मकेणाभिगुप्तस्य रुक्मिणा च महात्मना ।
देवकेनापि राजेन्द्र तथा मद्रेश्वरेण च । माथैश्च दाक्षिणात्यैश्च गुप्तं वीर्य्यबलान्वितैः ।
तेषाञ्च युद्धमभवत् समभित्यक्तजीवितं । शक्रवृष्टिप्रमाणाणांघाम् सृजतामशनिस्वनं ।
सात्यकिश्चित्रकः श्यामो युयुधानश्च वीर्य्यवान् । राजाधिदेवो मृदरः श्वफल्कश्च महारथः । ५०३५

सत्राजिच्चित्रसेनश्च बलेन महता वृताः। व्यूहस्य पक्षं ते सव्यं प्रतीयुर्द्विषतां मृधे।
व्यूहस्यार्द्धं समासेदुर्मद्रैराभिरक्षितं। राजभिश्चापि बहुभिर्वेणुदारिमुखैः सह।
प्रतीच्यैश्च बलोदग्रैर्दाक्षिणात्यैश्च पालितं।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मथुरारोधे द्विनवतोऽध्यायः॥ ९२॥
॥ वैशम्पायन उवाच ॥ ततो युद्धानि वृष्णीनां बभूवुः सुमहान्त्यपि। मागधस्य महामात्रैर्नृपैश्चैवानुयायिभिः।
रुक्मिणा वासुदेवस्य भीष्मकेणाहुकस्य च। क्राथेन वसुदेवस्य कौशिकस्य च बभ्रुणा। ५०९०
गदेन चेदिराजस्य दन्तवक्रस्य शम्भुना। तथाऽन्यैर्वृष्णिवीराणां नृपाणाञ्च महात्मनां।
युद्धमासीत् सर्वसैन्यानां नृपैर्भरतसत्तम। अहानि पञ्च चैकञ्च षट् सप्ताष्टौ च दारुणं।
गजैर्गजा हयैरश्वाः पादाताश्च पदातिभिः। रथैरथा विमिश्राश्च योधा युयुधिरे ततः।
जरासन्धस्य नृपतेरामेणासीत् समागमः। महेन्द्रस्येव वृत्रेण दारुणो रोमहर्षणः।
अवेक्ष्य रुक्मिणी कृष्णो रुक्मिणं न व्यपोथयत्। ज्वलनार्काशुसङ्काशानाशीविषविषोपमान्। ५०९५
वारयामास कृष्णो वै शरांस्तस्य तु शिक्षया। अन्येषां सुमहानासीद्बलौघानां परिक्षयः।
उभयोः सेनयोराजन् मांसशोणितकर्द्दमः। कबन्धानि समुत्तस्थुः सुबहूनि समन्ततः।
तस्मिन् विमर्द्दे योधानां सह्याहत्तिकराणि च। रथी रामो जरासन्धं शरैराशीविषोपमैः।
आवृणवन्नभ्ययाद्वीरस्तञ्च राजा स मागधः। अभ्यद्रवत वेगेन स्यन्दनेनाशुगामिना।
अन्योन्यं विविधैरस्त्रैर्विद्धा विद्धा विनेदतुः। तौ क्षीणशस्त्रौ विरथौ हताश्वौ हतसारथी। ५१००
गदे गृहीत्वा विक्रान्तावन्योन्यमभिधावतां। कम्पयन्तौ भुवं वीरौ तावुद्यतमहागदौ।
ददृशाते महात्मानौ गिरी सशिखराविव। व्युपारमन्त युद्धानि पश्यतां तौ महाभुजौ।
संरब्धावभिधावन्तौ गदायुद्धेषु विश्रुतौ। उभौ तौ परमाचार्य्यौ लोके ख्यातौ महाबलौ।
मत्ताविव गजौ युद्धे तावन्योन्यमयुध्यतां। ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः।
समन्ततश्चाप्सरसः समाजग्मुः सहस्रशः। तद्देवयक्षगन्धर्व्वमहर्षिभिरलङ्कृतं। ५१०५
शुशुभेऽभ्यधिकं राजन् दिवं ज्योतिर्गणैरिव। अभिदुद्राव रामं तु जरासन्धो महाबलः।
सव्यं मण्डलमाश्रित्य बलदेवस्तु दक्षिणं। प्राहरेतां ततोऽन्योन्यं गदायुद्धविशारदौ।
दन्ताभ्यामिव मातङ्गौ नादयन्तौ दिशो दश। गदानिपातो रामस्य शुश्रुवेऽशनिनिस्वनः।
जरासन्धस्य च रणे पर्व्वतस्येव दीर्य्यतः। न स्म कम्पयते रामं जरासन्धकरच्युता।
गदा गदाभृतां श्रेष्ठं विन्ध्यं गिरिमिवानिलः। रामस्य तु गदावेगं वीर्य्यात् स मगधेश्वरः। ५११०
सेहे धैर्य्येण महता शिक्षया च व्यपोहयत। एवं तौ तत्र सङ्ग्रामे विचरन्तौ महाबलौ।
मण्डलानि विचित्राणि विचेरतुररिन्दमौ। व्यायच्छन्तौ चिरं कालं परिश्रान्तौ च तस्थतुः।
समाश्वस्य मुहूर्त्तन्तु पुनरन्योन्यमघ्नतां। एवं तौ योधमुख्यौ तु समं युयुधतुश्चिरं।
न च तौ युद्धवैमुख्यमुभावेव प्रजग्मतुः। अथापश्यद्गदायुद्धे विशेषं तस्य वीर्य्यवान्।

रामः क्रुद्धो गदां त्यक्त्वा जग्राह मुषलोत्तमं। तमुद्यतं तदा दृष्ट्वा मुषलं घोरदर्शनं। ४११५
अमोघं बलदेवेन क्रुद्धेन तु महारणे। ततोऽन्तरीक्षे वागासीत् सुस्वरा लोकसाक्षिणी।
उवाच बलदेवं तं समुद्यतहलायुधं। न त्वया राम बध्योऽयमलं खेदेन मागधे।
विहितोऽस्य मया मृत्युस्तस्मात् साधु व्युपारम। अचिरेणैव कालेन प्राणांस्त्यक्ष्यति मागधः।
जरासन्धस्तु तच्छ्रुत्वा विमनाः समपद्यत। न प्रजह्रे ततस्तस्मिन् पुनरेव हलायुध।
तौ व्युपारमतां युद्धे वृष्ण्यस्ते च पार्थिवाः। प्रशान्तमभवद्युद्धं तेषामेवं सुदारुणं। ४१२०
दीर्घकालं महाराज निघ्नतामितरेतर। पराजिते लपक्रान्ते जरासन्धे महीपतौ।
अस्तं याते दिनकरे नानुसस्रुस्तदा निशि। समानीय स्वकं सैन्यं लब्धलक्षा महाबलाः।
पुरीं प्रविविशुर्हृष्टाः केशवेनाभिपालिता। खाच्च्युतान्यायुधान्यत्र तान्येवान्तर्दधुस्तदा।
जरासन्धोऽपि नृपतिर्विमनाः स्वं पुरं ययौ। राजानश्चानुगा येऽस्य स्वराष्ट्राण्येव ते ययु।
जरासन्धन्तु ते जित्वा मेनिरे नैव निर्जितं। कृष्णाय कुरुशार्दूल राजा ह्यतिबल स वै। ४१२५
दश चाष्टौ च संग्रामान् जरासन्धस्य यादवाः। ददुर्न चैनं समरे हन्तुं शेकुर्महारथाः।
अक्षौहिण्यश्च तस्यासन् विंशतिर्भरतर्षभ। जरासन्धस्य नृपतेस्तदर्थं या समागताः।
अल्पत्वादभिभूतास्तु वृष्ण्यो भरतर्षभ। वार्हद्रथेन राजेन्द्र राजभि सहितेन वै।
जित्वा तु मागधं सङ्ख्ये जरासन्धं महीपतिं। विहरन्ति स्म सुखिनो वृष्णिसिंहा महारथाः।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मथुरारोधे जरासन्धापयाने त्रिनवतोऽध्याय ॥ ८३ ॥
॥ वैशम्पायन उवाच ॥ स कृष्णस्तत्र बलवान् रौहिणेयेन सङ्गतः। मथुरां यादवाकीर्णां पुरीं तां सुखमावसत्। ४१३०
प्राप्तयौवनदेहस्तु युक्तो राजश्रिया प्रभु। चचार मथुरां प्रीत सवनाकरभूषणां।
कस्यचित्त्वथ कालस्य राजा राजगृहेश्वरः। सस्मार निहतं कंसं जरासन्ध प्रतापवान्।
युद्धायोद्योजितो भूयो दुहितृभ्यां महीपति। दश सप्त च संग्रामान् जरासन्धस्य यादवाः।
ददुर्न चैनं समरे हन्तुं शेकुर्महारथाः। ततो मगधराट् श्रीमांश्चतुरङ्गबलान्वित।
भूयोऽष्टादशमं कर्त्तुं संग्रामं समुपारभत्। वैलक्ष्यात् पुनरेवासौ राजा राजगृहेश्वर। ४१३५
जरासन्धो बली श्रीमान् पाकशासनसन्निभ। स साधनेन महता पाकशासनविक्रम।
कृष्णस्य वधमन्विच्छन् भूयो वै संन्यवर्त्तत। तं श्रुत्वा सहिता सर्व्वे निवृत्तं मगधेश्वरं।
यादवा मन्त्रयामासुर्ज्जरासन्धभयार्दिता। तत प्राह महातेजा विकद्रुर्नयकोविद।
कृष्णं कमलपत्राक्षमुग्रसेनस्य शृण्वत। श्रूयतां तात गोविन्द कुलस्यास्य समुद्भव।
श्रूयतामभिधास्यामि प्राप्तकालमहं नृप। युक्तश्चेन्मन्यसे साधो करिष्यसि वचो मम। ४१४०
यादवस्यास्य वंशस्य समुद्भवमशेषत। यथा मे कथितं पूर्व्वं व्यासेन विदितात्मना।
आसीद्राजा मनोर्व्वंशे श्रीमानिक्ष्वाकुसम्भव। हर्य्यश्व इति विख्यातो महेन्द्रसमविक्रम।
तस्यासीद्दयिता भार्य्या मधोर्दैत्यस्य वै सुता। देवी मधुमती नाम यथा देवी शची तथा।

सा यौवनगुणोपेता रूपेणाप्रतिमा भुवि । मनोरथकरी राज्ञः प्राणेभ्योऽपि गरीयसी ।
वनजाक्षी रतिप्रख्या सुश्रोणी कामरूपिणी । एकपत्नीव्रतधरा खेचरी रोहिणी यथा ।
सा तमिक्ष्वाकुशार्दूलं कामयामास कामिनी । स कदाचिन्नरश्रेष्ठो भ्रात्रा ज्येष्ठेन माधव ।
राज्याच्चिरस्तो विश्वस्तः सोऽयोध्यां संपरित्यजत् । स तदाऽल्पपरीवारः प्रियया सहितो वने ।
रेमे स हितकालज्ञः प्रियया कमलेक्षण । भ्रात्रा विनिकृतं राज्यात् प्रोवाच कमलेक्षणा ।
एह्यागच्छ नृपश्रेष्ठ त्यज राज्यकृतां स्पृहां । गच्छाव सहितो वीर मधोर्मम पितुर्गृहं ।
रम्यं मधुवनं नाम कामपुष्पफलद्रुमं । सहितौ तत्र रंस्यावो यथा दिवि गतौ तथा ।
पितुर्मे दयितस्त्वं हि मातुश्च मम पार्थिव । मत्प्रियत्वात् प्रियतरो भ्रातुश्च लवणस्य मे ।
रंस्यावस्तत्र सहितौ राज्यस्थाविव कामगौ । तत्र गत्वा नरश्रेष्ठ अप्सराविव नन्दने ।
भद्रन्ते विहरिष्यावो यथा देवपुरे तथा । तं त्यजाव महाराज भ्रातरन्तेऽभिमानिनं ।
आवयोर्द्वेषिणं नित्यं मत्तं राज्यमदेन वै । धिगिमं गर्हितं वासं भृत्यवच्च पराश्रयं ।
गच्छाव सहितौ वीर पितुर्मे भवनान्तिकं । तस्य सम्यक् प्रवृत्तस्य पूर्व्वजं भ्रातरम्प्रति ।
कामार्त्तस्य नरेन्द्रस्य पत्न्यास्तद्रुरुचे वचः । ततो मधुपुरं राजा हर्य्यश्वः स जगाम ह ।
भार्य्यया सह कामिन्या कामी पुरुषपुङ्गव । मधुना दानवेन्द्रेण स साम्ना समुदाहृतः ।
स्वागतं वत्स हर्य्यश्व प्रीतोऽस्मि तव दर्शनात् । यदेतन्मम राज्यं वै सर्व्वं मधुवनं विना ।
ददानि तव राजेन्द्र वासश्च प्रतिगृह्यतां । वनेऽस्मिन् लवणश्चैव सहायस्ते भविष्यति ।
अमित्रनिग्रहे चैव कर्णधारत्वमेष्यति । पालयैनं शुभं राष्ट्रं समुद्रानूपभूषितं ।
गोसमृद्धं श्रिया जुष्टमाभीरप्रायमानुषं । तत्र ते वसतस्तात दुर्गं गिरिपुरं महत् ।
भविता पार्थिवावासः सुराष्ट्रविषयो महान् । अनूपविषयश्चैव समुद्रान्ते निरामयः ।
आनर्त्तं नाम ते राष्ट्रं भविष्यत्यायतं महत् । तद्भविष्यमहं मन्ये कालयोगेन पार्थिव ।
अध्यास्स्व तां यथाकालं पार्थिवं वृत्तमुत्तमं । यायातमपि वंशस्ते समेष्यति च यादवं ।
अनुवंशश्च वंशस्ते सोमस्य भविता किल । एष मे विभवस्तात तवेमं विषयोत्तमं ।
दत्त्वा यास्यामि तपसे सागरं वरुणालयं । लवणेन समायुक्तस्त्वमिमं विषयोत्तमं ।
पालयस्वाखिलं तात स्वस्य वंशस्य वृद्धये । बाढमित्येव हर्य्यश्वः प्रतिजग्राह तत्पुरं ।
स च दैत्यस्तपोवासं जगाम वरुणालयं । हर्य्यश्वस्तु महातेजा दिव्ये गिरिवरोत्तमे ।
निवेशयामास पुरं वासार्थममरोपम । आनर्त्तं नाम तद्राष्ट्रं सुराष्ट्रं गोधनायुतं ।
अचिरेणैव कालेन समृद्धं प्रत्यपद्यत । अनूपविषयश्चैव वेलावनविभूषितं ।
निविष्टं चैव ग्रामाढ्यं प्राकारग्रामसङ्कुलं । शशास स नृपः स्फीतं तद्राष्ट्रं राष्ट्रवर्द्धनः ।
राजधर्म्मेण यशसा प्रजानां नन्दिवर्द्धनः । तस्य सम्यक् प्रचारेण हर्य्यश्वस्य महात्मनः ।
व्यवर्द्धत तदा वीर्य्यं राष्ट्रं राष्ट्रगुणैर्युतं । स हि राजा स्थितो राज्ये राजवृत्तेन शोभितः ।

प्राप्तः कुलोचितां लक्ष्मीं वृत्तेन च नयेन च । तस्येतं सुप्रहृष्टस्य पुत्रकामस्य धीमतः ।
मधुमत्यां सुतो जज्ञे यदुर्नाम महायशाः । सोऽवर्द्धत महातेजा यदुर्दुन्दुभिनिस्वनः । ५१७५
राजलक्षणसम्पन्नः सर्पैर्दुरतिक्रमः । यथाऽस्य पूर्व्वको राजा पूरुः स सुमहायशाः ।
स एक एव तस्यासीत् पुत्रः परमशोभनः । ऊर्ज्जितः पृथिवीभर्त्ता हर्य्यश्वस्य महात्मनः ।
दशवर्षसहस्राणि स कृत्वा राज्यमव्ययं । जगाम त्रिदिवं राजा धर्म्मशास्त्रमितो भुवि ।
ततो यदुरदीनात्मा प्रजाभिस्त्वभ्यषिच्यत । पितर्य्युपरते श्रीमान् क्रमेणार्क इवोदित. ।
शशास चेमां वसुधां प्रशान्तभयतस्करां । यदुरिन्द्रप्रतीकाशो नृपो येन स्म यादवाः । ५१८०
स कदाचिन्नृपश्रेष्ठ जलक्रीडां महोदधौ । दारैः सह गुणोदारै. सतार इव चन्द्रमाः ।
स तत्र सहसा चिक्षिप्तिलोर्पुः सागराम्भसि । धूम्रवर्णेन नृपतिः सर्पराजेन शौर्य्यशान् ।
सोऽप्याकृष्यत वेगेन जले सर्पपुरं महत् । मणिस्तम्भाट्टहद्वारं मुक्तादामविभूषितं ।
कीर्णं शङ्खकुलैः शुभ्रैर्ग्वराशिविभूषितं । प्रवालाङ्कुरपत्राढ्यै. पादपैरुपशोभितं ।
कीर्णं पन्नगनार्य्योघैः समुद्रोदरचारिभिः । स्वर्णेन मध्ये भास्वन्तं स्वस्तिकेनेन्दुवर्चसा । ५१८५
स तं ददर्श राजेन्द्रो विमले सागराम्भसि । पन्नगेन्द्रपुरं तोये जगत्यामिव निर्म्मितं ।
तस्यैव पुरे तत्र प्रावेश्यत नृपो यदुः । अगारं तोयदाकारं पूर्णं सर्व्वधूपकैः ।
तस्य दत्तं मणिमयं शलजं परमासनं । स्वास्तीर्णं पद्मपत्रैश्च पद्मसूत्रोत्तरच्छदं ।
तमासीनं नृपं तत्र परमे पन्नगासने । द्विजिह्वपतिरव्यग्रो धूम्रवर्णोऽभ्यभाषत ।
पिता ते स्वर्गतिं प्राप्तः कृत्वा वंशमिमं महत् । भवन्तं तेजसा युक्तमुत्पाद्य वसुधाधिपं । ५१९०
यादवो नाम वंशोऽयं त्वत्तोऽथ वसुधाधिप । पित्रा ते सङ्गतार्थश्च स्व पित. पार्थिवाकरः ।
वंशे चास्मिंस्तव विभो देवानां तनयाऽव्ययाः । ऋषीणामुरगाणाञ्च उत्पत्स्यन्ते नृयोनिजाः ।
एता मम सुताः पञ्च कुमार्य्यो वृत्तसम्मताः । उत्पन्ना यौवनाश्वस्य भगिन्यां नृपसत्तम ।
प्रतीच्छेमाः स्वधर्म्मेण प्राजापत्येन कर्म्मणा । वरश्च ते प्रदास्यामि वरार्हस्त्वं मतो मम ।
सोमाद्य कौकुराश्चैव भोजाश्चान्धकयादवाः । दाशार्हा वृष्णयश्चेति ख्यातिं यास्यन्ति सप्त ते । ५१९५
स तस्मै धूम्रवर्णो वै कन्याः कन्याव्रते स्थिताः । अग्नपूर्णेन योगेन ददाविन्द्रसनाय वै ।
वरश्चास्मै ददौ प्रीत. स वै पन्नगपुङ्गवः । श्रावयन् कन्यकाः सर्व्वा यथाक्रममदीनवत् ।
एतासु ते सुताः पञ्च सुतासु मम मानद । उत्पत्स्यन्ते पितुस्तेजो मातुश्चैव समाश्रिताः ।
अघातसमयनद्धाश्च सलिलाभ्यन्तरेचरा. । तव वंशे भविष्यन्ति पार्थिवा. कामरूपिण. ।
स वरं कन्यकाश्चैव लब्ध्वा यदुवरस्तदा । उदतिष्ठत वेगेन सलिलाच्चन्द्रमा इव । ५२००
स पञ्चकन्यामध्यस्थो ददृशे तत्र पार्थिवः । पञ्चतारेण संयुक्तो नक्षत्रेणेव चन्द्रमाः ।
स तदन्त.पुरं सर्व्वं ददर्श नृपसत्तमः । वैवाहिकेन वेशेन दिव्यस्रगनुलेपन ।

समाश्वास्य च ताः सर्व्वाः सपत्नीः पावकोपमाः । जगाम स्वपुरं राजा प्रीत्या परमया युतः ।
स्वपुरन्तु ततो राजा, गत्वा वै रमते भृशं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि विकद्रुवाक्ये चतुर्नवतोऽध्यायः ॥ ९४ ॥
॥ विकद्रुरुवाच ॥ स तासु नागकन्यासु कालेन महता नृपः । जनयामास विक्रान्तान् पञ्च पुत्त्रान् कुलोद्वहान् । ५२०५
मुचुकुन्दं महाबाहुं पद्मवर्णं तथैव च । माधवं सारसञ्चैव हरितञ्चैव पार्थिवं ।
एतान् पञ्च सुतान्राजा पञ्चभूतोपमान् भुवि । ईक्षमाणो नृपः प्रीतिं जगामातुलविक्रमः ।
ते प्राप्तवयसः सर्व्वे स्थिताः पञ्च यथाऽद्रयः । तेजिता बलदर्पाभ्यामूचुः पितरमग्रतः ।
तात युक्ताः स्म वयसा बले महति संस्थिताः । क्षिप्रमाज्ञप्तमिच्छामः किं कुर्मस्तव शासनात् ।
स तान्नृपतिशार्दूलः शार्दूलानिव वेगितान् । प्रीत्या परमया प्राह सुतान् वीर्यकुतूहलान् । ५२१०
विन्ध्यर्क्षवन्तावभितो द्वे पुर्य्यौ पर्व्वताश्रये । निवेशयतु यत्नेन मुचुकुन्दः सुतो मम ।
सह्यस्य चोपरि पुरीं दक्षिणां दिशमाश्रितां । पद्मवर्णोऽपि मे पुत्त्रो निवेशयतु माचिरं ।
तत्रैव परतः कान्ते देशे चम्पकभूषिते । सारसो मे पुरं रम्यं निवेशयतु पुत्त्रकः ।
हरितोऽयं महाबाहुः सागरे सलिलोदरे । द्वीपं पन्नगराजस्य सुतो मे पालयिष्यति ।
माधवोऽपि महाबाहुर्ज्येष्ठः श्रेष्ठश्च धर्म्मवित् । यौवराज्येन संयुक्तः स्वपुरं पालयिष्यति । ५२१५
सर्व्वे नृपश्रियं प्राप्ता अभिषिक्ताः सचामराः । पित्राऽनुशिष्टाश्चत्वारो लोकपालोपमा नृपाः ।
स्वं स्वं निवेशनं सर्व्वे भेजिरे नृपसत्तमाः । पुरस्थानानि रम्याणि मृगयन्तो यथाक्रमं ।
मुचुकुन्दस्य राजर्षिर्व्विन्ध्यमध्ये चरोऽभ्रमत् । स्वस्थानं नर्म्मदातीरे दारुणोपलसङ्कटे ।
स तु तं शोधयामास विविक्तञ्च चकार ह । सेतुश्चैव समश्चक्रे परिखाश्चामितोदकाः ।
स्थापयामास भागेषु देवतायतनान्यपि । रथ्यावीथीमुखं मार्गांश्चत्वराणि समानि च । ५२२०
स तां पुरीं धनवतीं पुरुहूतपुरीप्रभां । नातिदीर्घेण कालेन चकार नृपसत्तमः ।
गोभिर्हेम्ना धान्येन सम्पूर्णां ध्वजमालिनीं । नाम चास्याः शुभञ्चक्रे निर्म्मितं स्वेन तेजसा ।
तस्याः पुर्य्या नृपश्रेष्ठो देवश्रेष्ठपराक्रमः । माहिष्मत्यामवसत्तु यथेष्टं विन्ध्यसानुगा ।
माहिष्मती नाम पुरी प्रकाशमुपयास्यति । उभयोर्व्विन्ध्यर्क्षयोः पादे नगयोस्तां महापुरीं ।
मध्ये निवेशयामास श्रिया परमया युतां । पुरिकां नाम धर्म्मात्मा पुरीं देवपुरीप्रभां । ५२२५
उद्यानशतसम्बाधां सम्यद्धापणचत्वरां । ऋक्षवतोऽभितश्चैव तीरे तत्र निरामये ।
निर्म्मिता सा पुरी राज्ञा पुरिका नाम नामतः । स ते द्वे विपुले पुर्य्यौ देवपुर्य्युपमे शुभे ।
पालयामास धर्म्मात्मा राजधर्म्मेण वीर्य्यवान् । पद्मवर्णोऽपि राजर्षिः सह्यपृष्ठे पुरोत्तमं ।
चकार नद्या वेण्णायास्तीरे तरुलताकुले । विषयश्चाल्पतां ज्ञात्वा सम्पूर्णं राष्ट्रमेव च ।
निवेशयामास नृपः सर्वप्रमाणमुत्तमं । पद्मावतं जनपदं करवीरञ्च तत्पुरं । ५२३०

निर्म्मितं पद्मवर्णेन प्राजापत्येन कर्म्मणा । चारसेनापि विहितं रम्यं क्रौञ्चपुरं महत् ।
चम्पकाशोकबहुलं विपुलं ताम्रमृत्तिकं । वनवासीति विख्यात स्फीतो जनपदो महान् ।
पुरस्य तस्य तु श्रीमान् द्रुमैः सर्व्वर्त्तुकैर्वृतः । हरितोऽपि समुद्रस्य द्वीपं समभिपालयत् ।
रत्नसञ्चयसम्पूर्णं नारीजनमनोहरं । तस्य दाशा जले मग्ना मद्गुरा नाम विश्रुताः ।
ये हरन्ति सदा शङ्खान् समुद्रोदरचारिणः । तस्यापरे दाशगणाः प्रबालान् जलसम्भवान् । ५२३५
सञ्चिन्वन्ति सदा युक्ता जातरूपञ्च मौक्तिकं । जलजानि च रत्नानि निषादास्तस्य मानवाः ।
प्रविश्य तोऽर्णवे युक्ता नौभिः संयानगामिनः । मत्स्यमांसेन ते सर्व्वे वर्त्तन्ते स्म सदा नराः ।
गृह्णन्तः सर्व्वरत्नानि रत्नद्वीपनिवासिनः । ते संयानगतैर्द्रव्यैर्व्वणिजो दूरगामिनः ।
हरितं तर्पयन्त्येकं यथैव धनदं तथा । एवमिक्ष्वाकुवंशाद्धि यदुवंशो विनिःसृतः ।
चतुर्द्धा यदुपुत्रैस्तु चतुर्भिर्भिद्यते पुनः । स यदुर्माधवे राज्यं विसृज्य यदुपुङ्गवे । ५२४०
त्रिपिष्टपं गतो राजा देहं त्यक्त्वा महीतले । बभूव माधवसुतः सत्वतो नाम वीर्य्यवान् ।
सत्वद्वृत्तगुणोपेतो राजा राजगुणे स्थितः । सत्वतस्य सुतो राजा भीमो नाम महानभूत् ।
येन भैमाः सुसंवृत्ताः सत्वतात् सात्वताः स्मृताः । राज्यस्थे तु नृपे तस्मिन्रामे राज्यं प्रशासति ।
शत्रुघ्नो लवणं हत्वा चिच्छेद स मधोर्व्वनं । तस्मिन्मधुवने स्थाने पुरीञ्च मथुरामिमां ।
निवेशयामास विभुः सुमित्रानन्दिवर्द्धनः । पर्य्याये चैव रामस्य भरतस्य तथैव च । ५२४५
सुमित्रासुतयोश्चैव प्राप्तयोर्वैष्णवं पदं । भीमेनेयं पुरी तेन राज्यसम्बन्धकारणात् ।
स्ववंशे स्थापिता पूर्व्वं स्वयमध्यासिता तथा । ततः कुशे स्थिते राज्ये लवे तु युवराजनि ।
अन्धको नाम भीमस्य सुतो राज्यमकारयत् । अन्धकस्य सुतो जज्ञे रेवतो नाम पार्थिवः ।
ऋक्षोऽपि रेवताज्जज्ञे रम्ये पर्व्वतमूर्द्धनि । ततो रैवत उत्पन्नः पर्व्वतः सागरान्तिके ।
नाम्ना रैवतको नाम भूमौ भूमिधरः स्मृतः । रैवतस्यात्मजो राजा विश्वगर्भो महायशाः । ५२५०
बभूव पृथिवीपालः पृथिव्यां प्रथितः प्रभुः । तस्य तिसृषु भार्य्यासु दिव्यरूपासु केशव ।
चत्वारो जज्ञिरे पुत्रा लोकपालोपमाः शुभाः । वसुर्ब्बभ्रुः सुषेणश्च सभाक्षश्चैव वीर्य्यवान् ।
यदुप्रवीराः प्रख्याता लोकपाला इवापरे । तैरयं यादवो वंशः पार्थिवैर्बहुलीकृतः ।
यस्मिंस्ते कृष्ण लोकेशाः सुप्रजाताः प्रजेश्वराः । वसोस्तु कुन्तिविषये वसुदेव सुतो विभुः ।
ततः संजनयामास सुप्रभे द्वे च दारिके । कुन्तीञ्च पाण्डोर्महिषीं देवतामिव भूचरीं । ५२५५
भार्य्याञ्च दमघोषस्य चेदिराजस्य सुप्रभां । एष ते स्वस्य वंशस्य प्रभवः परिकीर्त्तितः ।
श्रुतो मया पुरा कृष्ण कृष्णद्वैपायनान्तिकात् । त्वं त्विदानीं प्रनष्टेऽस्मिन् वंशे वंशभृताम्वर ।
स्वयम्भूरिव सम्प्राप्तो भवायास्मज्जयाय च । न तु त्वां पौरमात्रेण शक्ता गूहयितुं वनं ।
देवगुह्येष्वपि भवान् सर्व्वज्ञः सर्व्वभावन । शक्तश्चापि जरासन्धं नृपं नाशयितुं विभो ।
लब्धबुद्धिवशगाः सर्व्वे वयं योधमते स्थिताः । जरासन्धस्तु बलवान्नृपाणां मूर्द्ध्नि तिष्ठति । ५२६०

अप्रमेयबलश्चैव वयञ्च कृशसाधनाः । न चेयमेकाहमपि पुरीरोधं सहिष्यति ।
कृशभक्तेन्धनजला दुर्गैरपरिनिष्ठिता । असंस्कृताम्बुपरिखा द्वाराट्टयन्त्रवर्ज्जिता ।
वप्रप्राकारमार्गेषु कर्त्तव्या बहुविस्तरा । संस्कर्त्तव्यायुधागारा योक्तव्या चेष्टकाचयैः ।
कंसस्य बलभोग्यत्वान्नाभिगुप्ता पुरा जनैः । सद्यो निपतिते कंसे राज्ये ऽस्माकं नवोदये ।
पुरीमप्रत्ययरोधेयत्न रोधं विषहिष्यति । बलसम्मर्द्दभग्नञ्च कृष्णमार्गं परेण ह । ५१६५
अर्थग्रयमिदं राष्ट्रं जनैः सह विनङ्क्ष्यति । यादवानां विरोधेन ये जिता राज्यकामुकैः ।
ते सर्व्वे द्वैधमिच्छन्ति यत्क्षमं तद्विधीयतां । वचनीया भविष्यामो नृपाणां नृपकारणात् ।
जरासन्धभयार्त्तानां द्रवतां राष्ट्रसंभ्रमे । आर्त्ता वक्ष्यन्ति नः सर्व्वे रुध्यमानाः पुरे जनाः ।
यादवानां विरोधेन विनष्टाः स्मेति केशव । एतन्मम मतं कृष्ण विस्रम्भात् समुदाहृतं ।
त्वन्तु विज्ञापितः सर्व्वं न पुनः संप्रबोधितः । यदत्र नः क्षमं कृष्ण तत् स्वैरं संविधीयतां । ५१७०
त्वमस्य नेता सैन्यस्य वयं त्वच्छासने स्थिताः । त्वन्मूलश्च विरोधोऽयं रक्षास्मानात्मना सह ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि विकद्रुवाक्ये पञ्चनवतोऽध्यायः ॥ ९५ ॥
॥ वैशम्पायन उवाच ॥ विकद्रोस्तद्वचः श्रुत्वा वसुदेवो महायशाः । परितुष्टेन मनसा वचनञ्चेदमब्रवीत् ।
राजषाड्गुण्यवक्ता वै राजमन्त्रार्थतत्त्ववित् । स तत्त्वज्ञ हितश्चैव कृष्णोक्तं किल धीमता ।
भाषिता राजधर्म्माश्च सत्याश्च जगतो हिताः । एतच्छ्रुत्वा पितुर्वाक्यं विकद्रोश्च महात्मनः ।
वाक्यमुत्तरमेकाग्रो बभाषे पुरुषोत्तमः । श्रुतवान् व श्रुतं वाक्यं हेतुतः क्रमतस्तथा । ५१७५
न्यायतः शास्त्रतश्चैव दैवज्ञाप्यनपश्यतां । श्रूयतामुत्तरं वाक्यं श्रुत्वा च प्रतिगृह्यतां ।
नयेन व्यवहर्त्तव्यं पार्थिवेन यथाक्रमं । सन्धिश्च विग्रहश्चैव यानमासनमेव च ।
द्वैधीभावं संश्रयञ्च षाड्गुण्यञ्चिन्तयेत् सदा । बलिन सन्निकर्षे तु न स्थेयं पण्डितेन वै ।
उपक्रामेद्धि कालज्ञः समर्थो युद्धमाचरेत् । अहं तावत् सहार्य्येण मुहूर्त्तेऽस्मिन् प्रकाशिते ।
जीवितार्थो गमिष्यामि शक्तिमःनयशक्तवत् । ततः सह्यापलयुतं सहार्य्योऽहमचयं । ५१८०
अतद्वितीयः श्रीमन्तं प्रवेक्ष्ये दक्षिणापथं । करवीरपुरञ्चैव रम्यं क्रौञ्चपुरं तथा ।
द्रक्ष्यावस्तत्र सहितो गोमन्तञ्च नगोत्तमं । आवयोर्गमनं श्रुत्वा जितकाशी स पार्थिवः ।
अप्रविश्य पुरीं दर्पादनुसारं करिष्यति । ततः सबलसैन्येन जरासन्धोऽनुयास्यति ।
आवयोरर्थणे चैव नृपतिं मयतिष्यति । एषा न श्रेयसी यात्रा भविष्यति कुलस्य वै ।
पौराणामथ पुर्थाय देशस्य च सुखावहा । न च शत्रुपरिभ्रंशे राजानो विजिगीषवः । ५१८५
पराराष्ट्रेषु स्पर्धन्ति स्वके शत्रुक्षयं विना । एवमुक्ता तु तौ वीरौ कृष्णसङ्कर्षणावुभौ ।
प्रपेदतुरसंभ्रान्तौ दक्षिणौ दक्षिणापथं । तौ तु राष्ट्राणि शतशश्चरन्तौ कामरूपिणौ ।
दक्षिणां दिशमास्थाय चेरतुर्मार्गगौ सुखं । सह्यपृष्ठेषु रम्येषु मोदमानावुभौ तथा ।
दक्षिणापथगौ वीरावध्वानं संप्रपेदतुः । तौ तु स्वल्पेन कालेन बह्वाश्चर्यविभूषितं ।

करवीरपुरं प्राप्तौ सर्वरत्नविभूषितं। तौ तत्र गत्वा वेणाया नद्यास्तीरान्तमाश्रितं। ५१९०
आसेदतुः प्ररोहाढ्यं न्यग्रोधं तरुपुङ्गवं। अधस्तात्तस्य वृक्षस्य मुनिं दीप्ततपोधनं।
अंसावसक्तपरशुं जटावल्कलधारिणं। गौरमग्निशिखाकारं तेजसा भास्करोपमं।
क्षत्रान्तकरमक्षोभ्यं वपुष्मन्तमिवार्णवं। न्यस्तसंकुचिताधानं काले हुतहुताशनं।
क्षिप्त्र त्रिषवणाम्भोभिराद्यं देवगुरुं यथा। सवत्सां धेनुकां श्वेतां होमधुक्कामदोहनां।
क्षीरारणीं कर्षमाणं महेन्द्रगिरिगोचरं। ददृशतुस्तौ क्षत्रियावपरिश्रान्तमव्ययं। ५१९५
भार्गवं राममासीनं मन्दरस्थं यथा रविं। न्यायतस्तौ तु तं दृष्ट्वा पादमूले कृताञ्जली।
वसुदेवसुतौ वीरौ सधिष्ण्याविव पावकौ। कृष्णस्तमृषिशार्दूलमुवाच वदतांवरः।
श्लक्ष्णं मधुरया वाचा लोकदृष्टान्तकोविदः। भगवन् जामदग्न्यं त्वामवगच्छामि भार्गवं।
रामं मुनीनामृषभं क्षत्रियाणां कुलान्तकं। त्वया सायकवेगेन क्षिप्तो भार्गव सागरः।
इषुपातेन नगरं शतं शूर्पारकं त्वया। धनुः पञ्चशतायाममिषुपञ्चशतोच्छ्रितं। ५२००
सह्यस्य च निकुञ्जेषु स्फीतो जनपदो महान्। अतिक्रम्योदधेर्वेलामपरान्ते निवेशितः।
त्वया तत् कार्त्तवीर्य्यस्य सहस्रभुजकाननं। छिन्नं परशुनैकेन स्मरता निधनं पितुः।
इयमद्यापि रुधिरैः क्षत्रियाणां हतत्विषां। स्निग्धा त्वत्परशूत्सृष्टैर्जातपङ्का वसुन्धरा।
रैणुकेयं विजाने त्वां क्षितौ क्षत्रियरोषणं। परशुग्रहे युक्त यथैवेह रणे तथा।
तदिच्छावस्त्वया विप्र कश्चिदर्थमुपश्रुतं। उत्तरञ्च श्रुतार्थेन प्रयुक्तमविशङ्कया। ५२०५
आवां तौ माथुरौ ब्रह्मन् यमुनातीरवासिनौ। यादवौ स्वो मुनिश्रेष्ठ यदि ते श्रुतिमागतौ।
वसुदेवो यदुश्रेष्ठ पिता नौ हि धृतव्रत। जन्मप्रभृति चैवावां व्रजेष्वेव नियोजितौ।
तौ स्व कंसभयात्तत्र शङ्कितौ परिवर्द्धितौ। वयश्च प्रथमं प्राप्तौ मथुराञ्च प्रवेशितौ।
तावावां व्युत्थित हत्वा समाजे कंसमोजसा। पितरं तत्र तस्यैव स्थापयित्वा जनेश्वरं।
स्वमेव कर्म्म चारब्धौ गवां व्यापारकारकौ। अथावयोः पुरं रोद्धुं जरासन्धो व्यवस्थितः। ५२१०
संग्रामान् सुबहून् कृत्वा लब्धलक्ष्यावपि स्वयं। ततः स्वपुररक्षार्थं प्रजानाञ्च धृतव्रत।
अकृतास्त्रावनुद्योगौ कर्त्तव्यबलसाधनौ। अरथौ पत्तिकौ युद्धे निस्तनुत्रौ निरायुधौ।
जरासन्धोद्यमभयात् पुराद्रूविव निःसृतौ। उभावावामनुप्राप्तौ मुनिश्रेष्ठ तवान्तिकं।
आवयोर्भक्तिभावेन कर्त्तुमर्हसि सत्क्रियां। श्रुत्वैतद्भार्गवो रामस्तयोर्वाक्यमनिन्दितं।
रैणुकेयः प्रतिवचो धर्म्मसंहितमब्रवीत्। अपरान्तादहं कृष्ण सम्प्रतीहागतः प्रभो। ५२१५
एक एव विना शिष्यैर्युवयोर्भक्तिकारणात्। विदितो मे व्रजे वासस्तव पद्मनिभेक्षण।
दानवानां वधश्चापि कंसस्य च दुरात्मनः। विग्रहश्च जरासन्धे विदित्वा पुरुषोत्तम।
तव सम्भाषकस्तेह सम्प्राप्तोऽस्मि वरानन। जाने त्वां कृष्ण गोप्तारं जगतः प्रभुमव्ययं।
देवकार्य्यार्थसिद्ध्यर्थमबालं बालतां गतं। न त्वया ऽविदितं किञ्चित्त्रिषु लोकेषु विद्यते।

अप्रमेयबलश्चैव वयञ्च क्षयसाधनाः । न चेयमेकाहमपि पुरीरोधं सहिष्यति ।
क्षयभक्तेन्धनवामा दुर्गैरपरिनिष्ठिता । असंस्कृताम्बुपरिखा द्वाराट्टयन्त्रवर्जिता ।
वप्रप्राकारमार्गेषु कर्त्तव्या बहुविस्तरा । संस्कर्त्तव्यायुधागारा योक्तव्या चेष्टकाचयैः ।
कंसस्य बलभोग्यत्वान्नाभिगुप्ता पुरा जनैः । सद्यो निपतिते कंसे राज्ये ऽस्माकं नवोदये ।
पुरीप्रत्ययरोधेयञ्च रोधं विषहिष्यति । बलसम्मर्द्दभग्नञ्च क्षयमाणं परेण च । ५१६६
अर्धंशयमिदं राष्ट्रं जनैः सह विनङ्क्ष्यति । यादवानां विरोधेन ये जिता राज्यकामुकैः ।
ते सर्व्वे द्वैधमिच्छन्ति यत् क्षमं तद्विधीयतां । वचनीया भविष्यामो नृपाणां नृपकारणात् ।
जरासन्धभयार्त्तानां द्रवतां रोधसंभ्रमे । आर्त्ता वक्ष्यन्ति नः सर्व्वे रुध्यमानाः पुरे जनाः ।
यादवानां विरोधेन विनष्टाः स्मेति केशव । एतन्मम मतं कृष्ण विस्रम्भात् समुदाहृतं ।
त्वन्तु विज्ञापितः सर्व्वं न पुनः संप्रबोधितः । यदत्र नः क्षमं कृष्ण तत् स्थिरं संविधीयतां । ५१७०
त्वमस्य नेता सैन्यस्य वयं त्वच्छासने स्थिताः । त्वन्मूलश्च विरोधोऽयं रक्षात्मानात्मना सह ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि विकद्रुवाक्ये पञ्चनवतोऽध्यायः ॥ ९५ ॥
॥ वैशम्पायन उवाच ॥ विकद्रोस्तद्वचः श्रुत्वा वसुदेवो महायशाः । परितुष्टेन मनसा वचनञ्चेदमब्रवीत् ।
राजषाड्गुण्यवक्ता वै राजमन्त्रार्थतत्त्ववित् । स तत्त्वञ्च हितञ्चैव कृष्णोक्तं किल धीमता ।
भाविता राजधर्म्मास्य सत्याश्च जगतो हिताः । एतच्छ्रुत्वा पितुर्वाक्यं विकद्रोश्च महात्मनः ।
वाक्यमुत्तरमेकाग्रो बभाषे पुरुषोत्तमः । ब्रुवतां वः श्रुतं वाक्यं हेतुतः क्रमतस्तथा । ५१७५
न्यायतः शास्त्रतश्चैव दैवज्ञाप्यनपश्यतां । श्रूयतामुत्तरं वाक्यं श्रुत्वा च प्रतिगृह्यतां ।
नयेन व्यवहर्त्तव्यं पार्थिवेन यथाक्रमं । सन्धिश्च विग्रहश्चैव यानमासनमेव च ।
द्वैधीभावं संश्रयश्च षाड्गुण्यञ्चिन्तयेत् सदा । बलिनः सन्निकर्षे तु न स्थेयं पण्डितेन वै ।
अपक्रामेद्धि कालज्ञः समर्थो युद्धमाचरेत् । अहं तावत् सहार्य्येण मुहूर्त्तेऽस्मिन् प्रकाशिते ।
जीवितार्थं गमिष्यामि शक्तिमन्नयशक्तवत् । ततः सह्याचलयुतं सहार्य्येणाहमच्युतं । ५१८०
आत्मद्वितीयः श्रीमन्तं प्रवेक्ष्ये दक्षिणापथं । करवीरपुरञ्चैव रम्यं क्रौञ्चपुरं तथा ।
द्रक्ष्यावस्तत्र सहितौ गोमन्तञ्च नगोत्तमं । आवयोर्गमनं श्रुत्वा जितकाशी स पार्थिवः ।
अप्रविश्य पुरीं दर्पादनुसारं करिष्यति । ततः सह्यवनेष्वेव जरासन्धोऽनुयास्यति ।
आवयोर्ग्रहणे चैव नृपतिः प्रयतिष्यति । एषा नः श्रेयसी यात्रा भविष्यति कुलस्य वै ।
पौराणामथ पुर्य्याश्च देशस्य च सुखावहा । न च शत्रुपरिभ्रंशे राजानो विजिगीषवः । ५१८५
परराष्ट्रेषु स्थास्यन्ति स्वधे शत्रुचयं विना । एवमुक्त्वा तु तौ वीरौ कृष्णसङ्कर्षणावुभौ ।
प्रपेदतुरसंभ्रान्तौ दक्षिणौ दक्षिणापथं । तौ तु राष्ट्राणि शतशश्चरन्तौ कामरूपिणौ ।
दक्षिणां दिशमास्थाय चेरतुर्म्मार्गगौ सुखं । सह्यपृष्ठेषु रम्येषु मोदमानावुभौ तथा ।
दक्षिणापथगौ वीरावध्वानं संप्रपेदतुः । तौ तु स्वल्पेन कालेन सह्याचलविभूषितं ।

करवीरपुरं प्राप्तौ सर्वंशजविभूषितं। तौ तत्र गत्वा वेणाया नद्यास्तीरान्तमाश्रितं।
आसेदतु प्ररोहाढ्यं न्यग्रोधं तरुपुङ्गवं। अधस्तात्तस्य वृक्षस्य मुनिं दीप्ततपोधनं।
अंसावसक्तपरशुं जटावल्कलधारिणं। गौरमग्निशिखाकारं तेजसा भास्करोपमं।
क्षत्रान्तकरमक्षोभ्यं वपुष्मन्तमिवार्णवं। न्यस्तसंकुचिताधानं काले हुतहुताशनं।
क्लिन्नं त्रिषवणाम्भोभिराद्यं देवगुरुं यथा। सवत्सां धेनुकां श्वेतां होमधुक्कामदोहनां।
क्षीरारणी कर्षमाणं महेन्द्रगिरिगोचरं। ददर्शतुस्तौ सहितावपरिश्रान्तमव्ययं।
भार्गवं राममासीनं मन्दरस्थं यथा रविं। न्यायतस्तौ तु तं दृष्ट्वा पादमूले कृताञ्जली।
वसुदेवसुतौ वीरौ सधिष्ण्याविव पावकौ। कृष्णस्तम्ऋषिशार्दूलमुवाच वदताम्वरः।
श्लक्ष्णं मधुरया वाचा लोकदृष्टान्तकोविदः। भगवन् जामदग्न्यं त्वामवगच्छामि भार्गवं।
रामं मुनीनामृषभं क्षत्रियाणां कुलान्तकं। त्वया सायकवेगेन क्षिप्तो भार्गव सागरः।
इषुपातेन नगरं कृतं सूर्पारकं त्वया। धनु पञ्चशतायाममिषुपञ्चशतायतं।
सह्यस्य च निकुञ्जेषु स्फीतो जनपदो महान्। अतिक्रम्योदधेर्वेलामपरान्ते निवेशित।
त्वया तत् कार्त्तवीर्य्यस्य सहस्रभुजकाननं। छिन्नं परशुनैकेन स्मरता निधनं पितुः।
इयमद्यापि रुधिरैः क्षत्रियाणां हतत्विषां। स्निग्धा त्वत्परशूत्सृष्टैर्जातपङ्का वसुन्धरा।
रैणुकेयं विजाने त्वां क्षितौ क्षत्रियरोषणं। परशुप्रग्रहे युक्तं यथैवेह रणे तथा।
तदिच्छावस्त्वया विप्र कश्चिदर्थमुपश्रुतं। उत्तरञ्च श्रुतार्थेन प्रत्युक्तनविशङ्कया।
आवां तौ माथुरौ ब्रह्मन् यमुनातीरवासिनौ। यादवौ स्वो मुनिश्रेष्ठ यदि ते श्रुतिमागतौ।
वसुदेवो यदुश्रेष्ठः पिता नौ हि धृतव्रतः। जन्मप्रभृति चैवावां व्रजेष्वेव नियोजितौ।
तौ स्वः कंसभयात्तत्र शङ्कितौ परिवर्द्धितौ। वयश्च प्रथमं प्राप्तौ मथुराञ्च प्रवेशितौ।
तावावां व्युत्थितं हत्वा समाजे कंसमोजसा। पितरं तत्र तत्रैव स्थापयित्वा जनेश्वरं।
स्वमेव कर्म्म चारब्धौ गवां व्यापारकारकौ। अथावयोः पुरं रोद्धुं जरासन्धो व्यवस्थित।
संग्रामान् सुबहून् कृत्वा लब्धलक्षावपि स्वयं। तत स्वपुररक्षार्थं प्रजानाञ्च धृतव्रत।
अकृतास्त्रावनुद्योगौ कर्त्तव्यबलसाधनौ। अरथौ पत्तिकौ युद्धे निस्तनुत्रौ निरायुधौ।
जरासन्धोद्यमभयात् पुराद्द्राविव निःसृतौ। उभावावामनुप्राप्तौ मुनिश्रेष्ठ तवान्तिकं।
आवयोर्मन्त्रमात्रेण कर्त्तुमर्हसि सत्क्रियां। श्रुत्वैतद्भार्गवो रामस्तयोर्वाक्यमनिन्दितं।
रैणुकेय प्रतिवचो धर्म्मसंहितमब्रवीत्। अंशरान्तादहं कृष्ण सम्प्रतीहागत प्रभो।
एक एवं विना शिष्यैर्युवयोर्मन्त्रकारणात्। विदितो मे व्रजे वासस्तव पद्मनिभेक्षण।
दानवानां वधश्चापि कंसस्य च दुरात्मन। विग्रहश्च जरासन्धे विदित्वा पुरुषोत्तम।
तव सभ्रातृकस्येह सम्प्राप्तोऽस्मि वरानन। जाने त्वां कृष्ण गोप्तारं जगत प्रभुमव्ययं।
देवकार्य्यार्थसिद्ध्यर्थमवाप्तं मानुषाद्भुतं। न त्वया अविदितं किञ्चिदिषु लोकेषु विद्यते।

तथापि भक्तिमात्रेण शृणु वक्ष्यामि ते वचः। पूर्व्वजैस्तव गोविन्द पूर्व्वं पुरमिदं कृतं। ५११०
करवीरपुरं नाम राष्ट्रञ्चैव निवेशितं। पुरेऽस्मिन्नृपतिः कृष्ण वासुदेवो महायशाः।
शृगाल इति विख्यातो नित्यं परमकोपनः। नृपेण तेन गोविन्द स्ववंशप्रभवा नृपाः।
दायादा निहताः सर्व्वे वीरद्वेषानुयायिना। अहङ्कारपरो नित्यमजितात्माऽतिमत्सरी।
राज्यैश्वर्य्यमदाविष्टः पुत्त्रेष्वपि च दारुणः। तन्नेह भवतः स्थानं रोचते मे नरोत्तम।
करवीरपुरे घोरे नित्यं पार्थिवदूषिते। श्रूयतां कथयिष्यामि यत्रोभौ शत्रुबाधनौ। ५११५
जरासन्धं बलोदग्रं यत्रोभौ बाधयिष्यतः। तीर्त्वा वेणामिमां पुण्यां नदीमद्यैव सङ्गताः।
विषयान्ते निवेशाय गिरिं गच्छाम दुर्गमं। रम्यं यज्ञगिरिं नाम सह्यस्य प्रवहं गिरिं।
निवासं मांसभक्षाणां चौराणां घोरकर्म्मणां। नानाद्रुमलतायुक्तं चित्रं पुष्पितपादपं।
प्रोष्य तत्र निशामेकां खट्वाङ्गीं नाम निम्नगां। भद्रन्ते सन्तरिष्यामो निकषोपलभूषणां।
गङ्गाप्रपातप्रतिमां स्रस्ताञ्च महतो गिरेः। तस्याः प्रपाते द्रक्ष्यामस्तापसारण्यभूषणं। ५१२०
अमानकामान्मानार्हान् गत्वा तान् धरणीधरान्। द्रक्ष्यामस्तत्र तान् विप्रान् शाम्यतो वै तपोधनान्।
तां तीर्त्वा निम्नगां तत्र तांश्च दृष्ट्वा तपोधनान्। रम्यं क्रौञ्चपुरं नाम गमिष्याम पुरोत्तमं।
वंशजस्तत्र ते राजा कृष्ण धर्म्मरतः सदा। महाकपिरिति ख्यातो वनस्यास्य जनाधिपः।
तन्दृष्ट्वैव राजानं निवासाय गतेऽहनि। तीर्थमानडुहं नाम गमिष्यामः सनातनं।
ततश्च्युता गमिष्यामः सह्यस्य विवरे गिरिं। गोमन्तमिति विख्यातं नैकशृङ्गविभूषितं। ५१२५
खगतैकमहाशृङ्गं दुरारोहं खगैरपि। विश्रामभूतं देवानां ज्योतिर्भिरिव संवृतं।
सोपानभूतं स्वर्गस्य गगणादिमिवोत्थितं। तं विमानावतरणं गिरिं मेरुमिवापरं।
तस्योत्तमे महाशृङ्गे भास्वन्तौ देवरूपिणौ। उदयास्तमये सूर्य्यं सोमञ्च ज्योतिषां पतिं।
ऊर्म्मिमन्तं समुद्रञ्च सपारद्वीपभूषणं। प्रेक्षमाणौ सुखं तत्र नगाग्रे विचरिष्यथः।
शृङ्गस्थौ तस्य शैलस्य गोमन्तस्य वनेचरौ। दुर्गयुद्धेन बाधन्तौ जरासन्धं विजेष्यथः। ५१३०
तत्र शैलगतौ दृष्ट्वा भवन्तौ युद्धदुर्म्मदौ। अशक्यं शैलयुद्धं वै जरासन्धो भविष्यति।
भवद्भ्यामपि युद्धे तु प्रवृत्ते तत्र दारुणे। आयुधैः सह संयोगं पश्यामि न चिरादिव।
संग्रामश्च महान् कृष्ण निर्द्दिष्टस्तत्र दैवतैः। यदूनां पार्थिवानाञ्च मांसशोणितकर्द्दमः।
तत्र चक्रं हलञ्चैव गदां कौमोदकीन्तथा। सौनन्दं मुषलञ्चैव वैष्णवान्यायुधानि च।
दर्शयिष्यन्ति संग्रामे पास्यन्ति च महीक्षितां। रुधिरं कालयुक्तानां वपुर्भिः कालसन्निभैः। ५१३५
स चक्रमुषलो नाम संग्रामः कृष्ण विश्रुतः। दैवतैरिह निर्द्दिष्टः कालस्यादेशसंस्थितः।
तत्र ते कृष्ण संग्रामे सुव्यक्तं वैष्णवं वपुः। द्रक्ष्यन्ति रिपवः सर्व्वे सुराश्च सुरभावन।
तां भजस्व गदां कृष्ण चक्रञ्च चिरविस्मृतं। भजस्व स्वेन रूपेण सुराणां विजयाय वै।
बलस्यायं हलं घोरं मुषलञ्चारिमर्द्दनं। वधाय सुरशत्रूणां भजतां लोकभावनः।

एष ते प्रथमः कृष्ण संग्रामो भुवि पार्थिवै। पृथिव्यर्थे समाख्यातो भारावतरणे सुरै। ५११०
आयुधावाप्तिरत्नैव वपुषो वैष्णवस्य च। लक्ष्म्याश्च तेजसश्चैव व्यूहानाञ्च विदारणं।
ततः प्रभृति संग्रामो धरण्यां शस्त्रमूर्च्छितः। भविष्यति ततः कृष्ण भारतं नाम वैशसं।
तद्गच्छ कृष्ण शैलेन्द्रं गोमन्तन्तु नगोत्तमं। जरासन्धो मृधे चापि विजयेत्तामुपस्थितः।
जरासन्धं निमित्तानि शंसन्ति समुपस्थितं। इदञ्चैवामृतप्रख्यं होमधेन्वाः पयोऽमृतं।
पीत्वा गच्छत भद्रं वो मयादिष्टेन वर्त्मना। ५११५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि परशुरामवाक्ये षण्णवतोऽध्यायः ॥ ९६ ॥
॥ वैशम्पायन उवाच ॥ तत्तु धेन्वाः पयः पीत्वा बलदर्पसमन्वितौ। ततो रामसहितौ प्रस्थितौ यदुपुङ्गवौ।
गोमन्तं पर्व्वतं द्रष्टुं मत्तनागेन्द्रगामिनौ। जामदग्न्यप्रदिष्टेन मार्गेण वदताम्वरौ।
जामदग्न्यहतीयास्ते त्रयस्त्रय इवाग्नयः। शोभयन्ति स्म पन्थानं त्रिदिवं त्रिदशा इव।
*ते चार्घ्यविधिना सर्व्वे ततो वै दिवसक्रमात्। गोमन्तमचलं प्राप्ता मन्दरं त्रिदशा इव।*
लताचारुविचित्रञ्च नानाद्रुमविभूषितं। गन्धागुरुपिनद्धाङ्गं चित्रं चित्रैर्मनोरमैः। ५१२०
द्विरेफगणसङ्कीर्णं शिलासङ्कटपादपं। मत्तबर्हिणनिर्घोषैर्नादितं मेघनादिभिः।
गगणालग्नशिखरं जलदाभकपादपं। मत्तद्विपविषाणाग्रपरिघृष्टोपलाङ्कितं।
कुञ्जरश्वापदगणैः समन्तात् प्रतिनादितं। दरीप्रपाताम्बुरवैश्छन्नं शाद्वलपल्लवैः।
नीलाभ्रचयसङ्काशैस्तैर्व्वर्णैर्यथा नभः। धातुनिस्रावदिग्धाङ्गं सानुप्रस्रवभूषितं।
कीर्णं सुरगणैः कान्तैर्विनाकमिव कामगं। उच्छ्रितं सुविशालाग्रं समूलाम्बुपरिस्रवं। ५१२५
सकाननदरीप्रस्थं श्वेताभ्रगणभूषितं। पनसाम्रातकाशैर्व्वत्सवन्दनचन्दनैः।
तमालैलावनयुतं मरिचक्षुपसंकुलं। पिप्पलीवल्लीकलिलं चित्रमिङ्गुदपादपैः।
द्रुमैः सर्ज्जरसानाञ्च सर्व्वतः प्रतिशोभितं। वंशगुल्मवनैर्गुप्तं सङ्कचिरवनैर्युतं।
सर्ज्जनिम्बार्ज्जुनवनं पाटलीकुलसङ्कुलं। हिन्तालैश्च तमालैश्च पुन्नागैश्चोपशोभितं।
जलेषु जलजैश्छन्नं स्थलेषु स्थलजैरपि। पङ्कजैर्द्रुमषण्डैश्च सर्व्वतः प्रतिभूषितं। ५१३०
जम्बूजम्बूलहृदाढ्यं कद्रुकन्दलभूषितं। चम्पकाशोकबकुलं विल्वतिन्दुकशोभितं।
कुटजैर्नागपुष्पैश्च समन्तादुपशोभितं। नागयूथसमाकीर्णं मृगसङ्घातशोभितं।
सिद्धचारणरक्षोभिः सेवितप्रस्तरान्तरं। विद्याधरगणैर्नित्यमनुकीर्णशिलातलं।
सिंहशार्दूलसङ्घादैः सततं प्रतिनादितं। सेवितं वारिधाराभिश्चन्द्रपादैश्च शोभितं।
स्तुतं विद्याधरगन्धर्व्वैरप्सरोभिरलङ्कृतं। वनस्पतीनां दिव्यानां पुष्पैरुपावचैचितं। ५१३५
सकवज्रप्रहाराणामनभिज्ञं कदाचन। दावाग्निभयनिर्म्मुक्तं देवताभ्युपसंश्रय।
प्रपातप्रभवाभिश्च सरिद्भिरुपशोभितं। जलैश्चन्द्रकोभिरभिरम्यमिव श्रिया।
कामगैरामनाकाशैर्विविधैः पक्षिभिरिव श्रियं। चारीभिर्मृगवीथीभिः कान्ताभिरुपशोभितं।

पार्श्वैरुपलकल्माषैर्मेघैरिव विभूषितं । पादपच्छन्नभूमीभिः सपुष्पाभिः समन्ततः ।
मण्डितं वनराजीभिः प्रमदाभिः पतिं यथा । दरीभिः सुन्दरीभिश्च कन्दरीभिस्तथैव च ।
तेषु तेष्ववकाशेषु सदारमिव शोभितं । श्रोषधीदीप्तशिखरं वानप्रस्थनिषेवितं ।
जातरूपैर्वनोद्देशैः शुचिभैरिव भूषितं । मूलेन सुविशालेन शिरसाऽभ्युच्छ्रितेन च ।
पृथिवीमन्तरीक्षञ्च गाहयन्तमिव स्थितं । ते तमासाद्य गोमन्तं रम्यं भूमिधरोत्तमं ।
रुचिरं रुरुचुः सर्व्वे वासायामरसन्निभाः । रुरुहुस्ते गिरिवरं खमूर्द्धमिव पक्षिणः ।
असज्जमाना वेगेन वैनतेयपराक्रमाः । ते तु तस्योत्तमं शृङ्गमारूढास्त्रिदशा इव ।
अगारं रुचिरं चक्रुर्म्मनसा निर्म्मितोपमं । निविष्टौ यादवौ दृष्ट्वा जामदग्न्यो महामुनिः ।
रामोऽभिमतमक्लिष्टमाप्रष्टुमुपचक्रमे । कृष्ण यास्याम्यहं तात पुरं सूर्पारकं विभो ।
युवयोर्नास्ति वैमुख्यं संग्रामे दानवैरपि । प्राप्तवानस्मि यां प्रीतिं मार्गानुगमनादपि ।
सा मे कृष्णानुगृह्णाति शरीरमिदमव्ययं । इदं तत् स्थानमुद्दिष्टं यत्रायुधसमागमः ।
युवयोर्विहितो देवैः समयः साम्परायिकः । देवानां मुख्य वैकुण्ठ विष्णो देवैरभिष्टुत ।
कृष्ण सर्व्वस्य लोकस्य शृणु मे नैष्ठिकं वचः । यदिदं प्रस्तुतं कर्म त्वया गोविन्द लौकिकं ।
मानुषाणां हितार्थाय साधु मानुषदेहिना । तस्यायं प्रथमः कल्पः कालेन तु नियोजितः ।
जरासन्धेन वै सार्द्धं संग्रामे समुपस्थिते । तत्रायुधबलञ्चैव रूपञ्च रणकर्क्कशं ।
स्वयमेवात्मना कृष्ण आत्मानं संविधत्स्व ह । चक्रोद्यतकरं दृष्ट्वा त्वां गदापाणिमाहवे ।
चतुर्द्दिगुणपीनांसं बिभ्येदपि शतक्रतुः । अद्य प्रभृति ते यात्रा स्वर्गाक्षा समुपस्थिता ।
पृथिव्याममरार्थे च कीर्त्यर्थञ्च सतांवर । वैनतेयस्य चाक्रान्तं वाहनध्वजकर्म्मणि ।
कुरु शीघ्रं महाबाहो गोविन्द वदतांवर । युद्धकामा नृपतयस्त्रिदिवाभिमुखोद्यताः ।
धार्त्तराष्ट्रस्य वशगास्तिष्ठन्ति रणवृत्तयः । राज्ञां निधनदृष्टार्था वैधव्येनाधिवासिता ।
एकवेणीधरा चेयं वसुधा त्वां प्रतीक्षते सपत्नं कृष्ण नचिरं संचिप्यारिविमर्द्दन ।
त्वयि कानुप्यमापन्ने युद्धे च समुपस्थिते । त्वरस्व कृष्ण युद्धाय दानवानां वधाय च ।
स्वर्गाय च सुरेन्द्राणां देवतानां सुखाय च । स्वस्तितोऽस्तु सदा कृष्ण लोकेश्वर महाद्युते ।
मया मत्तनरूपेण येनाहं मत्तमः स्वयं । साधयामि महाबाहो भवतः कार्य्यसिद्धये ।
अस्त्वैव्यत्तत्र तत्राहं यत्र युद्धं भवेत् सदा । इत्युक्ता जामदग्न्यस्तु कृष्णमक्लिष्टकारिणं ।
जयाशिषा वर्द्धयित्वा जगामाभीप्सितां दिशं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गोमन्तारोहणे सप्तमतोऽध्यायः ॥ ८७ ॥

॥ वैशम्पायन उवाच ॥ जामदग्न्ये गते रामे तौ यादवकुलोद्वहौ । गोमन्तशिखरे रम्ये चेरतुः कामरूपिणौ ।
वनमालाकुलोरस्कौ नीलपीताम्बरावुभौ । नीलश्वेतवपुष्मन्तौ गगनस्थाविवाम्बुदौ ।
तौ शैलधातुदिग्धाङ्गौ युवानौ शिखरे स्थितौ । चेरतुस्तत्र कान्तेषु वनेषु रतिलालसौ ।

उदयन्त निरीचन्तौ शशिनं ज्योतिषाम्बरं । उदयास्तमने चैव ग्रहाणां भास्वताम्बरं ।
अथ सङ्कर्षण. श्रीमान् विना कृष्णेन वीर्य्यवान् । चचार तस्य शिखरे नगस्य नगसन्निभः ।
स फुल्लस्य कदम्बस्य प्रच्छाये निषसाद ह । वायुना मदगन्धेन वीज्यमानः सुखेन वै । ५२१०
तस्य तेनानिलौघेन सेव्यमानस्य तत्र वै । मद्यसंस्पर्शजो गन्धः संस्पृशन् घ्राणमागत. ।
तृष्णा चैनं विवेशाशु वारुणीप्रभवा तदा । शुशोष च मुखं तस्य मत्तस्येवापरेऽहनि ।
स्मारित. स पुरावृत्तममृतप्राशनं विभुः । तृषितो मदिरान्वेषी ततस्तं तरुमैचत ।
तस्य प्रावृषि फुल्लस्य यदम्भो जलदोज्झितं । तत्कोटरस्थं मदिरा संजायत मनोहरा ।
तान्तु तृष्णाभिभूतात्मा पिबन्नार्त्त इवासकृत् । मदाच्च चलिताकारः समजायत स प्रभुः । ५२१५
तस्य मत्तस्य वदनं किञ्चिच्चलितलोचनं । घूर्णिताकारमभवच्छरत्कालेन्दुसप्रभं ।
कदम्बकोटरे जाता नाम्ना कादम्बरीति सा । वारुणी रूपिणी तत्र देवानाममृतारणी ।
कादम्बरीमदकलं विदित्वा कृष्णपूर्व्वजं । तिस्रस्त्रिदशनार्य्यस्तमुपतस्थु. प्रियम्वदाः ।
मदिरा रूपिणी भूत्वा कान्तिश्च शशिनः प्रिया. । श्रीश्च देवी वरिष्ठा स्त्री स्वयमेवाम्बुजध्वजा ।
साञ्जलिप्रग्रहा देवी रौहिणेयमुपस्थिता । वारुण्यात्महितं वाक्यमुवाच मदविक्लवं । ५२२०
बलं जयस्व दैत्यानां बलदेव दिवीश्वर । अहन्ते दयिता कान्ता वारुणी समुपस्थिता ।
त्वामेवान्तर्हितं श्रुत्वा शाश्वतं वडवामुखे । चीणपुण्येव वसुधां पर्य्येमि विमलानन ।
पुष्पचक्रानुलिप्तेषु केशरेषूषितं मया । अतिमुक्तेषु चाचोभ्यपुष्पस्तवकवत्सु च ।
साऽहं कदम्बमालीना मेघकाले सुखप्रिया । तृषितं मार्गमाणा त्वां स्वेन रूपेण च्छादिता ।
साऽस्मि पूर्व्वेण योगेन यथैवामृतमन्थने । समीपं प्रेषिता पित्रा वरुणेन तवानघ । ५२२५
सा यथैवार्णवगता तथैव वडवामुखे । त्वयोपभोक्तुमिच्छामि सम्मतस्त्वं हि मे गुरु. ।
न त्वाऽनन्त परित्यक्ष्ये भर्त्सितापि त्वयाऽनघ । नाहं त्वया विना लोकानुत्सहे देव सेवितुं ।
मदिरानन्तरं कान्तिः सङ्कर्षणमुपस्थिता । मदेन गलितश्रोणी किञ्चिदाघूर्णितेचणा ।
प्रोवाच प्रणता साऽद्य बद्धाञ्जलिपुटा सती । जयपूर्व्वेण योगेन संस्मितं योगमिच्छती ।
अहञ्चन्द्रादपि गुरुं सहस्रशिरसं प्रभुं । स्वैर्गुणैरनुरक्ता त्वां यथा च मदिरा तथा । ५२३०
श्रीश्च पद्मालया देवी निधेया वैष्णवोरसि । रौहिणेयोरसि शुभा मालेवामलतां गता ।
सा मालाममलां गृह्य बलस्योरसि दंशिता । पद्मास्ये पद्महस्ता वै सङ्कर्षणमथाब्रवीत् ।
राम रामाभिरामस्त्वं वारुण्या समलङ्कृत. । कान्त्या मया च देवेश सङ्गतश्चन्द्रमा यथा ।
इयञ्च ते मया मौलिरुद्धृता वरुणालयात् । मध्ये शीर्षसहस्रस्य याते भानुरिवाबभौ ।
जातरूपमयञ्चैकं कुण्डलं वज्रभूषितं । आदिपद्मञ्च पद्माच दिव्यं श्रवणभूषणं । ५२३५
कौशेयानि च नीलानि समुद्रार्हाणि भावन । हारश्च पीनतरलः समुद्राभ्यन्तरोषितः ।
देवेमां प्रतिगृह्णीष्व पौरणीं भूषणक्रियां । समयस्ते महाबाहो भूषणानामलङ्क्रिया ।

संरक्ष्य तमलङ्कारं तास्तु तिस्रः सुरस्त्रियः। शुशुभे बलदेवो हि शारदेन्दुसमप्रभः।
स समागम्य कृष्णेन सजलाम्भोदवर्चसा। मुदं लेभे द्युतिशुभां यदमुक्तः शशी यथा।
ताभ्यामुभाभ्यां संलापे वर्त्तमाने गृहे यथा। वैनतेयो नभोऽध्वानमभिचक्राम वेगितः। ५३३०
संग्राममुक्तस्तेजस्वी दैत्यप्रहरणाङ्कितः। देवतानां जयश्लाघी दिव्यस्रगनुलेपनः।
सुप्तस्य शयने दिव्ये क्षीरोदे वरुणालये। विष्णोः किरीटं दैत्येन हृतं वैरोचनेन वै।
तदर्थं तेन संग्रामः कृतो गुर्व्वर्थमोजसा। किरीटार्थे समुद्रस्य मध्ये दैत्यगणैः सह।
मोचयित्वा किरीटन्तु वैष्णवं पततांवरः। व्यत्यक्रमत वेगेन गगणं देवतालयं।
स ददर्श गुरुं शैले विष्णुं कार्य्यान्तरागतं। तेन क्रीडावलम्बेन किरीटेन विराजता। ५३३५
स दृष्ट्वा मानुषं विष्णुं शैलराजशिरोगतं। प्रकाशवेशनिर्म्मुक्तं विभोत्तिमिव मानुषं।
अभिज्ञस्तस्य भावानां गरुत्मान् पततांवरः। चिक्षेप खगतो मौलिं विष्णोः शिरसि हृष्टवत्।
उपेन्द्रमूर्द्ध्नि सा मौलिरपिनद्धा इवापतत्। शिरसः स्थाननिर्म्मुक्ता कृष्णस्यैवास्यशोभयत्।
यथैव मेरुशिखरे भानुर्मध्यन्दिने तथा। वैनतेयप्रयोगेण विदित्वा मौलिमागतां।
कृष्णः प्रहृष्टवदनो रामं वचनमब्रवीत्। त्वरते खलु कार्य्यार्थी देवतानां न संशयः। ५३४०
यथेयमावयोः शैले संग्रामरचना कृता। वैरोचनेन सुप्तस्य मम मौलिर्म्महोदधौ।
शक्रस्य सदृशं रूपं दिव्यमास्थाय सागरात्। याहरूपेण यो नीत आनीतोऽसौ गरुत्मता।
सुव्यक्तं सन्निकृष्टः स जरासन्धो नराधिपः। लक्ष्यन्ते च ध्वजाग्राणि रथानां भ्रातरं हसा।
एतानि विजिगीषूणां शशिकल्पानि भूभृतां। छत्राण्यार्य्य विराजन्ते दंशितानि सितानि च।
अहो नृपरथोदग्रा विमलाञ्छितपङ्क्तयः। अभ्यवर्त्तन्त न शुभ्रा यथा खे हंसपङ्क्तयः। ५३४५
अहो द्योविमलाभानां शस्त्राणां विमलानन। प्रभाभास्करभामिश्राश्चरन्तीव दिशो दश।
एतानि नूनं समरे पार्थिवैरायुधानि च। विप्रानि विनशिष्यन्ति मयि सर्व्वाणि संयुगे।
काले खलु नृपः प्राप्तो जरासन्धो महीपतिः। आवयोर्युद्धनिकषः प्रथमः समरातिथिः।
आर्य्य तिष्ठाव सहितौ न खल्वागते नृपे। युद्धारम्भ प्रयोक्तव्यो सर्वं तावदिहेक्ष्यतां।
एवमुक्त्वा ततः कृष्णः स्वस्थः संग्रामलालसः। जरासन्धवधप्रेप्सुश्चकार बलदर्शनं। ५३५०
वीक्षमाणस्य तान् सर्व्वान् नृपान् यदुवरोऽव्ययः। आत्मानमात्मनोवाच यत्पूर्व्वं दिवि मन्त्रितं।
इमे ते पृथिवीपालाः पार्थिवे वर्त्मनि स्थिताः। ये विनाशं गमिष्यन्ति शास्त्रदृष्टेन कर्म्मणा।
शोचितान् स्वस्तिमामन्ये मृत्युना नृपसत्तमान्। स्वर्गगामीनि चाप्येषां वपूंषि प्रचकाशिरे।
स्थाने भारपरिश्रान्ता वसुधेयं दिवङ्गता। एषा नृपतिसिंहानां बलौघैरभिपीडिता।
मही निरन्तरा चेयं बलराष्ट्राभिसन्तता। अल्पेन खलु कालेन विविक्तं पृथिवीतलं। ५३५५
भविष्यति नरेन्द्रौघैराकीर्णञ्च नभस्तलं।
इति श्रीमहामहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि जरासन्धाभिगमने अष्टाशीतितमोऽध्यायः॥ ८८॥

॥ वैशम्पायन उवाच ॥ जरासन्धस्ततः प्राप्तो नृपः सर्व्वमहीक्षितां । नराधिपैर्बलयुतैरनुयातो महाद्युतिः ।
व्यायतोदग्रतुरगैर्विस्पष्टार्थसमाहितैः । रथैः सांग्रामिकैर्युक्तैरसङ्गगतिभिः क्वचित् ।
हेमकक्षैर्महाघण्टैर्वारणैर्व्वारिदोपमैः । महामात्रोत्तमारूढैः कल्पितैरणवल्लितैः ।
स्वारूढैः सादिभिर्युक्तैः प्रेङ्खमानैः प्रवल्गितैः । वाजिभिर्वायुसङ्काशैः सपक्षैरिव पत्रिभिः । ५४७०
खड्गचर्म्मबलोदग्रैः पत्तिभिर्व्वलिनाम्बरैः । प्रहर्षसंस्थैर्निर्मुक्तैरुत्पतद्भिरिवोरगैः ।
एवञ्चतुर्व्विधैः सैन्यैः प्रचलद्भिरिवाम्बुदैः । नृपोऽभियातो बलवान् जरासन्धो धृतव्रतः ।
स रथैर्नेमिनिर्घोषैर्गजैश्च मदशिक्षितैः । हेषद्भिश्चापि तुरगैः क्ष्वेडितास्फोटितैश्च पत्तिभिः ।
सन्नादयन् दिशः सर्व्वाः सर्व्वाश्चैव गुहाश्रयान् । स राजा सागराकारः ससैन्यः प्रत्यदृश्यत ।
तद्बलं पृथिवीशानां दृप्तयोधजनाकुलं । क्ष्वेडितास्फोटितरवं मेघसैन्यमिवाबभौ । ५४७५
रथैः पवनसम्पातैर्गजैश्च जलदोपमैः । तुरगैश्च सिताभ्राभैः पत्तिभिश्चापि दंशितैः ।
व्यामिश्रं तद्बलं भाति पत्तिद्विपरथाकुलं । घर्म्मान्ते सागरगतं यथाभ्रपटलं तथा ।
सबलास्ते महीपाला जरासन्धपुरोगमाः । परिवार्य्य गिरिं सर्व्वे निवेशाय प्रचक्रिरे ।
बभौ तस्य निविष्टस्य बलस्यौः शिबिरस्य वै । शुक्ले पर्व्वणि पूर्णस्य यथा रूपं महोदधेः ॥
वीतरात्रेऽथ काले तु नृपास्ते कृतकौतुकाः । आरोहणार्थं शैलस्य समेता युद्धलालसाः । ५४८०
समवायीकृताः सर्व्वे गिरिप्रस्थेषु ते नृपाः । निविष्टा मन्त्रयामासुर्युद्धकालकुतूहलाः ।
ततस्तु तुमुलः शब्दः शुश्रुवे पृथिवीक्षितां । युगान्ते भिद्यमानानां सागराणां यथा स्वनः ।
तेषां सक्रुद्धकोपघोषः स्थविरा वेत्रपाणयः । चेरुर्भो शब्द इत्येवं ब्रुवन्तो राजशासनात् ।
तस्य रूपं बलस्यासीत्तु शब्दस्तिमितस्य वै । लीनमीनग्रहस्येव निःशब्दस्य महोदधेः ।
तस्मिन् स्तिमितनिःशब्दे योगादिव महार्णवे । जरासन्धो बृहद्वाक्यं बृहस्पतिरिवाददे । ५४८५
शीघ्रं समभिवर्त्तन्तां बलानीह महीक्षितां । सर्व्वतः पर्व्वतश्चायं बलौघैः परिवार्य्यतां ।
अश्मयन्त्राणि युज्यन्तां क्षेपणीयाश्च मुद्गराः । ऊर्द्ध्वञ्चापि प्रवाह्यन्तां प्रासा वै तोमराणि च ।
ऊर्द्ध्वं प्रक्षेपणार्थाय दृढानि च लघूनि च । शस्त्रपातविघातानि क्रियन्तामाशु शिल्पिभिः ।
शूराणां युध्यमानानां प्रमत्तानां परस्परं । यथा न पतते बाहुस्तथा शीघ्रं विधीयतां ।
दार्य्यतामेष टङ्कौघैः खनित्रैश्च नगोत्तमः । नृपाश्च युद्धमार्गज्ञा विन्यस्यन्तामदूरतः । ५४९०
अद्यप्रभृति सैन्यैर्मे गिरिरोधः प्रवर्त्त्यतां । यावदेतौ पातयामो वसुदेवसुतावुभौ ।
अवलोऽयं शिलायोनिः क्रियतां निम्नलाण्डजः । आकाशमपि बाणौघैर्निःसम्पातं विधीयतां ।
मयानुशिष्टास्तिष्ठन्तु गिरिभूमिषु भूमिपाः । तेषु तेष्ववकाशेषु शीघ्रमारुह्यतां गिरिः ।
मद्रः कलिङ्गाधिपतिश्चेकितानः सबाह्लिकः । काश्मीरराजो गोनर्द्दः करूषाधिपतिस्तथा ।
द्रुमः किम्पुरुषश्चैव पार्व्वतीयाश्च मानवाः । पर्व्वतस्यापरं पार्श्वं क्षिप्रमारोहयन्त्वमी । ५४९५
पौरवो वेणुदारिश्च वैदर्भः सोमकस्तथा । रुक्मी च भोजाधिपतिः सूर्य्याक्षश्चैव मालवः ।

पञ्चालानामधिपतिर्द्रुपदश्च नराधिपः। विन्दानुविन्दावावन्त्यौ दन्तवक्रश्च वीर्य्यवान्।
कारूषि पुरुमित्रश्च विराटश्च महीपतिः। कौशाम्ब्यो मालवश्चैव शतधन्वा विदूरथ।
भूरिश्रवास्त्रिगर्त्तश्च बाणः पञ्चनदस्तथा। उत्तरं पर्व्वतोद्देशमेते दुर्गश्रहा नृपाः।
आरोहन्तु विमर्द्दन्तो वज्रप्रतिमगौरवाः। उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः।
एकलव्यो दृढाश्वश्च क्षत्रधर्म्मा जयद्रथः। उत्तमौजास्तथा शाल्वः कैरलेयश्च कौशिकः।
वैदिशो वामदेवश्च सुकेतुश्चापि वीर्य्यवान्। पूर्व्वं पर्व्वतनिर्य्यूहमेतेष्वायत्तमस्तु नः।
दारयन्तोऽभिधावन्तु वाता इव बलाहकान्। अहञ्च दरदश्चैव चेदिराजश्च सङ्गताः।
दक्षिणं शैलनिचयं दारयिष्याम दंशिताः। एवमेष गिरिः क्षिप्रं समन्ताद्वेष्टितो बलैः
वज्रप्रपातविषमं प्राप्नोतु कदनं महत्। गदिनो ये गदाभिश्च परिघैः परिघायुधाः।
अपरे विविधैः शस्त्रैर्दारयन्तु नगोत्तमम्। एष भूमिधरोऽद्यैव विषमोऽथ शिलाचितः।
कार्य्यो भूमिसमः सर्व्वैः भवद्भिर्व्वसुधाधिपैः। जरासन्धवचः श्रुत्वा पार्थिवेषु च शासनं।
गोमन्तं वेष्टयामासुः सागराः पृथिवीमिव। उवाच राजा चेदीनां देवानां मघवानिव।
किन्नो युद्धेन दुर्गेऽस्मिन् गोमन्ते च नगोत्तमे। दुरारोहाश्मशिखरः प्रांशुपादपसङ्कटः।
कोटस्तृणैश्च बहुभिः परिवार्य्य समन्ततः। अद्यैवादीप्यतां क्षिप्रमनलमन्थिनं कर्म्मणा।
क्षत्रिया कुसुमारा हि रणे सायकयोधिनः। न युक्ताः पर्व्वतारोहे नियोक्तुं पादयोधिनः।
न नाम प्रतिबन्धेन न चावस्कन्दकर्म्मणा। शक्य एष गिरिस्तात दैवैरप्यभिमर्द्दितुं।
दुर्गयुद्धे क्रमः श्रेयान्योधयुद्धेन पार्थिवाः। भक्तोदकेन्धनक्षीणाः पात्यन्ते गिरिसंश्रिताः।
वयं बहव इत्येव नाप्येष निपुणो नयः। यादवौ मावमन्तव्यौ द्वावप्येतौ रणे स्थितौ।
अविज्ञातबलावेतौ श्रूयेते देवसम्मितौ। कर्म्मभिस्तु परैर्विद्म बालावतिबलान्वितौ।
दुष्कराणीह कर्म्माणि कृतवन्तौ यदूत्तमौ। शुष्ककाष्ठैस्तृणैर्व्वृक्षैः सर्व्वतः पर्व्वतोत्तमम्।
अग्निना दीपयिष्यामो दह्येतौ गतचेतनौ। यदि चेन्निष्क्रमिष्येते दह्यमानावितोऽन्तिकं।
समेत्य पातयिष्यामस्त्यक्ष्येते जीवितं ततः। वाक्यमेतत्तु रुरुचे सबलानां महीक्षितां।
यदुक्तं चेदिराजेन नृपाणां हितकाङ्क्षिणा। ततः काष्ठैस्तृणैर्व्वृक्षैः शुष्कशाखैश्च पादपैः।
उपादीप्यत शैलेन्द्रः सूर्य्यपादैरिवाम्बुदः। ददृशुः सर्व्वतस्तूर्णं पावकं तत्र पार्थिवाः।
यथोद्देशं यथावातं शैलस्य लघुविक्रमाः। स वायूद्दीपितो वह्निरुत्पपात समन्ततः।
सधूमज्वालमालाभिर्भाभिः खं दीपयन्निव। सोऽनलः पवनाधूतः काष्ठसञ्चयमूलवान्।
ददाह शैलं श्रीमन्तं गोमन्तं कान्तपादपं। स दह्यमानः शैलेन्द्रो मुमोच विपुलाः शिलाः।
शतशः शतधा भूत्वा महोल्काकारदर्शनाः। स चित्रभानुः शैलेन्द्रं भाभिर्भानुरिवाम्बुदं।
आलिम्पतीव विधिवत् समन्तादर्चिरद्भुतः। धातुभिः पच्यमानैश्च ज्वलद्भिश्चैव पादपैः।
उद्भ्रान्तश्वापदो रौति दह्यमान इवाद्रिराट्। शतशो दह्यमानस्तु स शैलः कृष्णवर्त्मना।

रीतीर्निवर्त्तयामास काञ्चनाञ्जनराजतीः । वह्निना दीपिताङ्गोऽपि गिरिर्नातिविराजते ।
धूमान्धकाराङ्गतनुर्मज्जमान इवाम्बुदे । विशिष्टोपलसङ्घातः कर्कशाङ्गारवर्षणः ।
गिरिर्भात्यनलोद्गारैरुल्काद्दष्टिरिवाम्बुदः । प्रपातप्रस्रवोत्क्लिष्टो धूमसञ्छिन्नोदरः ।
स गिरिर्भस्मतां यातो युगान्ताग्निहतोपमः । विक्लवास्तस्य पार्श्वेभ्यः सर्पा दग्धार्द्धदेहिनः । ५५९०
श्वसन्तः पृथुमूर्द्धानो निश्चेरुरग्निवेचणाः । उत्पत्योत्पत्य गगणात् पुनः पेतुरवाङ्मुखाः ।
रेसुरुद्वेजिताः सिंहाः शार्दूलाश्चानलाविलाः । मुमुचुः पादपाश्चैव दारुनिर्यासजं जलं ।
ववावूर्द्धगतिर्व्वातो भस्माङ्गारामिपिङ्गलः । धूमच्छाया च गगणे दर्पिताभ्रोदरदर्शना ।
त्यज्यमानमहाधानुर्विहगैः श्वापदैरपि । गिरिर्व्वैकल्यमायाति प्राग्रूप्यात् कृष्णवर्त्मनः ।
स मुमोच शिलाः शैलश्चलोदर्पाशिलोच्चयः । वज्रेण पुरुहूतस्य यथा स्याद्दारितस्तथा । ५५९५
आदीप्य तन्तु शैलेन्द्रं चत्रिया व्यूढदंशिताः । अर्द्धक्रोशमपक्रान्ताः पावकेनाभितापिताः
दह्यमाने नगश्रेष्ठे शीर्य्यमाणे महाद्रुमे । धूमभारैरनालक्ष्ये मूले शिथिलताङ्गते ।
सरोषं हि तदा रामो वचनं केशिसूदनं । अभाषे पद्मपत्राक्षं स साक्षान्मधुसूदनं ।
दह्यतेऽयं गिरिस्तात सत्वानुशिखरद्रुमः । आवयोः कृष्ण वैरेण वैरिभिर्वसुधाधिपैः ।
पश्य कृष्णासितोष्णाभां सधूमाभां समन्ततः । वन नो शिरसन्तीव नगाभ्यासे खगोत्तमाः । ५६००
अयं यथावयोरर्थे गोमन्तस्तात दह्यते । अयशस्यमिदं लोके कौलीनञ्च भविष्यति ।
तदस्यानृण्यहेतोर्हि नगस्य नगसन्निभ । चत्रियाञ्छिदनिष्यामि दोर्भ्यामेव नृपाम्बर ।
एते ते चत्रियाः सर्व्वे गिरिमादीप्य दंशिताः । रथिनस्तात दृश्यन्ते यथादेशं युयुत्सवः ।
एवमुक्त्वा गिरेः शृङ्गाच्छैलशृङ्गादिवोडुराट् । निपपात बलः श्रीमान् वनमालीधरो युवा ।
कादम्बरीमदक्षीबो नीलवासाः सितप्रभः । स शारदेन्दुसङ्काशो वनमालाश्रितोदरः । ५६०५
कार्त्तिककुण्डलधरश्चारुमौलिरवाङ्मुखः । निपपात नरेन्द्राणां मध्ये केशवपूर्व्वजः ।
अवप्लुते ततो रामे कृष्णः कृष्णाम्बुदोपमः । गोमन्तशिखराच्छ्रीमानाप्लुतोऽमितविक्रमः ।
ततः सम्पीडयामास पद्भ्यां गिरिवरं हरिः । स पीडितो गिरिस्तेन निर्म्ममज्ज समन्ततः ।
जलाकुलोपलस्तत्र प्रस्नुतो द्विरदो यथा । स तेन वारिणा वह्निस्तत्क्षणात् प्रशमं गतः ।
कल्पान्ते वारिधाराभिर्मेघस्येवेरिवांशुमान् । सिंहर्षभितनिर्घोषः पीतवासा घनाकृतिः । ५६१०
किरीटमूर्द्धा सौम्यास्यः पुण्डरीकनिभेक्षणः । श्रीवत्सवक्षाः सुमुखः सहस्राक्षसमद्युतिः ।
रामादनन्तरं कृष्णः प्लुतो वै वीर्य्यवांस्ततः । ताभ्यामवप्लुताभ्याञ्च चरणैः पीडितो गिरिः ।
मुमोच सलिलोत्पीडां तीव्रपावकशान्तये । सलिलोत्पीडनं दृष्ट्वा पार्थिवा भयमाविशन् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि गोमन्तदाहे नवनवतोऽध्यायः ॥ ९९ ॥
वैशम्पायन उवाच ॥ तौ नगादाप्लुतौ दृष्ट्वा वसुदेवसुतावुभौ । क्षुब्धं नरवरानीकं सर्व्वं संमूढवाहनं ।
साङ्ग्रमहरपौ तौ तु चेरतुस्तत्र यादवौ । मकराविव संरब्धौ समुद्रक्षोभणावुभौ । ५६१५

ताभ्यां मृधे प्रविष्टाभ्यां यादवाभ्यां मतिस्त्वभूत् । आयुधानां पुराणानामादानकृतलक्षणा ।
ततोऽम्बरतलाद्भूयः पतन्ति स्म महात्मनोः । मध्ये राजसहस्रस्य समरप्रतिकाङ्क्षिणोः ।
यानि वै माथुरे युद्धे प्राप्तान्याहवशोभिनोः । तान्यम्बरात् पतन्ति स्म दिव्यान्याहवसंप्लवे ।
लेलिहानानि दीप्तानि दीप्ताग्निसदृशानि वै । निक्षिप्य यानि तत्रैव तानि प्राप्तौ तु यादवौ ।
क्रव्यादैरनुयातानि मूर्त्तिमन्ति वृहन्ति च । तृषितान्याहवे भोक्तुं नृपमांसानि सर्व्वशः ।
दिव्यस्रग्दामधारीणि त्रासयन्तीव खेचरान् । प्रभया भासमानानि दंशितानि दिशो दश ।
हलं सम्वर्त्तकं नाम सौनन्दं मुषलं तथा । चक्रं सुदर्शनं नाम गदां कौमोदकीं तथा ।
चत्वार्य्येतानि तेजांसि विष्णुप्रहरणानि वै । ताभ्यां समवतीर्णानि यादवाभ्यां महामृधे ।
जग्राह प्रथमं रामो हलमप्रतिमं रणे । सर्पन्तमिव सर्पेन्द्रं दिव्यमालाकुलं महत् ।
सव्येन सात्वतां श्रेष्ठो जग्राह मुषलोत्तमं । सौनन्दं नाम बलवान्निरानन्दकरं द्विषां ।
दर्शनीयञ्च लोकेषु चक्रमादित्यवर्चसं । नाम्ना सुदर्शनं नाम प्रीतो जग्राह केशवः ।
दैवैर्निगदितार्थस्य गदा तस्यापरे करे । निबद्धा कुमुदाक्षस्य नाम्ना कौमोदकीति सा ।
तौ सप्रहरणौ वीरौ साक्षाद्विष्णुतनूपमौ । समरे रामगोविन्दौ रिपूंस्तान् प्रत्ययुध्यतां ।
सायुधप्रग्रहौ वीरौ तावन्योन्यमयावुभौ । पूर्व्वजानुजसंज्ञौ तौ रामगोविन्दलक्षणौ ।
समरेऽप्रतिरूपौ तौ विष्णुरेको द्विधाकृतः । द्विपत्सु प्रतिकुर्व्वाणौ पराक्रान्तौ यथेश्वरौ ।
हलमुद्यम्य रामस्तु सर्पेन्द्रमिव कोपितं । चचार समरे वीरो द्विषतामन्तकोपमः ।
विकर्षन्रथवृन्दानि क्षत्रियाणां महात्मनां । चकार रोषं सफलं नागेषु च हयेषु च ।
कुञ्जरान् लाङ्गलोत्क्षिप्तान्मुषलाक्षेपताडितान् । रामोऽभिरामः समरे निर्म्ममन्थ यथाऽचलान् ।
ते वध्यमाना रामेण समरे क्षत्रियर्षभाः । जरासन्धान्तिकं भीता विरथाः प्रतिजग्मिरे ।
तानुवाच जरासन्धः क्षत्रधर्म्मे व्यवस्थितः । धिगेतां क्षत्रवृत्तिं वः समरे कातरात्मनां ।
पराक्रान्तस्य समरे विरथस्य पलायतः । भ्रूणहत्यामिवाश्लाघ्यां प्रवदन्ति मनीषिणः ।
पत्तिनो भुवि चैकस्य गोपस्याल्पबलीयसः । भीताः किं विनिवर्त्तध्वं धिगेतां क्षत्रवृत्तितां ।
क्षिप्रं समभिवर्त्तध्वं मम वाक्येन चोदिताः । अथवा तिष्ठत रथैः प्रेक्षकाः समवस्थिताः ।
यावदेतौ रणे गोपौ प्रेषयामि यमक्षयं । ततस्ते क्षत्रियाः सर्व्वे जरासन्धेन चोदिताः ।
विपन्नाः शरजालानि दृष्ट्वा योद्धुमुपस्थिताः । ते हयैः काञ्चनापीडै रथैश्चैवेन्दुसप्रभैः ।
नागैश्चाम्भोदसङ्काशैर्म्महामात्रप्रचोदितैः । सतनुत्राः सनिस्त्रिंशाः सायुधावरणाम्बराः ।
स्वारोपितधनुष्मन्तः सतूणीराः ससायकाः । सच्छत्रोत्सेधिनः सर्व्वे चारुचामरवीजिताः ।
रणावनिगता रेजुः स्यन्दनस्था महीक्षितः । तौ युद्धरङ्गापतितौ विगाहन्तौ युधाम्बरौ ।
वसुदेवसुतौ वीरौ युयुत्सू प्रत्यदृश्यतां । तद्युद्धमभवत्तत्र तयोस्तेषाञ्च संप्लवे ।
सायकोत्सर्गबहुलं गदानिर्घातदारुणं । ततः शरसहस्राणि प्रतीच्छन्तौ रणैषिणौ ।

तस्थतुर्योधमुख्यौ तावभिद्रुष्टौ यथाऽचलौ । गदाभिश्चैव गुर्व्वीभिः क्षेपणीयैश्च मुद्गरैः ।
अर्द्यमानौ महेष्वासौ यादवौ न चकम्पतुः । ततः कृष्णोऽम्बुदाकारः शङ्खचक्रगदाधरः ।
व्यवर्द्धत महातेजा वातयुक्तो यथाऽनलः । स चक्रेणार्कतुल्येन दीप्यमानेन तेजसा ।
चिच्छेद समरे वीरो नृगजाश्वमहारथान् । गदानिपातनिहता लाङ्गलाकृष्टमूर्त्तयः ।
न शेकुस्ते रणे स्थातुं पार्थिवा नष्टचेतसः । चक्रधारानिकृत्तानि विचित्राणि महीक्षितां । ११९०
रथयूथानि भग्नानि न शेकुश्चलितुं रणे । मुषलाक्षेपभग्नाश्च कुञ्जराः षष्टिहायनाः ।
घना इव घनापाये भग्नदन्ता विचुक्रुशुः । चक्रानलज्वालहताः सादिनः सपदातयः ।
पेतुः पराभवस्तत्र यथा वज्रहतास्तथा । चक्रलाङ्गलनिर्दग्धं तत्सैन्यं विरलीकृतं ।
युगान्तोपहतप्रख्यं सर्व्वं पतितमावभौ । आक्रीडभूमिं दिव्यानामायुधानां वपुष्मतां ।
वैष्णवानां नृपास्ते तु द्रष्टुमप्यबलीयसः । केचिद्रथाः संमृदिताः केचिन्निहतपार्थिवाः । ११९५
भग्नैकचक्रास्तत्परे विशीर्णा धरणीतले । तस्मिन् विमर्दने घोरे चक्रलाङ्गलसंप्लवे ।
दारुणानि प्रवृत्तानि रक्षांस्यौत्पातिकानि च । आर्त्तानां कूजमानानां पाटितानाञ्च काष्ठवत् ।
अन्तो न शक्यतेऽन्वेष्टुं नृनागरथवाजिनां । आपातितनरेन्द्रा सा रुधिरार्द्रा रणक्षितिः ।
योषेव चन्दनार्द्राङ्गी भैरवा प्रतिभाति वै । नरकेशास्थिमज्जान्त्रैः सादितानाञ्च दन्तिनां ।
रुधिरौघास्रवस्तत्र च्छादयामास मेदिनीं । तस्मिन्महाभीषणके नरवाहनसङ्क्षये । १२००
शिवानामशिवैः शब्दैर्नादिते घोरदर्शने । आर्त्तस्तनितशब्दादे रुधिराम्बुह्रदाकुले ।
अन्तकाक्रान्तसदृशे नागदेहैः समावृते । अशास्त्रैर्व्विद्धमिर्योधैस्तुरगैश्चावदारितैः ।
कङ्कैश्च बलगृध्रैश्च नादितप्रतिनादिते । निपाते पृथिवीशानां मृत्युसाधारणे रणे ।
कृष्णः शत्रुवधं कर्त्तुं चचारान्तकदर्शनः । युगान्तार्कप्रभञ्चक्रं कालोऽस्त्रैवायसोऽङ्गदां ।
गृह्य सैन्यावनिगतो बभाषे केशवो नृपान् । किन्न युध्यत वै शूरा हस्त्यश्वरथसंयुताः । १२०५
किमिदं गम्यते शूराः कृतास्त्रा दृढनिश्चयाः । अयं सपूर्व्वजः सङ्ख्ये पदातिः प्रमुखे स्थितः ।
अदृष्टदोषेण रणे भवन्तो येन पालिताः । स इदानीं जरासन्धः किमयं नाभिवर्त्तते ।
एवमुक्ते तु नृपतिर्द्दरदो नाम वीर्य्यवान् । रामं हलायोधभुजं प्रत्ययात् सैन्यमध्यग ।
सभापे स तु तामास्यमुत्ताणमिव सेवनी । एह्येहि राम युध्यस्व मया सार्द्धमरिन्दम ।
तत्र युद्धं तयोरासीद्रामस्य दरदस्य च । स्थिर लोकवरिष्ठाभ्यां कुञ्जराभ्यामिवौजसा । १२१०
योजयित्वा ततः स्कन्धे रामो दरदमाहवे । बलेन बलिनां श्रेष्ठो मुषलेनावपीडयत् ।
स्वकायगतमूर्द्धा वै मुषलेनावपीडितः । पपात दरदो भूमौ दारिताद्रि इवाचलः ।
रामेण निहते तस्मिन् दरदे राजसत्तमे । जरासन्धस्य राज्ञस्तु रामेणासीत् समागमः ।
महेन्द्रस्येव वृत्रेण दारुणो लोमहर्षणः । गदे गृहीत्वा विक्रान्तावन्योन्यमभ्यधावतां ।
कम्पयन्तौ भुवं वीरौ तावुद्यतमहागदौ । ददृशाते महात्मानौ गिरी सशिखराविव । १२१५

व्युपारमन्त युद्धानि सैन्यानां पुरुषर्षभौ । संरम्भादिव धावन्तौ गदायुद्धेषु विश्रुतौ ।
तावुभौ परमाचार्यौ लोके ख्यातौ महाबलौ । मत्ताविव महानागावन्योन्यं समधावतां ॥
ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः । यक्षाश्चाप्सरसश्चैव समाजग्मुः सहस्रशः ।
तद्देवयक्षगन्धर्व्वमहर्षिभिरलङ्कृतं । शुशुभेऽभ्यधिकं राजन्नभो ज्योतिर्गणैरिव ।
अभिदुद्राव रामन्तु जरासन्धो नराधिपः । सव्यं मण्डलमाश्रित्य बलदेवस्तु दक्षिणं । ६११०
तावन्योन्यं प्रजह्राते गदायुद्धविशारदौ । दन्ताभ्यामिव मातङ्गौ नादयन्तौ दिशो दश ।
गदानिपातो रामस्य शुश्रुवेऽशनिनिस्वनः । जरासन्धस्य च रणे पर्व्वतस्येव दीर्य्यतः ।
न स्म कम्पयते रामं जरासन्धकरच्युता । गदा गदाभृतां श्रेष्ठं विन्ध्यं गिरिमिवानिलः ।
रामस्य तु गदावेगं राजा स मगधेश्वरः । सेहे धैर्य्येण महता शिक्षया च व्यपोहयत् ।
ततोऽन्तरीक्षे वागासीत् सुस्वरा लोकसाक्षिणी । न त्वया राम वध्योऽयमलं खेदेन माधव । ६११५
विहितोऽस्य मया मृत्युस्तस्मात् साधु व्युपारम । अचिरेणैव कालेन प्राणांस्त्यक्ष्यति मागधः ।
जरासन्धस्तु तच्छ्रुत्वा विमनाः समपद्यत । न प्राहरत्ततस्तस्मै पुनरेव हलायुधः ।
दीर्घकालं महाराज निघ्नतामितरेतरं । पराजिते त्वपक्रान्ते जरासन्धे महीपतौ ।
विविक्तमभवत् सैन्यं परावृत्तमहारथं । ते नृपाश्चोदितैर्नागैः स्यन्दनैस्तुरगैस्तथा ।
दुद्रुवुर्भीतमनसो व्याघ्राघ्राता मृगा इव । तन्नरेन्द्रैः परित्यक्तं भग्नदर्पैर्महारथैः । ६१२०
घोरं क्रव्यादबहुलं घोरमायोधनं बभौ । द्रवत्सु रथमुख्येषु चेदिराजो महाद्युतिः ।
ज्ञात्वा यादवसम्बन्धं कृष्णमेवान्ववर्त्तत । वृतः कारूषसैन्येन चेदिसैन्येन चानघ ।
सम्बन्धकामो गोविन्दमिदमाह स चेदिराट् । अहं पितृष्वसुर्भर्त्ता तव यादवनन्दन ।
सबलस्त्वामुपावृत्तस्त्वं हि मे दयितः प्रभो । उक्तश्चैव मया राजा जरासन्धोऽल्पचेतनः ।
इत्यादिरम दुर्बुद्धे विग्रहाद्रणकर्म्मणि । तद्दोषोऽद्य मया त्यक्तो मम वाक्यस्य दूषकः । ६१२५
भग्नो युधि जरासन्धस्तथा द्रवति सानुगः । निर्वैरश्चैव संयाति स्वपुरं पृथिवीपतिः ।
त्वय्येव भूयोऽप्यपरं दर्शयिष्यति किल्विषं । तदिमां सन्त्यजाश्चु त्वं महीं हतनराकुलां ।
क्रव्यादगणसंकीर्णां सेवितव्याममानुषैः । करवीरपुरं वीर गच्छाम सबलानुगाः ।
शृगालं वासुदेवं वै द्रक्ष्यामस्तत्र पार्थिवं । इमौ रथवरावग्र्यौ युवयोः कारितौ मया ।
योजितौ शीघ्रतुरगौ खड्गचक्रावकूबरौ । शीघ्रमारुह भद्रन्ते बलदेवसहायवान् । ६१३०
त्वराम करवीरस्थं द्रष्टुं तं वसुधाधिपं ।
॥ वैशम्पायन उवाच ॥ पितृष्वसृपतेर्वाक्यं श्रुत्वा चेदिपतेस्तदा । वाक्यं हृष्टमनाः कृष्णो जगाद जगतो गुरुः ।
अहो सुयुद्धाभिरतौ देशकालोचितौ त्वया । बान्धवप्रतिरूपेण संसितौ वचनामुना ।
देशकालविशिष्टस्य हितस्य मधुरस्य च । वाक्यस्य दुर्लभा लोके वक्तारश्चेदिसत्तम ।
चेदिराजसनाथौ स्व सवृत्तौ तव दर्शनात् । नावयोः किञ्चिदप्राप्यं ययोस्त्वं बन्धुरीदृशः । ६१३५

जरासन्धस्य निधनं ये चान्ये तत्समा नृपाः । पर्य्याप्तौ त्वन्नाथौ स्वः कर्त्तुं चेदिकुलोद्वह ।
यदूनां प्रथमो बन्धुस्त्वं हि सर्व्वमहीक्षितां । अतः प्रभृति संग्रामान् द्रक्ष्यसे चेदिसत्तम ।
चाक्रं सौपवनमित्येवं संग्रामे रणवृत्तयः । कथयिष्यन्ति लोकेऽस्मिन् ये धरिष्यन्ति पार्थिवाः ।
राज्ञां पराजयं युद्धे गोमन्तेऽचलसत्तमे । श्रवणाद्धारणाच्चास्य स्वर्गलोकं व्रजन्ति ते ।
तद्गच्छाम महाराज करवीरं पुरोत्तमं । त्वयोद्दिष्टेन मार्गेण चेदिराज शिवाय वै । ५५६०
ते स्यन्दनगताः सर्व्वे पवनोत्पातिभिर्हयैः । भेजिरे दीर्घमध्वानं मूर्त्तिमन्त इवाग्नयः ।
ते त्रिरात्रोषिताः प्राप्ताः करवीरं पुरोत्तमं । शिवाय च शिवे देशे निविष्टास्त्रिदशोपमाः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि करवीरपुराभिगमने शततमोऽध्यायः ॥ १०० ॥
॥ वैशम्पायन उवाच ॥ तानागतान् विदित्वाऽथ शृगालो युद्धदुर्म्मदः । पुरस्य धर्षणं मत्वा निर्ज्जगामेन्द्रविक्रमः ।
रथेनादित्यवर्णेन भास्वता रणगामिना । आयुधप्रतिपूर्णेन नेमिनिर्घोषहासिना ।
मन्दराचलकल्पेन चित्राभरणभूषिणा । अक्षय्यसायकैस्तूणैः पूर्णेनार्णवघोषिणा । ५५६५
हर्य्यश्वेनाशुगतिनाऽसक्तेन शिखरेष्वपि । हेमकूबरगर्भेण दृढाक्षेणाभिशोभिना ।
सुवन्धुरेण दीप्तेन पतत्त्रिवररंहसा । खगतेनेव शक्रस्य हर्य्यश्वेन रथाद्रिणा ।
सावित्रे नियमे पूर्णे यं ददौ सविता स्वयं । आदित्यरश्मिभिरिव रश्मिभिर्यो निरुह्यते ।
तेन स्यन्दनमुख्येन द्विषत्स्यन्दनघातिना । स शृगालोऽभ्ययात् कृष्णं शलभः पावकं यथा ।
चापपाणिः सतीक्ष्णेषुः कवची हेममालिकः । सितप्रावरणोष्णीषः पावकाकारलोचनः । ५५७०
मुहुर्म्मुहुर्ज्ज्याचपलं विक्षिपन्नुःसहं धनुः । निर्व्वमन् रोषजं वायुं सानलज्वालमण्डलं ।
भाभिर्भूषणपङ्क्तीनां दीप्तो मेरुरिवाचलः । रथस्थ इव शैलेन्द्रः शृगालः प्रत्यदृश्यत ।
तस्यारमितशब्देन रथनेमिस्वनेन च । गुरुत्वेन च भ्राम्यन्तो चचालोर्व्वी यथा पुरा ।
तमापतन्तं श्रीमन्तं मूर्त्तिमन्तमिवाचलं । शृगालं लोकपालाभं दृष्ट्वा कृष्णो न विव्यथे ।
शृगालश्चापि संरब्धः स्यन्दनेनाशुगामिना । समीपे वासुदेवस्य युयुत्सुः प्रत्यदृश्यत । ५५७५
वासुदेवं स्थितं दृष्ट्वा शृगालो युद्धलालसः । अभिदुद्राव वेगेन मेघराशिरिवाचलं ।
वासुदेवः स्थितं कृत्वा प्रतियुद्धाय तस्थिवान् । तद्युद्धमभवत्ताभ्यां समरे घोरदर्शनं ।
उभाभ्यामपि मत्ताभ्यां कुञ्जराभ्यां यथा वने । शृगालस्त्वब्रवीत् कृष्णं समरे समुपस्थितं ।
युद्धरागेण तेजस्वी मोहाच्चलितगौरवः । गोमन्ते युद्धमार्गे वै यत्त्वया कृष्ण चेष्टितं ।
अनायकानां मूर्खाणां नृपाणां दुर्ब्बले बले । स मे सुविदितः कृष्ण क्षत्रियाणां पराजयः । ५५८०
कृपणानाममत्त्वानामयुद्धानां रणोत्सवे । तिष्ठेदानीं यथाकामं स्थितोऽहं पार्थिवे पदे ।
क्व यास्यसि मया रुद्धो रणेष्वपरिनिष्ठितः । न चाहमेकं सबलो युक्तस्त्वां योद्धुमुत्सहे ।
अहमेकस्त्वमप्येको द्वौ युध्याव रणे स्थितौ । किं जनेन निरस्तेन त्वं वाऽहं वा रणे स्थितः ।
हते मयि त्वमप्येको वासुदेवो भविष्यसि । धर्म्मयुद्धेन निधनं प्रयातेऽकृततरो रणे ।

लोकेऽस्मिन् वासुदेवोऽहं भविष्यामि हते त्वयि । शृगालस्य वचः श्रुत्वा वासुदेव चमापर ।
इष्यत प्रहरस्वेति तमुक्त्वा चक्रमाददे । तत सायकजालानि शृग ल क्रोधमूर्च्छित ।
चिक्षेप कृष्णे घोराणि युद्धाय लघुविक्रम । शस्त्राणि यानि चान्यानि मुसलाद्या नि संयुगे ।
पातयामास गोविन्दे स शृगाल प्रतापवान् । शृगालप्रहितैरस्त्रैः पावकज्वालमालिभि ।
निर्दयाभिहत कृष्ण स्थितो गिरिरिवाचलः । सोऽस्त्रप्रहाराभिहत किञ्चिद्रोषसमन्वित ।
चक्रमुद्यम्य गोविन्द शृगालोरसि चाक्षिपत् । त रयस्थं प्रमाणस्थ शृगालं युद्धदुर्मदं ।
जघान समरे चक्र जातदर्पं महाबल । निहत्य समरे शूरं शृगाल युद्धकामुक ।
तत सुदर्शनं चक्र पुनरायाद्धरो करं । चक्रेणोरसि निर्भिन्न स गतासुर्गतोत्सव ।
पपात क्षतजस्रावी शृगालोऽद्रिरिवाहत । निशम्य तं निपतितं वज्रपातादिवाचलं ।
तस्य सैन्यान्यपययुर्विमनांसि हते नृपे । केचित् प्रविश्य नगर कश्मलाभिहता भृशं ।
रुरुदुर्दु खसन्तप्ता भर्तृशोकाभिपीडिता । केचित्तत्रैव शोचन्त स्मरन्त सुकृतानि च ।
पतित भूमिप भूमौ न त्यजन्ति स्म दु खिता । ततो मेघनिनादेन स्वरेणारिविमर्दन ।
कृष्ण कमलपत्राक्षो जनानामभय ददौ । चक्राचितेन हस्तेन राजताङ्गुलिपर्वणा ।
न भेतव्यं न भेतव्यमिति तानभ्यभाषत । नास्य पापस्य दोषेण निराबाधकरं जनं ।
घातयिष्यामि समरे नेदं क्रूरव्रत भृश । अश्रुपूर्णमुखा दीना क्रन्दमाना भृशं तदा ।
पतितोऽयं शृगालस्य भ्रष्ट संक्षीणमानस । ते स्म पश्यन्ति पतितं धरण्यां धरणीपतिं ।
चक्रनिर्दारितोरस्कं भिन्नशृङ्गमिवाचलं । विलपन्ति स्म समरे सचिवा सप्रजा भृश ।
साश्रुपातेक्षणा दीना शोकस्य वशमागता । तेषां रुदितशब्देन पौराणां विविधै स्वरै ।
महिष्यस्तस्य निष्पेतु सपुत्रा रुदितानना । तास्त निपातितं दृष्ट्वा श्लाघ्य भूमिपति पतिं ।
स्तनानारुज्य करजैर्भर्त्तार पर्य्यदेवयन । उरांसि शिरांस्येव शिरोजान्याकुलान्यपि ।
निर्दय ताडयन्त्यस्ता विस्वर रुरुदु स्त्रिय । तस्योरसि सदु खार्त्ता रुदितक्लिन्नलोचना ।
पेतुरूर्द्ध्वभुजा सर्व्वा छिन्नमूला लता इव । तासां बाष्पाम्बुपूर्णानि नेत्राणि नृपयोषिता ।
वारिविप्रहतानीव पद्मानि चकाशिरे । ता पति पतित भूमौ रुदन्त्यो हृदि ताडिता ।
लालप्यमाना करुण योषित पर्य्यदेवयन् । पुत्रमस्य पुरस्कृत्य बालं प्रस्रुतलोचनं ।
शक्रदेव पितु पार्श्वे द्विगुणं रुरुदु स्त्रिय । अयन्ते वीर विक्रान्तो बाल पुत्रो न पण्डित ।
त्वद्विहीन कथमयं पदे स्थास्यति पैतृके । कथमेकपदे त्यक्त्वा गतोऽस्यन्त पुर परं ।
अतृप्तास्तव भोग्यानां किं कुर्म विधवा वय । तस्य पद्मावती नाम महिषी प्रमदोत्तमा ।
पुत्रमाता सुत गृह्य वासुदेवमुपस्थिता । यस्त्वया पातितो वीर रणश्लाघ्येन कर्म्मणा ।
तस्य प्रेतगतस्याद्य पुत्रस्त्वा शरण गत । यदि त्वा प्रणमेताधो कुर्य्याद्वा शासनं तव ।
नायमेकप्रहारेण जनस्तापेत दारुण । यदि कुर्य्यादय मूढस्त्वयि बान्धवक विधिं ।

नैवं परीतः कृपणः सेवेत धरणीतलं। अयमस्य विपन्नस्य बान्धवस्य तवानघ। ५९०५
सन्ततीरक्ष्यतां वीर पुत्रः पुत्र इवात्मजः। तस्यास्तद्वचनं श्रुत्वा महिष्या यदुनन्दनः।
मृदुपूर्व्वमिदं वाक्यमुवाच वदतांवरः। राजपत्नि गतो रोषः सहानेन दुरात्मना।
प्रकृतिस्था वयं जाता देवि नैवास्मि मत्सरः। रोषो मे विगतः साध्वि तव वाक्यैरकिल्बिषैः।
योऽयं पुत्रः शृगालस्य ममाप्येष न संशयः। अभयञ्चाभिषेकञ्च ददाम्यस्मै सुखाय वै।
आह्वयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा। पितृपैतामहे राज्ये तव पुत्रोऽभिषिच्यतां। ५९१०
ततः प्रकृतयः सर्व्वाः पुरोधा मन्त्रिणस्तथा। अभिषेकार्थमाजग्मुर्य्यत्र तौ रामकेशवौ।
ततः सिंहासनस्थं तं राजपुत्रं जनार्द्दनः। अभिषेकेण दिव्येन योजयामास वीर्य्यवान्।
अभिषिच्य शृगालस्य करवीरपुरे सुतं। कृष्णस्तदहरेवाशु प्रस्थानमभ्यरोचयत्।
रथेन हरियुक्तेन तेन युद्धार्ज्जितेन वै। केशवः प्रस्थितोऽध्वानं शक्रस्त्रिदिवं यथा।
शक्रदेवोऽपि धर्म्मात्मा सह मात्रा परन्तपः। सबालवृद्धयुवतिर्मुख्याः प्रकृतयस्तथा। ५९१५
शिविकायां समारोप्य शृगालं युद्धदुर्म्मदं। सहिताः दूरमार्गेण पश्चिमाभिमुखा ययुः।
मेधनेन विधानेन चक्रुस्ते तस्य सत्क्रियां। सत्कारं कारयामासुः पितृणां पारलौकिकं।
उद्दिश्योद्दिश्य राजानं श्राद्धं कृत्वा सहस्रशः। ततस्ते सलिलं दत्त्वा नामगोत्रादिकीर्त्तनैः।
पितर्य्युपरते घोरशोकसन्दिग्धमानसः। कृत्वोदकं तदा राजा प्रविवेश पुरोत्तमं।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शृगालवधे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

॥ वैशम्पायन उवाच ॥ तौ तु स्वल्पेन कालेन पञ्चरात्रोषितौ पथि। दमघोषेण सत्कृत्य एकरात्रोषितौ ततः। ५९२०
जग्मतुः सहितौ वीरौ मुदा परमया युतौ। नगरीं मथुरां प्राप्तौ वसुदेवसुतावुभौ।
ततः प्रत्युद्गताः सर्व्वे यादवा यदुनन्दनौ। सबला उग्रसेनश्च उपसेनपुरोगमाः।
श्रेण्यः प्रकृतयश्चैव मन्त्रिणश्च यथोदिताः। सबालवृद्धा सा चैव पुरी समभिवर्त्तत।
नन्दितूर्य्याण्यवाद्यन्त स्तूयेतां पुरुषोत्तमौ। रथ्याः पताकामालिन्यो भासन्ति स्म समन्ततः।
हृष्टप्रमुदिता सर्व्वा पुरी परमशोभिता। आवेशयोरागमने यथैवेन्द्रमहे तथा। ५९२५
मुदितास्तत्र गायन्ति राजमार्गेषु गायनाः। स्तवाशीर्म्मङ्गला गाथा यादवानां प्रियङ्कराः।
गोविन्दरामौ संप्राप्तौ भ्रातरौ लोकविश्रुतौ। स्वे पुरे निर्भयाः सर्व्वे क्रीडध्वं यादवाः सुखं।
न तत्र कश्चिद्दीनो वा मलिनो वा विचेतनः। मथुरायामभूत् कश्चिद्रामकृष्णसमागमे।
वयांसि साधुवाक्यानि प्रहृष्टा गोवृषद्विपाः। नरनारीगणाश्चैव भेजिरे मानसं सुखं।
शिवाश्च प्रववुर्व्वाता विरजस्का दिशो दश। दैवतानि च सर्व्वाणि हृष्टान्यायतनेष्वपि। ५९३०
यानि लिङ्गानि लोकस्य हृष्टानीह कृते युगे। तानि सर्व्वाण्यदृश्यन्त तयोरागमने तदा।
ततः काले शिवे पुण्ये स्यन्दनेनारिमर्द्दनौ। हरियुक्तेन तौ वीरौ प्रविष्टौ मथुरां पुरीं।
प्रविशन्तौ पुरीं रम्यां गोविन्दं राममेव च। अनुजग्मुर्य्यदुगणाः शक्रं देवगणा इव।

वसुदेवस्य भवनं पितुस्तौ यदुनन्दनौ । प्रविष्टौ हृष्टवदनौ चन्द्रादित्याविवाचलं ।
ततस्तौ वसुदेवस्य पादौ समभिवाद्य च । उग्रसेनन्तु राजानमन्यांश्च यदुपुङ्गवान् । ६०११
यथान्यायं पूजयित्वा तौ सर्व्वैश्चाभिनन्दितौ । जग्मतुर्हृष्टमनसौ मातुरेव निवेशनं ।
तत्रायुधानि विन्यस्य गृहे स्वे स्वैरचारिणौ । मुमुदाते यदुवरौ वसुदेवसुतावुभौ ।
एवं तावेकनिर्म्माणौ मथुरायां शुभाननौ । उग्रसेनानुगौ भूत्वा कञ्चित् कालं विचेरतुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मथुराप्रत्यागमने द्व्यधिकशततोऽध्यायः ॥ १०२ ॥
॥ वैशम्पायन उवाच । कस्यचित्त्वथ कालस्य सत्वा गोपेषु सौहृदं । जगामैको व्रजं रामः कृष्णस्यानुमते स्थितः ।
स गतस्तत्र रम्याणि ददर्श विपुलानि वै । भुक्तपूर्व्वाण्यरण्यानि सरांसि सुरभीणि च । ६०•
स प्रविष्टस्तु वेगेन तं व्रजं कृष्णपूर्व्वजः । वन्येन रमणीयेन वेशेनालङ्कृतः प्रभुः ।
स तानभाषत प्रीत्या यथापूर्व्वमरिन्दमः । गोपांस्तेनैव विधिना यथान्यायं यथावयः ।
तथैव प्राह तान् सर्व्वांस्तथा च परिहर्षयन् । तथैव सह गोपीभिर्योजयन्मधुराः कथाः ।
तमूचुः स्थविरा गोपाः प्रियं मधुरभाषिणः । रामं रमयतां श्रेष्ठ प्रवासात् पुनरागतं ।
स्वागतं ते महाबाहो यदूनां कुलनन्दन । अद्य स्म निर्वृतास्तात यत्त्वा पश्यामहे वयं । ६०२
प्रीताश्चैव वयं वीर यत्त्वं पुनरिहागतः । विख्यातस्त्रिषु लोकेषु रामः शत्रुभयङ्करः ।
यद्वंशीया वयं नूनं त्वया यादवनन्दन । अथवा प्राणिनस्तात रमन्ते जन्मभूमिषु ।
त्रिदशानां वयं मान्या ध्रुवमद्यामलानन । ये स्म दृष्टास्त्वया तात काङ्क्षमाणास्तवागमं ।
दिष्ट्या ते निहता मल्ला कंसश्च विनिपातितः । उग्रसेनोऽभिषिक्तश्च साम्राज्येनात्मजेन वै ।
समुद्रे च श्रुतोऽस्माभिस्तिमिना सह विग्रहः । गोमन्ते च श्रुतोऽस्माभिः क्षत्रियैः सह विग्रहः । ६०२०
दरदस्य वधश्चैव जरासन्धपराजयः । तत्रायुधावतरणं श्रुतं नः परमाहवे ।
वधश्चैव शृगालस्य करवीरपुरोत्तमे । तत्सुतस्याभिषेकश्च नागराणाञ्च सान्त्वनं ।

सद्यो हृतानि पद्मानि विकचान्युत्पलानि च। शिरसा चारुकेशेन किञ्चिदावृत्तमौलिना।
श्रवणैकावलम्बेन कुण्डलेन विराजता। चन्दनार्द्रेण पीनेन वनमालावलम्बिना।
विबभावुरसा रामः कैलासेनेव मन्दरः। नीले वसानो वसने प्रत्यग्रजलदप्रभे।
रराज वपुषा शुभ्रस्तिमिरौघे यथा शशी। लाङ्गलेनावसक्तेन भुजगाभोगवर्त्तिना।
तथा भुजाग्रश्लिष्टेन मुषलेन च भास्वता। स मत्तो बलिनां श्रेष्ठो रराजाघूर्णिताननः।
शैशिरीषु त्रियामासु यथा खेदालसः शशी। रामस्तु यमुनामाह स्नातुमिच्छे महानदि।
एहि मामभिगच्छ त्वं रूपिणी सागरङ्गमे। सङ्कर्षणस्य मत्तोक्तां भारतीं परिभूय सा।
नाभ्यवर्त्तत तं देशं स्त्रीस्वभावेन मोहिता। ततश्चुक्रोध बलवान् रामो मदसमीरितः।
चकार स हलं हस्ते कर्षणाधोमुखं बली। तस्यामुपरि मेदिन्यां पेतुस्तामरसस्रजः।
मुमुचुः पुष्पकोषैश्च पुष्परेणुरुणं जलं। स हलेनानताग्रेण कूले गृह्य महानदीं।
चकर्ष यमुनां रामो व्युत्थितां वनितामिव। सा विह्वलजलस्रोता ह्रदप्रस्थितवस्तया।
व्यावर्त्तत नदी भीता हलमार्गानुसारिणी। लाङ्गलादिष्टमार्गा सा वेगगा वक्रगामिनी।
सङ्कर्षणभयत्रस्ता योषेवाकुलताङ्गता। पुलिनश्रोणिबिम्बोष्ठी मृदितैस्तोयताडितैः।
फेनमेखलसूत्रैश्च छिन्नैस्तीरान्तगामिनी। तरङ्गविषमापीडा चक्रवाकोन्मुखस्तनी।
वेगगम्भीरवक्राङ्गी त्रस्तमीनविभूषणा। सितहंसेक्षणापाङ्गी काशक्षौमोज्झिताम्बरा।
तीरजोद्धूतकेशान्ता जलस्खलितगामिनी। लाङ्गलोल्लिखितापाङ्गी क्षुभिता सागरङ्गमा।
मत्तेव कुटिलापाङ्गी राजमार्गेण गच्छती। कृष्यते सा स्म वेगेन स्रोतस्खलितगामिनी।
उन्मार्गानीतमार्गा सा येन वृन्दावनं वनं। वृन्दावनस्य मध्येन सा नीता यमुना नदी।
रोरूयमाणेव खगैरन्विता तीरवासिभिः। सा यदा समनुक्रान्ता नदी वृन्दावनं वनं।
तदा स्त्रीरूपिणी भूत्वा यमुना राममब्रवीत्। प्रसीद नाथ भीताऽस्मि प्रतिलोमेन कर्म्मणा।
विपरीतमिदं रूपं तोयस्य मम जायते। असत्यहं नदीमध्ये रौहिणेय त्वया कृता।
कर्षणेन महाबाहो स्वमार्गव्यभिचारिणी। प्राप्तां मां सागरे नूनं सपत्न्यो वेगगर्व्विताः।
फेनहासैर्हसिष्यन्ति तोयव्याहतगामिनीं। प्रसादं कुरु मे वीर याचे त्वां कृष्णपूर्व्वज।
सुप्रसन्नमना नित्यं भवस्व त्वं सुरोत्तम। कर्षणायुधहृष्टोऽसि रोषोऽयं विनिवर्त्यतां।
गच्छामि चरणौ मूर्द्ध्ना तवाहं लाङ्गलध्वज। मार्गमादिष्टमिच्छामि क्व गच्छामि महाभुज।
प्रणामावनतां दृष्ट्वा यमुनां लाङ्गलायुधः। प्रत्युवाचार्णवबधूं मदक्लान्तमिदं वचः।
लाङ्गलादिष्टमार्गां त्वमिमं मे प्रियदर्शने। देशमन्नप्रदानेन प्लावयस्वाखिलं शुभे।
एष ते सुभ्रु सन्देशः कथितः सागरङ्गमे। शान्तिं व्रज महाभागे गम्यतां च यथासुखं।
यावत् स्थास्यति लोकोऽयं तावत् स्थास्यति मे यशः। यमुनाकर्षणं दृष्ट्वा सर्व्वे ते व्रजवासिनः।
साधु साध्विति रामाय प्रणामं चक्रिरे तदा। तां विसृज्य महावेगां तत्र सर्व्वान् वनौकसः।

ततः सञ्चिन्त्य मनसा बुद्ध्या निश्चित्य चैव ह । पुनः प्रतिजगामाशु मथुरां रोहिणीसुतः ।
स गत्वा मथुरां रामो भवने मधुसूदनं । परिवर्त्तमानं ददृशे पृथिव्याः सारमव्ययं ।
तथैवाक्लिष्टवेशेन सोपसृष्टो जनार्द्दनं । प्रत्यग्रवनमालेन वक्षसाऽतिविराजता । ९८९६
स दृष्ट्वा तूर्णमायान्तं रामं लाङ्गलधारिणं । सहसोत्थाय गोविन्दः प्रददावासनोत्तमं ।
उपविष्टं ततो रामं पप्रच्छ कुशलं प्रति । बान्धवेषु च सर्व्वेषु गोषु चैव जनार्द्दनः ।
प्रत्युवाच ततो रामो भ्रातरं साधुभाषिणं । सर्व्वत्र कुशलं कृष्ण येषां कुशलमिच्छसि ।
ततस्तयोर्विचित्रार्थाः पौराण्यो ह्यभवन् कथाः । वसुदेवाग्रतः पुण्या रामकेशवयोस्तदा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि यमुनाकर्षणे द्व्यधिकशततोऽध्यायः ॥ १०२ ॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नन्तरे प्राप्ता लोकप्रावृत्तिका नराः । चक्रायुधगृहं सर्व्वे लोकपालगृहोपमं । ९९००
तेष्वात्ययिकशंसेषु लोकप्रावृत्तिकेष्विह । कृतसंज्ञा यदुश्रेष्ठाः समेताः कृष्णसंसदि ।
समागतेषु सर्व्वेषु यदुमुख्येषु संसदि । प्रावृत्तिका नराः प्राहुः पार्थिवात्ययिकं वचः ।
जनार्द्दन नरेन्द्राणां पार्थिवानां समागमः । शशंसुर्द्दाक्षिणात्यानां सुमहानित्यनेकशः ।
त्वरितास्तत्र गच्छन्ति नानाजनपदेश्वराः । कुण्डिने पुण्डरीकाक्ष भीष्मपुत्रस्य शासनात् ।
प्रकाशं सा कथा तत्र श्रूयते मनुजेरिता । रुक्मिणी किल नाम्ना स्त्री रुक्मिणः प्रथिता स्वसा । ९९०१
भावी स्वयम्वरस्तत्र तस्याः किल जनार्द्दन । इत्यर्थमेते नृवरा गच्छन्ति सबलानुगाः ।
तस्यास्त्रैलोक्यसुन्दर्य्यास्तूर्णमेष्यहनि यादव । रुक्मभूषणभूषिष्ठा भविष्यति स्वयम्वरः ।
राज्ञां तत्र समेतानां हस्त्यश्वरथगामिनां । द्रक्ष्याम शतशस्तत्र वृन्दानि च महात्मनां ।
सिंहशार्द्दूलदर्पाणां मत्तद्विरदगामिनां । सदा युद्धप्रियाणां हि परस्परसमर्षिणां ।
जयाय शीघ्रं त्वरिता बलौघैः समन्विताः । निरुद्धाः पृथिवीपालाः किमेकान्तपरा वयं । ९९१०
निरुत्साहा भविष्यामो गच्छामो यदुसत्तम । श्रुत्वैतत् केशवो वाक्यं हृदि शल्यमिवार्पितं ।
निर्जगाम यदुश्रेष्ठो यदूनां सहितो बलैः । यादवास्ते बलोदग्राः सर्व्वे संग्रामलालसाः ।
निर्ययुः स्यन्दनैर्हृष्टैर्युग्यैर्भितास्त्रिदशा इव । बलापेन नियुक्तेन हरिरोशानमन्वितः ।
चक्रोद्यतकरः कृष्णो गदापाणिर्व्यरोचत । यादवाश्चापरे तत्र वासुदेवानुयायिनः ।
रथैरादित्यसङ्काशैः किङ्किणीप्रतिनादितैः । उग्रसेनस्तु गोविन्दं प्राह निश्चितदर्शनः । ९९११
तिष्ठ त्वं नृपशार्द्दूल भ्राता मे सहितोऽनघ । क्षत्रिया निहतिशक्ताः शास्त्रशास्त्रिद्रदर्शिनः ।
पुरीं शून्यामिमां घोर जघन्ये पीडयन्ति नः । अस्माकं प्रहिताः सर्व्वे शराश्च भवतोऽनुगाः ।
मोदन्ते सुखिनस्तत्र देवलोके यथाऽमराः ।
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा भोजराजो महायशाः । कृष्णं स्नेहेन विज्ञप्तं सभायं समागतं ।
कृष्ण कृष्ण महाबाहो यदूनां नन्दिवर्द्धन । श्रूयतां यदहं त्वद्य वक्ष्यामि रिपुसूदन । ९९१०
मया विहीनाः सर्व्वे स्म न शक्ताः सुखमासितुं । पुरेऽस्मिन् निर्याते वा पतिहीना इव स्त्रियः ।

त्वन्नाथा वयं तात तदाऽऽबलमाश्रिता । बिभीमो न नरेन्द्राणां सेन्द्राणामपि मानद ।
विजयाय यदुश्रेष्ठ यत्र यत्र गमिष्यसि । तत्र त्वं सहितोऽस्माभिर्गच्छेथा यादवर्षभ ।
तस्य राज्ञो वच श्रुत्वा सस्मितं देवकीसुत । यथेष्ट भवतामद्य तथा कर्त्ताऽस्म्यसंशयं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मन्त्रोपाहरणे चतुरधिकशततोऽध्याय ॥ १०४ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु कृष्णो हि जगामाशु रथेन वै । भीष्मकस्य गृहं प्राप्तो लोहितायति भास्करे ।
प्राप्ते राजसमाजे तु शिविराकीर्णभूतले । रङ्गं सुविपुलं दृष्ट्वा राजसी तनुमाविशत ।
वित्रासनार्थं भूपाना प्रकाशार्थं पुरातन । मनसा चिन्तयामास वैनतेयं महाबलं ।
ततश्चिन्तितमात्रस्तु विदित्वा विनतात्मज । सुखलक्ष्यं वपु कृत्वा निलिल्ये केशवान्तिके ।
तस्य पक्षनिपातेन पवनोद्भ्रान्तकारिणा । कम्पिता मनुजा सर्व्वे न्युब्जाश्च पातिता भुवि ।
शिरोभि पतिता सर्व्वे प्रविपन्न यथोरगा । तान् सन्निपतितान्दृष्ट्वा कृष्णो गिरिरिवाचल ।
स तदा पक्षवातेन मेने पतगसत्तम । ददर्श गरुडं प्राप्तं दिव्यस्रगनुलेपनं ।
पक्षवातेन पृथिवीं क्षालयन्तं मुहुर्मुहु । पृष्ठासक्तै महारौद्रैर्लिह्यद्भिरिवोरगै ।
वैष्णवं हस्तसंस्थेव नाम्यमानमवाङ्मुख । चरणाभ्यां प्रकर्षन्तं पाण्डरं भोगिनाम्वरं ।
हेमपत्त्रैरुपचितं धातुमन्तमिवाचल । अमृतारम्भहर्त्तारं द्विजिह्वेन्द्रविनाशनं ।
त्रासनं दैत्यसंघानां वाहनं ध्वजलक्षण । तं दृष्ट्वा सध्वजं प्राप्तं सचिवं साम्परायिकं ।
धृतिमन्तं गरुत्मन्तं जगाद मधुसूदन । दृष्ट्वा परमसंहृष्ट स्थितं देहमिवापरं ।
तुल्यसामर्थ्यया वाचा गरुत्मन्तमुपस्थितं ।
॥ कृष्ण उवाच ॥ स्वागतं खचरश्रेष्ठ सुरसेनारिमर्द्दन । विनताहृदयानन्द स्वागतं केशवप्रिय ।
प्रज पत्त्ररथश्रेष्ठ कैशिकस्य निवेशनं । वयमत्रैव गत्वाऽद्य प्रतीक्षाम स्वयम्वरं ।
राज्ञां तत्र समेतानां हस्त्यश्वरथगामिनां । द्रक्ष्याम शतशस्तत्र समेतानां महात्मनां ।
एवमुक्त्वा महाबाहुर्वैनतेय महाबलं । जगामाथ पुरीं कृष्ण कैशिकस्य महात्मन ।
वैनतेयसख श्रीमान् यादवेश महारथे । विदर्भनगरीं प्राप्ते कृष्णे देवकिनन्दने ।
दृष्ट्वा प्रमुदिता सर्व्वे निवासायोपचक्रमु । सर्व्वे शस्त्रायुधधरा राजानो बलशालिन ।
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु राजा नयविशारद । कैशिकस्तत उत्थाय प्रहृष्टेनान्तरात्मना ।
अर्घ्यमाचमनीं दत्त्वा स राजा कैशिक स्वयं । सत्कृत्य विधिवत् कृष्णं स्वपुरं संन्यवेशयत् ।
पूर्व्वमेव तु कृष्णाय कारितं दिव्यमन्दिरं । विवेश सबल श्रीमान् कैलासं शङ्करो यथा ।
खानपानादिरत्नौघैरर्चितो वासवानुज । सुखेनैवोषित कृष्णस्तस्य राज्ञो निवेशने ।
पूजितो बहुमानेन स्नेहपूर्णेन चेतसा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे पञ्चाधिकशततोऽध्याय ॥ १०५ ॥
॥ वैशम्पायन उवाच ॥ ते कृष्णमागतं दृष्ट्वा वैनतेयसहाच्युतं । बभूवुश्चिन्तयाविष्टा सर्व्वे नृपतिसत्तमा ।

ते समेत्य गता राजन् राजानो भीमविक्रमाः । मन्त्रयुर्मन्त्रकुशला नीतिशास्त्रार्थवित्तमाः । ५८५०
भीष्मकस्य सभां गत्वा रम्यां हेमपरिष्कृतां । सिंहासनेषु चित्रेषु विचित्रास्तरणेषु च ।
निषेदुस्ते नृपवरा देवा देवसभामिव । तेषां मध्ये महाबाहुर्जरासन्धो महाबलः ।
बभाषे सुमहातेजा देवान विश्वेश्वरो यथा ।
॥ जरासन्ध उवाच ॥ श्रूयतां भो नृपश्रेष्ठा भीष्मकस्य महामतिः । कथ्यमानं यथा बुद्ध्या वचनं वदताम्बराः ।
योऽसौ कृष्ण इति ख्यातो वसुदेवसुतो बली । वैनतेयसहायेन संप्राप्तः कुण्डिनं त्विह । ५८५५
कन्यार्थेऽतिमहातेजा यादवैरभिसंवृतः । अवश्यं कुरुते यत्नं कन्यावाप्तिर्यथा भवेत् ।
यदत्र कारणं कार्य्यं सुनयोपेतवद्भुतं । कुरुध्वं नृपशार्दूला विनिश्चित्य बलाबलं ।
पदातिनौ महावीर्यौ वसुदेवसुतावुभौ । वैनतेयं विना तस्मिन् गोमन्ते पर्वतोत्तमे ।
यत् कृतं सुमहद्घोरं भवद्भिर्विदितं महत् । कृष्णस्य यादवैश्चैव भोजान्धकहितार्थे ।
समेत्य युध्यमानस्य कीदृशो विग्रहो भवेत् । कन्यार्थे यतमानेन गरुडस्थेन विष्णुना । ५८६०
कः स्थास्यति रणे तस्मिन्नपि शक्रः सुरैः सह । पुरा एकार्णवे घोरे श्रूयते मेदिनी त्वियं ।
पातालस्य तले मग्ना विष्णुना प्रभविष्णुना । वाराहं रूपमास्थाय उद्धृता जगदादिना ।
हिरण्याक्षस्तु दैत्येन्द्रो वाराहेण निपातितः । हिरण्यकशिपुश्चैव महाबलपराक्रमः ।
अवध्योऽमरदैत्यानामृषिगन्धर्व्वकिन्नरैः । यक्षराक्षसनागानां नाकाशे नावनिस्तले ।
न चाभ्यन्तरराव्यक्तैर्न शुष्केणार्द्रकेन च । अवधस्त्रिषु लोकेषु दैत्येन्द्रो ह्यपराजितः । ५८६५
नारसिंहेन रूपेण निहतो विष्णुना पुरा । वामनेन तु रूपेण कश्यपस्यात्मजो बली ।
अदित्या गर्भसंभूतो बलिर्बद्धोऽसुरोत्तमः । सत्यरज्जुमयैः पाशैः कृतः पातालसंश्रयः ।
कार्त्तवीर्य्यो महावीर्य्यः सहस्रभुजविग्रहः । दत्तात्रेयप्रसादेन मत्तो वरमदेन च ।
जामदग्न्यो महातेजा रेणुकागर्भसम्भवः । त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृताम्बरः ।
परशुना वज्रकल्पेन सप्तद्वीपेश्वरो नृपः । निहतो विष्णुना भूयश्छद्मरूपेण हैहयः । ५८७०
इक्ष्वाकुकुलसंभूतो रामो दाशरथिः पुरा । त्रिलोकजयिनं वीरं रावणं वै न्यपातयत् ।
पुरा कृतयुगे विष्णुः संग्रामे तारकामये । षोडशार्द्धभुजो भूत्वा गरुडस्थो हि वीर्य्यवान् ।
निजघानासुरान् युद्धे वरदानेन दर्पितान् । कालनेमिश्च दैत्येन्द्रं देवतानां भयप्रदं ।
सहस्रकिरणाभेन चक्रेण न्यहनद्युधि । महायोगबलेनाशौ विश्वरूपेण विष्णुना ।
अनेन प्राप्तकालास्ते निहता बहवोऽसुराः । वने वनचरा दैत्या महाबलपराक्रमाः । ५८७५
निहता बालभावेन प्रलम्बारिष्टधेनुकाः । शकुनिं केशिनञ्चैव यमलार्ज्जुनकावपि ।
नागं कुवलयापीडं चाणूरं मुष्टिकन्तथा । कंसश्च बलिनां श्रेष्ठः सगणो देवकीसुत ।
न्यहनद्धि पदेशेन क्रीडमानो हि केशवः । एवमादीनि दिव्यानि च्छद्मरूपाणि विष्णुना ।
कृतानि तत्र तत्रैव मायया प्रभविष्णुना । तेनाहं वः प्रवक्ष्यामि भवतां हितकाम्यया ।

तं मन्ये केशवं विष्णुं सुराद्यमसुरान्तकं। नारायणं जगद्योनिं पुराणं पुरुषं ध्रुवं। ५८८०
स्रष्टारं सर्व्वभूतानां व्यक्ताव्यक्तं सनातनं। श्रेष्ठं सर्व्वभूतानां सर्व्वलोकनमस्कृतं।
अनादिमध्यनिधनं चरमचरमव्ययं। स्वयम्भुवमजं स्थाणुमजेयं सचराचरैः।
त्रिविक्रमं त्रिलोकेशं त्रिदशेन्द्रारिनाशनं। इति मे निश्चला बुद्धिर्जातोऽयं मथुरामधि।
कुले महति वै राज्ञां विपुले चक्रवर्त्तिनां। कथमन्यस्य पुंसस्तु गरुत्मान् वाहनो भवेत्।
विशेषेण तु कन्यार्थे विक्रमस्थे जनार्द्दने। कः स्थास्यति पुमानद्य गरुडस्याग्रतो बली। ५८८५
स्वयंवरकृतेनायं विष्णुः स्वयमिहागतः। विष्णोरागमने चैव महान्दोषः प्रकीर्त्तितः।
भवद्भिरनुचिन्त्येदं क्रियतां यदनन्तरं।
॥ वैशम्पायन उवाच ॥ एवं विब्रुवमाणन्तु मगधानां जनेश्वरं। सुनीथोऽथ महाप्राज्ञो वचनञ्चेदमब्रवीत्।
॥ सुनीथ उवाच ॥ सम्यगाह महाबाहुर्म्मगधाधिपतिर्नृपः। समक्षं नरदेवानां यथा वृत्तं महाहवे।
गोमन्ते रामकृष्णाभ्यां कृतं कर्म्म सुदुष्करं। गजाश्वरथसम्बाधा पत्तिध्वजसमाकुला। ५८९०
निर्द्दग्धा महती सेना चक्रलाङ्गलवह्निना। तेनायं मागधः श्रीमाननागतमचिन्तयत्।
श्रुवते राजसेनायामनुसृत्य सुदारुणं। प्रहात्योर्युध्यतोस्तत्र बलकेशवयोर्युधि।
दुर्निवार्य्यतरैर्घातैरभवद्याहिनीक्षय। विदितं वः सुपर्णस्य आगतस्य नृपोत्तमाः।
पक्षवेगानिलोद्धूता बभ्रमुर्गगणेचरा। समुद्राः क्षुभिताः सर्व्वे चचालाद्रिर्म्मही मुहुः।
वयञ्च सर्व्वे सन्त्रस्ताः किमुत्पातेति विक्लवाः। यदा सन्नह्य युध्येत आरूढः केशवः खगे। ५८९५
कथमस्मद्विधैः शक्यं प्रतिष्ठातुं रणाजिरे। राज्ञां स्वयंवरो नाम सुमहान् हर्षवर्द्धनः।
कृतो नरवरैराद्यैर्यशोधर्म्मस्य वै विधिः। इदन्तु कुण्डिनगरमासाद्य मनुजेश्वरैः।
पुनरेवेक्ष्यते नूनं महापुरुषविग्रहः। यदि सा वरयेदन्यं राज्ञां मध्ये नृपात्मजा।
कृष्णस्य भुजयोर्व्वीर्य्यं कः पुमान् प्रसहिष्यति। विख्यापितस्तु दोषोऽयं स्वयंवरमहोत्सवे।
तदर्थमागतः कृष्णो वयञ्चैव नराधिपाः। कृष्णस्यागमनञ्चैव नृपाणामपि गर्हितं। ५९००
कन्याहेतोर्नरेन्द्राणां यथा वदति मागधः।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे सुनीथवाक्ये षडधिकशततोऽध्यायः ॥ १०६ ॥
॥ वैशम्पायन उवाच ॥ इत्येवमुक्ते वचने सुनीथेन महात्मना। करूषाधिपतिर्व्वीरो दन्तवक्रोऽभ्यभाषत।
॥ दन्तवक्र उवाच ॥ यदुक्तं मगधेन्द्रेण सुनीथेन नराधिपाः। युक्तपूर्व्वमिदं मन्ये यदस्माकं वचो हितं।
न च विद्वेषणेनाहं न चाहङ्कारवादिना। न चात्मविजिगीषुत्वाद्बूययामि वचोऽस्तनं।
वाक्यार्थं महागाधं नीतिशास्त्रार्थबृंहितं। क एष निखिलं वक्तुं शक्तो वै राजसंसदि। ५९०५
किन्त्वनुस्मरण ेहि यद्ब्रवीमि शृणुध्व मे। आगतो वासुदेवेति किमाश्चर्य्यं नराधिपाः।
यथागता वयं सर्व्वे तथा कृष्ण इहागतः। किमत्र दोषो गोष्ठ्यो वा कन्याहेतोः समागताः।
यदस्माभिः समेत्यैव कृतं गोमन्तरोधनं। तत्र युद्धकृतं दोषं कथं वः कर्त्तुमर्हथ।

वनवासे स्थितौ वीरौ कंसव्यामोहहेतुना । देवर्षिवचनाद्राजन् वृन्दावनतटे स्थितौ ।
तावाहूय वधार्थाय उभौ रामजनार्द्दनौ । नागेनोद्दीपितौ वीरौ हतनागौ विवेशितौ । ५९९०
ततः स्ववीर्य्यमाश्रित्य निहतो रङ्गसागरे । गतासुरिव चासीनो मथुरेशः सहानुगः ।
किमत्र विहितो दोषो येनास्माभिर्विरोधिकैः । उपरोधपरा राज्ञो वयं सर्व्वे समागताः ।
सेनातिबलमालोक्य वित्रस्तौ रामकेशवौ । पुरं बलं समुत्सृज्य गोमन्तं पर्व्वतं गतौ ।
तत्रापि गतमस्माभिर्हन्तुं समरयोधिभिः । अप्राप्तयौवनाभ्यान्तु पदाताभ्यां रणाजिरे ।
रथाश्वनरनागेन तत्र वै विग्रहः कृतः । कृतोपरोधं शैलः स हतधर्म्मेण दीपितः । ५९९५
दावाग्निमुखमाविश्य स्तौ यत्र तपस्विनौ । विनीत इति मन्याम सर्व्वे क्षत्रियपुङ्गवाः ।
प्रतियुद्धं करोत्येवं दूषयाम जनार्द्दनं । यत्र यत्र प्रयास्यामो वयं तत्र भवेत् कलिः ।
प्रीत्यर्थं प्रयतिष्यामः कृष्णेन सह भूमिपाः । इदं कुण्डिपुरं कृष्णो नागतः कलिहेतुना ।
कन्यानिमित्तागमने कस्य युद्धं प्रयच्छति । मर्त्येऽस्मिन् पुरुषेन्द्रोऽयं न कश्चित् प्राकृतो नरः ।
देवलोके च देवेशः प्रवरः पुरुषोत्तमः । देवानामपि कर्त्ताऽसौ लोकानाञ्च विशेषतः । ६०००
न देवे वालिशा बुद्धिर्न चेर्ष्या नापि मत्सरः । न लुब्धो न कृशो नार्त्तः प्रणतार्त्तिहरः सदा ।
एष विष्णुः प्रभुर्द्देवो देवानामपि दैवतं । आगतो गरुडेनेह स्वच्छमाकाशहेतुना ।
न सेनासहितो याति कृष्णः शत्रुविनाशने । इमां याचां विजानीध्वं प्रीत्यर्थं ह्यागतो हरिः ।
सहितो यादवेन्द्रैश्च भोजवृष्ण्यन्धकैरिह । अर्घ्यमाचमनीं दत्त्वा स्थितिश्च नराधिपाः ।
करिष्यामो वयं सर्व्वे केशवाय महात्मने । एवं सन्धानतः कृत्वा कृष्णेन सहिता वयं । ६००५
वसामो विगतोद्वेगा निर्भया विगतज्वराः । तस्य तद्वचनं श्रुत्वा दन्तवक्रस्य धीमतः ।
शाल्वः प्रवदतां श्रेष्ठस्तानुवाच नराधिपान् ।
॥ शाल्व उवाच ॥ किं भयेनास्य नः सर्व्वे न्यस्तशस्त्रा भवामहे । सन्धानकरणे हेतोः कृष्णस्य भयकम्पिताः ।
परस्तवेन किं कार्य्यं विनिन्द्य बलमात्मनः । नैव धर्म्मो नरेन्द्राणां क्षात्रधर्म्मे च तिष्ठतां ।
महत्सु राजवंशेषु संभूताः कुलवर्द्धनाः । तेषां कापुरुषा बुद्धिः कथं भवितुमर्हति । ६०१०
अहं जानामि वै कृष्णमादिदेवं सनातनं । प्रभुं सर्व्वामरेन्द्राणां नारायणपरायणं ।
वैकुण्ठमजयं लोके चराचरगुरुं हरिं । सम्भूतं देवकीगर्भे विष्णुं लोकनमस्कृतं ।
कंसराजवधार्थाय भारावतरणाय च । अस्माकञ्च विनाशाय लोकसंरक्षणाय च ।
अंशावतरणे कृत्स्नं जाने विष्णोर्विचेष्टितं । संग्राममतुलं कृत्वा विष्णुना सह भूमिपाः ।
चक्रानलविनिर्द्दग्धा यास्यामो यमसादनं । तत्र जानामि राजेन्द्राः कालेनायु क्षयो भवेत् । ६०१५
नाकाले म्रियते कश्चित् प्राप्ते काले न जीवति । एवं विनिश्चयं बुद्ध्वा न कुर्य्यात् कार्य्यविप्लवं ।
स एव भगवान् विष्णुरानीकस्य तपसः क्षयं । निहन्ता दितिजेन्द्राणां यथाकालेन योगवित् ।
बलिं वैरोचनिञ्चैव बद्ध्वाऽवध्यं महाबलं । कृतवान्देवदेवो वै पातालतलवासिनं ।

एवमादीनि चान्यानि विष्णोश्चेष्टानि वै नृपा.। तस्मादयुक्तं भवतां विग्रहार्थे विचारणं।
न च संग्रामहेतोर्हि कृष्णस्यागमनं त्विह। यस्य वा तस्य वा कन्या वरयिष्यति तस्य सा। ५८४०
किमत्र विग्रहो राज्ञां प्रीतिर्भवति वै ध्रुवं।
॥ वैशम्पायन उवाच ॥ एवं कथयमानानां नृपाणां बुद्धिशालिनां। न किञ्चिदब्रवीद्राजा भीष्मक पुत्त्रकारणात्।
महावीर्य्यमदोत्सिक्तं भार्गवास्त्राभिरक्षितं। रणे प्रचण्डातिरथ विचिन्त्य मनसा सुतं।
कृष्णं न सहते नित्यं पुत्त्रो वै बलदर्पितः। नित्याभिमानी च रणे न बिभेति च कस्यचित्।
कृष्णस्य भुजवीर्य्येण ह्रियते नात्र संशय। भविष्यति ततो युद्धं महापुरुषविग्रहं। ५८४५
दर्पो चैवाभिमानी च कुतो जीवति मे सुत.। जीवितं नात्र पश्यामि मम पुत्त्रस्य केशवात्।
कन्याहेतो सुतं ज्येष्ठं पितॄणां नन्दिवर्द्धनं। कारयिष्ये कथं युद्धं पुत्त्रेण सह केशवं।
न च नारायणं देवं वरमिच्छति रुक्मवान्। मूढभावमदोन्मत्त. संग्रामेष्वनिवर्त्तक।
निपतन् भक्ष्मसाद्याति तूलराशिर्यथाऽनले। करवीरेश्वर शूर शृगालश्चित्रयोधिना।
क्षणेन भस्मसान्नीत केशवेन बलीयसा। वृन्दावने वसन् श्रीमान् केशवो मलिनाम्बरः। ५८५०
उद्धृत्यैकेन हस्तेन सप्ताहं धृतवान् गिरिं। दुष्करं कर्म्म संस्मृत्य मन सीदति मे भृशं।
इन्द्रस्तु स्वयमागम्य दैवतै सह वृत्रहा। अभिषिच्याब्रवीत् कृष्णमुपेन्द्रेति शचीपति।
यथा च दमितो नाग कालियो यमुनाह्रदे। विषाग्निज्वलितो घोर कालान्तकसमप्रभः।
केशी चैव महावीर्य्यो दानवो हयविग्रह.। निहतो वासुदेवेन दैवैरपि दुरासदः।
सान्दीपनिसुतश्चैव चिरनष्टं हि सागरे। कृष्ण पञ्चजनं हत्वा चानयद्यममन्दिरात्। ५८५५
गोमन्ते सुमहद्युद्धं बहुभिश्चैव तावुभौ। कृत्वा वित्रासजननं गजाश्वरथसंकुलं।
गजेन गजवृन्दानि रथेन रथयोधिन। सादिनश्चाश्वयोधेन चरणेन पदातिन।
जघ्नतुस्तौ महावीर्य्यौ वसुदेवसुतावुभौ। न देवासुरगन्धर्व्वा न यक्षोरगराक्षसा।
न नागा न च दैत्येन्द्रा न पिशाचा न गुह्यकाः। कृतवन्तस्तथा घोरं गजाश्वरथसंचयं।
तमनुस्मृत्य संग्रामं भृशं सीदति मे मन.। न मया श्रुतपूर्व्वो वा दृष्टपूर्व्व कुतोऽपि वा। ५८६०
तादृशो भुवि मर्त्त्योऽन्यो वासुदेवात् सुरोत्तमात्। सम्यगाह महाबाहुर्दन्तवक्त्रो महाद्युति।
सान्त्वयित्वा महावीर्य्यं संविधास्याम यत् क्षमं।
॥ वैशम्पायन उवाच ॥ इति सञ्चिन्त्य मनसा बलाबलविनिश्चय। गमनाय मतिश्चक्रे प्रसादयितुमच्युतं।
चिन्त्यमानो नरेन्द्रैश्च बहुभिर्नयशालिभि.। सूतमागधवन्दिभ्यो बोधितस्तुतिमङ्गलै.।
प्रभातायां रजन्यान्तु कृतपूर्व्वाह्निकक्रिया.। उपविष्टा नृपा सर्व्वे स्वेषु विश्रमवेश्मसु। ५८६५
ये विसृष्टाश्च वै राजन् विदर्भायां नराधिपै। तैरागम्य स्वराजेषु रहो गत्वा निवेदित।
श्रुत्वा कृष्णाभिषेकन्तु केचिद्धृष्टा नराधिपा। केचिद्दीनतरा भीता उदासीनास्तथाऽपरे।
त्रिधा प्रभिन्ना सा सेना नरनागाश्वशालिनी। महार्णव इव क्षुब्धा अभिषेकेण चालिता।

नृपाणां भेदमालोक्य भीष्मको राजसत्तमः। व्यतिक्रममचिन्त्यञ्च कृतं नृपतिना स्वयं।
विचिन्त्य मनसा राजा दह्यमानेन चेतसा। जगाम नरदेवानां समाजे प्रतिबोधितुं। ५८७०
एतस्मिन्नन्तरे दूताः सम्प्राप्ताः कैशिकान्तिकात्। लेखमुद्धृत्य शिरसा विविशुश्च नृपार्णवं।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे सप्ताधिकशततोऽध्यायः॥ १०७॥
॥ जनमेजय उवाच ॥ हत्वा कंसं महावीर्य्यं देवैरपि दुरासदं। नाभिषिक्तः स्वयं राज्ये नोपविष्टो नृपासने।
कन्यार्थे चागतः कृष्णस्तत्रापि न कृतातिथिः। अमानमतुलं प्राप्य चान्तवान् केन हेतुना।
विनतायाः सुतश्चैव महाबलपराक्रमः। स चापि क्षमया युक्तः कारणं किमपेक्षितः।
एतदाख्याहि भगवन् परं कौतूहलं हि मे। ५८७५
॥ वैशम्पायन उवाच ॥ विदर्भनगरीं प्राप्ते वैनतेये महाद्युते। मनसा चिन्तयामास वासुदेवाय कैशिकः।
दृष्ट्वाश्चर्य्यं हि नः सर्व्वान् ध्रुवं पापक्षयो भवेत्। विशुद्धभावः कृष्णस्य आवयोर्हि तत्त्वतः।
अतः पात्रतरः कोऽन्यस्त्रिषु लोकेषु विद्यते। कृष्णात् कमलपत्राक्षाद्देवदेवाज्जनार्द्दनात्।
तस्मावां किं प्रदास्याव आतिथ्यकारणेन ह। पात्रमासाद्य वै राजन् यथा धर्म्मो न लुप्यते।
एवमन्योन्यमश्चिन्त्य भ्रातरौ क्रथकैशिकौ। स्वराज्यं दातुकामौ तौ जग्मतुः केशवान्तिकं। ५८८०
देवमासाद्य तौ वीरौ विदर्भनगराधिपौ। ऊचतुस्तौ महात्मानौ प्रणम्य शिरसा हरिं।
अद्यावां सफलं जन्म अद्यावां प्रथितं यशः। अद्यावां पितरस्तृप्ता देव त्वयि गृहागते।
चामरं व्यजनं छत्रं ध्वजं सिंहासनं बलं। स्फीतकोषा पुरी चैव आवाभ्यां रक्षितं तव।
उपेन्द्रस्त्वं महाबाहो देवेन्द्रेणाभिषिक्तवान्। आवामिह तु राज्ये त्वामभिषिञ्चाव वै प्रभो।
आवयोर्यत् कृतं कार्य्यं बहुभिः पार्थिवैरपि। शक्यते नान्यथा कर्त्तुं जरासन्धेन वा स्वयं। ५८८५
शत्रुस्ते मागधो राजा जरासन्धो महाद्युतिः। कथान्ते ब्रुवते राजन्नृपाणामभयप्रदः।
सिंहासनमनध्यास्य पुरश्चास्य न विद्यते। कथं राजसमाजेऽस्मिन्नास्यते देवकीसुतः।
कृष्णोऽपि सुमहावीर्य्यो ह्यभिमानी महाद्युतिः। न चागमिष्यते चास्मिन् कन्यार्थे च स्वयंवरं।
पार्थिवेषूपविष्टेषु तेषु सिंहासनेषु वै। कथमास्यति नीचेषु आसनेषु महाद्युतिः।
इति सञ्चिन्त्यमानस्तु शुक्लाऽसौ भीष्मको नृपः। आवयोः सह संमन्त्र्य विग्रहोपशमार्थिना। ५८९०
तव विश्रामहेतोर्हि कारितेदं गृहोत्तमं। देवानामपि देवोऽसि सर्व्वलोकनमस्कृतः।
मानुषे मर्त्यलोकेऽस्मिन्नमिन्द्रत्वं समाचर। समाजे मानुषेन्द्राणां माभूदासनसङ्कटं।
विदर्भनगरे तेषां राजेन्द्रत्वं समाचर। आस्यतामासने शुभ्रे श्वः प्रभाते महाद्युते।
अधिवास्यात्मनात्मानं विधिदृष्टेन कर्म्मणा। यथा गमिष्यन्ति नृपाः करिष्ये देवशासनात्।
एवमुक्त्वा सुरश्रेष्ठं प्रणिपत्य कृताञ्जली। प्रेषयामासतुर्वीरौ रङ्गमध्ये नृपेन्द्रतां। ५८९५
देवदूतस्य वचनं यथोक्तं वज्रपाणिना। लिखित्वा सुमहातेजाः कैशिकः प्राह शासनं।
॥ कैशिक उवाच ॥ विदितं वो नृपाः सर्व्वे वैनतेयसहाच्युतः। आगतोऽतिथिरूपेण विदर्भनगरीं हरिः।

प्राप्तमालोक्य पौत्रोऽयमिति सञ्चिन्त्य भूपतिः । प्रददौ वासुदेवाय स्वराज्यं धर्म्महेतुना ।
इदमासनमास्स्वेति भ्राता मे चोदिते ततः । वागुवाचाशरीरेण केनापि व्योमचारिणा ।
॥ देवदूत उवाच ॥ न युक्तमासनं दातुं त्वयासीनं नराधिप । इदमेवासनं दिव्यं सर्व्वरत्नविभूषितं । ६०००
जाम्बूनदमयं दिव्यं रचितं विश्वकर्म्मणा । प्रेषितं देवराजेन सिंहलक्षणलक्षितं ।
अत्रोपविष्टं देवेशं चराचरनमस्कृतं । अभिषिञ्चाय राजेन्द्रं वक्ष्यसि पार्थिवैः सह ।
आगताः कुण्डिननगरे कन्याहेतोर्नराधिपाः । नागमिष्यति यः कश्चित् सोऽस्य वध्यो भविष्यति ।
इमे चैवाष्टकलशा निधीनामंशसंभवाः । अक्षया राजराजस्य धनेशस्य महात्मनः ।
दिव्याः काञ्चनरत्नाढ्या दिव्याभरणयोनयः । राजेन्द्रस्याभिषेकार्थमागच्छन्ति नृपैर्वृताः । ६००५
एष शक्रस्य सन्देशः कथितो मे नराधिपाः । लेखेनाहूय तान् सर्व्वानभिषिञ्चत केशवं ।
॥ कौशिक उवाच ॥ इति सञ्चिन्त्य खस्थोऽसौ देवदूतो गतो दिवं । दत्त्वासनञ्च कृष्णाय बालार्कसदृशप्रभं ।
तेनाहञ्चोदयिष्यामि भवन्तो ये समागताः । दुर्निवार्य्यतरं घोरं शक्रेण स्वयमीरितं ।
युष्माभिर्द्दृश्यते युक्तमद्भुतं भुवि दुर्लभं । कलशैरभिषिञ्चन्तं स्वयमेव नभस्तलात् ।
दृष्ट्वाश्चर्य्यं हि न सर्व्वा ध्रुवं पापक्षयो भवेत् । स्नपनेन च कृष्णाय देवदेवाय विष्णवे । ६०१०
आगच्छध्वं नृपश्रेष्ठा न भयं कर्त्तुमर्हथ । आवयोः कृतसन्धानो युष्मदर्थे जनार्द्दनः ।
सर्व्वेषां मनुजेन्द्राणां न वैरं कुरुते हरिः । विरुद्धभावः कृष्णस्य आवयोर्दृष्टतत्त्वतः ।
मागधस्य विशेषेण न वैरं हृदि दृश्यते । यदत्र कारणं कार्य्यं तद्भवद्भिर्विचिन्त्यतां ।
॥ वैशम्पायन उवाच ॥ एवं सञ्चिन्त्यमानास्तु नृपाः शापभयार्द्दिताः । भूयः शुश्रुवुराजेन्द्र राजानः सर्व्व एव ते ।
मेघगम्भीरनादेन स्वरेणापूरयन्नभः । वागुवाचाशरीरेण देवराजस्य शासनात् । ६०१५
॥ चित्राङ्गद उवाच ॥ त्रैलोक्याधिपतिः शक्रः प्रजापालनहेतुना । आज्ञापयति युष्माकं नृपाणां हितकाम्यया ।
न युक्तं वसतान्योन्यं कृष्णेन सह वैरिणा । वसध्वं प्रीतिमुत्पाद्य स्वराष्ट्रेषु नराधिपाः ।
प्रणतार्त्तिहरः कृष्णः प्रतिसैन्यान्तकोऽनलः । अनेन सह सम्प्रीत्या मोदध्वं विगतज्वराः ।
मानुषाणां नृपा देवा नृपाणां देवताः सुराः । सुराणां दैवतं शक्रः शक्रस्यापि जनार्द्दनः ।
एष विष्णुः प्रभुर्द्देवो देवानामपि दैवतं । जातोऽयं मानुषे लोके नररूपेण केशवः । ६०२०
अजेयः सर्व्वलोकेषु देवदानवमानवैः । कार्त्तिकेयसहायस्य अपि शूलधरस्य च ।
तस्मै देवातिदेवाय केशवाय महात्मने । अभिषिच्य सुरैः सार्द्धं किमिच्छेयमतः परं ।
न चाधिकारो देवानां राजेन्द्रस्याभिषेचने । तेनाहं नाभिषिञ्चामि सर्व्वलोकनमस्कृतं ।
नृपाणामधिकारोऽयं राजेन्द्रस्याभिषेचने । गत्वा यूयं विदर्भाणां क्रथकैशिकयोः सह ।
सञ्चिन्त्य विधिदृष्टेन कुरुध्वं नृपसत्तमाः । प्रीतिसन्धानकालोऽयमिति सञ्चिन्त्य वासवः । ६०२५
बोधनार्थं विसृष्टोऽहं युष्माकं मनुजेश्वराः । विदर्भनगरे कृष्णः श्रावितोऽस्याधिवासनं ।
राजेन्द्रत्वाभिषेकार्थं राजानौ क्रथकैशिकौ । तयोः सार्द्धं नृपश्रेष्ठाः कृत्वा सुमहदुत्सवं ।

अभिषेकेण सत्कृत्य प्रतिगृह्य स्वदक्षिणां । आगमिष्यथ संहृष्टा पुनरेव स्वयंवरं ।
जरासन्धः सुनीथश्च रुक्मवांश्च महारथः । शाल्वः सौभपतिश्चैव चत्वारो राजसत्तमाः ।
रक्षस्थाशून्यहेतोर्हि तिष्ठन्त्विह च पार्थिवाः । ६११०
॥ वैशम्पायन उवाच ॥ एवमाज्ञां सुरेशस्य श्रुत्वा चित्राङ्गदेरितां । गमनाय मतिञ्चक्रुः सर्व्वे एव नृपोत्तमाः ।
अनुज्ञाता नरेन्द्रेण जरासन्धेन धीमता । भीष्मकं पुरतः कृत्वा प्रयाताः स्वबलैर्वृताः ।
भीष्मकश्च महाबाहुः स्वबलेन समन्वितः । जगाम पार्थिवैः सार्द्धं दह्यमानेन चेतसा ।
यत्र कृष्णो महाबाहुः कैशिकस्य निवेशने । दूरादेव प्रकाशन्ती पताका ध्वजमालिनी ।
शुभा देवसभा रम्या स्नानहेतोरिहागता । दिव्यरत्नप्रभाकीर्णा दिव्यध्वजसमाकुला । ६११५
दिव्याम्बरपताकाढ्या दिव्याभरणभूषिता । दिव्यस्रग्दामकलिला दिव्यगन्धाधिवासिता ।
विमानयानैः श्रीमद्भिः समन्तात् परिवारिता । दिव्याप्सरोगणास्तत्र ननृतुश्च समन्ततः ।
गन्धर्व्वा मुनयश्चैव किन्नराश्च समन्ततः । उपगायन्ति देवेशमम्बरान्तरमाश्रिताः ॥
स्तुवन्ति मुनयः सर्व्वे सिद्धार्थं परमर्षयः । देवदुन्दुभयश्चैव स्वयमेवानदन्दिवि ।
पञ्चयोनिसमुत्थानि गन्धचूर्णान्यनेकशः । समन्तात् पात्यमानानि आकाशस्थैर्दिवौकसैः । ६१२०
स्वयमागम्य राजेन्द्र देवैः सह शचीपतिः । विमानवरमारुह्य सप्रकाशः स्थितोऽम्बरे ।
अष्टभिर्लोकपालैस्तु स्वदिग्भागेषु संस्थितैः । उपगायद्भिर्नृत्यद्भिः स्तुवद्भिश्च समन्ततः ।
श्रुत्वा सुतुमुलं नादं सर्व्वे एव नराधिपाः । विस्मयोत्फुल्लनयना विविशुस्ते सभां शुभां ।
कैशिकश्च महातेजा उपगम्य नराधिपान् । प्रवेशयामास वशी प्रतिपूज्य यथाविधि ।
निवेदिते सुरश्रेष्ठे पार्थिवानां समागमे । निर्ज्जगाम हरिः श्रीमान् सर्व्वमङ्गलपूजितः । ६१२५
ततोऽम्बरस्थास्ते दिव्याः कलशाश्चोत्तकण्ठिनः । महाकारसमायुक्ता ववर्षुर्जलदा इव ।
दिव्यकाञ्चनरत्नौघैर्द्दिव्यपुष्पसमन्वितैः । गन्धचूर्णविमिश्रैश्च राजेन्द्रस्याभिषेचने ।
यथोक्तविधिपूर्व्वेण सोऽभिषिच्य जनार्द्दनं । दीपयित्वा नरेन्द्राणां दिव्यैराभरणैः शुभैः ।
दिव्याम्बरविचित्रैश्च दिव्यमाल्यानुलेपनैः । सत्कृत्य विधिवद्राजासनमुपविष्टो जनार्द्दनः ।
शुभे देवसभोद्देशे स्नानहेतोरिहागते । उपास्यमानौ यदुभिर्विदर्भैश्च नराधिपैः । ६१३०
वैनतेयश्च बलवान् कामरूपी नराकृतिः । दक्षिणं पक्षमाश्रित्य आसनस्थो बभूव ह ।
क्रथकैशिकौ तौ वीरौ वामपार्श्वे स्व आसने । उपविष्टौ महात्मानौ देवस्यानुमते नृपौ ।
तथैव वामपार्श्वे तु वृष्ण्यन्धकमहारथाः । सात्यकिप्रमुखा वीरा उपविष्टा महारथाः ।
भास्करप्रतिमे दिव्ये दिव्यास्तरणसंस्तृते । सुखोपविष्टं श्रीमन्तं देवा इव शचीपतिं ।
दक्षिणे आविताः पूर्व्वं प्रविष्टास्ते नराधिपाः । यथार्हेण तु संपूज्य राजानः सर्व्वे एव ते । ६१३५
सुखोपविष्टास्ते स्वेषु आसनेषु नराधिपाः । कैशिकस्तु महाप्राज्ञः सर्व्वशास्त्रार्थवित्तमः ।
पूजयित्वा यथान्यायमुवाच वदताम्वरः ।

॥ कैशिक उवाच ॥ अविज्ञाना नृपाः सर्व्वे मानुषोऽयमिति प्रभो । भवन्तमुपरुन्धाना देव तान् हन्तुमर्हसि ।
॥ कृष्ण उवाच ॥ न मे वैरं निवसते एकाहमपि कैशिक । विशेषेण नरेन्द्राणां चात्त्रे धर्म्मे व्यवस्थिताः ।
योद्धव्यमिति धर्म्मेण अधर्म्मेति पराङ्मुखे । तेषां किंहेतुना कोपः कर्त्तव्यस्त्वनीश्वराः । ९९
यद्वृत्तं तदतिक्रान्तं ये हतास्ते दिवङ्गताः । एष धर्म्मो नृलोकेऽस्मिन् जायन्ति च म्रियन्ति च ।
तस्मादशोच्यं भवतां मृतानां वै नराधिपाः । क्षन्तव्यं भवताऽस्माकं वीतवैरा भवन्तु वै ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा नरेन्द्रांस्तानाश्वास्य मधुसूदनः । कैशिकस्य मुखं वीक्ष्य विरराम महाद्युतिः ।
एतस्मिन्नेव काले तु भीष्मको नयकोविदः । पूजयित्वा यथान्यायमुवाच वदताम्बरः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे नृपाश्वासने अष्टाधिकशततोऽध्यायः ॥ १०८ ॥
॥ भीष्मक उवाच ॥ पुत्त्रो मे बालभावेन भगिनीं दातुमिच्छति । स्वयंवरे नरेन्द्राणां न चाहं दातुमुत्सहे । १०१
अतीव तस्य बालत्वं दातुं नेच्छेन्मतिर्मम । एका त्वेकं समालोक्य वरयिष्यति मे मतिः ।
अतस्त्वाऽहं प्रसादिष्ये पुत्त्रदुर्नयहेतुना । प्रसादं कुरु देवेश हन्तुमर्हसि मे प्रभो ।
॥ कृष्ण उवाच ॥ बालभावेन पुत्त्रस्ते चालितो नृपमण्डलं । यदा वै भवति प्रौढ कीदृशो विनयो भवेत् ।
सूर्य्येन्दुसदृशान् लोकांस्त्वमेषां पार्थिवश्रिय । लोकेऽस्मिन्नरदेवानां महाकुलसमुद्भवान् ।
एकस्यापि नृपस्यार्थे मोहाद्यो वितथं वदेत् । न स तिष्ठति लोकेऽस्मिन्निहैं हेदृण्डवर्त्तिना । १०५
एष धर्म्मो नरेन्द्राणामिति मे विदितं प्रभो । लोकधर्म्मं पुरस्कृत्य पुरा गीतं स्वयम्भुवा ।
कथं तव सुतस्तेवाप्ययतो मनुजेश्वर । वक्तुमर्हति राजेन्द्र वितथं राजसंसदि ।
तादृशं रङ्गमतुलं कारयंस्तनयस्तव । कथं त्वया ह्यविज्ञात इति मे संशयो महान् ।
आगतानां नरेन्द्राणामनलार्केन्दुवर्च्चसां । यथार्हेण तु संपूज्य आतिथ्यं कृतवानसि ।
रथाश्वनरनागानां विमर्द्दमतुलं तथा । कथं न ज्ञातवानासीस्तव पुत्त्रस्य चेष्टितं । १०५
विषादो नो भवेदत्र चतुरङ्गबलागमात् । कथं न ज्ञायसे राजन्निति मे बुद्धिसंशय ।
समागमनमेवेह प्रायेण न हितन्तव । अतो न कृतमातिथ्यमपाचाय नराधिप ।
पात्रेभ्यो दीयतां कन्या मामपास्य नराधिप । समागमनदोषेण कथं कन्या न दास्यते ।
कन्याविघ्नं प्रकुर्व्वाणो नरके परिपच्यते । इति मन्वादिभिर्गीतं धर्म्मविद्भिर्नरोत्तमैः ।
अतोऽर्थं न प्रविष्टोऽद्य रङ्गमध्ये विशाम्पते । विदित्वा न कृतातिथ्यं नरदेव तवालयं । ११०
क्रियाऽभिभूतो राजेन्द्र प्रार्थितोऽहं नराधिप । विदर्भनगरे राजन् बलविश्रामहेतुना ।
आवाभ्यां कृतमातिथ्यं कैशिकस्य प्रियार्थिना । उषितौ च यथा स्वर्गे पुरा गरुडकेशवौ ।
॥ वैशम्पायन उवाच ॥ एवमाभुवमाणं तं कृष्णं वाग्वज्रचोदितं । श्लक्ष्णवागम्बुनासिच्य शमितोऽग्निरिव ज्वलन् ।
॥ भीष्मक उवाच ॥ प्रसीद देवलोकेश मर्त्यलोकेश पाहि मां । अज्ञानतमसाविष्टं ज्ञानचक्षुप्रदो भव ।
मनुष्ये मांसचक्षुष्ट्वात् न सम्यग्विदिता वयं । न प्रसिध्यन्ति कार्य्याणि कुर्व्वतामविचारणात् । ११५
भवन्तं शरणं प्राप्य देवानामपि दैवतं । सम्यगस्तु मे दृष्टिः संपतस्त्वन्तु च मे क्रियाः ।

अनिष्पन्नामपि क्रियां नयोपेतां विचक्षणा । फलदां हि प्रकुर्व्वन्ति महाबुद्धेनापतिर्यथा ।
भवन्तं शरणं प्राप्य नातिबाधति मे भयं । यन्मया चिन्तितं कार्य्यं तद्भवान श्रोतुमर्हति ।
न दातुमिच्छे कन्यायां पार्थिवेभ्य स्वयंवरं । प्रसादं कुरु देवेश न कोपं कर्त्तुमर्हसि ।
॥ कृष्ण उवाच ॥ वदनेन किमुक्तेन त्वया राजन्महामते । स्वकन्यां दास्यसे नेति कोऽत्र नेता तवानघ । ६०९०
मा देहीति न चाख्येयं ददस्वेति न मे वच । रुक्मिण्या दिव्यमूर्त्तित्वं सम्बन्धे कारणं मम ।
मेरुकूटे पुरा देवै कृत्वा स्वांशावतारणं । तदा विसृष्टा पूर्व्वं श्रीर्गच्छेति पतिना सह ।
मानुष्ये कुण्डिनगरे भीष्मकस्याङ्गनोदरे । जायेस्त्वं विपुलश्रोणि प्रत्यवेक्षस्व केशवं ।
तेनाहं व प्रवक्ष्यामि राजन्नहतकं वच । श्रुत्वा स्वय विनिश्चित्य यदुक्त तत् करिष्यसि ।
रुक्मिणी नाम ते कन्या न सा प्राकृतमानुषी । श्रीरेषा ब्रह्मवाक्येन जाता केनापि हेतुना । ६०९५
न च सा मनुजेन्द्राणां स्वयम्बरविधिक्षमा । एका लेकाय दातव्या इति धर्म्मव्यवस्थिति ।
न च ता शक्यते राजलक्ष्मी दातुं स्वयंवरे । सदृशं वरमालोक्य दातुमर्हसि धर्म्मत ।
अतोऽर्थं वैनतेयोऽयं विघ्नकारणहेतुना । आगत कुण्डिनगरे देवराजेन चोदित ।
अहश्चैवागतो राज्ञा द्रष्टुकामो महोत्सव । ताञ्च कन्यां वरारोहां पक्षेन रहितां श्रियं ।
क्षन्तव्यमिति यत् प्रोक्त त्वया राजन् ममेष्टत । युक्तपूर्व्वमहं मयि कलुषाय न पार्थिव । ६१००
पूर्व्वमेव मया क्षान्तं येनास्मि विषये तव । आगत सौम्यरूपेण तेनैव क्षान्तवान् प्रभो ।
क्षान्तिषु गुणबाहुल्य दोषापहरणं क्षमा । कथमस्मद्विधे राजन् कलुषो वसते हृदि ।
कुलजे सत्त्वसम्पन्ने धर्म्मज्ञे सत्यवादिनि । मादृशे च कथं राजन् कलुषो वसते हृदि ।
क्षान्तोऽयमिति मन्तव्यं यस्त्वनया सहागत । न त्वहं सेनया सार्द्धं यास्य मि रिपुवाहिनी ।
अचान्तश्चारिसेनायां यास्यामि द्विजवाहने । स्थित: सन्नर्कसङ्काशान्यायुधानि करैर्दृत । ६१०५
मान्योऽस्माकञ्च त्वं राजन् वयसा च पितासम । पालयस्व पुरीं सम्यक पुत्त्रेषु पितृवद्दृश ।
कलुषो नाम राजेन्द्र वर्धेत् कापुरुषेषु वै । शूरेषु शुद्धभावेषु कलुषो वसते कथं ।
ज्ञानोऽध्व मां सतां वृत्त पुत्त्रेषु पितृवद्दृशं । आवयोरपि राजानौ विदर्भनगराधिपौ ।
आतिथ्यकरणेऽस्माक स्वराज्य दत्तवानुभौ । तेन दानफलेनास्य दश पूर्व्वं दिवङ्गता ।
भविष्याश्चैव राजेन्द्र पुत्त्रपौत्त्रा दशावरा । तेऽपि तत्रैव यास्यन्ति देवलोके नराधिपा । ६११०
अनयो सुचिरं कालं भुक्त्वा राज्यमकण्टकं । यथाभिलाष मोक्षस्य सुखं यास्यन्ति निर्वृति ।
नरेन्द्राश्च महाभागा येऽभिषेक्तुमागता । कालेन तेऽपि यास्यन्ति देवलोक त्रिविष्टपं ।
स्वस्ति वोऽस्तु गमिष्यामि वैनतेयसहायवान् । नगरी मथुरा रम्या भोजराजेन पालिता ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु राजान भीष्मकं यदुपुङ्गव । राज्ञश्चैवमुपामन्त्र्य वैदर्भाभ्या विसर्जित ।
सभान्निष्क्रम्य देवेशो जगाम रथमन्तिकं । तत स दृष्ट्वा राजर्षिर्भीष्मक क्रिन केशव । ६११५
ते च सर्व्वे महीपाला विषण्णवदनाभवन् । आद्य स्वायम्भुवं रूप सुरासुरनमस्कृतं ।

सहस्रपात्सहस्राक्षं सहस्रभुजविग्रहं । सहस्रशिरसं देवं सहस्रमुकुटोज्ज्वलं ।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं । दिव्याभरणसंयुक्तं दिव्यानेकोद्यतायुधं ।
कृष्णं रक्तारविन्दाक्षं चन्द्रसूर्य्याग्निलोचनं । दृष्ट्वा स राजा राजेन्द्रं प्रणिपत्य कृताञ्जलिः ।
वाङ्मनःकायसंयुक्तं स्तोतुमारब्धवांस्तदा । ६११०
॥ भीष्मक उवाच ॥ देवदेव नमस्तुभ्यमनादिनिधनाय वै । शाश्वतायादिदेवाय नारायण परायण ।
स्वयम्भुवाय विश्वाय स्रष्ट्रे वेधसाय च । पद्मनाभाय जटिने दण्डिने पिङ्गलाय च ।
हंसप्रभाय हंसाय चक्ररूपाय वै नमः । वैकुण्ठाय नमस्तस्मै अजाय परमात्मने ।
सहस्रभावयुक्ताय पुराणपुरुषाय च । पुरुषोत्तमाय मुक्ताय निर्गुणाय नमोऽस्तु ते ।
वरदो भव मे नित्यं लक्ष्मनाथ सुरोत्तम । लोकनाथ सदा नाथ विष्णुस्त्वं विदितात्मकः । ६११५
॥ वैशम्पायन उवाच ॥ एवं स्तुत्वा महादेवं नृपाणामग्रगो नृपः । महार्हमणिमुक्ताभिर्वज्रवैदूर्य्यशालिनं ।
शातकुम्भस्य निचयं कृष्णाय प्रददौ नृपः । पुनश्चक्रे नमस्कारं वैनतेये महाबले ।
॥ भीष्मक उवाच ॥ नमस्तस्मै खगेन्द्राय मनोमारुतरंहसे । कामरूपाय दिव्याय काश्यपाय च वै नमः ।
॥ वैशम्पायन उवाच ॥ इति संक्षेपतः स्तुत्वा सत्कृत्य वरभूषणैः । ततो विसर्ज्जयामास कृष्णं लोकनमस्कृतं ।
अनुजग्मुर्नृपाश्चैव प्रस्थितं वासवानुजं । प्रतिगृह्य च सत्कारं नृपानामग्र्य वीर्यवान् । ६१२०
जगाम मथुरां कृष्णो द्योतयन् वै दिशो दश । वैनतेयं पुरस्कृत्य सौम्यरूपं खगोत्तमं ।
महता रथघोषेण परिवार्य्य समन्ततः । भेरीपटहनादेन शङ्खशब्दवरेण च ।
बृंहितेन च नागानां हयानां हेषितेन च । सिंहनादेन शूराणां रथनेमिस्वनेन च ।
तुमुलः सुमहानासीन्महामेघरवोपमः । गते कृष्णे महावीर्य्ये आदाय परमासनं ।
सभामादाय देवाश्च प्रययुस्त्रिदिवालयं । महता चतुरङ्गेण बलेन परिवारिताः । ६१२५
कौशिकाश्रमनुप्रज्य प्रयाते जनार्द्दने । प्रययुस्ते नृपाः सर्व्वे पुनरेव स्वयंवरं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कृष्णाभिषेके नवाधिकशततमोऽध्यायः ॥ १०८ ॥
॥वैशम्पायन उवाच ॥ ततः प्रयाते वसुदेवपुत्रे नराधिपा भूषणभूषिताङ्गाः । सभां समाजग्मु सुरेन्द्रकल्पाः प्रबोधनार्थं गजमोत्सुकास्ते ।
सभागतान् भीमरथिप्रकाशान् सुखोपविष्टान् रुचिरासनेषु । समीक्ष्य राजा सुनयार्थवादी जगाद वाक्यं नरराजसिंहः ।
स्वयम्बरकृतो दोषो विदितो वो नराधिपाः । यत्कार्यो मम दुहितुः दुर्नयस्य फलोदयः ।
॥ वैशम्पायन उवाच ॥ एवमाभाष्य तान् सर्व्वान् सत्कृत्य च यथाविधि । ततो विसर्ज्जयामास नृपांस्तान्सबदेशजान् । ६१३०
पूर्व्वपश्चिमजांश्चैव उत्तरापथिकानपि । तेऽपि सर्व्वे महेष्वासाः प्रहृष्टमनसो नृपाः ।
यथादेशं च संपूज्य जग्मुस्ते नरपुङ्गवाः । जरासन्धः सुनीथश्च दन्तवक्त्रश्च वीर्यवान् ।
शाल्वः सौभपतिश्चैव महाकूर्मश्च पार्थिव । क्रथकैशिकमुख्याश्च नृपाः प्रवरवंशजाः ।
वेणुदारिश्च राजर्षिः कश्मीराधिपतिस्तथा । एते चान्ये च बहवो दक्षिणापथिका नृपाः ।

श्रोतुकामा रहोवाक्यं स्थिता वै भीष्मकान्तिके। तान् वै समीक्ष्य राजेन्द्र स राजा भीष्मको बली। ११९५
स्नेहपूर्णेन मनसा स्थितास्तानवनीश्वरान्। त्रिवर्गसहितं श्लक्ष्णं षड्गुणालङ्कृतं शुभं।
उवाच नयसम्पन्नं स्निग्धगम्भीरया गिरा।
॥ भीष्मक उवाच ॥ भवतामवनीशानां समालोक्य मयान्वितं। वचनं व्याहृतं श्रुत्वा कृतोऽहं कार्य्यमीदृशं।
भवद्भिर्भवद्भिः यन्तव्यं वयं नित्यापराधिनः।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु राजा स भीष्मको नयकोविदः। उवाच सुतमुद्दिश्य वचनं राजसंसदि। ११८०
॥ भीष्मक उवाच ॥ पुत्रस्य चेष्टामालोक्य चासाकुलितचेतनः। मन्ये बालानिमान् लोकान् स एकः पुरुषः प्रभुः।
कीर्त्तिं कीर्त्तिमतां श्रेष्ठो यशश्च विपुलं तथा। स्थापितं भुवि मर्त्त्येऽस्मिन् त्वयाऽमलमूर्च्छितं।
धन्या खलु महाभागा देवकी योषितावरा। पुत्रं त्रिभुवनश्रेष्ठं धृत्वा गर्भेण केशवं।
कृष्णं कमलपत्राक्षं श्रीपुञ्जममरार्चितं। स्नेहपूर्णाश्रुनेत्राभ्यामीक्षते मुखपङ्कजं।
॥ वैशम्पायन उवाच ॥ एवं लालप्यमानन्तु राजानं राजसंसदि। उवाच श्लक्ष्णया वाचा शाल्वराजो महाद्युतिः। ११८५
॥ शाल्व उवाच ॥ अलं खेदेन राजेन्द्र सुतार्थमरिमर्द्दन। क्षत्रियस्य रणे राजन् ध्रुवं जयपराजयौ।
नियता गतिर्मर्त्यानामेष धर्मः सनातनः। बलकेशवयोरन्यस्तृतीयः कः पुमानिह।
रणे योधयितुं शक्तस्तव पुत्र महाबलं। ख्यातिरयहन्दानामेक एव रणाजिरे।
रिपून् बाधयितुं शक्तो धनुर्गृह्य महाभुजः। भार्गवास्त्रं महारौद्रं देवैरपि दुरासदं।
सृजतो वाजवीर्येण कः पुमान् प्रसहिष्यति। अयन्तु पुरुषः कृष्णो ह्यनादिनिधनोऽव्ययः। ११९०
तं विजेता न लोकेऽस्मिन्नपि शूलधरः स्वयं। तत्र पुत्रो महाप्रज्ञः सर्व्वशास्त्रार्थतत्त्ववित्।
विदित्वा देवमीशानं न योधयति केशवं। अस्ति तस्य रणे जेता यवनाधिपतिर्नृप।
स कालयवनो नाम अवध्यः केशवस्य ह। तप्त्वा सुदारुणं घोरं तपः परमदुश्चरं।
रुद्रमाराधयामास द्वादशाब्दान्ययोऽशनः। पुत्रकामेन मुनिना तेन रुद्रात् सुतो वृतः।
माथुराणामवध्योऽसौ भवेदिति च शङ्करात्। एवमस्त्विति रुद्रोऽपि प्रददौ मुनये सुतं। ११९५
एवं गार्ग्यस्य तनयः श्रीमद्रुद्रवरोद्भवः। माथुराणामवध्योऽसौ मथुराया विशेषतः।
कृष्णोऽपि बलवानेव मथुरे वासवान्यं। स जेष्यति रणे कृष्णं मथुरस्यय समागतः।
मन्यध्वं यदि वो युक्ता नृपा वाचं मयेरिता। विसृजध्वं तत्र दूतं यवनेन्द्रपुरं प्रति।
॥ वैशम्पायन उवाच ॥ श्रुत्वा सौभपतेर्वाक्यं सर्व्वे ते नृपसत्तमाः। कुर्म इत्यब्रुवन् हृष्टाः शाल्वराजं महाबलं।
स तेषां वचनं श्रुत्वा जरासन्धो महीपतिः। बभूव विमना राजन् ब्रह्मणो वचनं स्मरन्। १२००
॥ जरासन्ध उवाच ॥ मा समाश्रित्य पूर्व्वेऽस्मिन्नृपा नृपभयार्द्दिताः। प्राप्नुवन्ति च्युतं राज्यं सभृत्यबलवाहनं।
दुःखाद्दुःखोद्यते भूपे परसंश्रयहेतुना। कन्येव स्वपतिद्वेषादन्यरतिपरायणा।
अहो सुबलवद्दैवमशक्यं विनिवर्त्तितुं। यदहं कृष्णभीतोऽन्यं संश्रयामि बलाधिकं।
नूनं योगविहीनोऽहं कारयिष्ये पराश्रयं। श्रेयो हि मरणं मह्यं न चान्यं संश्रये नृपाः।

कृष्णो वा बलदेवो वा यो वाऽन्यो वा नरोऽपरः। हन्तारं प्रतियोत्स्यामि यथा ब्रह्मप्रचोदितः।
एष मे निश्चयो बुद्धेरेष मे पुरुषव्रतः। अतोऽन्यथा न शक्तोऽहं कर्त्तुं परसमाश्रयं।
भवतां साधुवृत्तानामाबाधं न करोति सः। तेन दूतं प्रदास्यामि नृपाणां रक्षणाय वै।
व्योममार्गेण यातव्यं यथा कृष्णो न बाधते। गच्छन्तमनुचिन्त्यैवं प्रेषयध्वं नृपोत्तमाः।
अयं सौभपतिः श्रीमाननलार्केन्दुसप्रभः। रथेनादित्यवर्णेन प्रयाति स्वपुरं बली।
यवनेन्द्रो यथाऽभ्येति नरेन्द्राणां समागमं। वचनञ्च यथाऽस्माकं दूत्येन कृष्णविग्रहे।
॥ वैशम्पायन उवाच॥ पुनरेवाब्रवीद्राजा सौभस्य पतिमूर्ज्जितं। गच्छ सर्व्वनरेन्द्राणां साहाय्यं कुरु मानद।
यवनेन्द्रो यथा याति यथा कृष्णं विजेष्यति। यथा वयन्तु तुष्यामस्तथा नीतिर्विधीयतां।
एवं सन्दिश्य तान् सर्व्वान् भीष्मकं पूज्य धर्म्मतः। प्रययौ स्वपुरं राजा स्वेन सैन्येन संवृतः।
शाल्वोऽपि नृपतिश्रेष्ठस्तांश्च संपूज्य वीर्य्यवान्। जगामाकाशमार्गेण रथेनानिलगामिना।
तेऽपि सर्व्वे महीपाला दक्षिणापथगामिनः। अनुव्रज्य जरासन्धं गताः स्वनगरेषु वै।
भीष्मकः सहपुत्त्रेण तावुभौ चिन्त्य दुर्नयं। गृहे विविशतुर्द्दीनौ कृष्णमेवानुचिन्तयन्।
रुक्मिणी विदिता साध्वी स्वयंवरनिवर्त्तनं। कृष्णस्यागमने हेतोर्नृपाणां दोषदर्शनं।
गत्वा तु सा सखीमध्ये उवाच प्रीतिताननाः। न चान्येषां नरेन्द्राणां पत्नी भवितुमुत्सहे।
कृष्णात् कमलपत्राक्षात् सत्यमेतद्वचो मम।
॥ इतिश्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे दशाधिकशततोऽध्यायः॥ ११०॥
॥ वैशम्पायन उवाच॥ यवनानां बलोदग्रः स कालयवनो नृपः। बभूव राजा धर्म्मेण रक्षिता पुरवासिनां।
त्रिवर्गविदितप्रज्ञः षड्गुणानुपजीवकः। त्यक्तव्यसनसंमूढो गुणेष्वभिरतः सदा।
श्रुतिमान्धर्म्मशीलश्च सत्यवादी जितेन्द्रियः। सांग्रामिकविधिज्ञश्च दुर्गलाभानुसारिणः।
शूरोऽप्रतिबलश्चैव मन्त्रिप्रवरसेवकः। सुखासीनः सभां रम्यां सचिवैः परिवारितः।
उपास्यमानो यवनैरात्मविद्भिर्विपश्चितैः। विविधाश्च कथा दिव्याः कथ्यमाने परस्परं।
एतस्मिन्नेव काले तु दिव्यगन्धवहोऽनिलः। प्रववौ मदनाबोधस्तस्य वै सुखशीतलः।
किंस्विद्दिव्यैकमनघ सभायां ये समागताः। उत्फुल्लनयनाः सर्व्वे राजा चैवावलोक्य सः।
अपश्यत रथं दिव्यमायान्तं भास्करोपमं। शातकुम्भमयैर्द्दिव्यैरथाङ्गैरुपशोभितं।
दिव्यरत्नप्रभाकीर्णं दिव्यध्वजपताकिनं। उह्यमानं दिव्यतुरगैर्मनोमारुतरंहसैः।
चन्द्रभास्करबिम्बानि हत्वा जाम्बूनदं शुभं। रचितं विश्वकर्म्मणा वैयाघ्रवरभूषणैः।
रिपूणां त्रासजननं मित्राणां हर्षवर्द्धनं। दाक्षिणात्यादुपायान्तं रथं परमथारुजं।
तत्रोपविष्टं श्रीमन्तं सौभस्य पतिमूर्ज्जितं। दृष्ट्वा परमसंहृष्टस्त्वार्घ्यपाद्येति चासकृत्।
उवाच यवनेन्द्रस्य मन्त्री प्रवदतांवरः। सचोत्थाय महाबाहुः स्वयमेव नृपासनात्।
प्रत्युद्गम्यार्घ्यमादाय रथावतरणे स्थितः। शाल्वोऽपि सुमहातेजा दृष्ट्वा राजानमागतं।

मुदा परमया युक्तः शक्रप्रतिमतेजसं । अवतीर्य सुविस्रब्धमेक एव रथोत्तमात् ।
विवेश परमप्रीतो मित्रदर्शनलालसः । दृष्ट्वाऽर्घ्यमुद्यत राजा स शाल्वो राजसत्तमः । ६१०५
उवाच श्लक्ष्णया वाचा नार्घार्होऽस्मि महामते । दूतोऽहं मनुजेन्द्राणां सकाशाद्भवतोऽन्तिके ।
प्रेषितो बहुभिः सार्द्धं जरासन्धेन धीमता । तेन मन्ये महाराज नार्घार्होऽस्मीति राजसु ।
॥ कालयवन उवाच ॥ जानाम्यहं महाबाहो दूत्येन त्वामिहागतं । सुहितं नरदेवानां प्रेषितं मामधेन वै ।
तेन त्वामर्चये राजन् विशेषेण महाद्युते । अर्घ्यपाद्यादिसत्कारैरासनेन यथाविधि ।
भवत्यभ्यर्चिते राज्ञां सर्व्वेषामर्चनं भवेत् । मानिते तव राजेन्द्र सर्व्वेषां मानितं भवेत् । ६११०
आस्यतामासने दिव्ये मया सार्द्धं नरेश्वर ।
॥ वैशम्पायन उवाच । कृत्वालिङ्गनकं तत्र पृष्ट्वा च कुशलामयं । सुखोपविष्टौ सहितौ शुभे सिंहासने नृपौ ।
॥ कालयवन उवाच ॥ तद्बाहुबलमाश्रित्य वयं सर्व्वे नराधिपाः । वसामो विगतोद्विग्ना देवा इव शचीपतिं ।
किमसाध्यं भवेदस्य येनासि प्रेषितो मयि । वद सत्यं वचस्तस्य किमाज्ञापयति प्रभुः ।
करिष्ये वचनं तस्य अपि कर्म्म सुदुष्करं । ६११५
॥ शाल्व उवाच ॥ यथा वदति राजेन्द्र मगधाधिपतिर्नृपः । तथाऽहं संप्रवक्ष्यामि शृणु त्वं यवनाधिप ।
॥ जरासन्ध उवाच ॥ जातोऽयं जगदाबाधी कृष्णः परमदुर्ज्जयः । विदित्वा तस्य दुर्वृत्तमहं हन्तुं समुद्यतः ।
पार्थिवैर्बहुभिः सार्द्धं समग्रबलवाहनैः । उपरुध्य महासैन्यैर्गोमन्तमचलोत्तमं ।
चेदिराजस्य वचनं महार्थं श्रुतवानहं । तदा तयोर्विनाशाय हुताशनमयोजयं ।
ज्वालामालासहस्राढ्यं युगान्ताग्निसमप्रभं । दृष्ट्वा रामो गिरिं प्रदीप्तं दाशुतो हेमतालधृक् । ६१२०
विनिष्पत्य महासेनां मध्ये सागरसन्निभां । आजघान दुराधर्षो नराश्वरथदन्तिनः ।
वर्षन्तमिव पर्जन्यं विक्षिप्यालक्ष्य लाङ्गलं । नरनागाश्ववृन्दानि मुषलेनावपोथयत् ।
गजेन गजमास्फाल्य रथेन रथयोधिनं । हयेन च हयारोहान् हतेन पदातिनं ।
समरे स महातेजा नृपाणामग्रतः कुले । विचरन् विविधान्मार्गान् दिवान्ते भास्करो यथा ।
रामादनन्तरं कृष्णः मध्याह्नार्कसमप्रभः । चक्रं चक्रभृतां श्रेष्ठः सिंहः क्षुद्रमृगं यथा । ६१२५
प्रविचाल्य महावीर्यः पादवेगेन तं गिरिं । प्रतुष्ठे पपातोर्व्वां यदुवीरः प्रतापवान् ।
प्रनृत्यन्निव शैलोऽसौ तोयधाराभिषेचितः । घूर्णमानो विवेशोर्व्वीं निर्वाप्य च हुताशनं ।
प्रादीप्यमानाच्छिखराद्वप्लुत्य जनार्द्दनः । जघान वाहिनीं राजंश्चक्रयुक्तेन पाणिना ।
विक्षिप्य विपुलं चक्रं गदापातादनन्तरं । नरनागाश्ववृन्दानि मुषलेन व्यचूर्णयत् ।
क्रोधानिलसमुद्भूतचक्राग्न्यस्त्रशिखा । निर्द्दग्धा महती सेना नरेन्द्राणां अभिपालिता । ६१३०
नरनागाश्वकलिलं पत्तिध्वजसमाकुलं । रथानीकं पदाताभ्यां क्षणेन विरलीकृतं ।
सेनां प्रभग्नामालोक्य चक्रानलभयार्द्दितां । महता रथवृन्देन परिवार्य्य समन्ततः ।
तथाहं युध्यमानस्तु भ्राताऽस्य बलहा बली । स्थितो समापतन् शूरो गदापाणिर्हलायुधः ।

द्वादशार्चोद्दिणीर्हत्वा प्रभिन्न इव केशरी। हलं सौनन्दमुत्सृज्य गदया मामताडयत्।
वज्रपातनिभं वेगं पातयित्वा ममोपरि। भूयः प्रहर्त्तुकामो मां वैशाखेनास्थितो मही। ६२१५
वैशाखं स्थानमासाद्य गुह क्रौञ्चं यथा पुरा। तथा मां दीर्घनेत्राभ्यामीचने निर्द्दहन्निव।
तादृग्रूपं समालोक्य बलदेवं रणाजिरे। जीवितार्थी नृलोकेऽस्मिन् कः पुमान् स्थातुमर्हति।
गृहीत्वा स गदां भीमां कालदण्डमिवोद्यतां। कालाङ्कुशेन निर्द्धूतां स्थित एवाग्रतो मम।
ततो जलदगम्भीरस्वरेणापूरयन्नभः। वागुवाचाशरीरेण स्वयं लोकपितामहः।
प्रहर्त्तव्यो न ते राम न वध्योऽयं तवानघ। कल्पितोऽस्य वधस्तान्याद्विरमस्व हलायुध। ६२२०
श्रुत्वाऽहं तेन वाक्येन चिन्ताविष्टो निवर्त्तितः। सर्व्वप्राणहरं घोरं ब्रह्मणा स्वयमीरितं।
तेनाहं व प्रवक्ष्यामि नृपाणां हितकाम्यया। श्रुत्वा त्वञ्चैव राजेन्द्र कर्त्तुमर्हसि मद्वचः।
तपसोग्रेण महता पुत्रार्थी तोष्य शङ्करं। प्राप्तवान् देवदेवात्त्वामवध्यं माथुरैर्जनैः।
महामुनिर्यायसचूर्णमश्नन्नुपास्थितो द्वादशवार्षिकं व्रतं। सुरासुरैः संस्तुतपादमर्च्चयन् स लब्धवानीप्सितकामसम्पदं।
तपोबलाद्गार्ग्यमुनेर्म्महात्मनो वरप्रभावाच्छशिकलेन्दुमौलिनः। भवन्तमासाद्य जनार्द्दनो हिमं विलीयते भास्कररश्मिना यथा। ६२२५
यतस्व राज्ञा वचनप्रचोदितो भजस्व यात्रां विजयाय केशवे। प्रमथ्य राष्ट्रं मथुराश्च सेनया निहत्य कृष्णं प्रथयस्व वै यशः।
माथुरो वासुदेवोऽयं बलदेवश्च बान्धवः। तौ विजेष्यसि संग्रामे गत्वा तां मथुरापुरीं।
॥ शाल्व उवाच ॥ इत्येवं नरपतिभास्करप्रणीतं वाक्यन्ते कथितमिदं हितं नृपाणां। तत्त्वञ्च सह सचिवैर्विमृश्य बुद्ध्या यद्युक्तं
कुरु मनुजेन्द्र आत्मनेष्टं।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शाल्ववाक्ये एकादशाधिकशततोऽध्यायः ॥ १११ ॥
॥ वैशम्पायन उवाच ॥ एवं कथयमानं तं शाल्वराजं नृपाज्ञया। उवाच परमप्रीतो यवनाधिपतिर्नृप।
॥ कालयवन उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि सफलं जीवितञ्च मे। कृष्णविग्रहहेतोर्यन्नियुक्तो यत्नभिर्नृपैः। ६२३०
दुर्ज्जयस्त्रिषु लोकेषु सुरासुरगणैरपि। तस्य निग्रहहेतोर्म्मामवधार्य्य जयाश्रयं।
प्रहृष्टै राजसिंहैस्तैरवधार्य्यो जयो मम। तेषां वागम्बुवर्षेण विजयो मे भविष्यति।
करिष्ये वचनं तेषां नृपाणां मम चोदितः। पराजयोऽपि राजेन्द्र जयेन सदृशो मम।
अद्यैव तिथिनक्षत्रं मुहूर्त्तं करणं शुभं। यास्यामि मथुरां राजन् विजेतुं केशवं रणे।
॥ वैशम्पायन उवाच ॥ एवमाभाष्य राजानं सैभस्य पतिमूर्ज्जितं। सत्कृत्य च यथान्यायं महार्हैरभिभूषणैः। ६२३५
ब्राह्मणेभ्यो ददौ वित्तं सिद्ध्यादेशाय वै नृप। पुरोहिताय राजेन्द्र बहुशः प्रददौ धनं।
कृत्वाऽग्निं विधिवद्राजा कृतकौतुकमङ्गलः। प्रस्थानं कृतवान् सम्यग्जेतुकामो जनार्द्दनं।
शाल्वोऽपि भरतश्रेष्ठ कृतार्थो हृष्टमानसः। यवनेन्द्रं परिष्वज्य जगाम स्वं पुरं नृप।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे कालयवनागमने द्वादशाधिकशततोऽध्यायः ॥ ११२ ॥
॥ जनमेजय उवाच ॥ विदर्भनगराघाते शक्रतुल्यपराक्रमे। किमर्थं गरुडो नीतः किञ्च कर्म्म चकार सः।
न चाहरोह भगवान् वैनतेयं महाबलं। एतन्मे संशयं ब्रह्मन् ब्रूहि तत्त्वं महामुने। ६२४०

॥ वैशम्पायन उवाच ॥ शृणु राजन् सुपर्णेन कृतं कर्मातिमानुषं । विदर्भनगराद्याते वैनतेये महाद्युतौ ।
असंप्राप्ते तु नगरीं मथुरां मधुसूदने । मनसा चिन्तयामास वैनतेयो महामतिः ।
यदुक्तं देवदेवेन नृपाणामग्रतः प्रभो । यास्यामि मथुरां रम्यां भोजराजेन पालितां ।
इति तद्वचनस्यान्ते गमिष्येति विचिन्तयन् । कृताञ्जलिपुटः श्रीमान् प्रणिपत्याब्रवीदिदं ।
॥ गरुड उवाच ॥ देव यास्यामि नगरीं रैवतस्य कुशस्थलीं । रैवतञ्च गिरिं रम्यं नन्दनप्रतिमं महत् । ११६५
रत्नघोषादासितां रम्यां शैलोदधितटाश्रितां । वृक्षगुल्मलताकीर्णां पुष्परेणुविभूषितां ।
गजेन्द्रभुजगाकीर्णामृक्षवानरसेवितां । वराहमहिषाक्रान्तां मृगयूथैरनेकशः ।
तां समन्तात् समालोक्य वासार्थं ते घनाघनं । यदि स्याद्भवते रम्या प्रशस्ता नगरावलिः ।
कण्टकोद्धरणं कृत्वा आगमिष्ये तवान्तिकं ।
॥ वैशम्पायन उवाच ॥ एवं विज्ञाप्य देवेशं प्रणिपत्य जनार्द्दनं । जगाम पतगेन्द्रो वै पश्चिमाभिमुखो बली । ११७०
कृष्णोऽपि यदुभिः सार्द्धं विवेश मथुरां शुभां । खे रिपु उग्रसेनश्च नागराश्चैव सर्व्वशः ।
प्रत्युद्गम्यार्चयन् कृष्णं प्रहृष्टजनसङ्कुलं ।
॥ जनमेजय उवाच ॥ श्रुत्वाऽभिषिक्तं राजेन्द्रं शक्रभिर्व्वसुधाधिपैः । किं चकार महाबाहुरुग्रसेनो महीपतिः ।
॥ वैशम्पायन उवाच ॥ श्रुत्वाऽभिषिक्तं राजेन्द्रं शक्रभिर्व्वसुधाधिपैः । इन्द्रेण कृतसन्मानं दूतं चित्राङ्गदं कृतं ।
एकैकं नृपतेर्भागं शतसाहस्रसम्मितं । राजेन्द्रस्यर्बुदं दत्तं मानवेषु च वै दश । ११७५
ये तत्र सनृपाः प्राप्ता न रिक्तास्ते गृहं गताः । शक्तौ यादवश्रेष्ठेन प्रदत्ते हरिचिन्तिते ।
एवं निधिपतिः श्रीमान्देवतैरनुमोदितः । इति श्रुत्वाऽधिकमनाः लोकमाहृत्तिकास्वरात् ।
चकार महतीं पूजां देवतायतनेषु वै । वसुदेवस्य भवने तोरणोभयपार्श्वतः ।
नटानां नृत्यगेयानि वाद्यानि च समन्ततः । पताकाध्वजमालाढ्यां कारयामास वै नृपः ।
कंसराजस्य तु सभां विचित्राम्बरसुप्रभां । पताका विविधाकारा दापयामास भोजराट् । ११८०
तोरणं गोपुरश्चैव सुधापङ्कविलेपनं । कारयामास राजेन्द्र राजेन्द्रस्यावसमालयं ।
पताका वनमालाढ्याः पूर्णकुम्भाः समन्ततः । राजमार्गेषु राजेन्द्र चन्दनोदकसेचिताः ।
वस्त्रास्तरणकं राजा दापयामास भूतले । धूपं पार्श्वभये चैव चन्दनागुरुगुग्गुलैः ।
गुडं सर्ज्जरसश्चैव दक्षमांसं ततस्ततः । हृद्रुस्त्रीजनसंघाश्च गायन्ति स्तुतिमङ्गलं ।
अर्धं कृत्वा प्रतोषन्ते स्वेषु स्थानेषु योषितः । एवं कृत्वा पुरानन्दमुग्रसेनस्तु बुद्धिमान् । ११८५
वसुदेवगृहं गत्वा प्रियाख्यानं निवेद्य च । रामेण सह संमन्त्र्य निर्गतो रथमन्तिकं ।
तस्मिन्नेवान्तरे राजञ्छङ्खध्वनिरभून्महान् । पाञ्चजन्यस्य निनदं श्रुत्वा मथुरवासिनः ।
स्त्रियो बालाश्च वृद्धाश्च सूतमागधबन्दिनः । विनिर्ययुर्महासेना रामं कृत्वाऽग्रतो नृप ।
अर्घ्यं पाद्यं पुरस्कृत्य उग्रसेनोऽथ धीमतः । दृष्टिपथगतमासाद्य उग्रसेनो महीपतिः ।
अवतीर्य रथाच्छुभात्पादमार्गेण चाव्रजत् । दृष्ट्वोग्रसेनं रथे रम्ये दिव्यरत्नविभूषिते । ११९०

अङ्गाभरणञ्चैव दिव्यरत्नप्रभान्वितं । वनमालोरसं दिव्यं तपन्तमिव भास्करं ।
चामरं व्यजनं छत्रं खगेन्द्रध्वजमुच्छ्रितं । राजलक्षणसम्पन्नमासन्नार्कमिवोज्ज्वलं ।
श्रियाऽभिभूतं देवेशं दुर्निरीक्ष्यतरं हरिं । दृष्ट्वा च राजा राजेन्द्र हर्षगद्गदया गिरा ।
बभाषे पुण्डरीकाक्षं रामं बलनिषूदनं । रथेन न मया गन्तुं युक्तपूर्व्वेति विश्रुतं वै ।
अवतीर्णो महाभाग गच्छ त्वं स्यन्दनेन च । विष्णुना चक्ररूपेण गतेयं मथुरा पुरी । ११८९
अत्र प्रकाशितात्मानं देवेशं वै नृपार्णवे । तमहं स्तोतुमिच्छामि सर्व्वभावेन केशवं ।
प्रत्युवाच महातेजा राजानं कृष्णपूर्व्वजः । न युक्तं नृपते स्तोतुं प्रजजनं देवसत्तमं ।
विनास्तोत्रेण सन्तुष्टस्तव राजन् जनार्द्दन । तुष्टस्य स्तुतिना किन्ते दर्शनेन तव स्तुति ।
राजेन्द्रत्वमनुप्राप्य आगतस्तव वेश्मनि । न त्वया स्तुतवान् राजन् दिव्यैः स्तोत्रैरमानुषैः ।
एवमाभुवमाणौ तौ सम्प्राप्तौ केशवान्तिकं । अर्घाद्यभुजं दृष्ट्वा स्थापयित्वा रथोत्तमं । ११९०
उवाच वदतां श्रेष्ठ उग्रसेन धराधिप । त्वम्मया ह्यभिषिक्तस्त्वं मथुरेशो भव क्षितिः ।
न युक्तमन्यथाकर्त्तुं मथुराधिपते त्वया । अर्घ्यमाचमनीयञ्च पाद्यञ्चापि निवेदितं ।
न दातुमर्हसि राजेन्द्र मे सनय प्रिय । तवाभिप्रायं विज्ञाय ब्रवीमि नृपते वच ।
त्वमेव माथुरो राजा नान्यथा कर्त्तुमर्हसि । स्नानं भागश्च नृपते दास्यामि तव दक्षिणं ।
यथा नृपाणां सर्व्वेषां तथा ते स्थापितोऽग्रत । शतसाहस्रिको भागो वस्त्राभरणवर्ज्जितः । ११९१
आरुहस्व रथं शुभ्रं चामीकरविभूषितं । चामरं व्यजनं छत्रं ध्वजञ्च मथुरेश्वर ।
दिव्याभरणसंयुक्तं मुकुटं भास्करप्रभं । धारयस्व महाभाग पालयस्व पुरीमिमां ।
पुत्रपौत्रैः परिवृतो मथुरां प्रतिपालय । शिलारिगणसंघास्त भोजवंशं प्रवर्द्धय ।
देवदेवाद्यनन्ताय सौरिणे वज्रपाणिना । प्रेषितं देवराजेन दिव्याभरणमम्बर ।
माथुराणाञ्च सर्व्वेषां भागा दीनारिका दश । सूतमागधवन्दीनामेकैकश्च सहस्रिकं । ११९२
वृद्धस्त्रीजनसंघानां गणिकानां शतं शतं । नृपेण सह तिष्ठन्ति विकद्रुप्रमुखाश्च ये ।
दशसाहस्रिको भागस्तेषां धात्रा प्रकल्पित ।
॥ वैशम्पायन उवाच ॥ एवं सपूज्य राजेन्द्र माथुराणां वसूत्तमे । कृत्वा सुमहदानन्दं मथुरां मधुसूदन ।
दिव्याभरणमाल्यैश्च दिव्याम्बरविलेपनैः । दीयमानं समन्ताच्च देवैरिव त्रिपिष्टपे ।
भेरीपटहनादेन शङ्खदुन्दुभिनिस्वनैः । बृंहितेन च नागानां हयानां हेषितेन च । ११९३
सिंहनादैश्च शूराणां रथनेमिस्वनेन च । तुमुलः सुमहानासीन्नादो मेघरवोपमः ।
वन्दिभिः स्तूयमानश्च नमस्कुरपि प्रभो । दत्त्वा दानमनन्तञ्च स ययौ विश्वयं हरिः ।
स्वभावेनामितमात्रत्वाद्दृष्ट्वार्ध्वं शतोऽधिक । अनहङ्कारभावाच्च विस्मयं न जगाम ह ।
दीप्यमानः स्ववपुषा आयान्तं भास्करप्रभं । दृष्ट्वा मथुरवासिनो नमस्कुः पदे पदे ।
रथ नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्य्यङ्कमुत्सृज्याजगाम मथुरां पुरीं । ११९४

मद्धा वलिं महावीर्य्यं दुर्ज्जयं त्रिदशैरपि । शक्राय प्रददौ राज्यं त्रैलोक्यं वज्रपाणये ।
हत्वा दैत्यगणान् सर्व्वान् कंसञ्च बलिनाम्बरं । भोजराजाय मथुरां दत्त्वा केशिनिषूदनः ।
नाभिषिक्तः स्वयं राज्ये नोपविष्टो नृपासने । राजेन्द्रत्वमभीप्सन् वै मथुरामन्वपालयत् ।
एवमन्योन्यसंजल्पं श्रुत्वा पुरनिवासिनां । सूतमागधवन्दीनामिदमूचुर्गणा गिरः ।
किं वा शक्यामहे वक्तुं गणानान्ते गुणोदधे । मानुषेणैकजिह्वेन प्रभावोत्साहसम्भवान् । १२२५
सहस्रभोगी नागेन्द्रः कदाचिद्देवबुद्धिमान् । द्विसहस्रेण जिह्वेन वासुकिः प्रथयिष्यति ।
किन्त्वद्भुतमिदं लोके मानवेन्द्रेषु भूतले । न भूतं न भविष्यञ्च शक्रादासनमागतं ।
सभावतरणञ्चैव कलसैरागतं स्वयं । न श्रुतं न च दृष्टं वो तेन मन्यामहेऽद्भुतं ।
धन्या देवी महाभागा देवकी योषिताम्बरा । भवन्तं त्रिदशश्रेष्ठं धृत्वा गर्भेण केशवं ।
इति संजल्पमानानां शृण्वन्तौ पृथगीरितं । उग्रसेनं पुरस्कृत्य भ्रातरौ रामकेशवौ । १२३०
प्राकारद्वारि सम्प्राप्तावर्च्चयामास वै तदा । अर्घ्यमाचमनीं दत्त्वा पाद्यं पाद्येति चाब्रवीत् ।
उग्रसेनस्ततो धीमान् केशवस्य रथात्पतः । प्रणम्य शिरसा कृष्णं रथमारुह्य वीर्य्यवान् ।
घनवत्तोयधारेण ववर्षं कनकाम्बुभिः । धनौघैर्वर्षमाणस्तु संप्राप्तः पितृवेश्मनि ।
मथुराधिपतिः श्रीमानुवाच मधुसूदनः । राजेन्द्रत्वमनुप्राप्य युक्तं मे पितृवेश्मनि ।
स्थापितुं देवराजेन दत्ते सिंहासने प्रभो । नेष्यामि मथुरेशस्य सभां भुजबलार्ज्जितां । १२३५
प्रसादयिष्ये भगवन् न कोपं कर्त्तुमर्हसि । देवकी वसुदेवस्य रोहिणी च विशाम्पते ।
न किञ्चित्करणे शक्ता हर्षविक्लवमोहिताः । कंसमाता ततो राजन्नर्चयामास केशवं ।
मानादिर्द्दिशजानीत कंसेनोपार्ज्जितं धनं । देशकालं समालोक्य पादपद्मे निवेदितं ।
उग्रसेनं समाहूय उवाच श्लक्ष्णया गिरा ।
॥ कृष्ण उवाच ॥ न चाहं मथुराकाङ्क्षी न मया वित्तकाम्यया । घातितौ तव पुत्रौ तौ कालेन निधनङ्गतौ । १२४०
यजस्व विविधान् यज्ञान् ददस्व विपुलं धनं । जयस्व रिपुसेनाञ्च मम बाहुबलाश्रयात् ।
त्यज स्वगतसन्तापं कंसनाशोद्भवं भयं । नयस्व वित्तनिचयं मया दत्तं पुनस्तव ।
इति सन्त्वास्य राजानं कृष्णोऽथ हलिना सह । प्रविवेश ततः श्रीमान्मातापित्रोर्यदन्तिकं ।
आनन्दपरिपूर्णाभ्यां हृदयाभ्यां महाबलौ । पितृमात्रोर्हि पादान् वै नमस्कर्तुरानतौ ।
तस्मिन्मुहूर्त्ते नगरी मथुरा न बभूव सा । स्वर्गलोकं परित्यज्यावतीर्णेवामरावती । १२४५
वसुदेवस्य भवनं समीक्ष्य पुरवासिनः । मनसा चिन्तयामासुर्देवलोकं न भूतले ।
विसृज्य मथुरेशन्तु महिषीसहितं नृपं । भवनं वसुदेवस्य प्रविश्य बलकेशवौ ।
न्यस्तशस्त्रावुभौ वीरौ तस्थतुः स्वैरचारिणौ । ततः कृताह्निकौ भूत्वा सुखासीनौ कथान्तरे ।
एतस्मिन्नेव काले तु महोत्पातो बभूव ह । बभ्रमुश्च घनाकाशे चेलुश्चावनिपर्व्वताः ।
समुद्राः क्षुभिताः सर्व्वे विभ्रान्ता भोगिनाम्बराः । कम्पिता यादवाः सर्व्वे न्युब्जाश्च पतिता भुवि । १२५०

तान् सन्निपतितान् दृष्ट्वा रामकृष्णौ तु निश्चलौ । महता पक्षवातेन विघ्नातौ पतगोत्तमं ।
ददृशं समनुप्राप्तं दिव्यस्रगनुलेपनं । प्रणम्य शिरसा ताभ्यां सौम्यरूपी हुताशनः ।
तं दृष्ट्वा समनुप्राप्तं सचिवं साम्परायिकं । इतिमन्तं गरुत्मन्तं जगाद मधुसूदनः ।
स्वागतं खचरश्रेष्ठ सुरसेनारिमर्द्दन । विनताहृदयानन्द स्वागतं केशवप्रिय ।
तमुवाच ततः कृष्णः स्थितं देहमिवापरं । तुल्यधामर्थया वाचा आसीनं विनतात्मजं । ११११
॥ कृष्ण उवाच ॥ यास्यामः पतगश्रेष्ठ भोजस्यान्तःपुरं महत् । तत्र गत्वा सुखासीना मन्त्रयामो मनोगतं ।
॥ वैशम्पायन उवाच ॥ प्रविष्टौ तौ महावीर्य्यौ बलदेवजनार्द्दनौ । वैनतेयद्वतीयेन गुह्यं मन्त्रममन्त्रयन् ।
अवध्योऽसौ हतोऽस्माकं सुमहच्च रिपोर्ब्बलं । हतं सैन्येन महता महद्भिश्च नराधिपैः ।
बहुलानि च सैन्यानि हन्तुं वर्षशतैरपि । न शक्ष्यामः स्वयं नेतुं जरासन्धस्य वाहिनीं ।
अतोऽर्थं वैनतेय त्वां ब्रवीमि मथुरां पुरीं । वसतोरावयोः श्रेयो न भवेदिति मे मतिः । ११८०
॥ गरुड उवाच ॥ देवदेवं नमस्कृत्वा गतोऽहं भवतोऽन्तिकात् । वासार्थमीक्षितुं भूमिं तव देव कुशस्थलीं ।
गत्वाऽहं खे समास्थाय समन्तादवलोक्य तां । दृष्ट्वा वै विबुधश्रेष्ठ पुरलक्षणपूजितां ।
सागरानूपविपुलां प्रागुदक्प्रवणीतलां । सर्व्वतोदधिमध्यस्थाममेयाम्भिदशैरपि ।
सर्व्वरत्नाकरवतीं सर्व्वकामफलद्रुमां । सर्व्वर्त्तुकुसुमाकीर्णां सर्व्वतः सुमनोहरां ।
सर्व्वाश्रमाधिवासाश्च सर्व्वकामगुणैर्युतां । नरनारीगणाकीर्णां नित्यामोदविवर्द्धिनीं । ११८९
प्राकारपरिखोपेतां गोपुराट्टालमालिनीं । विचित्रचत्वरपथां विपुलद्वारतोरणां ।
यन्त्रार्गलविचित्राढ्यां हेमप्राकारशोभितां । शरभागारकलिलां रथनेमिस्वनाकुलां ।
नानादिग्देशजाकीर्णां दिव्यपुष्पफलद्रुमां । पताकाध्वजमालाढ्यां महाभवनशालिनीं ।
भीषणीं रिपुसंघानां मित्राणां हर्षवर्द्धिनीं । मनुजेन्द्राधिवासेभ्यो विशिष्टां नगरोत्तमां ।
रैवतश्च गिरिश्रेष्ठं कुरु देव सुरालयं । नन्दनप्रतिमं दिव्यं पुरद्वारस्य भूषणं । ११०
कारयस्वाधिवासन्ते तत्र गत्वा सुरोत्तम । कुमाराणां प्रचारश्च सुरम्यो भविष्यति ।
नाम्ना द्वारवती नाम त्रिषु लोकेषु विश्रुता । भविष्यति पुरी रम्या शक्रस्येवामरावती ।
यदि स्यात् संहता भूमिं प्रदास्यति महोदधिः । यथेष्टं विविधं कृत्वा विश्वकर्म्मा रचिष्यति ।
मणिमुक्ताप्रवालैश्च वज्रवैदूर्य्यसप्रभैः । द्रव्यैरभिप्राययुतैर्द्दिव्यैस्त्रैलोक्यजैः ।
दिव्यसम्भवसमाकीर्णान् स्वर्गे देवसभोपमान् । जाम्बूनदमयान् शुभ्रान् सर्व्वरत्नविभूषितान् । ११९६
दिव्यध्वजपताकाढ्यान् देवकिन्नरपालितान् । चन्द्रसूर्य्यप्रभाकीर्णान् प्रासादान् कारय प्रभो ।
॥ वैशम्पायन उवाच ॥ एवं कृत्वा तु संजल्पं वैनतेयोऽथ केशवं । प्रणम्य शिरसा ताभ्यां निषसाद हुताशनः ।
कृष्णोऽपि रामसहितो विचिन्त्य हितमीरितं । प्रकाशं कर्त्तुकामश्च विसृज्य विनतात्मजं ।
सत्कृत्य विधिवद्राजन् महार्हवरभूषणैः । मोदिते सुखिनौ तत्र देवलोके यथाऽमरौ ।
तस्य तद्वचनं श्रुत्वा भोजराजो महायशाः । कृष्णं स्नेहेन विसर्ज्ज समायै वचनास्ततं । ११२०

॥ उग्रसेन उवाच ॥ कृष्ण कृष्ण महाबाहो यदूनां नन्दिवर्द्धन । श्रूयतां यदहं त्वाऽद्य वक्ष्यामि रिपुसूदन ।
त्वया विहीनाः सर्व्वे स्म न शक्ताः सुखमासितुं । पुरेऽस्मिन् विषयान्ते वा पतिहीना इव स्त्रियः ।
त्वन्नाथा वयन्तात त्वद्बाहुबलमाश्रिताः । बिभीमो न नरेन्द्राणां सेन्द्राणामपि मानद ।
विजयाय यदुश्रेष्ठ यत्र यत्र गमिष्यसि । तत्र त्वं सहितोऽस्माभिर्गच्छेथा यादवर्षभ ।
तस्य राज्ञो वचः श्रुत्वा सस्मितं देवकीसुतः । यथेष्टं भवतामद्य तथा कर्त्ताऽस्म्यसंशयं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीस्वयंवरे मन्त्रोदाहरणे त्रयोदशाधिकशततोऽध्यायः ॥ ११३ ॥

॥ वैशम्पायन उवाच ॥ कस्यचित्त्वथ कालस्य सभ्यांस्तान् यदुसंसदि । बभाषे पुण्डरीकाक्षो हेतुमद्वाक्यमुत्तमं ।
यादवानामियं भूमिर्म्मथुरा राष्ट्रवर्द्धिनी । वयञ्चैवेह सम्भूता व्रजे च परिवर्द्धिताः ।
तत्त्विदानीं गतं दुःखं शत्रवश्च पराजिताः । नृपेषु जनितं वैरं जरासन्धेन विग्रहः ।
वाहनानि च नः सन्ति पादातञ्चाप्यनन्तकं । रत्नानि च विचित्राणि मित्राणि सुबहूनि च ।
इयञ्च माथुरी भूमिरल्पा गम्या परस्य तु । वृद्धिश्चापि पराऽस्माकं बलिनो मित्रतस्तथा ।
कुमारकोट्यो याश्चेमाः पदातीनां गणाश्च ये । एषामपीह वसतां संमर्द्दमुपलक्षये ।
तस्मान्मम रोचतेऽन्यत्र निवासो यदुपुङ्गवाः । पुरीं निवेशयिष्यामि मम तत्त्वनुमन्यथ ।
एतद्यदनुकूलं वो ममाभिप्रायजं वचः । भवाय भवतां काले मयोक्तं यदुसंसदि ।
तमूचुर्यादवाः सर्व्वे प्रहृष्टमनसस्तदा । साध्यतां यदभिप्रेतं जनस्यास्य भवाय च ।
ततः समन्त्रयामासुर्वृष्णयो मन्त्रमुत्तमं । अवध्योऽसौ नृपोऽस्माकं सुमहच्च रिपोर्ब्बलं ।
ततः सैन्यक्षयश्चापि महानिह नराधिपे । सङ्गतानि च सैन्यानि हन्तुं वर्षशतैरपि ।
न शक्ष्यामो हतस्तेषामपयानेऽभवन्मतिः । एतस्मिन्नन्तरे राजा स कालयवनस्तदा ।
सैन्येन तद्विधेनैव मथुरामभ्युपागमत् । ततो जरासन्धबलं दुर्निवार्य्यं महत्तदा ।
ते कालयवनञ्चैव श्रुत्वेदं प्रतिपेदिरे । केशवः पुनरेवाह यादवान् सत्यसङ्गरान् ।
अद्यैव दिवसः पुण्यो निर्यात सबलानुगाः । ततो निश्चक्रमुः सर्व्वे यादवाः कृष्णशासनात् ।
घोषा इव समुद्रस्य वलोघप्रतिनादिताः । संहृष्टास्ते कनकाधि वसुदेवपुरोगमाः ।
मुखपट्टैर्गजैश्चैव रथैरश्वैश्च दंशिताः । आहत्य दुन्दुभीः सर्व्वे सधनाश्चास्त्रिणाश्च वा ।
निर्ययुर्यादवाः सर्व्वे मथुरामपहाय वै । स्कन्दर्भ काञ्चनापीडैर्मत्तैश्च वरवारणैः ।
एतमुतैश्च तुरगैः कशापार्ष्णिप्रचोदितैः । स्वानि स्वानि बलाग्राणि शोभयन्तः प्रकल्पिताः ।
प्रययुर्वृष्णयः पुरतः कृष्णयोः भरतर्षभ । ततो मुख्यतराः सर्व्वे यादवा रणशोभिनः ।
अनीकानि कर्षन्तो वासुदेवपुरोगमाः । ते स्म नानालताचित्रं नारिकेलवनैर्युतं ।
क्रौञ्चमालगणैः कान्तं केतकीषण्डमण्डितं । पुन्नागतालीबहुलं द्राक्षावनघनं क्वचित् ।
सिन्धुराजस्य प्रययुर्यदुपुङ्गवाः । ते तत्र रमणीयेषु विषयेषु मुखप्रियाः ।
मुमुदुर्यादवाः सर्व्वे देवाः स्वर्गगता यथा । पुरस्य विचिन्वन्ं स कृष्णः परवीरहा ।

दद‍र्श विपुलं देशं सागरानूपशोभितं। वाहनानां हितञ्चैव सिकताताम्रमृत्तिकं। ६३०
पुरलक्षणसम्पन्नं कृतास्पदमिव श्रिया। सागरानिलसंवीतं सागराम्बुनिषेवितं।
विषयं सिन्धुराजस्य शोभितं पुरलक्षणैः। तत्र रैवतको नाम पर्व्वतो नातिदूरतः।
मन्दरोदारशिखरः सर्व्वतोऽभिविराजते। तत्रैकलव्यसंवासो द्रोणेनाध्युषितश्चिरं।
प्रभूतपुरुषोपेतः सर्व्वरत्नसमाकुलः। विहारभूमिस्तत्रैव तस्य राज्ञः सुनिर्मिता।
नाम्ना द्वारवती नाम स्वयंताष्टापदोपमा। केशवेन मतिस्तत्र पुर्य्यर्थे विनिवेशिता। ६३५
निवेशं तत्र सैन्यानां रोचयन्ति स्म यादवाः। ते रक्तसूर्य्ये दिवसे तत्र यादवपुङ्गवाः।
सेनापालाश्च सञ्चक्रुः स्कन्धावारनिवेशनं। ध्रुवाय तत्र न्यवसत् केशवः सह यादवैः।
देशे पुरनिवेशाय स यदुप्रवरो विभुः। तस्यास्तु विविधं नाम वास्तूनि च गदाग्रजः।
निर्म्ममे पुरुषश्रेष्ठो मनसा यादवोत्तमः। एवं द्वारवतीञ्चैव पुरीं प्राप्य सबान्धवाः।
सुखिनो न्यवसन् राजन् स्वर्गे देवगणा इव। कृष्णोऽपि कालयवनं ज्ञात्वा केशिनिषूदनः। ६४०
जरासन्धभयाच्चैव पुरीं द्वारवतीं ययौ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि द्वारवतीप्रयाणे चतुर्द्दशाधिकशततमोऽध्यायः॥ ११४॥

॥ जनमेजय उवाच॥ भगवन् श्रोतुमिच्छामि विस्तरेण तपोधन। चरितं वासुदेवस्य यदुश्रेष्ठस्य धीमतः।
किमर्थञ्च परित्यज्य मथुरां मधुसूदनः। मध्यदेशस्य ककुदं धाम लक्ष्म्याश्च केवलं।
शृङ्गं पृथिव्याः स्वालक्ष्यं प्रभूतधनधान्यवत्। आर्य्याढ्यजनभूयिष्ठमधिष्ठानवरोत्तमं।
अयुद्धेनैव दाशार्हस्त्यक्तवान् द्विजसत्तम। स कालयवनश्चापि किं कृष्णे प्रत्यपद्यत। ६४५
द्वारकाञ्च समाश्रित्य वारिदुर्गां जनार्द्दनः। किञ्चकार महायोगी महात्मना।
किंवीर्य्यः कालयवनः केन जातश्च वीर्य्यवान्। यमसह्यं समालक्ष्य व्यपयातो जनार्द्दनः।
वैशम्पायन उवाच॥ वृष्णीनामन्धकानाञ्च गुरुर्गार्ग्यो महातपाः। ब्रह्मचारी पुरा भूत्वा न स्म दारान् स विन्दति।
तथा हि वर्त्तमानं तमूर्द्ध्वरेतसमव्ययं। श्यालोऽभिशस्तवान् गार्ग्यमपुमानिति राजनि।
सोऽभिशस्तदा राजन्नगरे सजितश्रये। लिप्सुः पुत्रं ततो गत्वा तपस्तेपे सुदारुणं। ६५०
ततो द्वादशवर्षाणि सोऽप्ययूर्णमभक्षयत्। आराधयन्महादेवमचिन्त्यं शूलपाणिनं।
रुद्रस्तस्मै वरं प्रादात्समर्थं युधि निग्रहे। वृष्णीनामन्धकानाञ्च सर्व्वेषामेव सुतं।
ततः शुश्राव तं राजा यवनाधिपतिर्व्वरं। पुत्रप्रसवनं देवादपुत्रः पुत्रकामिता।
स तमानाय्य नृपतिः सान्त्वयित्वा द्विजर्षभं। घोषमध्ये स्त्रियं राजा गोपस्त्रीषु समासृजत्।
गोपालो तस्सरास्तत्र गोपस्त्रीवेशधारिणी। धारयामास गार्ग्यस्य गर्भं दुर्द्धरमच्युत। ६५५
मानुष्यां गार्ग्यभार्य्यायां नियोगाच्छूलपाणिनः। स कालयवनो नाम जज्ञे शूरो महाबलः।
अपुत्रस्याथ राज्ञस्तु ववृधेऽन्तःपुरे शिशुः। तस्मिन्नुपरते राजन् स कालयवनो नृपः।
युद्धाभिकामो नृपतिः पर्य्यपृच्छद्द्विजोत्तमान्। वृष्ण्यन्धककुलं तस्य नारदेन निवेदितं।

विज्ञाय वरदानन्तु नारदान्मधुसूदनः । उपप्रैक्षत तेजस्वी वर्द्धन्तं यवनेषु तं ।
स विवृद्धो यदा राजा यवनानां महाबलः । तत एनं नृपा म्लेच्छाः संश्रित्यानुययुस्तदा ।
शकास्तुखारा दरदाः पारदास्तङ्गणाः खशाः । पह्लवाः शतशश्चान्ये म्लेच्छा हैमवतास्तथा ।
स तैः परिवृतो राजा दस्युभिः शलभैरिव । नानावेशायुधैर्भीमैर्मथुरामभ्यवर्त्तत ।
गजवाजिखरोष्ट्राणामयुतैरर्बुदैरपि । पृथिवीं कम्पयामास सैन्येन महता वृतः ।
रेणुना सूर्य्यमार्गन्तु समवच्छाद्य पार्थिव । मूत्रेण शकृता चैव सैन्येन सस्रजे नदीं ।
अश्वोष्ट्रशकृतां राशेर्निःसृता वै यतो नृप । ततोऽश्वशकृदित्येवं नाम तस्या बभूव ह ।
तत्सैन्यं महदायाते श्रुत्वा वृष्ण्यन्धकाग्रणीः । वसुदेवः समानाय्य ज्ञातीनिदमुवाच ह ।
इदं समुत्थितं घोरं वृष्ण्यन्धकभयं महत् । अवध्यश्चापि नः शत्रुर्वरदानात्पिनाकिनः ।
सामादयोऽभ्युपायाश्च विहितास्तेऽस्य सर्वशः । मत्तो मदबलाभ्यान्तु युद्धमेव चिकीर्षति ।
एतावानिह वाक्यस्य कथितो नारदेन मे । जरासन्धस्य सो राजा नित्यमेव न मृष्यते ।
तथाऽन्ये पृथिवीपाला वृष्णिचक्रप्रतापिताः । केचित् कंसवधाच्चापि विरक्तास्तद्गता नृपाः ।
समाश्रित्य जरासन्धमस्मान्निच्छन्ति बाधितुं । बहवो ज्ञातयश्चैव यदूनां निहता नृपैः ।
विवर्द्धितुं न शक्ष्यामः पुरेऽस्मिन्निति केशवः । अपयाने मतिं कृत्वा दूतं तस्मै ससर्ज्ज ह ।
ततः कुम्भे महासर्पं भिन्नाञ्जनचयोपमं । घोरमाशीविषं कृष्णं कृष्णः प्राक्षेपयत्तदा ।
ततस्तं मुद्रयित्वा तु स्वदूतेनाभ्यहारयत् । निदर्शनार्थं गोविन्दो भीषयामास तं नृपं ।
स दूतः कालयवने दर्शयामास तं घटं । कालसर्पोपमः कृष्ण इत्युक्त्वा भरतर्षभ ।
तत्कालयवनो बुद्ध्वा त्रासनं यादवैः कृतं । पिपीलिकानां चण्डानां पूरयामास तं घटं ।
स सर्पो बहुभिस्तीक्ष्णैः सर्व्वतस्तैः पिपीलिकैः । भक्ष्यमाणः किलाङ्गेषु भस्मीभूतोऽभवत्तदा ।
तं मुद्रयित्वा तु घटं तथैव यवनाधिपः । प्रेषयामास कृष्णाय बाहुल्यमुपवर्णयन् ।
वसुदेवस्तु तं दृष्ट्वा विहतं योगमात्मनः । उत्सृज्य मथुरामाशु द्वारकामभिजग्मिवान् ।
वैरस्यान्तं विधित्सुस्तु वासुदेवो महायशाः । निवेश्य द्वारकां राजन् वृष्णीनाश्वास्य चैव ह ।
पदातिः पुरुषव्याघ्रो बाहुप्रहरणस्तदा । आजगाम महायोगी मथुरां मधुसूदनः ।
तं दृष्ट्वा निर्ययौ हृष्टः स कालयवनो रुषा । प्रेक्षापूर्व्वञ्च कृष्णोऽपि निश्चक्राम महाबलः ।
अथान्वगच्छद्गोविन्दं जिघृक्षुर्यवनेश्वरः । स चैनमशकद्राजा ग्रहीतुं योगधर्म्मिणं ।
मान्धातुस्तु सुतो राजा मुचुकुन्दो महायशाः । पुरा देवासुरे युद्धे कृतकर्म्मा महाबलः ।
वरेण च्छन्दितो देवैर्निद्रामेव स वृतवान् । श्रान्तस्य तस्य वागेवं तदा प्रादुरभूत्किल ।
प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः । चक्षुषा क्रोधदीप्तेनेत्येवमाह पुनः पुनः ।
एवमस्त्विति तं शक्र उवाच त्रिदशैः सह । स सुरैरभ्यनुज्ञात आदिराजमुपागमत् ।
स पर्व्वतगुहां काञ्चित्प्रविश्य श्रमकर्षितः । सुष्वाप कालमेतं वै यावत् कृष्णस्य दर्शनं ।

तत्सर्व्वं वासुदेवस्य नारदेन निवेदितं। वरदानञ्च देवेभ्यस्तेजस्तस्य च भूपतेः।
कृष्णोऽनुगम्यमानश्च तेन म्लेच्छेन शत्रुणा। तां गुहां मुचुकुन्दस्य प्रविवेश विनीतवत्। ६४७०
शिरःस्थाने तु राजर्षेर्मुचुकुन्दस्य केशवः। सन्दर्शनपथं त्यक्त्वा तस्थौ बुद्धिमताम्बरः।
अनुप्रविश्य यवनो ददर्श पृथिवीपतिं। स तं सुप्तं कृतान्ताभमाससाद सुदुर्मतिः।
वासुदेवन्तु तं मत्वा घट्टयामास पार्थिवं। पादेनात्मविनाशाय शलभः पावकं यथा।
मुचुकुन्दस्तु राजर्षिः पादस्पर्शप्रबोधितः। चुकोप निद्राच्छेदेन पादस्पर्शेन तेन च।
सं स्मृत्य वरं शक्रादवैक्षत तमग्रतः। स दृष्टमात्रः क्रुद्धेन सम्प्रजज्वाल सर्व्वतः। ६४७५
ददाह पावकस्तन्तु शुष्कं वृक्षमिवाशनिः। क्षणेन कालयवनं नेत्रतेजोविनिर्गतः।
तं वासुदेवः श्रीमन्तं चिरसुप्तं नराधिपं। कृतकार्य्योऽब्रवीद्धीमानिदं वचनमुत्तमं।
राजंश्चिरप्रसुप्तोऽसि कथितो नारदेन मे। कृतं मे सुमहत्कार्य्यं स्वस्ति तेऽस्तु प्रयाम्यहं।
वासुदेवमथालक्ष्य राजा ह्रस्वं प्रमाणतः। परिवृत्तं युगं मेने कालेन महता तदा।
उवाच राजा गोविन्दं को भवान् किमिहागतः। कश्च कालं प्रसुप्तोऽस्मि यदि जानासि कथ्यतां। ६४८०
॥ वासुदेव उवाच ॥ सोमवंशोद्भवो राजा ययातिर्नाम नाहुषः। तस्य पुत्रो यदुर्ज्येष्ठस्तस्मात्तस्य यवीयसः।
यदुवंशे समुत्पन्नं वसुदेवात्मजं विभो। वासुदेवं विजानीहि नृपते मामिहागतं।
त्रेतायुगे प्रसुप्तोऽसि विदितो मेऽसि नारदात्। इदं कलियुगं विद्धि किमन्यत्करवाणि ते।
मम शत्रुस्त्वया दग्धो देवदत्तवरो नृप। अवध्यो यो मया संख्ये भवेद्वर्षशतैरपि।
॥ वैशम्पायन उवाच ॥ इत्युक्तः स तु कृष्णेन निर्ज्जगाम गुहामुखात्। अन्वीयमानः कृष्णेन कृतकार्य्येण धीमता। ६४८५
ततो ददर्श पृथिवीमावृतां ह्रस्वकैर्नरैः। अल्पोत्साहैरल्पबलैरल्पवीर्य्यपराक्रमैः।
परेणाधिष्ठितञ्चैव राज्यं केवलमात्मनः। प्रीत्या विसृज्य गोविन्दं प्रविवेश महावनं।
हिमवन्तमगाद्राजा तपसे धृतमानसः। ततः स तप आस्थाय विनिर्मुच्य कलेवरं।
आरुरोह दिवं राजा कर्म्मभिः स्वैर्जितो शुभैः। वासुदेवोऽपि धर्म्मात्मा उपायेन महामनाः।
घातयित्वात्मनः शत्रुं तत्सैन्यं प्रत्यपद्यत। प्रभूतरथहस्त्यश्ववर्म्मशस्त्रायुधध्वजं। ६४९०
आदायोपययौ धीमांस्तत्सैन्यं निहतेश्वरं।
निवेदयामास नराधिपे तदा तदुग्रसेने प्रतिपूर्णमानसः। जनार्द्दनो द्वारवतीञ्च तां पुरीमशोभयत्तेन धनेन भूरिणा।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कालयवनवधे पञ्चदशाधिकशततोऽध्यायः॥ ११५॥
॥ वैशम्पायन उवाच ॥ ततः प्रभाते विमले भास्करेऽभ्युदिते तदा। कृतजप्यो हृषीकेशो वनान्ते निषसाद ह।
परिचक्राम तं देशं दुर्गस्थानदिदृक्षया। उपतस्थुः कुलश्रेष्ठा यादवा यदुनन्दनं।
रोहिण्यामहनि श्रेष्ठे स्वस्तिवाच्य द्विजोत्तमान्। पुण्याहघोषैर्विपुलैर्दुर्गस्यारम्भवान् क्रियां। ६४९५
ततः पङ्कजपत्राक्षो यादवान् केशिसूदनः। प्रोवाच वदतां श्रेष्ठो देवान् वृत्ररिपुर्यथा।
कल्पितेयं मया भूमिः पश्यध्वं देवसद्मवत्। नाम चास्याः कृतं पुर्य्याः ख्यातिं यदुपयास्यति।

इयं द्वारवती नाम पृथिव्यां निर्म्मिता मया । भविष्यति पुरी रम्या शक्रस्येवामरावती ।
तन्निवासाः कारयिष्ये चिह्नान्यायतनानि च । चत्वरान् राजमार्गांश्च समानन्तःपुराणि च ।
देवा इवात्र मोदन्तां भवन्तो विगतज्वराः । बाधमाना रिपून् शत्रूनुग्रसेनपुरोगमाः । ६५००
गृह्णन्तां गृहवास्तूनि कार्य्यन्तां त्रिकचत्वराः । मीयन्तां राजमार्गाश्च प्राकारस्य च या गतिः ।
प्रेष्यन्तां शिल्पिमुख्या वै नियुक्ता वेश्मकर्म्मसु । नियुज्यन्ताश्च देशेषु प्रेष्यकर्म्मकरा जनाः ।
एवमुक्तास्तु यदवो गृहसंग्रहतत्पराः । यथानिवेशं संहृष्टाश्चक्रुर्व्वास्तुपरिग्रहं ।
सूत्रहस्तास्ततो मानं चक्रुर्यादवपुङ्गवाः । पुण्येऽहनि महाराज द्विजातीन् प्रतिपूज्य च ।
वास्तुदैवतकर्म्माणि विधिनाऽकारयंस्ततः । स्थपतीनथ गोविन्दस्तत्रोवाच महामतिः । ६५०५
अस्मदर्थे सुविहितं क्रियतामत्र मन्दिरं । विभक्तचत्वरपथं सुनिविष्टेष्टदैवतं ।
ते तथेति महाबाहुमुक्त्वा स्थपतयस्तदा । दुर्गकर्म्मणि सम्भारानुपलभ्य यथाविधि ।
यथान्यायं निर्म्ममिरे द्वाराण्यायतनानि च । स्थानानि विदधुस्तेषां ब्रह्मादीनां यथाक्रमं ।
अपामग्नेः सुरेशस्य दृषदोलूखलस्य च । चातुर्द्दैवानि चत्वारि द्वाराणि विदधुश्च ते ।
शुद्धाक्षमैन्द्रं भल्लाटं पुष्पदन्तं तथैव च । तेषु वेश्मसु युक्तेषु यादवेषु महात्मसु । ६५१०
पुर्य्याः क्षिप्रं प्रवेशार्थं चिन्तयामास माधवः । तस्य देवोत्थिता बुद्धिर्विमला क्षिप्रकारिणी ।
पुर्य्याः सा वै प्रियकरी यदूनामभिवर्द्धिनी । शिल्पिमुख्यस्तु देवानां प्रजापतिसुतः प्रभुः ।
विश्वकर्म्मा स्वमत्या वै पुरीं संस्थापयिष्यति । मनसा समनुध्याय तस्यागमनकारणात् ।
त्रिदशाभिमुखः कृष्णो विविक्ते समपद्यत । तस्मिन्नेव ततः काले शिल्पाचार्य्यो महामतिः ।
विश्वकर्म्मा सुरश्रेष्ठः कृष्णस्य प्रमुखे स्थितः । ६५१५
॥ विश्वकर्म्मोवाच ॥ शक्रेण प्रेषितः क्षिप्रं तव विष्णो दृतव्रत । किङ्करः समनुप्राप्तः शाधि मे किं करोमि ते ।
यथा प्रभुः स देवेशस्त्र्यम्बकश्च यथाऽव्ययः । तथा त्वं देव मान्योऽसि विशेषो नास्ति वः प्रभो ।
त्रैलोक्यव्यापिकां वाचमुत्सृज्यस्व महाभुज । एषोऽस्मि परितुष्ट्यर्थं किं करोमि प्रशाधि मां ।
श्रुत्वा विनीतं तद्वाक्यं केशवो विश्वकर्म्मणः । प्रत्युवाच यदुश्रेष्ठः कंसारिरतुलं वचः ।
श्रुतार्थो देवगुह्यस्य भवान् यत्र वयं स्थिताः । अवश्यं त्विह कर्त्तव्यं सदनं मे सुरोत्तम । ६५२०
तदियं पूः प्रकाशार्थं निवेश्या मम सुव्रत । मत्प्रभावानुरूपैश्च गृहैरेषेयं समन्ततः ।
उत्तमा च पृथिव्यां स्यात् यथा स्वर्गेऽमरावती । तथेयं हि त्वया कार्य्या शक्तो ह्यसि महामते ।
मम स्थानमिदं कार्य्यं यथैव त्रिदिवे तथा । मर्त्याः पश्यन्तु मे लक्ष्मीं पुर्य्यां यदुकुलस्य च ।
एवमुक्तस्ततः प्राह विश्वकर्म्मा मतीश्वरः । कृष्णमक्लिष्टकर्म्माणं देवामित्रविनाशनं ।
सर्व्वमेतत् करिष्यामि यत्त्वयाऽभिहितं प्रभो । पुरी त्वियं जनस्यास्य न पर्य्याप्ता भविष्यति । ६५२५
भविष्यति च विस्तीर्णा हृद्धिरस्याः सुशोभना । चत्वारः सागरा ह्यस्यां विचरिष्यन्ति रूपिणः ।
यदीच्छेत् सागरः किञ्चिदुत्स्रष्टुमिह तोयराट् । ततः स्वायतलक्षणा पुरी स्यात् पुरुषोत्तम ।

एवमुक्तस्ततः कृष्णः प्रागेव कृतनिश्चयः । सागरं सरितां नाथमुवाच वदतांवरः ।
समुद्र दश च द्वे च योजनानि जलाशये । प्रतिसंह्रियतामात्मा यद्यस्ति मयि मान्यता ।
अवकाशे त्वया दत्ते पुरीयं मामकं बलं । पर्य्याप्तविषयारामा समग्रं विषहिष्यति । ९९१०
ततः कृष्णस्य वचनं श्रुत्वा नदनदीपतिः । समारुतेन योगेन उत्ससर्ज्ज जलाशयं ।
विश्वकर्म्मा ततः प्रीतः पुर्य्याः संदृश्य वास्तु तत् । गोविन्दे चैव सम्मानं सागरः कृतवांस्तदा ।
विश्वकर्म्मा ततः कृष्णमुवाच यदुनन्दनं । अद्यप्रभृति गोविन्द सर्व्वे समभिरोहत ।
मनसा निर्म्मिता चेयं मया पूः प्रवरा विभो । अचिरेणैव कालेन गृहसंबाधमालिनी ।
भविष्यति पुरी रम्या सुद्वारा प्रांशुतोरणा । चयाट्टालककेयूरा पृथिव्यां ककुदोपमा । ९९१५
अन्तःपुरञ्च कृष्णस्य परिचर्य्याक्षमं महत् । चकार तस्यां पुर्य्यां वै देवो विदशपूजिते ।
ततः सा निर्म्मिता कान्ता पुरी द्वारवती तदा । मानसेन प्रयत्नेन वैष्णवी विश्वकर्म्मणा ।
विधानविहितद्वारा प्राकारवरशोभिता । परिखाचयसंगुप्ता साट्टप्राकारतोरणा ।
कान्तनारीनरगणा वणिग्भिरुपशोभिता । नानापण्यसमाकीर्णा गगणादिव गाङ्गता ।
प्रपावापीप्रसन्नोदैरुद्यानैरुपशोभिता । समन्ततः संवृताङ्गी वनितेवायतेक्षणा । ९९२०
समृद्धचत्वरवती वेश्मोत्तमघनाचिता । रथ्याकोटिसहस्राढ्या शुभराजपथोत्तरा ।
भूषयन्ती समुद्रं सा स्वर्गमिन्द्रपुरी यथा । पृथिव्यां सर्व्वरत्नानामेका निचयशालिनी ।
सुराणामपि सुश्रेवा सामन्तक्षोभकारिणी । अप्रकाशं तदाकाशं प्रासादैरभिकुर्व्वती ।
पृथिव्यां पृथुराष्ट्रायां जनौघप्रतिनादिता । श्रीघैश्च वारिराजस्य शिशिरीकृतमारुता ।
अनूपोपवनैः कान्तैः कान्ता जनमनोरमा । सतारका द्यौरिव सा द्वारका प्रत्यराजत । ९९२५
प्राकारेणार्कवर्णेन शातकौम्भेन संवृता । हिरण्यप्रतिपूर्णैश्च गृहैर्गम्भीरनिःस्वनैः ।
शुभ्रमेघप्रतीकाशैर्द्वारैः सौधैश्च शोभिता । क्वचित् क्वचिदुदयापैरुपावृत्तमहापथा ।
तामावसत् पुरीं कृष्णः सर्व्वयादवनन्दनः । अभिप्रेतजनाकीर्णां सोमः खमिव भासयन् ।
विश्वकर्म्मकृतां दिव्यां रत्नजालसमाकुलां । विश्वकर्म्मा च तां कृत्वा पुरीं शक्रपुरीमिव ।
जगाम त्रिदिवं देवो गोविन्देनाभिपूजितः । भूयस्तु बुद्धिरभवत् कृष्णस्य विदितात्मनः । ९९३०
जनानिमान् धनौघैस्तु तर्पयेयमहं यदि । स वैश्रवणसंश्लिष्टं निधीनामुत्तमं निधिं ।
शङ्खमाह्वयतेपीन्द्रो निशि स्वभवने विभुः । स शङ्खः केशवाह्वानं ज्ञात्वा हि निधिराट् स्वयं ।
आजगाम समीपं वै तस्य द्वारवतीपतेः । स शङ्खः प्राञ्जलिर्भूत्वा विनयादवनौ गतः ।
कृष्णं विज्ञापयामास यथा वैश्रवणं तथा । भगवन् किं मया कार्य्यं सुराणां वित्तरक्षिणा ।
नियोजय महाबाहो यन्मया कार्य्यमच्युत । तमुवाच हृषीकेशः शङ्खं गुह्यकमुत्तमं । ९९३५
जना येऽस्मिन् हि अधनास्तान्धनेनाभिपूरय । नेच्छाम्यनशितं द्रष्टुं कृशं मलिनमेव वा ।
देहीति चैव याचन्तं नगर्य्यां निर्द्धनं नरं ।

॥ वैशम्पायन उवाच ॥ शिरसा शासनं गृह्य निधिराट् केशवस्य स. । निधीनाज्ञापयामास द्वारवत्यां गृहे गृहे ।
धनौघैरभिवर्षध्वं दक्षु सर्व्वं तथा च ते । नाधनो विद्यते तत्र क्षीणभाग्योऽपि यो नर. ।
द्वारवत्यां पुरि पुरा केशवस्य महात्मन । चकार वायोराह्वानं भूयश्च पुरुषोत्तम । ६५६०
तत्रस्थ एव भगवान् यादवाना प्रियङ्कर । प्राणयोनिस्तु भूतानामुपतस्थे गदाधरं ।
एकमासीनमेकान्ते देवगुह्यधरं प्रभुं । किं मया देव कर्त्तव्य सर्व्वगेनाशुगामिना ।
यथैव दूतो देवानां तथैवास्मि तवानघ । तमुवाच तत कृष्णो रहस्यं पुरुषो हरि ।
मारुतं जगत प्राणरूपिणं समुपस्थितं । गच्छ मारुत देवेशमनुमान्य सहामरै. ।
सभां सुधर्म्मामादाय देवेभ्यस्त्वमिहानघ । यादवा धार्म्मिका ह्येते विक्रान्ताश्च सहस्रश । ६५६५
तस्यां विशेयुरेते हि न तु या कृत्रिमा भवेत् । या ह्यचया सभा रम्या कामगा कामरूपिणी ।
सा यदून् धारयेत् सर्व्वान् यथैव त्रिदशांस्तथा । संगृह्य वचनं तस्य कृष्णस्याक्लिष्टकर्म्मण ।
वायुरात्मोपमगतिर्जगाम त्रिदिवालयं । सोऽनुमान्य सुरान् सर्व्वान् कृष्णवाक्यं निवेद्य च ।
सभां सुधर्म्मामादाय पुनरायान्महीतलं । सुधर्म्मणे सुधर्म्मान्तो कृष्णायाक्लिष्टकर्म्मणे ।
देवो देवसभां दत्त्वा वायुरन्तरधीयत । द्वारवत्यास्तु सा मध्ये केशवेन निवेशिता । ६५७०
सुधर्म्मा यदुमुख्याना देवानां त्रिदिवे यथा । एवं स दिव्यैर्भौमैश्च जलजैश्चाव्ययो हरिः ।
द्रव्यैरलङ्करोति स्म पुरीं स्वां प्रमदामिव । मर्य्यादाश्चैव सञ्चक्रे श्रेणीश्च प्रकृतीस्तथा ।
बलाध्यक्षांश्च युक्तांश्च प्रकृतीशांस्तथैव च । उग्रसेनं नरपतिं काश्यञ्चापि पुरोहितं ।
सेनापतिमनाधृष्टिं विकद्रुं मन्त्रिपुङ्गवं । यादवानां कुलकरान् स्थविरान्दश तत्र वै ।
स्थापयामास मतिमान् सर्व्वकार्य्येष्वनन्तरान् । रथेष्वतिरथो यन्ता दारुक केशवस्य वै । ६५७५
योधमुख्यश्च योधानां प्रवर सात्यकि कृत । विधानमेवं कृत्वा स कृष्ण पुर्य्यामनिन्दित ।
मुमुदे यदुभि सार्द्धं लोकस्रष्टा महीतले । रैवतश्चाथ कन्याञ्च रेवतीं शीलसम्मतां ।
प्रादात्तां बलदेवस्तु कृष्णस्यानुमते तदा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि द्वारवतीनिर्म्माणे षोडशाधिकशततोऽध्याय ॥ ११६ ॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु जरासन्ध प्रतापवान् । नृपानुद्योजयामास चेदिराजप्रियेप्सया ।
सुतया भीष्मकस्याथ रुक्मिण्या रुक्मभूषण । शिशुपालस्य नृपतेर्विवाहो भविता किल । ६५८०
दन्तवक्रस्य तनयं सुवक्त्रममितौजसं । सहस्राक्षसमं युद्धे मायाशतविशारदं ।
पौण्ड्रस्य वासुदेवस्य तथा पुत्त्रं महाबलं । सुदेवं वीर्य्यसम्पन्नं पृथगक्षौहिणीपतिं ।
एकलव्यस्य पुत्त्रञ्च वीर्य्यवन्तं बलान्वितं । पुत्त्रञ्च पाण्ड्यराजस्य कलिङ्गाधिपतिं तथा ।
कृतवैरञ्च कृष्णेन वेणुदारिं नराधिपं । अंशुमन्त तथा क्राथं श्रुतर्व्वाणञ्च भारत ।
निर्वृत्तशत्रु कालिङ्गं गान्धाराधिपतिं तथा । पट्टुसञ्च महावीर्य्यं कौशाम्ब्याधिपमेव च । ६५८५
पट्टुसञ्च महावीर्य्यं काश्याधिपतिमेव च ।

॥ जनमेजय उवाच ॥ कस्मिन् देशे नृपो जज्ञे रुक्मी वेदविदाम्बरः। कस्यान्ववाये द्युतिमान् सम्भूतो द्विजसत्तम।
॥ वैशम्पायन उवाच ॥ राजर्षेर्यादवस्यासीद्विदर्भो नाम वै सुतः। विन्ध्यस्य दक्षिणे पार्श्वे विदर्भां यो न्यवेशयत्।
क्रथकैशिकमुख्यास्तु पुत्त्रास्तस्य महात्मनः। बभूवुर्वीर्य्यसम्पन्नाः पृथग्वंशकरा नृपाः।
तस्यान्ववाये भीमस्य जज्ञिरे वृष्णयो नृप। क्रथस्य त्वंशुमान् वंशे कैशिकस्य तु भीष्मकः।
हिरण्यरोमेत्याख्यं यं दाक्षिणात्येश्वरं जनाः। अगस्त्यगुप्तामाशां स कुण्डिनस्थोऽन्वशान्नृपः।
रुक्मी तस्याभवत् पुत्त्रो रुक्मिणी च विशाम्पते। रुक्मी लस्त्राणि दिव्यानि द्रुमात् प्राप महाबलः।
जामदग्न्यात्तथा रामाद्ब्राह्ममस्त्रमवाप्तवान्। प्रास्पर्द्धत स कृष्णेन नित्यमद्भुतकर्म्मणा।
रुक्मिणी त्वभवद्राजन् रूपेणाप्रतिमा भुवि। चकमे वासुदेवस्तां श्रवादेव महामतिः।
स तया चाभिलषितः श्रवादेव जनार्द्दनः। तेजोवीर्य्यबलोपेतः स मे भर्त्ता भवेदिति।
तां ददौ न च कृष्णाय रुक्मी द्वेषान्महाबलः। याचमानाय कंसस्य द्वेष्योऽसाविति चिन्तयन्।
चैद्यस्यार्थे सुनीथस्य जरासन्धो महाबलः। वरयामास तां राजा भीष्मकं भीमदर्शनं।
चेदिराजस्य हि वसोरासीत् पुत्त्रो बृहद्रथः। मगधेषु पुरा येन निर्म्मितः स गिरिव्रजः।
तस्यान्ववाये संजज्ञे जरासन्धो महाबलः। वसोरेव तदा वंशे दमघोषोऽपि चेदिराट्।
दमघोषस्य पुत्त्रास्तु पञ्च भीमपराक्रमाः। भगिन्यां वसुदेवस्य श्रुतश्रवसि जज्ञिरे।
शिशुपालो दशग्रीवो रैभ्योऽथोपदिशो बली। सर्व्वास्त्रकुशला वीरा वीर्य्यवन्तो महाबलाः।
ज्ञातेः समानवंशस्य सुनीथं प्रददौ सुतं। जरासन्धस्तु सुतवद्दर्शनं जुगोप च।
जरासन्धं पुरस्कृत्य वृष्णिशत्रुं महाबलं। कृतान्यागांसि चैद्येन वृष्णीनां तत्प्रियैषिणा।
जामाता त्वभवत्तस्य कंसस्तस्मिन् हते युधि। कृष्णार्थं वैरमभवत् जरासन्धस्य वृष्णिभिः।
भीष्मकं वरयामास सुनीथार्थे तु रुक्मिणीं। तां ददौ भीष्मकश्चापि शिशुपालाय वीर्य्यवान्।
ततश्चैद्यमुपादाय जरासन्धो नराधिपः। ययौ विदर्भान् सहितो दन्तवक्रेण यायिना।
अनुयातश्च पौण्ड्रेण वासुदेवेन धीमता। अङ्गवङ्गकलिङ्गानामीश्वरश्च महाबलः।
मानयिष्यंश्च तान् रुक्मी प्रत्युद्गम्य नराधिपान्। परया पूजयोपेतांस्तानिनाय पुरीं प्रति।
पितृष्वसुः प्रियार्थञ्च रामकृष्णावुभावपि। प्रययुर्वृष्णयश्चान्ये रथैस्तत्र बलान्विताः।
क्रथकैशिकभर्त्ता तान् प्रतिगृह्य यथाविधि। पूजयामास पूजार्हान् बहिरेव न्यवेशयत्।
श्वो भाविनि विवाहे तु रुक्मिणी निर्ययौ बहिः। चतुर्युजा रथेनैन्द्रं देवतायतनं शुभा।
इन्द्राणीमर्च्चयिष्यन्ती कृतकौतुकमङ्गला। दीप्यमानेन वपुषा बलेन महता वृता।
तां ददर्श तत कृष्णो लक्ष्मीं साक्षादिव स्थितां। रूपेणाग्र्येण सम्पन्नां देवतायतनान्तिके।
वह्नेरिव शिखां दीप्तां मायां भूमिगतामिव। पृथिवीमिव गम्भीरामुत्थितां पृथिवीतलात्।
मरीचिमिव सोमस्य सौम्यां स्त्रीविग्रहां भुवि। श्रीमिवाग्र्यां विनापद्मं भविष्यां श्रीमदायिनीं।
कृष्णेन मनसा दृष्टां दुर्न्निरीक्षां सुरैरपि। श्यामावदातां स्वाक्षीणां पृथुचार्व्वायतेक्षणां।

ताम्रोष्ठनयनापाङ्गीं पूर्णचन्द्रनिभाननां । ताम्रतुङ्गनखीं सुभ्रूं नीलकुञ्चितमूर्द्धजां ।
अत्यर्थं रूपतः कान्तां पीनश्रोणिपयोधरां । तीक्ष्णशुक्लैः समैर्द्दन्तैः प्रभावद्भिरलङ्कृतां ।
अनन्यां प्रमदां लोके रूपेण यशसा श्रिया । रुक्मिणीं रूपिणीं देवीं पाण्डरक्षौमवासिनीं ।
तां दृष्ट्वा ववृधे कामः कृष्णस्य प्रियदर्शनां । हविषेवानलस्यार्चिर्मनस्यां समादधत् । ६६२०
रामेण सह सम्मन्त्र्य केशवस्तु महाबलः । तत्प्रमाथेऽकरोद्बुद्धिं वृष्णिभ्यः प्रणिधाय च ।
कृते तु देवकार्य्ये तां निष्क्रामन्तीं सुरालयात् । उन्मथ्य सहसा कृष्णः स्वं निनाय रथोत्तमं ।
वृक्षमुत्पाट्य रामोऽपि जघानापततः परान् । समनह्यन्त दाशार्हास्तदाज्ञप्तास्तु सर्व्वशः ।
ते रथैर्विविधाकारैः समुच्छ्रितमहाध्वजैः । वाजिभिर्वारणैश्चैव परिवव्रुर्हलायुधं ।
आदाय रुक्मिणीं कृष्णो जगामाशु पुरीं प्रति । रामे भारं समासज्य युयुधाने च वीर्य्यवान् । ६६२५
अक्रूरे विपृथौ चापि गदे च कृतवर्म्मणि । चक्रदेवे सुदेवे च सारणे च महाबले ।
निर्वृत्तशत्रौ विक्रान्ते भङ्गकारे विदूरथे । उग्रसेनात्मजे कङ्के शतद्युम्ने च केशवः ।
राजाधिदेवे मृदरे प्रसेने चित्रके तथा । अरिदान्ते बृहद्दुर्गे श्वफल्के सत्यके पृथौ ।
वृष्ण्यन्धकेषु चान्येषु मुख्येषु मधुसूदनः । गुरुमासज्य तं भारं ययौ द्वारवतीं प्रति ।
दन्तवक्रो जरासन्धः शिशुपालश्च वीर्य्यवान् । सन्नद्धा निर्य्ययुः क्रुद्धा जिघांसन्तो जनार्द्दनं । ६६३०
अङ्गवङ्गकलिङ्गैश्च सार्द्धं पौण्ड्रश्च वीर्य्यवान् । निर्ययौ चेदिराजस्तु भ्रातृभिः स महारथैः ।
तान् प्रत्यस्कन्दन् संरब्धा वृष्णिवीरा महारथाः । सङ्कर्षणं पुरस्कृत्य वासवं मरुतो यथा ।
आपतन्तं हि वेगेन जरासन्धं महाबलं । षड्भिर्विव्याध नाराचैर्युयुधानो महामृधे ।
अक्रूरो दन्तवक्रन्तु विव्याध नवभिः शरैः । तं प्रत्यविध्यत् कारूषो बाणैर्द्दशभिराशुगैः ।
विपृथुः शिशुपालञ्च शरैर्व्विव्याध सप्तभिः । अष्टभिः प्रत्यविध्यत्तं शिशुपालः प्रतापवान् । ६६३५
गवेषणस्तु चैद्यन्तु षड्भिर्विव्याध मार्गणैः । अतिदान्तस्तथाऽष्टाभिर्बृहद्दुर्गन्तु पञ्चभिः ।
प्रतिविव्याध तांश्चैद्यः पञ्चभिः पञ्चभिः शरैः । जघानाश्वांश्चतुर्भिस्तु चतुरो विपृथोः शरैः ।
बृहद्दुर्गस्य भल्लेन शिरश्चिच्छेद वीर्य्यवान् । गवेषणस्य सूतञ्च प्राहिणोद्यमसादनं ।
हताश्वन्तु रथं त्यक्त्वा विपृथुः सुमहाबलः । आरुरोह रथं क्षिप्रं बृहद्दुर्गस्य वीर्य्यवान् ।
विपृथोः सारथिश्चैव गवेषणरथं द्रुतं । आरुह्य जवनानश्वांस्तियन्तुमुपचक्रमे । ६६४०
ते क्रुद्धाः शरवर्षेण सुनीयं समवाकिरन् । नृत्यन्तं रथमार्गेषु चापहस्ताः कलापिनः ।
चक्रदेवो दन्तवक्रं बिभेदोरसि पत्त्रिणा । षट्सु पञ्चभिश्चापि विव्याध युधि मार्गणैः ।
ताभ्यां स विद्धो दशभिर्व्वाणैर्म्मर्म्मातिगैः शितैः । ततो बली चक्रदेवं बिभेद दशभिः शरैः ।
पञ्चभिश्चापि विव्याध स विदूराद्विदूरथं । विदूरथोऽपि तं षड्भिर्व्विव्याधाशु शितैः शरैः ।
त्रिंशता प्रत्यविध्यत्तं बली बाणैर्महाबलं । कृतवर्म्मा बिभेदाशु राजपुत्रं त्रिभिः शरैः । ६६४५
न्यहनत् सारथिञ्चास्य ध्वजञ्चिच्छेद चोच्छ्रितं । प्रतिविव्याध तं क्रुद्धः पौण्ड्रः षड्भिः शिलीमुखैः ।

धनुश्चिच्छेद तत्तस्य भल्लेन कृतवर्म्मण.। निकृत्तधनु: कालिङ्गं विव्याध नवभि शरैः।
तोमरेणांसदेशे तं निर्बिभेद कलिङ्गजः। गजेनाभ्याद्य कङ्कस्तु गजमङ्कस्य वीर्य्यवान्।
तोमरेण जघानाङ्गं बिभेदाङ्गश्च तं शरैः। चित्रकश्च श्वफल्कश्च सत्यकश्च महाबलः।
कलिङ्गस्य तदाऽनीकं नाराचैर्बिभिदुः शितैः। निकृष्टेन द्रुमेणाजौ वङ्गराजस्य कुञ्जरं। ६६५०
जघान रामः संक्रुद्धो वङ्गराजञ्च संयुगे। तं हत्वा रथमारुह्य धनुरादाय वीर्य्यवान्।
सङ्कर्षणो जघानोग्रैर्नाराचैः कैशिकान् बहून्। षड्भिर्निहत्य कारूषान् महेष्वासान् स वीर्य्यवान्।
शतं जघान संक्रुद्धो मागधानां महाबलः। निहत्य तान्महाबाहुर्जरासन्धं ततोऽभ्ययात्।
तमापतन्तं विव्याध नाराचैर्मागधस्त्रिभि। तं बिभेदाष्टभि क्रुद्धो नाराचैर्मुषलायुध।
चिच्छेद चास्य भल्लेन ध्वजं हेमपरिष्कृतं। तद्युद्धमभवद्घोरं तेषां देवासुरोपमं। ६६५५
सृजतां शरवर्षाणि निघ्नतामितरेतरं। गजैर्गजाः सुसंक्रुद्धाः सन्निपेतुः सहस्रशः।
रथैरथाश्च संरब्धाः सादिभिश्चापि सादिनः। पदातयः पदातीनां शक्तिचर्म्मासिपाणयः।
छिन्दन्तश्चोत्तमाङ्गानि विचेरुर्युधि ते पृथक्। असीनां पात्यमानानां कवचेषु महास्वन.।
शराणां पततां शब्द. पक्षिणामिव शुश्रुवे। भेरीशङ्खमृदङ्गानां वेणूनाञ्च मृधे ध्वनिं।
जुगूह घोषः शस्त्राणां ज्याघोषश्च महात्मनां। ६६६०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीहरणे सप्तदशाधिकशततोऽध्याय॥ ११७ ॥
॥ वैशम्पायन उवाच ॥ कृष्णेन ह्रियमाणां वै रुक्मी श्रुत्वा तु रुक्मिणीं। प्रतिज्ञामकरोत् क्रुद्धः समक्षं भीष्मकस्य तु।
अहत्वा युधि गोविन्दमनानीय च रुक्मिणीं। कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि ते।
आस्थाय स रथं वीरः समुद्यतायुधध्वजं। जवेन प्रययौ क्रुद्धो बलेन महता वृत।
तमन्वयुर्नृपाश्चैव दक्षिणापथवासिनः। क्राथोंऽशुमान् श्रुतर्व्वा च वेणुदारिश्च वीर्य्यवान्।
भीष्मकस्य सुताश्चान्ये स्यन्दनै रथिनाम्वराः। क्रथकैशिकमुख्याश्च सर्व्व एव महारथाः। ६६६५
ते गत्वा दूरमध्वानं सरितं नर्म्मदामनु। गोविन्दं ददृशु क्रुद्धाः सहैव प्रियया स्थितं।
अवस्थाप्य च तत्सैन्यं रुक्मी मदबलान्वित.। चिकीर्षन् द्वैरथं युद्धमभ्ययान्मधुसूदनं।
स विव्याध चतुःषष्ट्या गोविन्दं निशितै. शरैः। तं प्रत्यविध्यत्सप्तत्या वाणैर्युधि जनार्द्दन।
यतमानस्य चिच्छेद ध्वजञ्चास्य महाबल। जहार च शिरः कायात्सारथेस्तस्य वीर्य्यवान्।
तं कृच्छ्रगतमाज्ञाय परिवव्रुर्जनार्द्दनं। दाक्षिणात्या जिघांसन्तो राजान सर्व्व एव हि। ६६७०
रंशुमान्महाबाहुर्विव्याध नवभि शरै.। श्रुतर्व्वा पञ्चभि क्रुद्धो वेणुदारिश्च सप्तभि.।
ततोंऽशुमन्तं गोविन्दो बिभेदोरसि वीर्य्यवान्। निषसाद रथोपस्थे व्यथितः स नराधिप।
श्रुतर्व्वणो जघानाश्वांश्चतुर्भिश्चतुर. शरैः। वेणुदारेर्ध्वजं छित्वा भुजं विव्याध दक्षिणं।
तथैव च श्रुतर्व्वाणं शरैर्विव्याध सप्तभि। शिश्रिये च ध्वजं क्लान्तो न्यषीदच्च व्यथान्वित.।

क्रथकैशिकमुख्यास्ते रथवंशेन सर्व्वशः मुञ्चन्तः शरवर्षाणि वासुदेवं ततोऽभ्ययुः । ११७५
बाणैर्बाणांस्तु चिच्छेद तेषां युधि जनार्द्दनः । जघान चैषां संरब्धो यतमानांश्च तान् परान् ।
पुनरन्यांस्तु पञ्चाशन्निजघान शितैः शरैः । क्रुद्धानापततो वीरानाद्रवत्स महाबलः ।
विद्रुतं स्वबलं दृष्ट्वा रुक्मी क्रोधवशङ्गतः । पञ्चभिर्निशितैर्बाणैर्विव्याधोरसि केशवं ।
सारथिञ्चास्य विव्याध सायकैर्निशितैस्त्रिभिः । आजघान ध्वजञ्चास्य शरेणानतपर्व्वणा ।
केशवश्चापि तं षष्ट्या क्रुद्धो विव्याध मार्गणैः । धनुश्चिच्छेद चाप्यस्य यतमानस्य रुक्मिणः । ११८०
अथान्यद्धनुरादाय रुक्मी कृष्णजिघांसया । प्रादुश्चकार स तदा दिव्यान्यस्त्राणि वीर्य्यवान् ।
अस्त्रैरस्त्राणि संवार्य्य तस्य कृष्णो महाबलः । पुनश्चिच्छेद चापञ्च रथेशाञ्च त्रिभिः शरैः ।
स च्छिन्नधन्वा विरथः खड्गमादाय चर्म्म च । उत्पपात रथाद्वीरो गरुत्मानिव वीर्य्यवान् ।
तस्याभिपततः खड्गं चिच्छेद युधि केशवः । नाराचैस्त्रिभिराक्रुद्धो विभेदैनमथोरसि ।
स पपात महाबाहुर्व्वसुधामनुनादयन् । विसंज्ञो मूर्च्छितो राजा वज्रेणेव हतो गिरिः । ११८५
तांश्च राज्ञः शरैः सर्व्वान् पुनर्व्विव्याध केशवः । रुक्मिणं व्यथितं दृष्ट्वा व्यद्रवंस्ते नराधिपाः ।
विचेष्टमानं भूमौ तं भ्रातरं वीक्ष्य रुक्मिणी । पादयोर्न्यपतद्विष्णोर्भ्रातुर्ज्जीवितकाङ्क्षिणी ।
तामुत्थाप्य परिष्वज्य सान्त्वयामास केशवः । अभयं रुक्मिणे दत्त्वा प्रययौ स्वां पुरीं ततः ।
वृष्णयोऽपि जरासन्धं जित्वा तांश्चापि पार्थिवान् । प्रययुर्द्वारकां हृष्टाः पुरस्कृत्य हलायुधं ।
प्रयाते पुण्डरीकाक्षे श्रुतर्व्वाऽभ्येत्य संयुगे । रुक्मिणं रथमारोप्य प्रययौ स्वपुरं ततः । ११९०
अनानीय स्वसारन्तु रुक्मी वीर्य्यमदान्वितः । हीनप्रतिज्ञो नैच्छत् स प्रवेष्टुं कुण्डिनं पुरं ।
विदर्भेषु च वासार्थं निर्म्ममेऽन्यत् पुरं महत् । तद्भोजकटमित्येवं बभूव भुवि विश्रुतं ।
तत्रौजसा महातेजा दक्षिणां दिशमन्वगात् । भीष्मकः कुण्डिने चैव राजावास महाभुजः ।
द्वारकाञ्चापि सम्प्राप्ते रामे वृष्णिबलान्विते । रुक्मिण्याः केशवः पाणिं जग्राह विधिवत् प्रभुः ।
ततः सह तया रेमे प्रियया प्रीयमाणया । सीतयेव पुरा रामः पौलोम्येव पुरन्दरः । ११९५
सा हि तस्याभवज्ज्येष्ठा पत्नी कृष्णस्य भाविनी । पतिव्रता गुणोपेता रूपशीलगुणान्विता ।
तस्यामुत्पादयामास पुत्रान्दश महारथान् । चारुदेष्णं सुदेष्णञ्च प्रद्युम्नञ्च महायशं ।
सुषेणं चारुगुप्तञ्च चारुबाहुञ्च वीर्य्यवान् । चारुविन्दं सुचारुञ्च भद्रचारुन्तथैव च ।
चारुञ्च बलिनां श्रेष्ठं सुतां चारुमतीं तथा । धर्म्मार्थकुशलास्ते तु कृतास्त्रा युद्धदुर्म्मदाः ।
महिषीः सप्त कल्याणीस्ततोऽन्या मधुसूदनः । उपयेमे महाबाहुर्गुणोपेताः कुलोद्गताः । १२००
कालिन्दीं मित्रविन्दाञ्च सत्यां नाग्नजितीं तथा । सुतां जाम्बवतश्चापि रोहिणीं कामरूपिणीं ।
मद्रराजसुताञ्चापि सुशीलां भद्रलोचनां । सात्राजितीं सत्यभामां लक्ष्मणां चारुहासिनीं ।
शैब्यस्य च सुतां तन्वीं रूपेणाप्सरसां समां । स्त्रीसहस्राणि चान्यानि षोडशातुलविक्रमः ।

उपयेमे हृषीकेशः सर्व्वा भेजे च ताः समं । परार्द्ध्यवस्त्राभरणाः कामैः सर्व्वैः समन्विताः ।
जज्ञिरे तस्य पुत्राश्च तासु वीराः सहस्रशः । सर्व्वास्त्रकुशलाः सर्व्वे बलवन्तो महारथाः ।
यज्वानः पुण्यकर्म्माणो महाभागा महाबलाः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिणीहरणे अष्टादशाधिकशततोऽध्यायः ॥ ११८ ॥
॥ वैशम्पायन उवाच ॥ ततः काले व्यतीते तु रुक्मी महति वीर्य्यवान् । दुहितुः कारयामास स्वयंवरमरिन्दमः ।
तत्राहूता हि राजानो राजपुत्राश्च रुक्मिणा । समाजग्मुर्महावीर्य्या नानादिग्भ्यः श्रियाऽन्विताः ।
तत्राजगाम प्रद्युम्नः कुमारैरपरैर्वृतः । सा हि तस्यकमे कन्या स च तां शुभलोचनां ।
शुभाङ्गी नाम वैदर्भी कान्तिद्युतिसमन्विता । पृथिव्यामभवत् ख्याता रुक्मिणस्तनया तदा ।
उपविष्टेषु सर्व्वेषु पार्थिवेषु महात्मसु । वैदर्भी वरयामास प्रद्युम्नमरिसूदनं ।
स हि सर्व्वास्त्रकुशलः सिंहसंहननो युवा । रूपेणाप्रतिमो लोके केशवस्यात्मजोऽभवत् ।
वयोरूपगुणोपेता राजपुत्री च साऽभवत् । नारायणीवेन्द्रसेना जातकामा च तं प्रति ।
वृत्ते स्वयंवरे जग्मू राजानः स्वपुराणि ते । उपादाय तु वैदर्भीं प्रद्युम्नो द्वारकां ययौ ।
स तस्यां जनयामास देवगर्भोपमं सुतं । अनिरुद्धमिति ख्यातं कर्म्मण्याऽप्रतिमं भुवि ।
धनुर्व्वेदे च वेदे च नीतिशास्त्रे च पारगं । अभवत्स यदा राजन्ननिरुद्धो वयोऽन्वितः ।
तदाऽस्य रुक्मिणः पौत्रीं रुक्मिणीं रुक्मसन्निभां । पत्न्यर्थे वरयामास नाम्ना रुक्मवतीति सा ।
अनिरुद्धं गुणैर्दान्तं कृतबुद्धिर्नृपस्ततः । प्रीत्या च रौक्मिणेयस्य रुक्मिस्याश्याप्युपयहात् ।
स्पर्द्धमानोऽपि कृष्णेन वैरं तदपहाय स. । ददानीत्यब्रवीद्राजा प्रीतिमान् जनमेजय ।
केशवः सह रुक्मिण्या पुत्रैः सङ्कर्षणेन च । अन्यैश्च वृष्णिभिः सार्द्धं विदर्भान् सबलो ययौ ।
संयुक्ता ज्ञातयश्चैव रुक्मिणः सुहृदश्च ये । आहूता रुक्मिणा तेऽपि तत्राजग्मुर्नराधिपाः ।
शुभे तिथौ महाराज नक्षत्रे चाभिपूजिते । विवाहः सोऽनिरुद्धस्य बभूव परमोत्सवः ।
पाणौ गृहीते वैदर्भ्यास्त्वनिरुद्धेन भारत । वैदर्भयादवानाञ्च सभूव परमोत्सवः ।
रेमिरे वृष्णयस्तत्र पूज्यमाना यथाऽमराः । अथाश्मकानामधिपो वेणुदारिरुदारधीः ।
आर्द्धः श्रुतर्व्वा चाणूरः क्राथश्चैतांशुमानपि । जयत्सेनः कलिङ्गानामधिपश्च महाबलः ।
पाण्ड्यश्च नृपतिः श्रीमानृषिकाधिपतिस्तथा । एते संमन्त्र्य राजानो दाक्षिणात्या महर्द्धयः ।
अभिगम्याब्रुवन् सर्व्वे रुक्मिणं रहसि प्रभुं । भवानक्षेषु कुशलो वयञ्चापि रिरंसवः ।
सिथ्यद्यूतश्च रामोऽसावक्षेष्वनिपुणोऽपि च । ते भवन्तं पुरस्कृत्य जेतुमिच्छाम तं वयं ।
इत्युक्तो रोचयामास रुक्मी द्यूतं महारथः । ते शुभा काञ्चनस्तम्भा कुसुमैर्भूषिताजिरा ।
सभां तां विविशुर्हृष्टाः सिक्ताश्चन्दनवारिणा । तां प्रविश्य ततः सर्व्वे शुभस्रगनुलेपनाः ।
सौवर्णेष्वासनेष्वासाञ्चक्रिरे विजिगीषवः । आहूतो बलभद्रस्तु कितवैरक्षकोविदैः ।
बाढमित्यब्रवीद्धृष्टः सह दीव्याम पश्यतां । निहत्या तं जिगीषन्तो दाक्षिणात्या नराधिपाः ।

मणिमुक्तासुवर्णानि तत्रानिन्यु. सहस्रशः । तत. प्रावर्त्तत द्यूतं तेषां तद्व्रतिनाशनं ।
कलहायासदं घोरं दुर्मतीनां वधावहं । निष्काणान्तु सहस्राणि सुवर्णस्य दशादितः ।
रुक्मिणा सह सम्पाते बलदेवो ग्लहं ददौ । तं जिगाय ततो रुक्मी यतमानं महाबलं । ६७०५
तावदेवापरं भूयो बलदेवं जिगाय सः । अथक्रोशीयमानस्तु रुक्मिणा केशवाग्रजः ।
सुवर्णकोटीर्जग्राह ग्लहे तस्य महाबलः । जितमित्येव हृष्टोऽथ तमाकृतिरभाषत ।
श्लाघमानश्च चिरेण प्रहसन्मुसलायुधं । अविद्यो दुर्बल. श्रीमान् हिरण्यनेमितं मया ।
अजेयो बलदेवोऽयमद्यूते पराजितः । कलिङ्गराजस्तच्छ्रुत्वा प्रजहास भृशं तदा ।
दन्तान् प्रदर्शयन् हृष्टस्तत्राक्रुध्यद्धलायुधः । रुक्मिणस्तद्वचः श्रुत्वा पराजयनिमित्तजं । ६७१०
निगृह्यमानस्तीक्ष्णाभिर्वाग्भिर्भीष्मकसूनुना । रोषमहारयामास जितरोषोऽपि धर्मवित् ।
संक्रुद्धो धर्षणां प्राप्य रौहिणेयो महाबलः । धैर्यात्मनः संनियम्य ततो वचनमब्रवीत् ।
दशकोटिसहस्राणि ग्लह एको ममापरः । एतं संपरिगृह्णीष्व पातयाद्यान्नराधिप ।
कृष्णाद्यान् लोहिताक्षांश्च देशेऽस्मिंस्त्वधिपांसुले । इत्येवमाकर्णयामास रुक्मिणं रौहिणीसुतः ।
अनुक्त्वा वचनं किञ्चिद्बाढमित्यब्रवीत् पुनः । अक्षान् रुक्मी तदा हृष्टः पातयामास पार्थिवः । ६७१५
चातुरक्षे तु निर्वृत्ते निर्जितः स नराधिपः । बलदेवेन धर्मेण नेत्युवाच ततो बलं ।
धैर्यात्मन. संनियम्य न स किञ्चिदुवाच ह । बलदेवं ततो रुक्मी मया जितमिति स्मयन् ।
बलदेवस्तु तच्छ्रुत्वा जिह्मवाक्यं नराधिपात् । भूयः क्रोधसमाविष्टो नोत्तरं व्याजहार ह ।
ततो गम्भीरनिर्घोषा वागुवाचाशरीरिणी । बलदेवस्य तं क्रोधं वर्द्धयन्ती महात्मनः ।
सत्यमाह बल. श्रीमान्धर्मेणैव पराजित.। अनुक्त्वाऽपि ततः किञ्चित् प्राप्तो भवति कर्मणा । ६७२०
मनसा समनुज्ञातं तत् स्यादित्यवगम्यतां । इति श्रुत्वा वचः सत्यमन्तरीक्षात् सुभाषितं ।
सङ्कर्षणस्तदोत्थाय सौवर्णेनारुणा बली । जघानाष्टापदेनैव प्रमथ्य यदुपुङ्गवः ।
रुक्मिणो भ्रातरं ज्येष्ठं निष्पिपेष महीतले । विवादे कुपितो राम. चेतारं क्रूरभाषिणं ।
ततोऽपहृत्य संक्रुद्धः कलिङ्गाधिपतेरपि । दन्तान् बभञ्ज संरम्भात् मोऽनदाद च सिंहवत् ।
खड्गमुद्यम्य तांश्चापि त्रासयामास पार्थिवान् । स्तम्भं सभायाः सौवर्णमुत्पाट्य बलिनाम्वरः । ६७२५
गजेन्द्र इव तं स्तम्भं कर्षन् सङ्कर्षणस्ततः । निर्जगाम सभाद्वारात्त्रासयन् क्रथकैशिकान् ।
रुक्मिणं निहतप्रायं स हत्वा यादवर्षभः । विद्राव्य द्विषत. सर्वान् सिंहः क्षुद्रमृगानिव ।
जगाम शिबिरं रामः स्वमेव स्वजनावृतः । न्यवेदयत कृष्णाय तच्च सर्वं यथाऽभवत् ।
नोवाच स तदा किञ्चित् कृष्णो रामं महाद्युतिः । रुक्मिणी च ततः श्रुत्वा निहतं भ्रातरं प्रियं ।
गिरिद्य च तदात्मानं क्रोधादश्रूण्यवर्त्तयत् । न हतो वासुदेवेन य. पूर्व्वं परवीरहा । ६७३०
स रामकार्मुकेन निहतो द्यूतमण्डले । अष्टापदेन बलवान्सा वज्रधरोपमः ।
तस्मिन् हते महावीर्य्ये नृपतौ भीष्मकात्मजे । क्रमभार्गवशुश्रूषे वै क्रमभार्गवशिष्ये ।

विघ्नश्चास्याकरोत्तत्र नरको नाम दानवः । त्रासनः सुरसंघानां देवराजरिपुर्महान् ।
स भूमौ मूर्त्तिलिङ्गस्थः सर्व्वदेवाभिबाधिता । मानुषाणामृषीणाञ्च प्रतीपमकरोत्तदा ।
त्वष्टुर्दुहितरं भौमः कशेरुमगमत्तदा । गजरूपेण जग्राह रुचिराङ्गीं चतुर्दशीं ।
प्रमथ्य तां वरारोहां नरको वाक्यमब्रवीत् । नष्टशोकभयो मोहात् प्राग्ज्योतिषपतिस्तदा ।
यानि देवमनुष्येषु रत्नानि विविधानि च । बिभर्त्ति च मही कृत्स्ना सागरेषु च यद्वसु । ६७९५
अद्यप्रभृति तानीह सहिता सर्व्वदैवताः । ममैवोपाहरिष्यन्ति दैत्याश्च सह दानवैः ।
एवमुक्त्वा तु वस्त्राणि रत्नानि विविधानि च । सञ्जहार तदा भौमस्तच्च नाधिचकार सः ।
गन्धर्व्वाणाञ्च याः कन्या जहार नरको बली । याश्च देवमनुष्याणां सप्त चाप्सरसां गणाः ।
चतुर्दशसहस्राणि सैकविंशच्छतानि च । एकवेणीधराः सर्व्वाः सतां मार्गमनुव्रताः ।
तासां पुरवरं भौमोऽकारयन्मणिपर्व्वतं । अलकायामदीनात्मा मुरोः स्वविषयं प्रति । ६८००
ताश्च प्राग्ज्योतिषपतिं मुरोश्चैव दशात्मजाः । नैरृताश्च यथा मुख्याः पालयन्त उपासते ।
स एष तमसः पारे वरदत्तो महासुरः । न चासुरगणैः सर्व्वैः सहितैः कर्म तत् पुरा ।
कृतपूर्व्वं महाघोरं यदकार्षीन्महासुरः । अदितिं धर्षयामास कुण्डलार्थे महासुरः ।
यं मही सुषुवे देवी यस्य प्राग्ज्योतिषं पुरं । द्वारपालाश्च चत्वारस्तस्यासन् युद्धदुर्म्मदाः ।
हयग्रीवो निसुन्दश्च वीरः पञ्चनदस्तथा । मुरुः पुत्त्रसहस्रैश्च वरदत्तोऽसुरो महान् । ६८०५
आदेवयानमावृत्य पन्थानं समुपस्थिताः । वित्रासनाः सुकृतिनां विरूपैराक्षसैः सह ।
तद्वधार्थं महाबाहुः शङ्खचक्रगदासिभृत् । जातो वृष्णिषु देवक्यां वसुदेवाज्जनार्द्दनः ।
तस्याथ पुरुषेन्द्रस्य लोके प्रथिततेजसः । निवासो द्वारकादेवैरुपायादुपपादिता ।
अतीव हि पुरी रम्या द्वारका वासवक्षयात् । महार्णवपरिक्षिप्ता पञ्चपर्व्वतशोभिता ।
तस्यां देवपुराभायां सभा काञ्चनतोरणा । सा दाशार्हीति विख्याता योजनायामविस्तृता । ६८१०
तत्र वृष्ण्यन्धकाः सर्व्वे रामकृष्णपुरोगमाः । लोकयात्रामिमां कृत्स्नां परिरक्षन्त आसते ।
तत्रासीनेषु सर्व्वेषु कदाचिद्भरतर्षभ । दिव्यगन्धो ववौ वायुः पुष्पवर्षं पपात च ।
ततः किलकिलाशब्दः प्रभाजालाभिसंवृतः । मुहूर्त्तमन्तरीक्षेऽभूत्ततो भूमौ प्रतिष्ठितः ।
मध्ये तु तेजसस्तस्य पाण्डरं गजमास्थितः । वृतो देवगणैः सर्व्वैर्वासवः प्रत्यदृश्यत ।
रामकृष्णौ च राजा च वृष्ण्यन्धकगणैः सह । प्रत्युद्ययुर्महात्मानं पूजयन्तः सुरेश्वरं । ६८१५
सोऽवतीर्य्य गजात्तूर्णं परिष्वज्य जनार्द्दनं । सस्वजे बलदेवञ्च तथा राजानमाहुकं ।
वृष्णीनन्यान् सस्वजे च यथाकालं यथावयः । पूजितो रामकृष्णाभ्यामाविवेश सभां शुभां ।
तत्रासीनोऽभ्यनुज्ञाप्य सभायां स सुरेश्वरः । अर्घ्यादिसमुदाचारं प्रत्यगृह्णाद्यथाविधि ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नरकवधे एकविंशत्यधिकशततोऽध्यायः ॥ १२१ ॥
॥ वैशम्पायन उवाच ॥ अथोवाच महातेजा वासवो वासवानुजं । सान्त्वपूर्व्वं करेणास्य संगृह्य वदनं शुभं ।

देवकीनन्दन वचः शृणु मे मधुसूदन । येन त्वाऽभिगतोऽस्म्यद्य कार्य्येणामित्रकर्षण । ६८२०
भौमोऽसौ नरको नाम ब्रह्मणो वरदर्पितः । अदित्याः कुण्डले मोहाज्जहार दितिनन्दनः ।
देवानां विप्रिये नित्यमृषीणाञ्च स वर्त्तते । तत्र गत्वाऽन्तकं चैव जहि तं पापपूरुषं ।
अयं त्वां गरुडस्तत्र प्रापयिष्यति कामगः । कामवीर्य्योऽतितेजस्वी वैनतेयोऽन्तरीक्षगः ।
अवध्यः सर्व्वभूतानां भौमः स नरकोऽसुरः । निसूदयित्वा तं पापं क्षिप्रमागन्तुमर्हसि ।
इत्युक्तः पुण्डरीकाक्षो देवराजेन केशवः । प्रतिजज्ञे महाबाहुर्नरकस्य निवर्हणं । ६८२५
ततः सहैव शक्रेण शङ्खचक्रगदासिधृक् । प्रतस्थे गरुडेनाथ सत्यभामासहायवान् ।
क्रमेण सप्तस्कन्धान् स मारुतानां स वासवः । पश्यतां यदुसिंहानामूर्द्धमाचक्रमे बली ।
वारणेन्द्रगतः शक्रो गरुडस्थो जनार्द्दनः । प्रकाशेते विदूरत्वात् सूर्य्याचन्द्रमसाविव ।
अथान्तरीक्षे गन्धर्व्वैरप्सरोभिश्च केशवः । स्तूयमानोऽथ शक्रश्च क्रमेणान्तरधीयत ।
समाधायेतिकर्त्तव्यं वासवो त्रिदशाधिपः । स्वमेव भवनं प्रायात् कृष्णः प्राग्ज्योतिषं प्रति । ६८३०
पक्षानिलहतो वायुः प्रतिलोमं ववौ तदा । ततो भीमरवैर्मेघैर्ध्वस्तमुरगणेचराः ।
क्षणेन समनुप्राप्तो दिवमाकाशगेन वै । दूरादेव च तान्दृष्ट्वा प्रययौ यत्र ते स्थिताः ।
अपश्यत् पर्व्वतद्वारि हस्त्यश्वरथवाहनं । क्षुरान्तान् मौरवान् पाशान् षट्सहस्रान्ददर्श सः ।
॥ वैशम्पायन उवाच ॥ गरुडस्योपरि श्रीमान् शङ्खचक्रगदासिधृक् । विभ्रन्नीलाम्बुदाकारं पीतवासाश्चतुर्भुजः ।
वनमालाकुलोरस्कः श्रीवत्सेन्दुनिभोरसः । किरीटमूर्द्धा सूर्य्याभः सविद्युदिव चन्द्रमाः । ६८३५
ज्याविकृष्टमहाशब्दः श्रूयतेऽशनिनिस्वनः । ज्ञात्वा च दानवः सर्व्वं स्वयं विष्णुरिहागतः ।
क्रोधाद्रुधिररक्ताक्षो मुरः कालान्तकप्रभः । अभ्यधावत वेगेन शक्तिं गृह्य महासुरः ।
चिक्षेप स महाशक्तिं वज्रकाञ्चनभूषितां । तामापतन्तीं शक्तिं स सघोरां ज्वलितामिव ।
समाधत्त शरञ्चैकं रुक्मपुङ्खं जनार्द्दनः । द्विधाऽच्छिनत् क्षुरप्रेण वासुदेवः स वीर्य्यवान् ।
शक्तिं चिच्छेद तत्राशु विद्युत्पुञ्ज इव ज्वलन् । पुनस्तु क्रोधरक्ताक्षो मुरस्तां च महागदां । ६८४०
इन्द्राशनिरिवेन्द्रेण विसृष्ट इव निस्वनः । आकर्णपूर्णक्षिप्रेण अर्द्धचन्द्रं सुरोत्तमः ।
मध्यदेशे तु चिच्छेद गदां तां रुक्मभूषितां । पुनश्चिच्छेद भल्लेन दानवस्य शिरो रणे ।
संछिद्य पाशान् सर्व्वांस्तान्मुरं हत्वा सबान्धवं । सोऽश्मप्रवेगशतान् हत्वा नरकस्य महाबलान् ।
शिलासंघानतिक्रम्य भगवान् देवकीसुतः । अवधीद्दानवं सैन्यं निसुन्दस्य महाबलं ।
चचपीवथ दितिजं तथाऽन्यांश्चित्रयोधिनः । रोधयामास तत्स्थानं स्वैः स्वैश्च महाबलः । ६८४५
निसुन्दो बलिनां श्रेष्ठो रथनरस्य सत्वरः । जग्राह कार्म्मुकं दिव्यं हेमपृष्ठं दुरासदं ।
विव्याध दशभिर्व्वाणैर्निसुन्दो मधुसूदनं । किमन्यानि सप्तत्या विव्याध निशितैः शरैः ।
अप्राप्तानन्तरीक्षे तान्शरांश्चिच्छेद माधवः । ते सर्व्वे सैनिकाः कृष्णं सहस्रान् पर्यवारयन् ।
शरजालेन महता छाद्यमानः सुरोत्तम । दृष्ट्वा तान्दानवान् सर्व्वान् चक्रोपि मधुसूदनः ।

ततो दिव्येन चास्त्रेण पार्ज्जन्येन जनार्द्दन । महता शरवर्षेण वारयामास तद्बलं । ६८५०
पञ्चपञ्चशरैस्तेषु एकैकेषु च तान् बहून् । पार्ज्जन्यस्य प्रभावेण सर्व्वांशस्तताडयत् ।
दुद्रुवुर्भयवित्रस्ता भग्नास्ते दानवा रणे । स्वसैन्यं विद्रुतं दृष्ट्वा निशुम्भ पुनर्मृधे ।
विसृजञ्छरवर्षाणि च्छादयामास केशवं । न विभाति रणे सूर्य्यो न वि व्योम दिशो दश ।
शरैः सञ्छादयामास निसुन्दो गरुडध्वजं । सावित्रं नाम दिव्यास्त्रं जग्राह पुरुषोत्तम ।
तेन वाणेन तान् वाणांश्चिच्छेद मधुसूदन । वाणैर्व्वाणांस्तु सञ्छिद्य तत्र कृष्णो महाबलः । ६८५५
छत्रमेकेन वाणेन रथेशाश्च त्रिभि शरैः । पुनश्चिच्छेद तानश्वांश्चतुर्भिश्चतुरः शरैः ।
सारथिं पञ्चभिर्व्वाणैर्ध्वजमेकेन चिच्छिदे । शरेणैव पुन कृष्णः सुतीक्ष्णेन शितेन वै ।
शिरश्चिच्छेद भल्लेन निसुन्दस्य सुरोत्तम । निसुन्दं पतितं दृष्ट्वा हयग्रीव प्रतापवान् ।
शिलां प्रगृह्य महतीं तोलयामास दानव । आविध्य सहसा मुक्त शिलां शैलसमप्रभ ।
गृहीत्वा दिव्यपार्ज्जन्यमस्त्रमस्त्रविदाम्वर । दिव्यास्त्रेण शिला विष्णु सप्तधा कृतवांस्तदा । ६८६०
तद्विदार्य्य महच्चाश्म पातयामास भूतले । ततस्तै शार्ङ्गनिर्म्मुक्तैर्नानावर्णैर्हाशरैः ।
यथा देवासुरं युद्धमभवद्भरतर्षभ । नानाप्रहरणाकीर्णं तथा घोरमवर्त्तत ।
गरुडश्च महाबाहुर्निजघान महासुरान् । महालाङ्गूलनिर्भिन्ना शरखड्गनिपातिता ।
विनेदुर्द्दानवाः सर्व्वे समासाद्य जनार्द्दनं । केचिच्चक्राग्निना दग्धा दानवाः पेतुरम्बरात् ।
सन्निकर्षंगता केचिद्धतासुविकृताननाः । असृजन् शरवर्षाणि वृष्टिमन्त इवाम्बुदाः । ६८६५
विक्षताङ्गाऽसुराः सर्व्वे कृष्णवाणप्रपीडिताः । शोणिताक्ताश्च दृश्यन्ते पुष्पिता इव किंशुकाः ।
अद्रवन्त सुवित्रस्ता भग्नास्तायिचयोधिन । पुनस्तु क्रोधरक्ताक्षो वायुवेगेन दानव ।
दशश्च मोच्छ्रितं वृक्षं समारुह्य वनस्पतिं । वृक्षमुत्पाट्य वेगेन प्रगृह्य तमधावत ।
चिक्षेप सुमहावृक्ष शिखया तु घनाकृति । वृक्षवेगानिलोद्भूत सुस्रुवे सुमहास्वन ।
तत शरसहस्रेण त्वरमाणो जनार्द्दन । नैकधा तञ्च चिच्छेद चित्रशक्तिनिभाकृतिं । ६८७०
पुनरेकेन वाणेन हयग्रीवस्य चोरसि । विव्याध स्तनयोर्मध्ये सायकेन ज्वलनप्रभ ।
विवेश सोऽतिवेगेन हृदि भित्त्वा विनिर्गत । स महास्त्रं समास्थाय सर्व्वान्देवानयोधयत् ।
तं जघान महावीरं हयग्रीवं महाबलं । अपारतेजा दुर्द्धर्ष सर्व्वयादवनन्दन ।
मध्ये लोहितगङ्गस्य भगवान्देवकीसुत । औदकायां विरूपाक्ष पाशं च पुरुषोत्तम ।
अष्टौ शतसहस्राणि दानवानां परन्तप । निहत्य पुरुषव्याघ्र प्राग्ज्योतिषमुपाद्रवत् । ६८७५
हत्वा पञ्चनदं नाम नरकस्य महासुरं । तत प्राग्ज्योतिषं नाम दीप्यमानमिव श्रिया ।
पुरमासादयामास तत्र युद्धमभून्महत् । तत प्राध्मापयच्छङ्खं पाञ्चजन्यं महाबलः ।
शुश्रुवे स महाशब्द सवर्णजिमदो यथा । भूपते त्रिषु लोकेषु भीमगम्भीरनिस्वन ।
तं श्रुत्वा नरकश्चापि क्रोधसंरक्तलोचन । सोऽश्वकायसमायुक्तं विमानसदृशं रथं ।

रत्नकाञ्चनचित्राढ्यं वेदिकाभोगविस्तरं। ऋक्षध्वजेन महता काञ्चनेन विराजितं। ९८८०
हेमदण्डपताकाढ्यं वैदूर्य्यमणिकूवरं। युक्तमश्वसहस्रेण रथं परपुरारुजं।
लोहजालैश्च सञ्छन्नं चित्रभक्तिविराजितं। रथमध्यगतो वीरः समन्ध्य इव भास्करः
नानाप्रहरणाकीर्णं रथं हेमपरिष्कृतं।
वज्रं तयोरप्युदभिन्नवर्णव्यानद्धमुक्तानलतुल्यतेजाः। किरीटमूर्द्धाऽर्कक्रतावनभः कर्णौ तथा कुण्डलयोज्ज्वलन्तौ।
धूम्रवर्णा महाकाया रक्ताक्षा विकृताननाः। नानारूपधरिन सर्व्वे दैत्यदानवराक्षसाः। ९८८५
खड्गचर्म्मधराः केचित् केचित्तूणीरसंवृताः। शक्तिहस्ताः स्थिताः केचिच्छूलहस्तास्तथाऽपरे।
गजवाजिरथौघैश्च चालयन्तश्च मेदिनीं। निर्ययुर्नगरात् क्रूराः सुसन्नद्धाः प्रहारिणः।
एतो दैत्यगणैः सार्द्धं नरकः कालसन्निभः। भेरीमृदङ्गपटहानां पणवानां सहस्रशः।
वाद्यमानं स शुश्राव जीमूतनिनदोपमं। यत्र कृष्णस्ततो गत्वा सर्व्वे ते विकृताननाः।
परिवार्य्य गरुत्मन्तं सर्व्वेऽयुध्यन्त सङ्गताः। महता च्छादयामासुः शरवर्षेण सैनिकाः। ९८९०
शक्तिशूलगदाप्रासांस्तोमरान् सायकान् बहून्। आकाशं छादयामासुर्विमुञ्चन्तः सहस्रशः।
कृष्णः कृष्णाम्बुदाकारः शार्ङ्गं गृह्य धनुस्ततः। विस्फार्य्य सुमहच्चापं धनुर्ज्यामिदमिच्छलं।
व्यसृजच्छरवर्षाणि दानवानां जनार्द्दनः। शरवर्षेण तत् सैन्यं व्यद्रवत्तु महाहवात्।
तद्युद्धमभवद्घोरं घोररूपेण रक्षसां। भग्नव्यूहाश्च ते सर्व्वे कृष्णबाणप्रपीडिताः।
केचिच्छिन्नभुजाश्चैव छिन्नपादशिराननाः। केचिच्चक्रैर्द्विधाभिन्नाः केचिद्बाणार्द्दितोरसः। ९८९५
केचिद्द्विधाहताः सततं गजाश्वरथवाहनाः। केचित् कौमोदकीभिन्नाः शङ्खशक्तिविदारिताः।
एवं विद्राविता सर्व्वा गजाश्वरथवाहिनी। तत्रासीन्नरकेणास्य युद्धं परमदारुणं।
यत् समासेन वक्ष्यामि तन्मे निगदतः शृणु। घातनः सुरसंघानां नरकः पुरुषोत्तमं।
योधयामास तेजस्वी मधुवन्मधुसूदनं। क्रोधसंरक्तनयनो नरकः कालसन्निभः।
जग्राह कार्म्मुकं वीरः शक्रचापमिवोच्छ्रितं। ततोऽर्ककिरणाभं च बाणं जग्राह केशवः। ९९००
दिव्येनास्त्रेण समरे पूरयामास तं रथं। उत्तमास्त्रं महापातं मुमोच नरको बली।
वज्रविस्फूर्ज्जिताकारमायान्तं वीक्ष्य केशवः। चिच्छेदाशु महाभागश्चक्रेण पुरुषोत्तमः।
व्यहनत् सारथिं चास्य शरेणैकेन जनार्द्दनः। शरं सध्वजं सार्द्धं जघान दशभिः शरैः।
तनुत्रं चैव चिच्छेद शरेण मधुसूदनः। ततो विमुक्तकवचः सन्धत्तेन तनुर्यथा।
रक्ताक्षो विरथो वीरो विनद्य च दानवः। जग्राह विमलज्वालं लोहभारार्पितं दृढं। ९९०५
आविध्य महता मुक्तं शूलमिन्द्राशनिप्रभं। तदापतत् समीक्ष्य शूलं हेमपरिष्कृतं।
द्विधा छिन्नं क्षुरेणैव कृष्णेन तु महात्मना। तद्युद्धमभवद्घोरं घोररूपेण रक्षसा।
उत्तमास्त्रं महापातं नरकेण महात्मना। मुहूर्त्तं योधयामास नरकं मधुसूदनः।
ततो चक्रेणैव शरीरेणाकरोद्द्विधा। चक्रद्विधाकृतं तस्य शरीरमपतद्भुवि।

विभक्तं क्रकचेनेव गिरेः शृङ्गं द्विधाकृतं । रुक्मामासाद्य देवेशं जगामास्तमिवांशुमान् । ६८१०
चक्रोत्क्षिप्तनिकृत्ताङ्गमुत्तमं पतितं रणे । वज्रेणेव विनिर्भिन्नं यथा गैरिकपर्व्वतं ।
भूमिस्तु पतितं पुत्त्रं निरीक्ष्यादाय कुण्डले । उपातिष्ठत गोविन्दं वचनञ्चेदमब्रवीत् ।
दत्तस्त्वयैव गोविन्द त्वयैव विनिपातितः । यथेच्छसि तथा क्रीड बालक्रीडनकैरिव ।
इमे ते कुण्डले देव प्रजास्तस्यानुपालय ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नरकवधे द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ वैशम्पायन उवाच ॥ निहत्य नरकं भौमं वासवोपमविक्रमः । वासवावरजो विष्णुर्ददर्श नरकालयं । ६८१५
अथार्थगृहमासाद्य नरकस्य जनार्द्दनः । ददर्श धनमक्षय्यं रत्नानि विविधानि च ।
मणिमुक्ताप्रवालस्य वैदूर्य्यस्य च सञ्चयं । मसारगल्वार्ककूटांस्तथा वज्रस्य सञ्चयान् ।
जाम्बूनदमयान्यस्य शातकुम्भमयानि च । प्रदीप्तज्वलनाभानि शीतरश्मिनिभानि च ।
शयनानि महार्हाणि तथा सिंहासनानि च । हिरण्मयदण्डं रुचिरं शीतरश्मिसमप्रभं ।
ददर्श सुमहच्छत्रं वर्षमाणमिवाम्बुदं । जातरूपस्य शुभ्रस्य धाराः शतसहस्रशः । ६८२०
वरुणेनाहृतं पूर्व्वं नरकेणेति नः श्रुतं । यावदर्थं गृहे दृष्टं नरकस्य धनं बहु ।
न वै राज्ञा कुवेरेण न शक्रेण यमेन वा । रत्नसन्निचयस्तादृक् दृष्टपूर्व्वो न च श्रुतः ।
हते भौमे निसुन्दे च हयग्रीवे च दानवे । उपानिन्युस्ततस्तानि रत्नान्यन्तःपुराणि च ।
दानवा हतशिष्टा ये कोषसञ्चयरक्षिणः । केशवाय महार्हाणि यान्यर्हति जनार्द्दनः ।
॥ दैत्या ऊचुः ॥ इमानि मणिरत्नानि विविधानि वसूनि च । भीमरूपाश्च मातङ्गाः प्रवालविकृताङ्कुशाः । ६८२५
हेमसूत्रमहाकक्ष्याश्चापतोमरशालिनः । रुचिराभिः पताकाभिर्वेष्टिता विविधाः शुभाः ।
ते च विंशतिसाहस्रा द्विस्तावच्च करेणवः । अष्टौ शतसहस्राणि देशजाश्चोत्तमा हयाः ।
गोषु चापि हतो यावान् कामस्तव जनार्द्दन । तावतीः प्रापयिष्यामो वृष्ण्यन्धकनिवेशनं ।
आविकानि च सूक्ष्माणि शयनान्यासनानि च । कामव्याहारिणश्चैव पक्षिणः प्रियदर्शनाः ।
चन्दनागुरुकाष्ठानि तथा कालीयकान्यपि । यच्च यस्मिंस्तु लोकेषु धर्म्मेणाधिगतं तव । ६८३०
तत् सर्व्वं प्रापयिष्यामो वृष्ण्यन्धकनिवेशनं । देवगन्धर्व्वरत्नानि पन्नगानाञ्च यद्वसु ।
तानि सर्व्वाणि सन्तीह नरकस्य निवेशने ।
॥ वैशम्पायन उवाच ॥ एतत् सर्व्वं हृषीकेशः परिगृह्य परीक्ष्य च । शीघ्रमारोहयामास दानवैर्द्वारकां पुरीं ।
ततस्तद्वारुणं छत्रं स्वयमुत्क्षिप्य माधवः । हिरण्यवर्षं वर्षन्तमारुरोह विहङ्गमं ।
गरुडं पतगश्रेष्ठं मूर्त्तिमन्तमिवाम्बुदं । ततोऽभ्ययाद्गिरिश्रेष्ठमभितो मणिपर्व्वतं । ६८३५
तत्र पुण्या ववुर्वाता ह्यभवंश्चामलाः प्रभाः । मणीनां हेमवर्णानामभिभूय दिवाकरं ।
तत्र वैदूर्य्यवर्णानि ददर्श मधुसूदनः । सतोरणपताकानि द्वाराणि शिखराणि च ।
विद्युद्ग्रथितमेघाभः सबभौ मणिपर्व्वतः । हेमचित्रवितानैश्च प्रासादैरुपशोभितः ।

तत्र ता हेमवर्णाभा ददर्श मधुसूदनः । गन्धर्व्वासुरमुख्याणां प्रिया दुहितरस्तथा ।
ददर्श विपुलश्रोणीः संरुद्धा गिरिकन्दरे । नरकेण समानीता रक्ष्यमाणाः समन्ततः । ६९७०
त्रिविष्टपसमे देशे तिष्ठन्तीरपराजिताः । मित्रसन्यो यथा देव्यः सुखिन्यः कामवर्ज्जिताः ।
परिवव्रुर्महाबाहुमेकवेणीधरा. स्त्रियः । सर्व्वाः काषायवासिन्यः सर्व्वाश्च नियतेन्द्रियाः ।
व्रतोपवासतन्वङ्ग्यः काङ्क्षन्त्यः कृष्णदर्शनं । समेत्य यदुसिंहस्य सर्व्वाश्चक्रुः स्त्रियोऽञ्जलीन् ।
नरकं निहतं मत्वा मुरञ्चैव महासुरं । हयग्रीवं निसुन्दञ्च ताः कृष्णं पर्य्यवारयन् ।
ये चासां रक्षिणो दृष्ट्वा दानवा यदुनन्दनं । कृताञ्जलिपुटाः सर्व्वे प्रणिपेतुर्व्वयोऽधिकाः । ६९७५
तासां परमनारीणामप्रभावं निरीक्ष्य तं । सर्व्वासामेव संकल्प. पतित्वेनाभवत्तदा ।
तस्य चन्द्रोपमं वक्त्रं समीक्ष्य कृदितेन्द्रियाः । सम्प्रहृष्टा महाबाहुमिदं वचनमब्रुवन् ।
सत्यञ्च त्पुरा वायुरिहास्मान् वाक्यमब्रवीत् । सर्व्वभूतमतज्ञश्च देवर्षिरपि नारदः ।
विष्णुर्नारायणो देवः शङ्खचक्रगदासिमृत् । स भौमं नरकं हत्वा भर्त्ता च भविताऽऽ व: ।
सुप्रियं वत पश्यामश्चिरश्रुतमरिन्दमं । दर्शनेन कृतार्था हि वयमद्य महात्मनः । ६९८०
ततस्ताः सान्त्वयामास प्रमदा वासवानुजः । सर्व्वा कमलपत्राक्षीर्हृष्टाः प्रोवाच माधवः ।
सान्त्वयित्वा यथार्हेण समाभाष्य च केशवः । यानैः किङ्करसंयुक्तैरुवाह मधुसूदनः ।
किङ्कराणां सहस्राणि रक्षसां वातरंहसां । शिबिकां वहतां तत्र निर्घोषः सुमहानभूत् ।
तस्य पर्व्वतमुख्यस्य शृङ्गं यत् परमार्च्चितं । विमलार्केन्दुसंकाशं मणिकाञ्चनतोरणं ।
सपक्षिगणमातङ्गं सव्यालमृगपादपं । शाखामृगगणाकीर्णं सुप्रस्तारशिलातलं । ६९८५
न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितं । सुप्रपातमहासानुं विचित्रशिखरद्रुमं ।
अत्यद्भुतमचिन्त्यञ्च खगवृन्दविलोडितं । जीवञ्जीवकसंघैश्च बर्हिभिश्च निनादितं ।
तदप्यतिबलो विष्णुर्द्दोर्भ्यामुत्पाट्य भास्वरं । आरोपयामास तदा गरुडे पक्षिसत्तमे ।
मणिपर्व्वतशृङ्गञ्च सभार्य्यञ्च जनार्द्दनं । उवाह लीलया पक्षी गरुडः पततांवरः ।
सपक्षबलविक्षेपैर्हिमाद्रिशिखरोपमः । दिक्षु सर्व्वासु संह्रादं जनयामास पक्षिराट् । ६९९०
आरुजन् पर्व्वताग्राणि पादपांश्च समाक्षिपन् । संजहार महाभ्राणि विजहार च कानिचित् ।
विषयं समतिक्रम्य देवयोश्चन्द्रसूर्ययोः । ययौ वातजवः पक्षी जनार्द्दनवशे स्थितः ।
स मेरुं गिरिमासाद्य देवगन्धर्व्वसेवितं । देवसद्मानि सर्व्वाणि ददर्श मधुसूदन. ।
विश्वेषां मरुताञ्चैव साध्यानाञ्च नराधिप । भास्वमानान्यतिक्रामन्नश्विनोश्च परन्तप ।
प्राप्य पुण्यतमान् लोकान् देवलोकमरिन्दमः । शक्रसद्म समासाद्य प्रविवेश जनार्द्दनः । ६९९५
अवतीर्य्य स तार्क्ष्यात्तु ददर्श त्रिदशाधिपं । प्रीतश्चैवाभ्यनन्दत्तं देवराजः शतक्रतुः ।
प्रदाय कुण्डले दिव्ये ववन्दे तमथाच्युतः । सभार्य्यो विबुधश्रेष्ठ नरश्रेष्ठो जनार्द्दनः ।
सोऽर्च्चितो देवराजेन रत्नैश्च प्रतिपूजितः । सत्यभामा च पौलोम्या यथावदभिनन्दिता ।

वासवो वासुदेवश्च सहितौ अभ्युत्तमः । अदित्या भवनं दिव्यं देवमातुर्महर्द्धिमत् ।
तत्रादितिमुपासन्तीमप्सरोभिः समन्ततः । ददृशाते महात्मानौ महाभागा तपोऽन्विता । ६९७०
ततस्ते कुण्डले दिव्ये प्रदायादितिनन्दनः । ववन्दे तां शचीभर्त्ता मातरं स्वां पुरन्दरः ।
जनार्दनं पुरस्कृत्य कर्म चैव शशंस तत् । अदितिस्तौ सुतौ प्रीत्या परिष्वज्याभिनन्द्य च ।
आशीर्भिरनुकूलाभिरभावयदनन्तदा । पौलोमी सत्यभामा च प्रीत्या परमया युते ।
अगृह्णीतां वरार्हाया देव्यास्तु चरणौ शुभौ । सा ते चाप्यवदत् प्रमणा देवमाता यशस्विनी ।
यथावदब्रवीच्चैव जनार्दनमिदं वचः । अधृष्यः सर्व्वभूतानामवध्यश्च भविष्यसि । ६९७२
यथैव देवराजोऽयमजितो लोकपूजितः । तव चेयं वरारोहा नित्यञ्च प्रियदर्शना ।
सर्व्वलोकेषु विख्याता दिव्यगन्धमनोरमा । सत्यभामोत्तमा स्त्रीणां सुभगा स्थिरयौवना ।
जरां न यास्यति वधूर्यावत्त्वं कृष्ण मानुषः । एवमभ्यर्चितः कृष्णो देवमात्रा महाबलः ।
देवराजाभ्यनुज्ञातो रवैश्च प्रतिपूजितः । वैनतेयं समारुह्य सहितः सत्यभामया ।
देवाक्रीडं परिक्रामन् पूज्यमानः सुरर्षिभिः । स ददर्श महाबाहुराक्रीडं वासवस्य च । ६९८०
दिव्यमभ्यर्चितं देवैः पारिजातं महाद्रुमं । नित्यपुष्पधरं हृद्यं पुण्यगन्धमनुत्तमं ।
यमासाद्य जनः सर्व्वां जातिं स्मरति पौर्व्विकीं । संरक्ष्यमाणं देवैस्तं प्रसह्यामितविक्रमः ।
उत्पाट्यारोपयामास गरुडे तं महाद्रुमं । सोऽपश्यत् सत्यभामा च दिव्यमप्सरसां गणं ।
पृष्ठतः सत्यभामा च दिव्येराभिवीचिता । प्रायात्ततो द्वारवतीं वायुजुष्टेन वै पथा ।
श्रुत्वा तद्देवराजस्तु कर्म कृष्णस्य यै तदा । अनुमेने महाबाहुः कृतकर्मेति चाब्रवीत् । ६९८२
संपूज्यमानस्त्रिदशैर्महर्षिगणसंस्तुतः । प्रतस्थे द्वारकां कृष्णो देवलोकादरिन्दमः ।
सोऽभिपत्य महाबाहुर्दीर्घमध्वानमल्पवत् । पूजितो देवराजेन ददृशे यादवीं पुरीं ।
तथा कर्म महत् कृत्वा भगवान् वासवानुजः । उपायाद्द्वारकां कृष्ण श्रीमान् गरुडवाहनः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नरकवधे त्रयोविंशत्यधिकशततमोऽध्यायः ॥ ॥ १२३ ॥

॥ जनमेजय उवाच ॥ प्रादुर्भावे मुनिश्रेष्ठ माथुरे चरितं शुभं । श्रुतवान् वै माधिगच्छामि तृप्तिं कृष्णस्य धीमतः ।
द्वारकायां निवसतः कृतदारस्य षड्गुणं । चरितं ब्रूहि कृष्णस्य सर्व्वं हि विदितं तव । ६९९०
॥ वैशम्पायन उवाच ॥ जनमेजय कृष्णस्य कृतदारस्य भारत । निबोध चरितं चित्रं तस्यैव सदृशं प्रभोः ।
प्राप्तदारो महातेजा वासुदेवः प्रतापवान् । रुक्मिण्या सहितो देव्या ययौ रैवतकं नृपः ।
उपवासावधानं हि रुक्मिण्याः प्रतिपूजयन् । तर्पयित्वा स्वयं विप्रान् जगाम मधुसूदनः ।
कुमाराः प्रययुस्तत्र पुत्रा भ्रातर एव च । प्रेषिता वासुदेवेन नारदस्याभ्यनुज्ञया ।
षोडशस्त्रीसहस्राणि जग्मुरेव च धीमतः । श्रद्धया परमया राजन् विष्णोरेवानुकम्पया । ६९९२
ततस्तत्र द्विजातीनां कामान् प्रादादधोक्षज । अर्थिनां धर्म्मनित्यानां वन्दिनामिष्टवादिनां ।
कल्याणनामगोत्राणां महतां पुण्यकर्म्मणां । यौनैः श्रौतैश्च मौखैश्च शुद्धानां कुरुनन्दन ।

शाम्बमाताऽथ गान्धारी भार्य्याश्चान्या कृतात्मनः । सौभाग्यार्थीयिताकाङ्क्षामद्य मोक्ष्यन्ति निस्पृहाः ।
सौभाग्यैकरयो जैत्रस्तव देव्यद्य निःसृतः । मनोरथरथानां यः सहस्रैरपि दुर्ज्जयः ।
अद्याहमवगच्छामि सर्व्वथा सर्व्वशोभने । आत्मा द्वितीयः कृष्णस्य भोजे त्वमिति भाविनि । ७०१०
शैलोच्चयरत्नसर्व्वस्वमददद्यत्तवाच्युतः । जीविताभिश्रवस्तेन त्वया प्राप्तो हरिप्रिये ।
नारदेनैवमुक्तन्तु तथ्यं वाक्यं नराधिप । तत्रस्थाः शुश्रुवुः प्रेष्याः प्रेषिताः सत्यभामया ।
देवीनाञ्च तथाऽन्यासां सपत्नीनां विशाम्पते । दृष्ट्वा ताः सविशेषञ्च नारदेनाप्युदाहृतं ।
तच्च श्रुत्वा मुनिखिलं प्रेष्याभिः स्त्रीस्वभावतः । प्रकाशीकृतमेवासीद्विष्णोरन्तःपुरे तदा ।
कर्णाकर्णि ततो देव्यः कोलीनमिव संश्रयः । मन्त्रयाञ्चक्रिरे दृष्ट्वा रुक्मिण्याऽतिगुणोदयं । ७०१५
अर्हेति पुत्त्रमातेति ज्येष्ठेति च समागताः । प्रायेण प्रवदन्ति स्म हृष्टा दामोदरस्त्रियः ।
मन्ये न सपत्न्याश्च तत् सौभाग्यगुणोदयं । सत्यभामा प्रिया नित्यं विष्णोरतुलतेजसः ।
रूपयौवनसम्पन्ना सौभाग्येन च गर्व्विता । अभिमानवती देवी श्रुत्वेर्ष्यावशमागता ।
समुत्सृजन्ती वसनं सकुङ्कुमं शुचिस्मिता शुक्लमथैकमंशुकं । जगाद रोषाकुलितेन चेतसा वक्त्रे. स्थिता श्रीरिव वर्द्धितालका ।
दन्दह्यमाना ज्वलनेन वर्द्धता सेर्ष्यामसुत्थेन गतप्रभेव । क्रोधान्विता क्रोधगृहं विविक्तं विवेश तारेव घनं सतोयं । ७०२०
बद्ध्वा ललाटे हिमचन्द्रशुभ्रं दुकूलपट्टं प्रियरोषचिह्नं । पर्य्यन्तदेशं सरसेन देवी लिलेप सा लोहितचन्दनेन ।
संस्पृश्य संस्पृश्य शिरः सरोषं प्रकम्पमाना समुपोपविष्टा । दीर्घोपधाने शयने ऽपनीय विभूषणान्येकनिबद्धवेणी ।
अकारणार्थेन विरुध्यमाणा प्रेष्याजनस्याभिजनान्विताऽपि । विचूर्णयामास कुशेशयं सा निःश्वस्य निःश्वस्य नखैर्नतभ्रूः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे चतुर्विंशत्यधिकशततोऽध्यायः ॥ १२४ ॥

॥ वैशम्पायन उवाच ॥ उपविष्टं मुनिं ज्ञात्वा रुक्मिण्या सह केशवः । नियकामाप्रमेयात्मा व्यपदेशेन सर्व्ववित् ।
जगाम त्वरितश्चैव सत्यभामागृहं महत् । रम्ये रैवतकोद्देशे निर्म्मितं विश्वकर्म्मणा । ७०२५
अभिमानवती देवी प्राणेभ्योऽपि गरीयसी । जानन् सात्राजितीं विष्णुर्विवेश शनकैरिव ।
रुषितामिव तां देवीं स्नेहात् संकल्पयन्निव । भीतभीतः स शनकैर्विवेश यदुनन्दनः ।
दारुकं द्वारदेशे तु तिष्ठेत्युक्त्वा विवेश ह । नारदस्योपचारार्थं प्रद्युम्नं विनियुज्य च ।
स ददर्श प्रियां दूरात् क्रोधागारगतां तदा । प्रेष्यामध्यगतां क्रोधान्निःश्वसन्तीं मुहुर्मुहुः ।
करजाग्रावलीढन्तु पङ्कजं मुखपङ्कजे । संश्लेषयित्वा निश्वस्य विहरन्तीं पुनः पुनः । ७०३०
किञ्चिदाकुञ्चिताग्रेण चरणेन वसुन्धरां । कृत्वा पृष्ठेऽथ वदनं विहसन्तीं पुनः पुनः ।
करपद्मे पुनः सव्ये मुखपद्मं निवेश्य च । विविक्ते चारुसर्व्वाङ्गीं ध्यायन्तीं कमलेक्षणां ।
सरसं चन्दनं गृह्य प्रेष्याहस्तादनिन्दितां । प्रह्लादयित्वा हृदयं क्षिपन्तीं निर्द्दयं पुनः ।
पुनरुत्थाय शयनात् पतन्तीञ्च पुनः पुनः । तास्ता श्चेष्टास्तयाऽन्याश्च प्रियाया ददृशे हरिः ।
अवगुण्ठ्य यदा वक्त्रमुपधाने न्यवेशयत् । इदमन्तरमित्येवं ततो मत्वा जनार्द्दन । ७०३५
प्रेष्याजनं संज्ञयाऽथ नाख्येयोऽस्मीति संज्ञपन् । स शङ्कितप्रचारश्च त्वरितोऽन्तिकमभ्ययात् ।

गृहाय व्यजनं चैव स्थिता स परिपार्श्वत. । शनैरवासृजद्वातं जहास शनकैरिव ।
स पारिजातपुष्पस्य संस्पर्शेनानुवासित । बभार भगवान् गन्धं दिव्यं मानुषदुर्लभं ।
अत्यद्भुततमं गन्धं जिघ्रिला विस्मयान्विता । अपाङ्गेणोन्मुखं सत्या किमेतदिति चाब्रवीत् ।
सोत्थिता पृष्ठतो देवमपश्यन्ती शुचिस्मिता । पर्य्यपृच्छद्दशो प्रेष्या गन्धस्य प्रभवन्तदा ।
ताः दृष्ट्वास्त्रप्रभापन्न्यो जानुभिर्द्धरणीङ्गता. । अधोमुख्यस्ततस्तस्थुः कृताञ्जलिपुटास्तदा ।
तदपूर्व्वमदृष्टैव गन्धं मुञ्चति मेदिनी । कथमेकतरस्तस्या गन्धोऽयमिति तत् खलु ।
किं न्विदं स्यादिति च सा वीक्षन्ती समन्ततः । ददृशे केशवं देवी सहसा लोकभावनं ।
मुञ्चतीति ततो वाचमुक्ता साश्राविलेक्षणा । अवसितेव रोषेण बभूव प्रणयान्विता ।
सा प्रस्फुरितचार्व्वोष्ठी निःश्वस्याधोमुखी तदा । मुहूर्त्तमसितापाङ्गी तूष्णीमन्यमुखी शुभा ।
निबध्य भ्रुकुटीं वामा सम्यगुन्मिथ लोचने । निवेश्य वदनं हस्ते शोभमानेत्यब्रवीद्धरिं ।
तस्याः सुस्राव नेत्राभ्यां वारि प्रणयकोपजं । कुशेशयपलाशाभ्यामवश्यायजलं यथा ।
समुत्पत्य जलं तत्र पतितं वदनाम्बुजात् । प्रतिजग्राह पद्माच्च कराभ्यामपि सत्वरः ।
अथोरसि पतत्तोयं श्रीवत्साङ्कोऽम्बुजेक्षणः । प्रियानयनजं देवः परिगृह्येदमब्रवीत् ।
स्रवत्यसितपद्माक्षि किमिदं तव भाविनि । तोयं सुन्दरि नेत्राभ्यां पुष्कराभ्यामिवोदकं ।
प्रभाते पूर्णचन्द्रस्य मध्याह्ने पङ्कजस्य च । बिभर्त्ति तव किं वक्त्रं वपुर्म्मम मनोहरं ।
किमर्थं कौङ्कुमं वासो महारजनमेव च । नानुगृह्णासि सुश्रोणि शुक्लं वासोऽनुगृह्यते ।
वाससी ते ह्यभीष्टे महारजनकौङ्कुमे । देवाभिगमनादूर्द्धं शुक्लं नेष्टं हि ते प्रिये ।
किन्नाभाभरणं गात्रं सुगात्रि तव कथ्यतां । चित्रकस्थानमाक्रान्तं कस्माच्च वरवर्णिनि ।
श्वेतेन तव पट्टेन वाससा प्रियदर्शने । ललाटं सेव्यते कस्माच्चन्दनेन सुगन्धिना ।
सरसेनायतापाङ्गि कान्तेन दृश्यप्रिये । प्रमोपमर्द्दकेनाथ कारणेनाननस्य च ।
करोषि मम चात्यर्थं मनो ग्लापयसि प्रिये । प्रसृतश्चन्दनरसः कपोलप्रणयी तव ।
पत्रलेखासपत्नत्वं प्राप्तो नातिविराजते । रत्नाभरणैर्म्मुक्ता श्रोणिस्ते नातिशोभिता ।
शङ्खचक्ररहिता द्यौरिवाव्यक्तशारदी । पूर्णचन्द्रसपत्नेन स्मेरेणावक्रभाषिणा ।
किन्नु नाभाषसे माऽद्य मुखेनोत्पलगन्धिना । अर्द्धात्क्षणोऽपि हि तावन्मां किमर्थं न निरीक्षसे ।
मुञ्चस्येव सनिश्वासं तोयमञ्जनदुर्द्दिनं । अलमिन्दीवरश्यामे रुदितेन मनस्विनि ।
नलिनमञ्जनकल्माषं मा मोचीराननद्वयं । त्वद्दोषोऽहं यथा देवि ख्यातो जगति किङ्करः ।
नाभाषयसि मां किं त्वं पुरेव वरवर्णिनि । किमकार्षमहं देवि विप्रियं तव भाविनि ।
येनातिमात्रमात्मानमायासयसि सुन्दरि । मनसा कर्म्मणा वाचा न त्वामतिचराम्यहं ।
सर्व्वथा सर्व्वदा सर्व्वं सत्यमेतद्ब्रवीमि ते । बहुमानो ममान्यासु स्त्रीषु सर्व्वाङ्गशोभने ।
त्वेवद्य बहुमानस्य मास्तेऽन्यासु नास्ति मे । नैव त्वां मदनो जह्यात्प्रियतेऽपि मयि मामकः ।

इति मे निश्चितं विद्धि चेतः सुरसुतोपमे । क्षमा गन्धश्च मेदिन्यां शब्दाद्याश्चाम्बरे गुणाः ।
ध्रुवं पङ्कजगर्भाभे त्वयि स्नेहस्तथा मम । रुचिरश्रीः यथा दिव्या प्रभा चैव दिवाकरे ।
कान्तिश्च शाश्वती चन्द्रे स्नेहस्त्वयि तथा मम । एवंवादिनमात्मेष्टं सत्यभामा जनार्दनं ।
शनैरुवाच नेत्राभ्यां प्रमृज्य सुभगा जलं । मदीयस्त्वमिति ह्यासीन्मम नित्यं मनः प्रभो । ७०९०
अद्य साधारणस्नेहस्त्वमित्यवगता ह्यहं । नाज्ञासिषमहं पूर्व्वमनित्यं कालपर्य्ययं ।
अद्य लोकगतिं कृत्स्नामवगच्छामि न ध्रुवां । अस्तनाया द्वितीयोऽयं जन्तुर्हि मम सर्व्वथा ।
किमत्र बहुनोक्तेन हृदयं वेत्ति तेऽच्युतं । वाङ्मात्रमिव पश्यामि माधुर्य्यं संप्रयुज्यते ।
मयि स्नेहश्च शक्तस्तवान्यत्र न कृत्रिमः । ऋजुस्वभावां यां भक्तां सर्व्वथा पुरुषोत्तम ।
अवजानासि जानन्मे कैतवीं वृत्तिमास्थितः । एतावत् खलु पर्य्याप्तं दृष्टं द्रष्टव्यमद्ययं । ७०९५
श्रुतञ्चाप्यथवा श्राव्यं दृष्टः स्नेहफलोदयः । यदि त्वहमनुग्राह्या मामनुज्ञातुमर्हसि ।
तपस्येऽहं परं कृत्वा निश्चयं पुरुषोत्तम । भर्त्तुश्छन्देन नारीणां तपो वा व्रतकानि वा ।
निष्फलं खलु यद्भर्त्तुरच्छन्देन क्रियेत ह ।
इतीदमुक्त्वा पुनरेव शोभना मुमोच तोयं नयनोद्भवं सती । ग्रहाय पीतं हरिवाससः शुभा पटान्तमाधाय मुखे शुचिस्मिता ।
॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पञ्चविंशत्यधिकशततोऽध्यायः ॥ १२५ ॥
॥ वैशम्पायन उवाच ॥ नारायणः सत्यभामां पुनरेवाह भारत । प्रोवाच प्रणयात् क्रुद्धामभिमानवतीं सतीं । ७१००
॥ वासुदेव उवाच ॥ दहतीव ममाङ्गानि शोकः कमललोचने । किंनु तत्कारणं येन त्वमेवमतिविक्लवा ।
शापिताऽसि मम प्राणैराचक्ष्वानत्ययो यदि । श्रोतव्यं यदि मत्केन भर्त्रा सर्व्वाङ्गशोभने । ६
ततः प्रोवाच भर्त्तारं सत्या सत्यव्रते स्थितं । वाष्पगद्गदया वाचा तथैवाधोमुखी स्थिता ।
त्वयैव ख्यापितं पूर्व्वं सौभाग्यं मम मानद । जगत्यसत्यपवाद तत् ख्यातं केशिनाशन ।
शिरो वहामि येनोत्वात्तवाहं देव गर्व्विता । सर्व्वसीमन्तिनीनाञ्च स्पृहणीयाऽस्मि सर्व्वथा । ७१०५
साऽहमद्यावहास्यामि सपत्नीनां जनस्य च । इति मिथ्याभिराख्यातं श्रुत्वा तथ्यं ततस्ततः ।
यत् पारिजातकुसुमं दत्तवान्नारदस्तव । तत्किलेष्टजने दत्तं त्वयाऽहं परिवञ्चिता ।
रुक्मिणीमयदानेन तस्यामधिकः किल । स्नेहश्च बहुमानश्च प्रकाशं गमितस्त्वया ।
तामस्तौषीत् समक्षन्ते प्रियां स किल नारदः । तदश्रौषीश्च दृष्टस्त्वं प्रियायाः संस्तवं किल ।
ज्ञातव्या यदि तावत् सा नारदेन तथापरः । दुर्भगोऽयं जनस्तत्र किमर्थमनुशब्दितः । ७११०
प्रणयस्य रसं दत्त्वा पश्चात्तापः प्रभो यदि । अनुज्ञां मे प्रयच्छस्व तपश्चर्तुं प्रसीद मे ।
स्वप्नेनापि न दृष्टाऽहं श्वश्र्वा दुष्करेण । ददन्नेदेव निर्दहतामशेषं पश्यतस्तव ।
कामः कामन्तु तस्मिन्मुनेरनुसन्तेजवः । अत्र मन्युस्तु मे देव सान्निध्यं तत्र तत्र यत् ।
मानार्थं जीव्यते लोके सद्भिरित्युक्तवानसि । तदेवं सति नेच्छामि जीवितुं मानवर्जिता ।
ममाभवद्यतो रथा भयमद्य ततो मम । सम्यक् रचने यो भां स मां मायाभिरचति । ७११५

त्वा गतिं कां गमिष्यामि त्यक्ता देव त्वया विभो । कुमुद्वतीगतां नूनं गतिं यास्यामि मन्दभा ।
किमकार्य्यमहं मो हादीश्वराणां प्रियाप्रियं । प्रिया भूत्वाऽप्रिया भूता यदहं तव मानद ।
वसन्तकुसुमैश्चित्रं सदा रैवतकं गिरिं । प्रिया भूत्वाऽप्रियाभूता कथं द्रक्ष्याम्यहं पुनः ।
परपुष्टस्वनोन्मिश्रं पुष्पगन्धवहं शुचिं । कथं नामानिलं देव्या सेवेयं दुर्भगा सती ।
जलक्रीडां तवाद्दस्ता देव कृत्वा महोदधौ । कथं दौर्भाग्यमापन्ना पश्येयमपि सागरं ।
सात्राजिति प्रिया नान्या त्वत्तो मेऽस्तीति यद्धि मां । लमवोचः क्व तदातमय वा कः स्मरिष्यति ।
यदज्ञासीद्धि मां सर्व्वांस्वङ्कमनिल नन्दिनी । अवज्ञातां त्वयाऽज्ञासीन्नूनं दौर्भाग्यकर्शितां ।
किन्तु नूनं ते प्रेम्णा सन्निधेनापि मानद । यत् समानां जनैर्देवो मां न पश्यति नियदा ।
माहं त्वां किन्त्वं धूर्त्तमज्ञासिषमरिन्दम । अद्य ज्ञातोऽसि तत्पक्ष्यपक्षो जनवञ्चकः ।
स्वरवर्णेङ्गिताकारान्निगूढादेव यत्नतः । घोर ज्ञातोऽसि तत्पक्ष वाङ्मात्रमधुरः शठः ।
एवमीर्ष्यावशं प्राप्तां देवीं सात्राजितीं हरिः । अभिमानवतीं देवः सान्त्वपूर्व्वमथाब्रवीत् ।
मैवं पद्मपलाशाक्षि ममेश्वरि वद प्रिये । किमत्र सद्भावेनाऽन्येन त्वदीयमवगच्छ मां ।
तत् पारिजातकुसुमं तस्या देवि समागतः । नारदो मत्प्रियं कुर्व्वन् मुनिरक्लिष्टकर्म्मकृत् ।
दासिपादाद्रोधाच्च दत्तवाञ्चाच संभ्रयः । प्रसीदैकापराधं मे मर्षयस्व शुचिस्मिते ।
पारिजातस्य पुष्पाणि यदीच्छस्यतिकोपने । तदा दाताऽस्मि सुश्रोणि सत्यमेतद्ब्रवीमि ते ।
स्वर्गादिहानयित्वा च पारिजातं द्रुमेश्वरं । गृहे ते स्थापयिष्यामि यावत्कालं त्वमिच्छसि ।
एवमुक्ता तु हरिणा प्रोवाच हरिवल्लभा । यद्येवं स द्रुमः शक्य इहानयितुमच्युत ।
मन्युरेव प्रनष्टो हि भवेद्वक्षगुणं मम । सीमन्तिनीनां सर्व्वासामधिका स्यामधोक्षज ।
तथाऽस्तु प्रथमः कल्प इति तां मधुसूदनः । प्रोवाचाप्रतिमो देवो जगतः प्रभवाव्ययः ।
तथेत्युक्ते तु सत्येन तुतोष समितिञ्जय । सत्यभामां सतामिष्टां केशवाग्र्यवल्लभां ।
ततः स्नातो जगन्नाथः सर्व्वात्मा सर्व्वभावनः । चकारावश्यकं सर्व्वं सर्व्वकामप्रदः सतां ।
दर्ध्यौ च नारदं देवो ध्यातो देवमुनिर्नृप । अभ्याजगाम स स्नात्वा मुनिश्रेष्ठो महोदधौ ।
समागतं नरपते सतां गतिरधोक्षजः । सत्यया सह धर्म्मात्मा यथाविधिमपूजयत् ।
पादौ प्रक्षालयामास मुनेः सात्राजिती स्वयं । जलं देवः स्वयं कृत्वा भृङ्गारेण ददौ तदा ।
अथोपकल्पयामास संप्रामीनाय केशवः । परमान्नं स मुनये प्रयतात्मा जगद्गुरुः ।
तथोक्तकर्म्मा सत्कृत्य दत्तं मुनिरुदारधीः । बुभुजे वदतां श्रेष्ठः श्रद्धया परयाऽन्वितः ।
उपस्पृश्य ततस्तुष्टः प्रददौ चाशिषः प्रभोः । ताश्च मौनेन मनसा प्रतिजग्राह केशवः ।
ततः सात्राजितीं देवीं प्रणतां नारदोऽब्रवीत् । प्रसार्य्य दक्षिणं हस्तं सजलं कलशोपमं ।
यथेदानीं तथैव त्वं भव देवि पतिव्रता । पतिवेत्सु सुभगा भव सत्यपथे स्थिता ।
इत्युक्ता मुनिमुख्येन सत्यभामा हरिप्रिया । उवाच्यः मधुरा युक्ता वचन तु नराधिप ।

कृष्णोऽप्यनुज्ञां कौरव्य लब्ध्वा मुनिवरात्तदा । बुभुजे विघसं धीमानप्रमेयपराक्रमः ।
ततस्त्वावश्यकं कृत्वा सत्यभामाऽपि भारत । अनुज्ञया तदा भर्त्तुर्विवेशान्तर्गृहं मुदा ।
ततो विनिर्गता देवी कृष्णस्यैवाभ्यनुज्ञया । स्थिता पार्श्वे च कृष्णस्य नमस्कृत्वा महात्मने ।
ततो मुहूर्त्तमासित्वा नारदः कृष्णमब्रवीत् । आपृच्छे त्वां गमिष्यामि शक्रलोकमधोक्षज ।
तत्राद्यं देवमीशानं नमस्कृत्य महेश्वरं । गास्यन्ति देवगन्धर्व्वास्तथैवाप्सरसां गणाः ।
मासि मास्युचितं ह्येतन्महेन्द्रसदने विभो । पूजार्थं देवदेवस्य गान्धर्व्वं नृत्यमेव च ।
अन्तर्हितो देवदेवः सोमः सप्रवरो विभुः । पश्यत्यमरमुख्येण कृतं भक्त्याऽद्रिघातिना ।
निमन्त्रितोऽहं पूर्व्वेद्युः पुष्पं दातुं महाद्युते । पारिजातस्य भद्रं ते तरुराज्ञो महात्मनः ।
यदेतदाहृतं स्वर्गात्तवार्थे भो मया विभो । देवोपभोग्यमेतद्धि तरुराजसमुद्भवं ।
इष्टः स वृक्षः सततं शच्याः पुष्करलोचन । सौभाग्यमावहत्येव पूज्यमानोऽपि नित्यशः ।
पुण्यं कर्त्तुं तदा सृष्टः पारिजातो महाद्रुमः । अदित्या धर्मनित्येन कश्यपेन महात्मना ।
पुराऽदित्या महातेजास्तोषितः किल कश्यप. । वरेण च्छन्दयामास मारीचस्तपसो निधिः ।
सोवाच सुभगा येन भवेयं मुनिसत्तम । स्वलङ्कृता कामतस्त्व सर्व्वैरेव विभूषणैः ।
ईप्सितं गीतनृत्यञ्च भवेन्मम तपोधन । कुमारी नित्यदा चैव भवेयं तपसां निधे ।
विरजाः शोकरहिता भवेयमपि नित्यदा । पतिभक्तिमती चैव धर्मशीला तथैव च ।
पारिजातं ततोऽस्राक्षीददित्या. प्रियकाम्यया । सर्व्वकामप्रदं पुष्पैरावृतं दिव्यगन्धदैः ।
विशाखं सर्व्वदा दृश्यं सर्व्वभूतमनोहरं । सर्व्वपुष्पाणि दृश्यन्ते तस्मिन्नेव महाद्रुमे ।
ईदृशान्यस्य पुष्पाणि विभर्त्त्येकाऽतिरूपिणी । बहुरूपाणि चाप्यन्या पद्मानि च तथाऽपरा ।
मन्दरादपि वृक्षाय सारमुद्धृत्य कश्यप. । तस्मादेव तरुश्रेष्ठः सर्व्वेषां ज्येष्ठतां गतः ।
ततस्तत्र निबध्याय कश्यपं प्रददौ शुभा । अदितिर्मम पुण्यार्थे सौभाग्यार्थे तथैव च ।
निष्क्रयेण मया मुक्तः कश्यपस्तु तपोधनः । इन्द्रो दत्तस्तथेन्द्राण्या सौभाग्यार्थं ततो मम ।
सोमश्चाप्यथ रोहिण्या ऋद्धया च धनदस्तथा । एवं सौभाग्यदो वृक्ष. पारिजातो न संशयः ।
पारे जातो विष्णुपद्याः पारिजातेति शब्दितः । मन्दारपुष्पैर्यद्युक्तो मन्दारस्तेन कथ्यते ।
कोऽप्ययं दारुरित्याहुरजानन्तो यतो जना. । कोविदार इति ख्यातस्तस्त्वत. स महातरुः ।
मन्दारः कोविदारश्च पारिजातश्च नामभिः । स वृक्षो ज्ञायते दिव्यो यस्यैतत कुसुमोत्तमं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे षड्विंशत्यधिकशततोऽध्यायः ॥ १२६ ॥
॥ वैशम्पायन उवाच ॥ ततो गिरमिमुक्त्वा नारदं मुनिसत्तमं । प्रोवाच भगवान् विष्णुरप्रमेयपराक्रमः ।
महर्षे धर्मतत्त्वज्ञ स्वर्गं गत्वा त्वयाऽनघ । दृष्ट्वा सदस्यान्देवस्य त्रिपुरघ्नस्य धीमतः ।
अनामया मद्वचनाद्विशाप्यः पाकशासनः । संवर्णयित्वा भ्रातृत्वं पौराणं वेत्सि यन्मुने ।
यमस्याचीन्मुनिश्रेष्ठो भगवान् कश्यपस्तरुं । पारिजातं पुराऽदित्याः प्रियार्थं धर्मवित्तमः ।

स पुण्यमतिसौभाग्यं ददाति तरुसत्तम. । तव दत्तं पुरा दानं व्रतेन तरुसत्तमे । ७१७५
देवीभिर्द्धर्म्मनित्याभिर्द्धर्म्मार्थममरोत्तम । दत्तं श्रुत्वाऽभिकाङ्क्षन्ति दातुं पत्न्यो मम प्रभो ।
पुण्यार्थं दानधर्म्मार्थं मम प्रीत्यर्थमेव च । आनायय द्वारवतीं पारिजातं महाद्रुमं ।
दत्ते दाने पुन स्वर्गं तत्र तं नाययिष्यसि । प्रवाच्य एवं भगवान् बलभिद्भगवंस्त्वया ।
तथा तथा प्रयत्नश्च कार्य्यो मुनिवर त्वया । यथा तरुवरं दद्यात् पारिजातं सुरेश्वरः ।
तत्र दूतगुणांस्तावत् पश्यामस्ते तपोधन । समाप्ता सर्व्वकृत्यानां सम्पद्धि त्वयि मे मता । ७१८०
एवं नारायणेनोक्तो नारदो भगवानृषिः । प्रहस्योवाच केशिघ्नमिदं वाक्यं तपोधनः ।
बाढमेवं प्रवक्ष्यामि यदुमुख्य सुरेश्वरं । न तु दास्यति देवेन्द्रः पारिजातं कथञ्चन ।
मन्दरं पर्व्वतश्रेष्ठं दानवैस्त्रिदशैस्तथा । निक्षिप्य तोयधौ पूर्व्वं पारिजातः समाहृतः ।
मन्दरं पर्व्वतश्रेष्ठं नयितुं प्रेषितः पुरा । पारिजातं हरेणापि लोककर्त्ता जनार्द्दन ।
स्वयं विज्ञापितो गत्वा ततः शक्रेण शङ्करः । आक्रीडद्रुम उद्याने शच्याः स्यादिति याचितः । ७१८५
तथाऽस्त्विति वरो दत्तो महादेवेन चानघ । न च नीतः पारिजातो मन्दरं चित्रकन्दरं ।
क्रीडावृक्षः स शच्येति व्यपदेशेन मोचितः । महेन्द्रेण महाबाहो पारिजाततरुः पुरा ।
प्रियार्थमुमयाऽस्वाचीत् पारिजातवनं हर. । गव्यूतिशतविस्तीर्णं मन्दरस्यैव कन्दरे ।
न तत्र सूर्य्यभाः कृष्ण प्रविशन्ति नगोत्तमे । न चन्द्रस्य प्रभाः शीता नैव कृष्ण सदागतिः ।
शीतोष्णे स्कन्दतस्तत्र शैलपुत्र्या भवन्ति हि । स्वयम्प्रभं वनं तद्धि महादेवस्य तेजसा । ७१९०
वर्ज्जयित्वा महादेवं सगणं यदुवर्द्धन । माश्चान्यस्तद्वनं दिव्यं न प्रयाति कथञ्चन ।
स्रवन्ति तत्र वार्ष्णेय पारिजाताः समन्ततः । सर्व्वरत्नानि मुख्यानि मनसा काङ्क्षितानि वै ।
गणास्तान्युपभुञ्जन्ति प्रवराणां महात्मनां । आज्ञया देवदेवस्य लोकनाथस्य केशव ।
पारिजाताद्बहुगुणं फलं तेषां तथा वनं । अभिमानं प्रभाश्चैव गुणा भूरिगुणास्तथा ।
मूर्त्तिमन्तश्च ते वृक्षाः सोमं देवं वृषध्वजं । उपतिष्ठन्ति सततं प्रवरैः सह केशव । ७१९५
रौद्रेण तेजसा जुष्टा दुःखैर्हीनाः सुखान्विताः । तरवो मन्दरे ते हि दयिताः शैलकन्यया ।
प्रविवेशान्धको नाम घोरस्तत्र महाबलः । दैतेयो वरदानेन दर्पितः पापनिश्चयः ।
स हतो देवदेवेन हरेणामित्रघातिना । अवध्यः सर्व्वभूतानां वृत्राद्दशगुणं बली ।
एवं दुःखेन ते देव पारिजातं प्रदास्यति । पुष्कराक्ष सहस्राक्षः सत्यमेतद्ब्रवीमि ते ।
सततं संहितो देव्याः शच्याः स हि वरद्रुमः । सर्व्वकामप्रदः कृष्ण तथेन्द्रस्यामितौजसः । ७२००
॥ वासुदेव उवाच ॥ मुने तेन कृतं साधु महादेवेन धीमता । यच्छचीकारणं कृत्वा न नीतः स तरुः पुरा ।
स ज्येष्ठः सर्व्वभूतानां लोककृत्प्रभवोऽव्ययः । परावर्य्यस्य सदृशं कृतवानिति मे मतिः ।
अहं यवीयान् देवस्य सर्व्वथा बलघातिनः । लालनीयश्च भगवन् जयन्त इव सत्तम ।
सर्व्वथा भगवांस्तावदुपायैर्न्नऽविस्तरैः । करोतु यत्नं प्रीत्यर्थं शक्तो ह्यसि तपोधन ।

मया मुने प्रतिज्ञातं पुण्यार्थं सत्यभामया । स्वर्गादिहानयिष्यामि पारिजातमिति प्रभो । ७१०५
मया तदनृतं शक्यं कथं कर्त्तुं तपोधन । नानृतं हि वचो विप्र प्रोक्तपूर्व्वं मयाऽनघ ।
मयि भग्नप्रतिज्ञे हि लोकानां संप्लवो भवेत् । यन्मया हि मुनिश्रेष्ठ लोका धर्म्मगुणान्विता ।
परिधार्या. स्थिता सर्व्वे स कथं ह्यनृतं वदेत् ।
न देवगन्धर्व्वगणा न राक्षसा न चासुरा नैव च यक्षपन्नगाः । मम प्रतिज्ञामुपहन्तुमुद्यताः सुखाय जीवन्ति चिरं महा
मुने ।
स पारिजातं यदि न प्रदास्यति प्रयाच्यमानो भवताऽमरेश्वरः । ततः शचीव्यामृदितानुलेपने गदां विमोक्ष्यामि पुरन्दरो
रसि । ७११०
इति प्रवाच्यो यदि सामपूर्व्वकं प्रयाच्यमानो न तरुं प्रयच्छति । सुनिश्चयं मद्गमनाय सर्व्वथा त्वयाऽपि कार्य्यः खलु
तत्र निश्चय. ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे सप्तविंशत्यधिकशतोऽध्यायः ॥ १२७ ॥

॥ वैशम्पायन उवाच ॥ नारदोऽथ मुनिर्गत्वा महेन्द्रसदनं नृप । तां रात्रिमवसत्तत्र ददृशे च महोत्सवं ।
तत्रादित्या महात्मानो वसवश्च सुरोत्तमा. । राजर्षयश्च विद्वांस. स्वर्गता. कर्म्मभि. शुभैः ।
नागा यक्षाश्च सिद्धाश्च चारणाश्च तपोधनाः । ब्रह्मर्षयश्च शतशो देवर्षिमनवस्तथा ।
सुपर्णाश्च महात्मानो मरुतश्च महाबला. । दिवौकसां निकायाश्च शतशोऽन्ये समागता. । ७११५
उपर्य्युपरि सर्व्वेषां शोभो देवो महेश्वरः । तस्थावमितविक्रान्त. स्वैर्गणैः परिवारितः
देवर्षिभिर्मुनिश्रेष्ठैः संवृत. सर्व्वभावनः । कल्पान्तरसहस्रेषु क्षयो येषां न विद्यते ।
यानर्चयन्ति सततं देवा देवेश्वरोपमाः । आत्मज्ञाः सत्यसन्धाश्च ये च धर्म्मपथे स्थिताः ।
रुद्राश्च काश्यपा देवमभ्युपासन्त भारत । स्कन्दश्च भगवान् रौद्रिर्गङ्गा च सरितांवरा ।
अर्चिष्मांस्तम्बुरुश्चैव भारिष वदतांवरः । नेतारो देवदेवानामेते हि तपसाऽन्विताः । ७१२०
एताननुविधीयन्ते देवान्देवगणा नृप । धर्म्मनित्यास्तपोनित्याः सन्तः सन्मार्गमाश्रिता. ।
ये त्विमे मानुषा देवानर्चयन्ति शुभार्थिन. । तानर्चयन्ति ह्यमरास्तथा राजञ्छुभार्थिनः ।
पितृकृत्येषु देवानां मन्यासं येऽप्यनुष्ठिताः । स्वाध्यायवन्तः कौरव्य सततं धर्म्मचारिण. ।
गन्धर्व्वाधिपतिः श्रीमांस्तत्र चित्ररथो नृप । सपुत्रो वादयामास देववाद्यानि हृष्टवत् ।
ऊर्णायुश्चित्रसेनश्च हाहाहूहूश्च भारत । तम्बरुस्तुम्बुरुश्चैव जगुरन्ये च पन्नगान् । ७१२५
उर्व्वशी पूर्व्वचित्तिश्च हेमा रम्भा च भारत । हेमदन्ता घृताची च सहजन्या तथैव च ।
जुजोष भगवान्देवस्तदुपस्थानमात्मवान् । ष्टत्तेन तुष्टः शक्रस्य जगाम जगतो गतिं ।
गते भूतपतौ सर्व्वे नृपा जग्मुर्यथागतं । महेन्द्रेणार्चिता देवाः स्वानेव निलयान् गताः ।
ततः सर्व्वेषु यातेषु सुखासीनं पुरन्दरं । सदस्यैः स्वैः सहासीनं नारदोऽभिययौ मुनिः ।
तमिन्द्रः पूजयामास समुत्थाय तपोधनं । दिदेश कुशगर्भञ्च पीठमात्मासनोपमं । ७१३०

नारदोऽथ महातेजा महेन्द्रमिदमब्रवीत् । दूतोऽहममरश्रेष्ठ विष्णोरतुलतेजसः ।
किञ्चित् कार्य्यं पुरस्कृत्य प्रेषितोऽहं महात्मना । आनर्त्तादार्त्तिहरणं तस्यैवानन्यतेजसः ।
प्रीतिवाक्यानि हृद्यानि प्रयुज्य मुनये तदा । ततः प्रहृष्टो भगवानब्रवीत् पाकशासनः ।
किमाह पुरुषश्रेष्ठः शीघ्रमाचक्ष्व मे मुने । चिरस्य खलु कृष्णेन संस्मृतोऽस्मि महात्मना ।
प्रियवाक्यानि हृद्यानि ब्रूहि धर्मभृताम्बर । ७११५
॥ नारद उवाच ॥ महेन्द्रस्यानुजं द्रष्टुं गतोऽहं भ्रातरं तव । द्वारकां पुरुषश्रेष्ठं काश्यपानां यशस्करं ।
तन्तु रैवतकेऽद्राक्षं तदासीनमरिन्दमं । रुक्मिण्या सहितं वीरमुमयेव वृषध्वजं ।
पारिजाततरोः पुष्पं तस्य दत्तं मयाऽनघ । विस्मापनार्थं देवेश पत्नीनामुरुतेजसः ।
तद्दृष्ट्वा तस्य पत्न्यस्तु विस्मयं परमं ययुः । बहुकामप्रदं पुष्पं वृक्षराजसमुद्भवं ।
गुणाश्चास्य मयाख्यातास्तस्य पुष्पस्य मानद । सृष्टिश्च पारिजातस्य कश्यपेनातितेजसा । ७१२०
अदित्या कश्यपो दत्तः पुण्यार्थञ्च यथा मम । पुष्पदाम्ना वेष्टयित्वा कण्ठे पुण्यार्थमात्मवान् ।
तस्य दत्तो यथा शच्या देवास्यान्ये सुरेश्वर । निष्क्रयश्च यथा दत्तः काश्यपाद्यैर्महर्षिभिः ।
तच्छ्रुत्वा तस्य पत्न्येका सत्यभामेति विश्रुता । पुण्यकार्यं मनश्चक्रे दयिता ते यवीयसः ।
तया चाभ्यर्थितो भर्त्ता देव्या देवगणेश्वर । प्रतिजज्ञे स धर्मात्मा यवीयांस्तव मानद ।
ततो मामुक्तवान् वीरो विष्णुर्बलवताम्बरः । यथावत् सुरमुख्येश मुव्रतः शृणु भावन । ७१२५
लालनीयो यवीयांस्तु प्रणिपत्याच्युतोऽब्रवीत् । आनायय सुरश्रेष्ठ पारिजातं वरद्रुमं ।
मनोरथोऽस्तु सफलो वध्वास्तेऽसुरनाशन । धर्मकृत्यं विशेषेण वध्वास्तेऽमरसत्तम ।
अयं दुर्लभकल्याणो लोको लोकगणेश्वर । पश्यन्त्वमरकल्याणं मत्प्रभावाच्च मानुषाः ।
॥ वैशम्पायन उवाच ॥ वासुदेववचः श्रुत्वा महेन्द्रः कुरुनन्दन । नारदं वदतां श्रेष्ठमिदं वाक्यमथाब्रवीत् ।
भजासनं द्विजश्रेष्ठ श्रुतमुक्तं त्वया द्विज । सन्देशं प्रतिदास्यामि विष्णोरतुलतेजसः । ७१३०
आसीने नारदे शक्रो लब्धानुज्ञोऽथ नारदात् । स्वमासनवरं भेजे तस्यैव सदृशं विभो ।
उपविष्टः सुरपतिरथोवाच तपोधनं । निरीक्ष्य स्वबलं वीर्य्यं पार्षदं वृत्रनाशनः ।
॥ इन्द्र उवाच ॥ महर्षे कुशलं पृष्ट्वा वक्तव्यस्ते जनार्द्दनः । वचनान्मम धर्मज्ञ सर्व्वभूतसुखावहः ।
मदनन्तरमीशस्त्वं जगतो नात्र संशय । त्वदीयः पारिजातश्च रत्नान्यन्यानि चाच्युत ।
त्वन्तु भारावतरणं कर्त्तुं देव मर्त्त्यं गतः । मानुष्यं सर्व्ववृत्तानामास्थितः कार्य्यसिद्धये । ७१३५
त्वयि तीर्णप्रतिज्ञे हि पुनः प्राप्ते त्रिपिष्टपं । पूरयिष्यामि वध्वास्ते दृष्टान् कामानधोक्षज ।
न स्वर्गीयाणि रत्नानि नयितव्यानि तेऽच्युत । त्वन्पार्थे मानुषं लोकमिति पूर्व्वकृता स्थितिः ।
उत्क्रम्य हि स्थितिं देव प्रवर्त्तामि महाबल । यद्यहं किं प्रवक्ष्यन्ति प्रजापतिगणाः प्रभो ।
ब्रह्मणा सह पुत्रेण कश्यपेन महात्मना । नियमाः सर्व्वरत्नानां स्थापिता जगतो ध्रुवाः ।
प्रजापतिकृतं मार्गमपास्य प्रजतो मम । श्रुत्वा प्रजापतिर्ब्रूयात् कोपमप्युग्रतेजसं प्रभुः । ७१४०

अस्माभिर्म्रियमानन्तु मर्यादासेतुबन्धनं। भेत्स्यन्त्यशङ्किता दैत्या दैत्यपक्षास्तथाऽपरे।
स्त्रीनिमित्तमितो नीते पारिजाते द्रुमेश्वरे, स्वर्गौकसो भविष्यन्ति विमनस्काश्च मानद।
उपभोगा मानुष्याणां विहिता ये स्वयम्भुवा। तैस्तुष्यतु मम भ्राता मत्यसक्तम् कालपर्य्ययं।
इहापि तावत्त्रिदिवे मम यः स्यात् परिग्रहः। त्रिदिवस्थोऽपि तं कृष्णो नोपभोक्तुमिहार्हति।
ज्येष्ठज्यायिष्ठभोगानां नाभिज्ञः किं जनार्द्दनः। यतो धर्म्मं समुत्सृज्य पापमेवानुवर्त्तते। १११६
स्त्रीवश्यता ख्याप्यमाना कृष्णस्य हि महात्मनः। जगत्त्रयस्य या योगं जनयेदिति मे मतिः।
मानुष्यं मानुषे भावे यदेतन्मधुसूदनः। कुर्य्यान्निर्ब्बन्धनीयं यद्भावा ज्येष्ठेन नारद।
स्वर्गरत्नविलोपेन धर्षणा स्यात् परा मम। ज्ञातितो धर्षणा चैव विशेषेणैव गर्हिता।
धर्ममर्थञ्च कामञ्च क्रमेण मधुसूदनः। सेवतेव सतां धर्म्मान् स्थापितान् पद्मयोनिना।
महीतलं पारिजातं नाययिष्याम्यहं यदि। पौलोमीमादितः कृत्वा को नु मां बहुमंस्यते। ७१७०
पारिजातं महीपृष्ठे दृष्ट्वा स्पृष्ट्वा च मानुषाः। स्वर्गार्थं नोद्यमिष्यन्ति दृष्ट्वा स्वर्गफलं क्षितौ।
पारिजातगुणान्मर्त्या जुषन्ति यदि नारद। देवानां मानुषाणाञ्च न विशेषो भविष्यति।
तत्र यत् क्रियते कर्म्म इह तद्भुज्यते नरैः, स्वर्गार्थं न यतिष्यन्ति पारिजातगुणान्विताः।
सर्व्वरत्नवरः स्वर्गे पारिजातस्तपोधनः। भुज्यते यदि मर्त्यैः स सर्व्वमेकं जगद्भवेत्।
यज्ञैर्मर्त्या न यक्ष्यन्ति सम्यक्स्वर्गफला भुवि। न पूर्त्तानि प्रदास्यन्ति तुल्यत्वममरैर्गताः। ७१७५
यज्ञैर्याज्ञिकैश्चैव नित्यमाप्याययन्ति नः। मानुषाः स्वर्गमिच्छन्तः श्रद्दधानास्तपोधन।
तत् सर्व्वं न करिष्यन्ति पारिजातगुणान्विताः। निस्तेजसो भविष्यामस्ते गतास्तदिहोनताः।
इतः सुरश्च यस्तेस्ते जीवन्ति पुरुषा भुवि। आप्याययन्तस्तेऽप्यस्मान्दानैर्यज्ञैस्तथैव च।
न बुभुक्षा पिपासा वा बाधते मानुषान् यदि। रोगो जरा वा धर्म्मश्च मृत्युर्म्वा रतिरेव वा।
दौर्गन्ध्यं वाऽथ वा घोरा इतयः कर्म्मसम्भवाः। किमुद्योगं करिष्यन्ति पारिजातगुणान्विताः। ७१८०
सर्व्वथा नयनं तत्र पारिजातस्य न क्षमं। इति वाच्यस्त्वया विप्र विष्णुरक्लिष्टकर्म्मकृत्।
यथा यथा च मे भ्राता तुष्येत द्विपदाम्बर। तथा तथा त्वया कार्य्यं कार्य्यं सत्प्रीतिमिच्छता।
दारांश्च मणिरत्नानि वस्त्राण्यन्नकृतानि च। रत्नानि च विचित्राणि प्रभूतां द्वारकां नय।
योग्यानि मर्त्यलोकानां यावदिच्छति केशव। न स्वर्गपरिभोग्यन्तु कर्त्तुमर्हति केशवः।
ददानि रत्नानि यथेप्सितान्यहं बहूनि चित्राणि च भूषणानि। न पारिजातस्य कथञ्चन द्रुमं मुने प्रदास्यामि दिवौकसां प्रियं। ७१८४

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे इन्द्रवाक्ये अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

॥ वैशम्पायन उवाच ॥ देवराजवचः श्रुत्वा नारदः कुरुनन्दन। भीवाच वाक्यं वाक्यज्ञो महात्मा धर्म्मवित्तमः।
भ्रातृत्वेन यथा वाच्यं हितं बलनिषूदन। तथा तत्र महाबाहो बहुमानोऽस्ति मे त्वयि।
उक्तो मया वासुदेवो भावता भवतो मतं। न दत्तः पारिजातो हि हरस्तापि त्वया पुरा।

हेतवश्च मया तस्य दर्शिता भो समासतः । न चावगतवान्देव सत्यमेतद्ब्रवीमि ते।
उपेन्द्रोऽहं महेन्द्रेण लालनीय सदेति मां। उवाच पुण्डरीकाक्षस्तदनन्तरमेव च। ७१८०
पुनः पुनर्मया चास्य हेतवो देव दर्शिता । नैव बुद्धिश्च व्यावृत्ता वृत्रनाशन तस्य वै।
अपि चायुक्तवान्देवो वाक्यानि मधुसूदन । प्रहस्य पुरुषश्रेष्ठ सरोषमिव वासव।
न देवगन्धर्व्वगणा न राक्षसा न चासुरा नैव च पन्नगोत्तमाः । मम प्रतिज्ञामपहन्तुमुद्यता मुने समर्था खलु भद्रमस्तु ते।
स पारिजातं यदि न प्रदास्यति प्रयाच्यमानो भवताऽमरेश्वरः । ततः शचीव्यामृदितानुलेपने गदां विमोक्ष्यामि पुरन्दरो-
रसि।
उपेन्द्रस्य महेन्द्राय भ्रातुस्ते निश्चयः परः । यदत्र मन्यसे न्याय्यं संप्रधार्य्य कुरुष्व तत्। ७१८५
तत्त्वं हितञ्च देवेश श्रूयतां वदतो मम। नयनं पारिजातस्य द्वारकां मम रोचते।
नारदेनैवमुक्तस्तु प्रत्युवाचबलदेहहा। रोषाविष्टो देवराजः सहस्राक्षोऽब्रवीदिदं।
अनागसि मयि ज्येष्ठे सोदरे यदि केशव । एवं प्रवृत्तः किं शक्यं कर्त्तुमत्र तपोधन।
बहूनि प्रतिलोमानि पुरा स कृतवान्मयि। कृष्णो नारद सोढानि भ्रातेतिस्म मयाऽनघ ।
खाण्डवे चार्ज्जुनार्थं पुरा वाहयता सता। मदीया वारिता मेघा प्रशमयन्तोऽग्निमुद्धतं। ७१९०
गोवर्द्धनं धारयता विप्रियञ्च कृतं मम। तथा वृत्रवधे प्राप्ते साहाय्यार्थं वृतो मया।
समोऽहमिति सर्व्वेषां भूतानामिति चोक्तवान्। स्वशाक्समलमाश्रित्य वृत्रश्च विहतो मया।
देवासुरेषु प्राप्तेषु संग्रामेषु च नारद । युध्यत्यात्मेच्छया कृष्णो मुने सुविदितं तव।
बहुनाऽत्र किमुक्तेन तस्मादिष्यात् प्रवर्त्ततां । ज्ञातिभेदो न न कार्य्यः साक्षी त्वं मम नारद।
ममोरसि गदां मोक्तुं शोथतो यदि केशव । अनुग्रहाय पौलोमीं गुणः क इह दृश्यते। ७१९५
उदवासं गतो धीमान् पिता नः कश्यपः प्रभुः। अदित्या सह मे माता तयोर्व्वाच्यमिदं भवेत्।
अजितात्मा मम भ्राता रजसा तमसा वृतः । कामेन च स्त्रियो वाक्यादेव मामुक्तवान गुरु।
धिक् स्त्रियः सर्व्वथा विप्र धिषजो धिक् तमस्तथा । यत्राधिविततवान् विष्णुरेव मा स्त्रीजितो द्विज।
न दृष्टं कश्यपकुलं व्यपदेश्य महामुने। नैव दक्षकुलं दृष्टं मातुर्मे यत्र सम्भवः ।
न ज्येष्ठता न राजत्वं देवानां प्रतिमानितः । कामरागाभिभूतेन कृष्णेन खलु नारद। ७२००
पुत्रदारसहस्रैर्हि भ्राता ऽनघ विशिष्यते। सद्वृत्तो ज्ञानसम्पन्न इति ब्रह्मा पुरा ऽब्रवीत्।
नास्ति भ्रातृसमो बन्धुराहार्य्ये इतरो जनः । इति मामब्रवीन्माता पिता चैव प्रजापतिः ।
सोदरेषु विशेषन्तु पिता मे कश्यपो ऽब्रवीत्। दृष्टा मया विरुध्यन्तो दानवाः पापनिश्चयाः ।
काममेतत्तं वक्तव्य स्वयमात्मस्तवान्वितं। प्राप्तस्त्वपरो विप्र यदिहादोच्यते मया।
धनुर्ज्याया मुनिश्रेष्ठ छिन्नाया हि पुराऽनघ। धन्वाभिरमराणां हि वरदानान्महामने। ७२०५
उत्कृत्तशिरसो विष्णोः पुरा देही धृतो मया। सन्धितञ्च शिरो यत्नाच्छिन्नं रौद्रेण तेजसा।
अहं विशिष्टो देवानामित्युक्ता पुनरच्युतः । धनुरारोप्य दर्पेण स्थितो नारद केशव।

किं मां पिता वा माता वा वक्ष्यतीति मया मुने। स्नेहेन विष्टतं विष्णोः शरीरं मुनिसत्तम।
ऐन्द्रं वैष्णवमस्यैव मुने भागमहं ददौ। यवीयांसमहं प्रेम्णा कृष्णं पश्यामि नारद।
संग्रामेषु प्रहर्त्तव्यं तेन पूर्व्वं तपोधन। राजा किलाहं समरे प्रहराम्यग्रतो भुवं। ७११०
प्रादुर्भावेषु सर्व्वेषु स्वशरीरमिवानघ। यस्माद्रक्ष्यामि धर्म्मज्ञ केशवं भक्तिमाश्रितं।
इदं भक्त्या मदीयस्य भवनं विष्णुना कृतं। उपर्य्युपरि लोकानामधिकं भुवनं मुने।
अवमानः स च मया पृष्ठतः क्रियते मुने। लालनीयो मया बाल इत्येवं भ्रातृगौरवात्।
बालोऽयं मम पुत्त्रेति यवीयानिति नारद। पित्रा मात्रा च गोविन्दो नातीव परिभाषितः।
दृष्टस्तत्र जनन्यास्तु केशवः स विशेषतः। वयं देव्या न सन्देहस्तत्र स्नेहो ऽतिरिच्यते। ७११५
सर्व्वज्ञो बलवान् शूरो मान्यमानयिता तथा। केशवेत्येव च ध्यानं यत्तदितयतां गतं।
गच्छ नारद वक्तव्यः केशवो वचनान्मम। आहूतो न निवर्त्तेयं समरं प्रति शत्रुभिः।
यदीच्छसि तदागच्छ सद्यं ते यत्त्वमिच्छसि। प्रहरस्व च पूर्व्वं त्वं भार्य्याजित यथेच्छसि।
रथाङ्गेनाथ शार्ङ्गेण गदया नन्दकेन च। प्रहरारुह्य गरुडं दृढो भूत्वा जनार्द्दन।
प्रहृतो प्रहरिष्यामि यथाशक्त्या च केशव। अहो धिग्यदि मां स्नेहो विक्लवं न करिष्यति। ७१२०
यावन्न संग्रामगतो जितोऽहं चक्रपाणिना। पारिजातं न दास्यामि तावद्वो मुनिसत्तम।
मां समाक्रयते ज्येष्ठं यवीयांस्तु तपोधन। अहं तं मर्षयिष्यामि किमर्थं स्त्रीजितं हरिं।
अद्यैव गच्छ भगवन् द्वारकां कृष्णपालितां। विवादे संस्थितः सोऽद्य इति वाच्यस्त्वयाऽच्युतः।
पलाशपत्त्राक्षमपि त्वया ऽजितो न पारिजातस्य तव प्रदास्यति। इति प्रवाच्यो मधुसूदनस्त्वया वचो मदीयं स्मरता तपोधन।
पुनः प्रवाच्यो भगवंस्त्वयाऽच्युतो मम प्रियार्थं खलु निर्विशङ्कितं। न मायया हर्त्तुमिहार्हसि द्रुमं सुयुद्धमेवास्तु धिगस्तु जिह्मतां। ७१२५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे इन्द्रवाक्ये ऊनत्रिंशदधिकशततमोऽध्यायः ॥ १२८ ॥
॥ वैशम्पायन उवाच ॥ महेन्द्रवचनं श्रुत्वा नारदो वदतांवरः। विविक्ते देवराजानमिदं वचनमब्रवीत्।
कामं प्रियाणि राजानो वक्तव्या नात्र संशय। शास्त्रकामस्तु वक्तव्यं हितमप्रियमच्युत।
अनिपुणपुरोभागो न स्यादिति वदन्ति हि। स लोकगतितत्त्वज्ञो नयविज्ञानकोविदः।
कार्य्याकार्य्ये समुत्पन्ने परिपृच्छति मां भवान्। यतस्ततः प्रवक्ष्यामि श्रूयतां यदि रोचते।
अदुष्टेनापि सुहृदा वक्तव्यं जानता हितं। न्याय्यश्च शास्त्रकामस्य पराभवमनिच्छता। ७१३०
वक्तव्यं सर्व्वथा सद्भिरप्रियं वाऽपि यद्धितं। आनृशंस्येन तु स्नेहस्य सद्भिश्च विदितं पुरा।
अनृते धर्म्मभंशे च न शुश्रूषति याचिते। न प्रियं न हितं वाच्यं सद्भिरेते विनिन्दिताः।
सर्व्वदा देव वक्तव्यं सूनृतं सुरसत्तमर। श्रुत्वा च कुरु सर्व्वत्र मम श्रेयस्करं वचः।
अन्योन्यभेदो भ्रातॄणां सुहृदां वा समागमे। भवत्यानन्दकृद्देव द्विषतां नात्र संशयः।

हितानुबन्धसहितं कार्य्यं ज्ञेयं सुरेश्वर । विपरीतञ्च तद्बुद्ध्वा नित्यं बुद्धिमतां वर । ७१७५
पश्चात्तापकरं यत् स्यादारब्धं कार्य्यमीदृशं । आरम्भेनैव तद्विद्वानेष बुद्धिमतां नयः ।
विपाकमस्य कार्य्यस्य नानुपश्यामि शोभनं । यदत्र कारणं देव निबोध विबुधाधिप ।
य एको विश्वमध्यास्ते प्रधानं जगतो हरिः । प्रकृत्या यं परं सर्व्वे क्षेत्रज्ञं वै विदुर्बुधाः ।
तस्याव्यक्तस्य यो व्यक्तो भागः सर्व्वभवोद्भवः । तस्यात्मा प्रथमो देवो विष्णुः सर्व्वस्य धीमतः ।
प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी । व्यक्तः सर्व्वमयो विष्णुः स्त्रीसंज्ञो लोकभावनः ७१८०
रुक्मिण्याद्याः स्त्रियस्तस्य व्यक्तत्वे प्रथमो गुणः । अव्यया प्रकृतिर्द्देवी गुणदेवो महेश्वरः ।
न विशेषोऽस्ति रुद्रस्य विष्णोश्चामरसत्तम । गुणिनश्चाव्ययायाश्च स दारप्रथमो गुणः ।
नारायणो महातेजाः सर्व्वकृल्लोकभावनः । भोक्ता महेश्वरो देवः कर्त्ता विष्णुरधोक्षजः ।
ब्रह्मा देवगणाश्चान्ये पश्चात् सृष्टा महात्मना । महादेवेन देवेश प्रजापतिगणास्तथा ।
एवं पुराणः पुरुषो विष्णुर्वेदेषु पठ्यते । अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा । ७१८५
अदित्या तपसा विष्णुर्महात्माराधितः पुरा । वरेण च्छन्दिता तेन परितुष्टेन चादितिः ।
तयोक्तस्त्वत्समं पुत्त्रमिच्छामीति सुरोत्तम । प्रणिपत्य च विज्ञाय नारायणमधोक्षजं ।
तेनोक्ता भुवने नास्ति मत्समः पुरुषोऽपरः । अंशेन तु भविष्यामि पुत्त्रः खल्वहमेव ते ।
स जातः सर्व्वकृद्देवो भ्राता तव सुरेश्वर । नारायणो महातेजा यमुपेन्द्रं प्रचक्षते ।
इत्थमेष हरिर्द्देवः काश्यपत्वमुपागतः । तैस्तैर्भावैर्विकुरुते भूतभव्यभवाव्ययः । ७१९०
प्रादुर्भावं गतो देवो जगतो हितकाम्यया । माथुरं जगतां नाथः कर्त्ता हर्त्ता च केशवः ।
यथा पललपिण्डः स्याद्व्याप्तः स्नेहेन मानद । तथा जगदिदं व्याप्तं विष्णुना प्रभविष्णुना ।
ब्रह्मण्यदेवः सर्व्वात्मा तैस्तैर्भावैर्विकुर्व्वते । जगत्यतिगुणो देवो वैकुण्ठः सर्व्वभावनः ।
अतः समस्तदेवानां पूज्य एव च केशवः । पद्मनाभश्च भगवान् प्रजासर्गकरो विभुः ।
अनन्तो धारणार्थञ्च बिभर्त्ति च महीधरः । यश्च इत्यपि सद्भिश्च कथ्यते वेदवादिभिः । ७१९५
श्वेतः कृतयुगे देवो रक्तस्त्रेतायुगे तथा । द्वापरे च तथा पीतः कृष्णः कलियुगे विभुः ।
अवधीत् स हिरण्याक्षं दिव्यरूपधरो हरिः । जघ्ने हिरण्यकशिपुं नरसिंहवपुर्हरिः ।
दधाराप्सु निमज्जन्तीमेष देवो वसुन्धरां । वाराहं वपुराश्रित्य जगतो हितकाम्यया ।
हिताय जगतीश्चैव विष्णुर्वामनरूपधृक् । बबन्ध च बलिं देवः श्रीमान् पन्नगबन्धनैः ।
देवदानवसम्भूतामकामयदपि श्रियं । त्वय्यनन्तः पुरा विष्णुरुदारामितविक्रमः । ७२००
सावशेषं ततो यस्य तं न हन्ति जनार्द्दनः । अनेकेष्वपि वर्त्तन्तं व्रतमेतन्महात्मनः ।
जघ्ने च दानवान्मुख्यान्देवानाञ्चैव शत्रवः । तव प्रियार्थं गोविन्दो धर्म्मनित्यः सतां गतिः ।
रामत्वमपि चावाप्य जघ्ने रावणमात्मवान् । भूत्वा कामगुणश्चैव जघान द्विरदं हरिः ।
हितायं जगतोऽद्यापि लोके वसति मानुषे । उपेन्द्रो जगतो नाथः सर्व्वभूतोत्तमोत्तमः ।

जटी कृष्णाजिनी दण्डी दृष्टपूर्व्वो मया हरिः । दैतेयेषु चरन्देवस्तृणेष्वग्निरिवोद्धतः । ७२०५
अद्राक्षमपि गोविन्दं दानवैकार्णवं जगत् । कुर्व्वाणं दानवैर्हीनं जगतो हितकाम्यया ।
अवश्यं पारिजातन्ते नयिष्यति जनार्द्दनः । द्वारकाममरश्रेष्ठ नानृतं ते ब्रवीम्यहं ।
भ्रातृस्नेहाभिभूतस्त्वं कृष्णे न प्रहरिष्यसि । नापि कृष्णस्त्वयि ज्येष्ठे प्रहरिष्यति वासव ।
नैव चेच्छ्रोष्यसि प्रोक्तं मया देव कथञ्चन । पृच्छ त्वं नयधर्म्मज्ञान् ये हितास्तव मन्त्रिणः ।
नारदेनैवमुक्तस्तु महेन्द्रो जनमेजय । इदमुत्तरमोघोऽथ प्रत्युवाच जगद्गुरुं । ७२१०
एवंविधप्रभावं त्वं कृष्णं वदसि यद्द्विज । एवमेतत् सुबहुशः श्रुतं खलु मया मुने ।
यतश्चैवंविधः कृष्णस्ततोऽहं तस्य तं तरुं । न प्रयच्छाम्यदातव्यं सतां धर्म्ममनुस्मरन् ।
महाप्रभावो नात्यार्थं रुष्येदिति विचिन्तयन् । व्यवस्थितोऽहं भद्रन्ते मुने सर्व्वगुणोदितः ।
महाप्रभावाः सततं भवन्ति हि सहिष्णवः । श्रोतारश्चैव सततं वृद्धानां ज्ञानचक्षुषां ।
महात्मा कारणेनान्ये कृष्णो धर्म्मभृताम्वरः । भ्राता ज्येष्ठेन धर्म्मज्ञो विरोधं गन्तुमर्हति । ७२१५
यथैव मम मातुः स वरं प्रादादधोक्षजः । तथैव तस्याः पुत्राणां ज्येष्ठतां सोढुमर्हति ।
यथैवोपेन्द्रतां यातः स्वयमिच्छन् जनार्द्दनः । तथैव भ्रातुरिन्द्रस्य संमानं कर्त्तुमर्हति ।
ज्यैष्ठ्यमेव तु देवेन नारब्धं किं पुरातने । अथेदानीमपीच्छेत स ज्येष्ठोऽस्तु मधुसूदनः ।
सुनिश्चितं बलरिपुमोच्य नारदो विसर्ज्जितस्त्रिदशवरेण धर्म्मवित् । ययौ पुरीं यदुवृषभाभिरक्षितां कुशस्थलीं हृतमतिमांस्तपोधनः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे त्रिंशदधिकशततोऽध्यायः ॥ १३० ॥

॥ वैशम्पायन उवाच ॥ अथैत्य द्वारकां रम्यां नारदो मुनिसत्तमः । ददर्श पुरुषश्रेष्ठं नारायणमरिन्दमं । ७२२०
स्ववेश्मनि सुखासीनं सहितं सत्यभामया । विराजमानं वपुषा सर्व्वतेजोनिगामिना ।
तमेवार्थं महात्मानं चिन्तयन्तं दृढव्रतं । केवलं योजयन्तञ्च वाक्यमात्रेण भामिनी ।
दृष्ट्वैव नारदं देवः प्रत्युत्तस्थावधोक्षजः । पूजयामास च तथा विधिदृष्टेन कर्म्मणा ।
सुखोपविष्टं विश्रान्तं प्रहस्य मधुसूदनः । वृत्तान्तं परिपप्रच्छ पारिजाततरुं प्रति ।
अथोवाच मुनिः सर्व्वं विस्तरेण महात्मने । इन्द्रानुज्ञायेन्द्रवाक्यं निखिलं जनमेजय । ७२२५
श्रुत्वा कृष्णस्तु तत्सर्व्वं नारदं वाक्यमब्रवीत् । अमरावतीपुरीं यास्ये श्वोऽहं धर्म्मभृताम्वर ।
इत्युक्त्वा नारदेनैव सहितः सागरं ययौ । सन्दिदेश ततस्तत्र विविक्ते नारदं हरिः ।
महेन्द्रभवनं गत्वा वद वाक्यं तपोधन । अभिवाद्य महात्मानं मद्वाक्यादमरोत्तमं ।
न युद्धे प्रमुखे स्थातुमर्हसि त्वं मम प्रभो । पारिजातस्य नयने निश्चितं त्वमवेहि मां ।
एवमुक्तस्तु कृष्णेन नारदस्त्रिदिवं गतः । आचचक्षे च कृष्णोक्तं देवेन्द्रायामितौजसे । ७२३०
ततो बृहस्पतिं शक्रः शशंस बलनाशनः । श्रुत्वा बृहस्पतिश्चेदमुवाच कुरुनन्दन ।
अहो धिग्वृद्धसदनं मयि याते शतक्रतो । दुर्नीतमिदमारब्धं मन्त्रभेदो हि दारुणः ।

अनाख्याय कथं नाम भवता भुवनेश्वर। ममैतत् कार्य्यमारब्धं देव केनापि हेतुना।
अथवा भवितव्येन कर्म्मणेन प्रयुज्यते। जगद्दृत्तस्य न विधिः शक्यः समतिवर्त्तितुं।
महत्येव तु कार्य्याणामारम्भो न प्रशस्यते। तदेतत् महदारम्भे कार्य्यं दास्यति लाघवं।
बृहस्पतिं महात्मानं महेन्द्रोऽथाब्रवीद्वचः। एवं गतेऽद्य यत् कार्य्यं तद्भवान् वक्तुमर्हति।
तमुवाचाथ धर्म्मात्मा गतानागततत्त्ववित्। अधोमुखश्चिन्तयित्वा बृहस्पतिरुदारधीः।
यतस्व सह पुत्रेण योधयस्व जनार्द्दनं। तथा शक्र करिष्यामि यथा न्याय्यं भविष्यति।
बृहस्पतिस्त्वेवमुक्त्वा क्षीरोदं सागरं गतः। आचष्ट चैव मुनये काश्यपाय महात्मने।
तच्छ्रुत्वा काश्यपः क्रुद्धो बृहस्पतिमभाषत। अवश्यं भाव्यमेतद्धि सर्व्वथा नात्र संशयः।
दुष्कृत. सदृशी भार्य्या महर्षेर्देवशर्म्मणः। अपध्यानकृतो दोषः पतत्येष शतक्रतोः।
अस्य दोषस्य शान्त्यर्थमारब्धं मुने मया। उदवासः स दोषश्च माश एव सुदारुणः।
तद्गमिष्यामि मात्राऽस्य सहादित्या तपोधन। उभौ तौ वारयिष्यामि दैवं संवदते यदि।
बृहस्पतिस्तु धर्म्मात्मा मारीचमिदमब्रवीत्। प्राप्तकालं त्वया तत्र भवितव्यं तपोधन।
तथेति कश्यपश्चोक्त्वा सम्प्रस्थाप्य बृहस्पतिं। जगामार्च्चयितुं देवं रुद्रं भूतगणेश्वरं।
तत्र सौम्यं महात्मानमानर्च वृषभध्वजं। वरार्थी काश्यपो धीमानदित्या सहितः प्रभुः।
तुष्टाव च तमीशानं मारीचः कश्यपस्तदा। वेदोक्तैः स्वकृतैश्चैव स्तवैः स्तव्यं जगद्गुरुं।

। कश्यप उवाच॥ उरुक्रमं विश्वकर्म्माणमीशं जगत्स्रष्टारं धर्म्मदृश्यं वरेण्यं। सर्व्वं त्वां धृतिमद्धाम दिव्यं विश्वेश्वरं भगवन्तं नमस्ये।
यो देवानामधिपः पापहर्त्ता ततं विश्वं येन जगन्महत्त्वात्। आपो गर्भो यस्य शुभा धरित्र्यो विश्वेश्वरं तं शरणं प्रपद्ये।
शालावृकान् यो यतिरूपो निजघ्ने दत्तानिन्द्रेण प्रणुदोऽहितानां। विरूपाक्षं सुदर्शनं पुण्ययोनिं विश्वेश्वरं यामि मूर्द्धा प्रपद्ये।
भुङ्क्ते य एको विभुर्जगतो विश्वमग्र्यं धाम्नां धाम सुकृतिनाञ्च धृत्य.। पुष्यात् स मां महता शाश्वतेन सोमपानां मरीचिपानां वरिष्ठः।
अथर्व्वाणं सुशिरसं भूतयोनिं कृतिनं घोरं दानवानाञ्च बाधं। येन कृते यज्ञियं संस्कृतं वै विश्वेश्वरेशं शरणं यामि देवं।
जगज्जालं विततं यत्र विश्वं विश्वात्मानं भीतिदेवं गतानां। य ऊर्द्ध्वगं रथमास्थाय याति विश्वेश्वरः स सुमना मे ऽस्तु नित्यं।

अन्तश्चरं रोचनं चारुशाखं महाबलं धर्म्मनेतारमीड्यं। सहस्रनेत्रं शतवर्त्मानमुग्रं महादेवं विश्वसृजं नमस्ये।
शुचिं योगं शंसनं शान्तपापं शर्व्वं शम्भुं शङ्करं भूतनाथं। धुरन्धरं गोपतिं चन्द्रचिह्नं रियोकाणामयनं यामि मूर्द्धा।
भास्वरः शिपायं वृषभं वीरवाणं कृतं धर्म्मं वितथं चारुश्रेयं। वसुन्धरं सप्तजीकं समं त्वां धृतव्रतं शूलधरं प्रपद्ये।
अनन्तवीर्य्यं धृतकर्म्माणमाद्यं यज्ञस्येशं यजताश्चाभियाज्यं। हविर्भुजं भुवनानां सदैव ज्येष्ठं द्विजं धर्म्मधृतं प्रपद्ये।
परं गुणेभ्यः प्रथितगर्भस्वरूपं यज्ञ.शृङ्गं व्यूहनं कान्तरूपं। शुद्धात्मानं पुरुषं सत्यधाम सम्मोहनं दुष्कृतीनां नमस्ये।
युक्तोद्धारं सुशिरसं चारुकर्म्मं दृढव्रतं दृढधन्वानमाजं। शूरं वेत्तारं धनुषोऽस्त्रातिरेकं पतिं पशूनां शमनं नमस्ये।

एको रातिश्चैव भूतं भविष्यं सर्व्वातिथिर्यो हि जुगुप्सुरिशः । अरिन्दुदोऽनुत्तमः संविभागी विभाजको मां भगवान्
पातु देव। ७३२०
य एको याति जगतां विश्वमीशो य एकोऽदाम्महतां प्राणमर्ग्यं । येनामृष्टंस्या च्छाश्वतं सामजुष्टं समाजुषात् सुकृतो श्रेयसेऽद्य ।
अम्भ्यासृजद्यो भुवनोत्तमोत्तमं तृप्तो विद्वान् ब्राह्मणः पङ्गुणस्य । स्रष्टारं सर्व्वाहृतिस्थं समयं समां पायादुग्रकुरूपोऽरिहाङ्गैः ।
व्यस्वनो जनोऽद्य विद्वान् समग्रः स्तृष्णिः शम्भुः प्राणदः कृत्तिवासाः । रसो भुवः पवमानस्य भर्त्ता स सपत्नीश. शङ्करः सारधाता ।
त्र्यम्बकं पुष्टिदं वेदृवाणं धर्म्मं विप्राणां वरदं यज्वनाञ्च । शराद्दरं रणजेतारमीशं देवं देवानां शरणं यामि रुद्रं ।
आद्यं देवानामन्तकं दुष्कृतीनां निहन्तारमीशं वृत्रहं कर्म्मसाक्ष्यं । भूतायनं भूतपतिं गुरूणां गुरुं देवं शरणं यामि रुद्रं । ७३२५
अनुद्धतं यज्ञकर्त्तारमन्तं मध्यस्थाद्यं यज्जगतां साम्यरूपं । देवव्रतेषु बहुधा गीतमीशमभिनिविष्टं शरणं यामि रुद्रं ।
महाजिनं व्रतिनं मेखलालं सुतीपणं क्रोधनं विपापं । भूतं चेवज्ञं गुणिनं वा कपर्द्दिनं नतोऽस्मीशं वन्दनं वन्दनानां ।
देवं देवानां पावनं पावनानां क्षतिं क्षतीनां महतो महान्तं । शतात्मानं संस्तुतं गोपतीनां पतिं देवं शरणं यामि रुद्रं ।
अन्तश्चरं पुरुषं गुह्यसंज्ञं प्रभास्वन्तं शरणं विप्रदीपं । हितं परं परमस्थावरस्य शुभं देवं गुणिनं सन्नतोऽस्मि ।
प्रसृताश्भयो नेष्ट स्थितिश्च स्वच्छ. पृथक् भूतेभ्यो न पृथक् चैव भूतः । स्वयम्भूतः पातु मां सर्व्वसादः प्रदः स्वादः स्मरद. पातु
रक्षं । ७३३०
आसन्नः सन्नतरः साधकानां श्रद्धावतां श्राद्धवृत्तिप्रणेता । पतिर्गणानां महतां सत्कृतीनां पायान्मेशः पूरणः पङ्गुणानां ।
अन्तर्व्वहिर्द्विजिनानां निहन्ता स्वयं कर्त्ता भूतभावी विकुर्व्वन् । धृतायुधः सुकृतीनामुत्तमौजाः प्रणयाम्मि वृजिनं देव
देवः ।
येनोद्धृतास्त्रिपुरा मायिनो वै दग्धा घोरेण वितथान्ताः शरेण । महत् कुर्व्वन्तो वृजिनं देवतानां ज्यायानीशः पातु विश्वो
दधाता ।
भागीयसां भागमादातुमिच्छन्मखो दाचो येन हत्तो ऽभ्यधावत् । विद्वान् यज्ञस्यादिरथान्तः स देवः पायादीशो मां दृषय
शान्तहेतुः ।
अन्यो धन्य. संहृतयोत्तमय जगत् स्रष्टा योऽस्ति सर्व्वातिगुह्यः । स मां मखप्रमुखे पातु नित्यं विचिन्मानः प्रथमः पङ्
गानां । ७३३५
गुणवैकाल्यं यस्य देवस्य नित्यं सर्वातिरेको यस्य भावात् प्रसूतः । गोप्ता गोभृणां रुग्रदो दुष्कृतीनामाद्यो विश्वस्य साधमानस्य
कुहुः ।
धाये यस्य हरिरग्र्योऽय विश्वो ब्रह्मा पुत्रैः महितश्च दिशाय । पराभूमा भुवनेशः स सोमो जुषस्वैव श्रेयसे साधुगोप्ता ।
यस्माद्भूतानां भूतिरन्योऽय मध्य एतिर्विभूतिः श्रुतिश्च रुद्रः । यशाभिभूतस्य पुरुषस्येश्वरस्य महात्मनो गूढवेद्यस्य तस्य ।
यस्मिन्नाहं व्यमकः सर्व्वमीशो भगाद्दं यत्तऽद्युमा सर्व्वधाशो । नान्यत्तृतीयं जगतोऽस्ति किञ्चिन्महादेवात् सर्व्वसत्त्वेश्वरोऽपि ।
इति संस्तूयमानस्तु भगवान् वृषभध्वज । दर्शयामास धर्म्मात्मा काश्यपं धर्म्मसंहरं । ७३४०
उवाच चैनं देवेशः प्रसन्नेनान्तरात्मना । जाने मत्तोऽपि कार्य्येण येन मां त्वं प्रजापते ।
इन्द्रोपेन्द्रौ महात्मानौ देवौ मत्तनिमेयतः । पारिजातन्तु धर्म्मात्मा नयिष्यति जनार्द्दनः ।

उपश्योता महेन्द्रो हि मुनिना देवशर्म्मणा। अस्याकाङ्क्षत् पुरा भार्य्यां तपोदीप्तस्य कश्यप।
गम्यतां तत्र धर्म्मज्ञ दाक्षायण्या सहानया। अदित्या शक्रसदनं श्रेयस्ते पुत्त्रयोर्ध्रुवं।
इति हरवचनं निशम्य विद्वान् कमलभवात्मजसूनुरप्रमेयः। त्रिदशगणगुरुं प्रणम्य रुद्रं मुदितमनाः सुमनोकथं जगाम। ७११५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे महादेवस्तवने एकत्रिंशदधिकशततोऽध्याय. ॥ १३१ ॥
॥ वैशम्पायन उवाच ॥ अथ विष्णुर्महातेजा मुहूर्त्ताभ्युदिते रवौ। मृगयाव्यपदेशेन ययौ रैवतकं गिरिं।
आरोप्यैकरथे देव. सात्यकिं शिनिपुङ्गवं। प्रद्युम्नमनुगच्छेति प्रोक्ता कुरुकुलोद्वह.।
रैवतञ्च गिरिं देवो गत्वा दारुकमब्रवीत्। मदीयं रथमेतं त्वं गृहायैहैव दारुक।
प्रतिपालय मां सौम्य दिनार्द्धञ्चारयन् हयान्। रथेनैवं प्रवेष्टाहं द्वारकां सूतसत्तम।
इति सन्दिश्य भगवानारुरोह जयोद्यतः। ताक्ष्यं स सात्यकी धीमानप्रमेयपराक्रमः। ७१२०
पृष्ठपृष्ठेन कौरव्य प्रद्युम्नः शत्रुसूदन.। आकाशगामिना राजन् पृष्ठत. कृष्णमन्वियात्।
निमेषान्तरमात्रेण नन्दनं काननं हरिः। देवोद्यानं ययौ धीमान् पारिजातजिहीर्षया।
ददर्श तत्र भगवान्देवयोधान्दुरासदान्। नानायुधधरान् वीरान्नन्दनस्थानधोक्षजः।
तेषां सम्पश्यतामेव पारिजातं महाबलः। उत्पाद्यारोपयामास पारिजातं सतां गतिः।
गरुडं पक्षिराजानमयत्नेनैव भारत। उपस्थितो विग्रहवान् पारिजातस्तु केशवं। ७१२५
सान्त्वितो वासुदेवेन पारिजातश्च भारत। उक्तश्च हव मा भैस्त्वं केशवेन महात्मना।
तं प्रस्थितं तरुं दृष्ट्वा पारिजातमधोक्षजः। अमरावतीं पुरीं श्रेष्ठां ततश्चक्रे प्रदक्षिणं।
ते तु नन्दनगोप्तारः पारिजातो द्रुमोत्तमः। ह्रियतेति महेन्द्राय गत्वा नृप शशंसिरे।
अथैरावतमारुह्य निर्ययौ पाकशासनः। जयन्तेन रथस्थेन पृष्ठतोऽनुगतः प्रभुः।
पूर्व्वमभ्यागतं दारं केशवं शत्रुनाशनं। दृष्ट्वोवाच प्रवृत्तं भोः किमिदं मधुसूदन। ७१३०
प्रणम्य गरुडस्थोऽथ केशवः शक्रमब्रवीत्। वध्वास्ते पुण्यकार्य्याय नीयतेऽयं वरद्रुमः।
तमुवाच ततः शक्रो मैवं पुष्करलोचनं। अयोधयित्वा न तद्देयितव्यस्त्वयाऽच्युत।
प्रहरस्व महाबाहो प्रथमं मयि केशव। प्रतिज्ञा सफला तेऽस्तु मुञ्च कौमोदकीं मयि।
तत. कृष्ण. शरैस्तीक्ष्णैर्देवराजगजोत्तमं। बिभेदाशनिसङ्काशैः प्रहसन्निव भारत।
विव्याध गरुडं वज्री दिव्यैः शरवरैस्तदा। वाणांश्च वाणैश्चिच्छेद केशवस्य तरस्विनः। ७१३५
यान् यान्मुमोच देवेन्द्रस्तांस्तांश्चिच्छेद माधवः। माधवेन प्रमुक्तांश्च चिच्छेद बलवृत्रहा।
माहेन्द्रस्य च शब्देन धनुषः कुरुनन्दन। शार्ङ्गस्य च निनादेन मुमुहुः स्वर्गवासिनः।
तयोर्व्वर्त्तति संग्रामे गरुडस्थं महाबलः। पारिजातं जयन्तोऽथ हर्त्तुमभ्यस्तद्बली।
प्रद्युम्नमथ कंसघ्नो वारयेति तमब्रवीत्। ततस्तं वारयामास रौक्मिणेयः प्रतापवान्। ७१४०
जयन्तो जयतां श्रेष्ठो रौक्मिणेयमथेषुभिः। मर्म्मगात्रेषु विव्यधाशधानं रथे स्थित.।
रथस्थ एव रथिनं कामस्तु कामविग्रहः। ऐन्द्रिमभ्यर्द्दयामास वाणैराशीविषोपमैः।

स सन्निपातस्तुमुलो बभूव कुरुनन्दन । जयन्तस्य च वीरस्य रौक्मिणेयस्य चोभयोः ।
कृतप्रतिकृतश्चैव चक्रतुस्तौ महाबलौ । महेन्द्रोपेन्द्रतनयौ जगत्यस्त्रभृताम्वरौ ।
देवाश्च मुनयश्चैव ददृशुर्विस्मयान्विताः । तं संग्रामं महाघोरं सिद्धाश्चैव सचारणाः ।
ततस्तु प्रवरो नाम देवदूतो महाबलः । पारिजातं पुनर्हर्त्तुमियेष कुरुनन्दन । ७४८५
सखा स देवराजस्य महास्त्रविदरिन्दमः । अवध्यो वरदानेन ब्रह्मणः कुरुनन्दन ।
ब्राह्मणस्तपसा सिद्धो जम्बुद्वीपाद्दिवं गतः । स्वशक्त्या नृपते यातः सखित्वं बलघातिना ।
तमापतन्तं संप्रेक्ष्य कृष्णः सात्यकिमब्रवीत् । तवस्य एव प्रवरं शरैर्व्वारय सात्यके ।
न त्वत्र निर्द्दयं वाणा मोक्तव्याः सात्यके त्वया । अस्य ब्राह्मणचापल्यं सोढव्यं खलु सर्व्वथा ।
ततः पक्षा रथेषूणां गरुडस्थं द्विजस्तदा । आजघान महाबाहो सात्यकिं प्रवरो भृशं । ७४९०
शिनेर्नप्ता धनुस्तस्य क्षिपतः सायकान्नृप । चिच्छेद पुरुषव्याघ्रो वचनञ्चेदमब्रवीत् ।
ब्राह्मणो नाभिहन्तव्यस्तिष्ठ तिष्ठ स्ववर्त्मनि । अवध्या यादवानां हि स्वपराद्धा अपि द्विजाः ।
प्रवरस्तु प्रहस्यैनमुवाच कुरुनन्दन । अलं चान्या नृणां शूर युध्य सर्व्वात्मना रणे ।
जामदग्न्यस्य रामस्य शिष्योऽहमपि यादव । नामतः प्रवरो नाम सखा शक्रस्य धीमतः ।
न देवा योद्धुमिच्छन्ति त्वन्त्तो मधुसूदनं । आनृण्यं सौहृदस्याहमद्य गन्ताऽस्मि माधव । ७४९५
ततस्तयोस्तदा रौद्रः संग्रामो ववृधे नृप । अस्त्रैर्दिव्यैर्नरव्याघ्र शैनेयद्विजमुख्ययोः ।
द्यौश्चचाल तदा राजन् द्युचराश्च सहस्रशः । तस्मिन् वर्त्तति संग्रामे तेषामतिमहात्मनां ।
नातिश्लिष्टे रणे कार्ष्णिरैन्द्रिमस्त्रभृताम्वरं । ऐन्द्रिः कार्ष्णिं महात्मानं मायिनं शूरसम्मतं ।
हन्त गृह्ण प्रतीच्छेति तावुभौ योधसत्तमौ । युयुधाते नरश्रेष्ठ परस्परजयैषिणौ ।
अथ शार्ङ्गायुधसुतं शचीपुत्रः प्रतापवान् । विभाव्याभ्यहनद्राजन् दिव्येनास्त्रेण सत्वरः । ७५००
सोऽस्त्रं तदभिदीप्यन्तमापतन्तं शितैः शरैः । तस्तम्भे वाणजालेन तदद्भुतमिवाभवत् ।
ततस्तद्दीप्यमानन्तु पपात रणमूर्द्धनि । रौक्मिणेयस्य कौरव्य घोरं दानवमर्द्दनं ।
तेनास्त्रेण रथो दग्धः प्रद्युम्नस्य महात्मनः । नादहत्तत्तु घोरं तं रौक्मिणेय जनाधिप ।
दहत्यग्निं न स्वल्पमिद्धोतोऽपि विशाम्पते । दग्धाद्रथान्महाबाहू रौक्मिणेयोऽपचक्रमे ।
अथ नारायणसुतो विरथो रथिनाम्वरः । स्थितो धनुष्मानाकाशे जयन्तमिदमब्रवीत् । ७५०५
महेन्द्रपुत्र दिव्यं त्वं यदस्त्रं मुक्तवानसि । नाहमीदृक्स्वरूपाणां शक्यो हन्तुं शतैरपि ।
प्रयत्नं कुरु शिक्षाणां यत्नं मेऽद्य प्रदर्शय । नास्ति मेऽतिशयं कर्त्ता संग्रामेऽमरनन्दन ।
आसीन्मे साध्वसं दृष्ट्वा रथस्थं त्वां धृतायुधं । बिभेमि तव नेदानीं युद्धे दृष्टबलाऽबलः ।
मनसा स्पृश्यताभेष पारिजातस्त्वया तरुः । शक्यं न खलु हस्ताभ्यां प्रष्टव्यो यस्त्वया शुभो ।
रथो मायामयो दग्धस्त्वया यो ह्यस्ततेजसा । ईदृशानां सहस्राणि स्रष्टुं शक्तोऽस्मि मायया । ७५१०
एवमुक्तो जयन्तस्तु मुमोचास्त्रं महाबलः । तपसोत्पादितं तेन स्वयमेवातितेजसा ।

तत्प्रद्युम्नो महावेगं शरजालैरवारयत्। चक्रार्य्यस्त्राणि दिव्यानि मुमोच चापराणि सः।
दिक्षु सर्व्वासु रुरुधुस्तान्यस्त्राण्यथ भारत। रौक्मिणेयं महात्मानमन्तरीक्षे च पन्नगं।
महोल्कासदृशान् वाणानस्त्राण्यमरसत्तमः। मुमोच यानि घोराणि प्रद्युम्नं प्रति सर्व्वतः।
तानि सर्व्वाणि वाणौघैः कार्ष्णिरस्त्राण्यवारयत्। जयन्तश्चापरैर्व्वाणैर्विव्याध निशितैस्तदा।
ततो नादः समुत्सृष्टो द्युचरैः पुण्यकर्म्मभिः। दृष्ट्वा स्थैर्य्यञ्च शौर्य्यञ्च प्रद्युम्नस्य महात्मनः।
प्रवरस्यापि वाणेन शितेन शिनिपुङ्गवः। चिच्छेदेष्वासनं वीरो हस्तावापञ्च भारत।
ततोऽन्यत्स तु जग्राह महत्तद्धनुरुत्तमं। महेन्द्रदत्तं प्रवरो महाशनिसमस्वनं।
स तेन वीरो महता धनुषा विप्रसत्तम। शरान्मुमोच विशिखानर्करश्मिनिभांस्तदा।
चकर्त्त च धनुश्चित्रं शैनेयस्यामितौजसः। विव्याध सर्व्वगात्रेषु वाणैरपि च सात्यकिं।
धनुरादाय शैनेयस्ततोऽन्यत् कुरुनन्दन। दृढं भारसहं धीमान् विव्याध प्रवरं रणे।
उच्चकर्त्ततुरन्योन्यं वर्म्मणी तौ शितैः शरैः। गात्रेभ्यश्चैव मांसानि मर्म्मभिद्भिः शरोत्तमैः।
अथापरेण वाणेन पुनरिष्वासनं द्विधा। चिच्छेद प्रवरो वीरस्त्रिभिश्चैनमताडयत्।
अन्यदिष्वासनं तत्तु यदीतुमनसं द्विज। गदया ताडयामास चेषया लघुहस्तवत्।
सोऽसिं चर्म्म च जग्राह सात्यकिः प्रहसन्निव। न जग्राह धनुर्द्धीमान् गदयाऽभिहतो भृशं।
ततः शरशतान्येव मुमोच प्रवरस्तदा। विहस्तमिव विज्ञाय सख्यकं यदुनन्दनं।
प्रद्युम्नोऽस्य ददौ खड्गं निर्म्मलाकाशसन्निभं। तस्य चिच्छेद भल्लेन निस्त्रिंशं प्रवरस्तदा।
स्मुरुदेशे ऽपातयच्च प्रवरः प्रहसन्निव। व्यधमच्च तथा वर्म्म शितैर्व्वाणैरजिह्मगैः।
आजघान च शक्त्यैनं हृदि विप्रो ननाद च। तं विक्लवमिव ज्ञात्वा पारिजातजिहीर्षया।
तार्क्ष्याभ्यासे रथेनैव स तस्थौ प्रवरस्तदा। तं पक्षपुटवेगेन चिक्षेप गरुडस्तदा।
गव्यूतिमात्रं स रथः पपात च मुमोह च। तं जयन्तो निरत्याय पतितं ब्राह्मणं नृप।
समाश्वास्य रथं शीघ्रं समारोपितवांस्तदा। शैनेयमपि मुह्यन्तं पतन्तञ्च मुहुर्मुहुः।
आश्वासयानः प्रद्युम्नः पितृव्यं परिषस्वजे। मां हि पस्पर्श हस्तेन सव्येन मधुसूदनः।
नीरुजः स्पृष्टमात्रस्तु सात्यकिः समपद्यत। प्रद्युम्नो दक्षिणे पार्श्वे वामे तु शिनिपुङ्गवः।
तस्थतुः पारिजातस्य युद्धशौण्डौ तु तावुभौ। जयन्तः प्रवरश्चैव रथेनैकेन भारत।
सम्पतन्तौ महेन्द्रेण प्रहस्तौ तौ महात्मनौ। नाशक्नुतामभिगन्तुं तं गरुडस्य कथञ्चन।
बलवानेव पततां राजा च विनतासुतः। दक्षिणे चैव सव्ये च पार्श्वे मम धृतायुधौ।
उभौ स्थितौ युध्यमानौ मामेवेह प्रपश्यतौ। एवमुक्तौ स्थितौ वीरौ तत शक्रस्य पार्श्वयोः।
ददृशाते युध्यमानौ देवराजजनार्द्दनौ। अथेन्द्रो गरुडं वाणैर्म्महाशनिसमस्वनैः।
विव्याध सर्व्वगात्रेषु महास्त्रप्रभवैस्तदा। स तान् वाणाश्च गणयन् वैनतेयः प्रतापवान्।
ऐरावताभिमुखो वीरः शक्रनागमरिन्दमः। उभौ तौ सहसा राजन् पक्षिणौ गजपक्षिणौ।

प्रयुद्धौ वीर्य्यसम्पन्नौ महाप्राणौ दुरासदौ । रदनैः पन्नगरिपुं करेण शिरसा तथा ।
ऐरावणो गजपतिराजघान नदंस्तथा । तुतो नखाङ्कुशैस्तीक्ष्णैर्वैनतेयो बलोत्कटः ।
तथा पक्षनिपातैश्च शक्रनागमताडयत् । स मुहूर्त्तं महासासीत् सम्मर्द्दो गजपक्षिणोः ।
विस्मापनीयो जगतः प्रेक्षितॄणां भयावहः । मूर्द्ध्न्यथैरावणं तार्क्ष्यस्ताडयामास भारत । ७५४५
नखाङ्कुशकरालेन चरणेन महाबलः । संप्रहाराभिमन्तप्तः स पपात त्रिपिष्टपात् ।
पारियात्रे गिरिश्रेष्ठे द्वीपेऽस्मिन् जनमेजय । पतन्तमपि तं शक्रो न मुमोच महाबलः ।
कारुण्यादथ सौहार्द्दात् पूर्व्वाभ्युपगमादपि । कृष्णोऽप्यन्वागमच्चैनं पृष्ठतः प्रभवाव्ययः ।
पारिजातवता वीरो गरुडेन महाबलः । सन्नद्धपर्व्वते तस्थौ पारियात्रे तु वृत्रहा ।
ऐरावणे समाश्वस्ते संग्रामो ववृधे पुनः । शरैराशीविषप्रख्यैरस्तयुक्तैः सुतेजितैः । ७५५०
अन्योन्यं कुरुशार्दूल शक्रकेशवयोर्महान् । ततो वज्रायुधो वज्रमशनिञ्च पुनः पुनः ।
मुमोच गरुडे राजन्नैरावणरिपौ नृप । वज्राशनिनिपातांस्तान् सेहे शक्रस्य नागहा ।
अवध्यो बलिनां श्रेष्ठो निसर्गेण तपोबलात् । मुमोच पत्त्रमेकैकं मानयन्नशनिं तदा ।
वज्रञ्च देवराजो वै भ्रातुः कश्यपसम्भवः । आक्रम्यमाणस्तार्क्ष्येण न्यमज्जन्नृपते गिरिः ।
विवेश धरणीं राजन् शीर्य्यमाणः समन्ततः । चुकूज चक्रमानेन कृष्णस्य स तु पर्व्वतः । ७५५५
तमब्रवीत्ततः कृष्णः किञ्चिच्छेषमधोगतः । तं मुक्त्वा गरुडेनाथ तस्थौ देवो विहायसि ।
प्रद्युम्नञ्च तदोवाच सर्व्वलोकभावनः । इतो द्वारवतीं गत्वा रथमानय सारथिं ।
स दारुकं महाबाहो मत्तेजोबलमाश्रितः । वक्तव्यौ बलभद्रश्च राजा च कुकुराधिपः ।
श्वो जितेन्द्रमागमिष्ये द्वारकामिति मानद । तथेत्युक्त्वा तु धर्मात्मा प्रद्युम्नः पितरं विभुं ।
गत्वा यथोक्तमुक्त्वा च यादवेन्द्रबलावुभौ । नाडिकान्तरमात्रेण पुनस्तं देशमाययौ । ७५६०
दारुकेण समायुक्तं रथमास्थाय भारत ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
॥ वैशम्पायन उवाच ॥ तमारुह्य रथं कृष्णः पारियात्रं गिरिं ययौ । यत्रैरावणमास्थाय स्थितः सुरपतिः प्रभुः ।
पारियात्रो गिरिश्रेष्ठो दृष्ट्वायान्तं जनार्द्दनं । आढ्यपादसमो भूत्वा प्रविवेश वसुन्धरां ।
प्रियार्थं वासुदेवस्य प्रभावज्ञो महात्मनः । तस्य प्रीतो हृषीकेशः पर्व्वतस्य जनाधिप ।
ततः प्रयान्तं युद्धार्थमच्युतं कुरुनन्दन । सपारिजातो गरुडः पृष्ठतोऽनुययौ बली । ७५६५
प्रद्युम्नः सात्यकिश्चापि गरुडस्थौ महाबलौ । गतावुभौ रक्षणार्थं पारिजातमरिन्दमौ ।
ततोऽस्तमगमत् सूर्य्यः प्रवृत्ता रजनी नृप । उपस्थितं पुनर्युद्धं शक्रकेशवयोः प्रभो ।
सुप्रहारहतं दृष्ट्वा विष्णुरैरावणं गजं । नातिकल्यं महातेजा देवराजानमब्रवीत् ।
गरुडाभिहतः पूर्व्वंनातिकल्यो गजोत्तमः । ऐरावणो महाबाहो रात्रिश्च समुपोस्थिता ।
श्वः प्रभाते पुनः कामं प्रवर्त्तस्व यथेच्छसि । एवमस्त्विति कृष्णञ्च देवराजोऽब्रवीत् प्रभुः । ७५७०

उवास पुष्कराभ्यासे देवराजः पुरन्दरः । व्रजं गिरिमिमं कृत्वा धर्म्मात्मा नृपसत्तम ।
ब्रह्मा तत्राजगामाथ कश्यपश्च महानृषिः । अदितिश्चैव सर्व्वे च देवा मुनय एव च ।
साध्या विश्वे च कौरव्य नासत्यावश्विनौ तथा । आदित्याश्चैव रुद्राश्च वसवश्च जनेश्वर ।
नारायणश्च पुत्रेण सत्यकेन च भारत । महोवास गिरौ रम्ये पारिपात्रे प्रहृष्टवत् ।
यः स शाणप्रमाणोऽस्य भक्त्या समभवन्नृप । वरं प्रादात्ततस्तस्य पर्व्वतस्य सतां गतिः । ७१७५
शाणपाद इति ख्यातो भविष्यसि महागिरे । पुण्येनार्द्धेन तुल्यश्च पुण्यो हिमवतः शुभः ।
एवमेव च भूमिष्ठो भव पर्व्वतसत्तम । मेरुणा स्पर्द्धमानो हि बहुचित्रमृगायुतः ।
तथा दत्त्वा वरं तस्य पर्व्वतस्य तु केशवः । ददर्श गङ्गां सरिच्छ्रेष्ठां नमस्कृत्वा वृषध्वजे ।
अथाययौ विष्णुपदीं स्नाता कृष्णेन भारत । संपूज्य तां ततः कृष्णः स्नातस्तस्यामधोक्षजः ।
उदकञ्च गृहीत्वैशो विल्वञ्च हरिरव्ययः । देवमावाहयामास रुद्रं सर्व्वेश्वरेश्वरं । ७१८०
ततः प्राप्तो महादेवः सोमः स प्रवरो विभुः । तस्योपरि विल्वस्य तथा गङ्गोदकस्य च ।
तं पारिजातकुसुमैरर्च्चयामास केशवः । तुष्टाव वाग्भिरीशेशं सर्व्वकर्त्तारमीश्वरं ।
॥ श्रीकृष्ण उवाच ॥ रुद्रो देव त्वं रुदनाद्द्रावणाच्च रोरूयमाणो द्रावणाच्चातिदेव । भक्तं भक्तानां वत्सलं वत्सलानां कीर्त्त्या युक्तेति त्वाऽद्य प्रभवान्यन्तरेण ।
ग्राम्यारण्यानां त्वं पतिस्त्वं पशूनां ख्यातो देव पशुपतिः सर्व्वकर्म्मा । नान्यस्त्वत्तः परमो देवदेव जगत्पतिः सुरवीरारिहन्ता ।
यस्मादीशो महतामीश्वराणां भवानाद्यः प्रीतिदः प्राणदश्च । तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो विद्वांसः सर्व्वशास्त्रार्थतज्ज्ञाः । ७१८५
भूतं यस्माज्जगदत्यन्तघोरं त्वत्तोऽव्यक्तादचरादचरेश । तस्मात्त्वामाहुर्भव इत्येव भूतं सर्व्वेश्वराणां महतामप्युदारं ।
यस्माच्छित्रैरभिषिक्तोऽसि सर्व्वैर्देवासुरैः सर्व्वभूतैश्च देव । महेश्वरं विश्वकर्म्माणमाहुस्त्वां वै सर्व्वे तेन देवातिदेव ।
पूज्यो देवैः पूज्यसे नित्यदा वै श्रेयस्कृत्काङ्क्षिभिर्वरदामेयवीर्य्यः । तस्माद्विख्यातो भगवान्देवदेवः सतामिष्टः सर्व्वभूतात्मभावी ।
भूमित्रयाणां देव यस्मात् प्रतिष्ठा पुनर्लोकानां भावनोऽमेयकीर्त्तिः । त्र्यम्बकेति प्रथमं तेन नाम तवाप्रमेयस्त्रिदशेशनाथ ।
शर्व्वः शत्रूणां शासनादप्रमेयस्तथा भूयः शासनादीश्वरेण । सर्व्वव्यापित्वाच्छङ्करत्वाच्च सद्भिः शब्दस्येशान् श्रीकराकोऽस्य तेजाः । ७१९०
स्वभक्तानां नित्यदा यत् करोषि शर्म्मं भाव्यान् यज्ञेशो मनस्वान् । तस्मादेव शङ्करोऽप्रमेयः सद्भिर्दृष्टो कथ्यते सर्व्वनाथ ।
दत्तः प्रहारः कुलिशेन पूर्व्वं तवेशान सुरराजाऽतिवीर्य्य । कण्ठे नैल्यं तेन ते यत् प्रवृत्तं तस्मात् ख्यातस्त्वं नीलकण्ठेतिकल्यः ।
यल्लिङ्गाङ्कं यच्च लोके भगाङ्कं सर्व्वं सोमस्त्वं स्थावरं जङ्गमञ्च । प्राहुर्विप्रास्त्वां गुणिनं तत्त्वशास्त्रयाविधेयामन्निकां लोकगार्वी ।
वेदैर्गीता या हि तत्त्वं प्रसूता यज्ञो दीक्षाणां योगिनां चातिरूपः । नात्यद्भुतं त्वत्समं देव भूतं भूतं भव्यं भवद्वाय नास्ति ।
अहं ब्रह्मा कपिलोऽप्यथानन्तः पुत्राः सर्व्वे ब्रह्मणश्चातिवीराः । त्वत्तः सर्व्वे देवदेव प्रसूता एवं सर्व्वशः कारणात्मा समीड्यः । ७१९५

इति संस्तूयमानस्तु भगवान् गोवृषध्वज । प्रसार्य्य दक्षिणं हस्तं गोविन्दमिदमब्रवीत् ।
मनोषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम । पारिजातञ्च हर्त्तासि मा भूत्ते मनसो व्यथा ।
यदा मैनाकमाश्रित्य तपस्त्वमकरोः प्रभो । तदा दत्तं वरं कृष्ण संस्मृत्य स्थैर्य्यमाप्नुहि ।
अवध्यस्त्वमजेयश्च मत्त शूरतरस्तथा । भविताऽसीत्यथोचं यत्तत्तथा न तदन्यथा ।
य.संस्तवेन मां कश्चित् स्तोष्यत्यमरसत्तम । त्वया कृतेन धर्म्मज्ञ धर्म्मभाक् स भविष्यति ।
समरे च जयं विष्णो प्राप्य पूजां तथोत्तमां । बिल्वोदकेश्वरो नाम भविताऽहमिहानघ ।
देशे त्वया स्थापितो वै देव सिद्धोपयाचन. । इहस्थोपोषितो विद्वान् भक्तिमान्मम केशव ।
चिराचमोषितान् लोकान् गमिष्यति जनार्द्दन । अविन्ध्या नाम देशेऽस्मिन् गङ्गा चैव भविष्यति ।
गङ्गास्नानसमं स्नानं मन्मतो भविता तथा । षट्पुरं नाम नगरं दानवानां जनार्द्दन ।
अत्रान्तर्द्धरणीदेशे तथाक्रम्य महाबला. । एते हिंस्रा दुरात्मानो जगतो देव कण्टकाः ।
छन्ना वसन्ति गोविन्द मानावस्य महागिरेः । अवध्या देवदेवानां वरेण ब्रह्मणोऽनघ ।
मानुषान्तरितस्तस्मात्त्वमेताञ्जहि केशव । एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
परिष्वज्य महात्मानं वासुदेवं जनाधिप । ततो याते महादेवे प्रभातायां नराधिप ।
तस्यां निशायां गोविन्दो भूय. पर्व्वतमब्रवीत् । तवाधः पर्व्वतश्रेष्ठ निवसन्ति महासुराः ।
ते निरुद्धा मया चात्र जगतो हितकाम्यया । निर्गमिष्यन्ति ते नैव मया रुद्धा महाबलाः ।
द्वारे निरुद्धे तत्रैव विनङ्क्ष्यन्ति ममाज्ञया । त्वयि सन्निहितश्चाहं भविष्यामि महागिरे ।
अधिष्ठाय महाघोरान्निवत्स्यामि च पर्व्वत । आरोक्ष्यत्यूर्द्ध्वशृङ्गस्य यस्त्वां पर्व्वतसत्तम ।
गोसहस्रप्रदानस्य फलं प्राप्स्यति शाश्वतं । त्वत्तोऽस्मभिश्च प्रतिमां कारयित्वेह भक्तित. ।
शुश्रूषिष्यन्ति ये नित्यं मम यास्यन्ति ते गतिं । इति तं पर्व्वतं कृष्णो वरदोऽनुगृहीतवान् ।
तदाप्रभृति देवेशस्तत्र सन्निहितोऽच्युत । पाषाणे प्रतिमां तत्र कारयित्वा च कौरव ।
शुश्रूषन्ति कृतात्मानो विष्णुलोकाभिकाङ्क्षिण ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे त्रयस्त्रिंशदधिकशततोऽध्याय ॥ १२३ ॥

॥ वैशम्पायन उवाच ॥ ततो रथवरं कृष्ण समारुह्य महामना. । बिल्वोदकेश्वरे देवे नमस्कृत्य यथा नृप ।
महेन्द्रमाह्वयामास रथस्थो मधुसूदन । सत्कृतं पुष्कराभ्यासे सर्व्वैर्देवगणै. सह ।
ततः शक्रो जयन्तोऽथ हरिभिर्युक्तमुत्तमं । आरुरोह रथं देव सर्व्वकामप्रद. सतां ।
तयोरथस्थयोर्युद्धमभवत् कुरुनन्दन । देवयोर्द्दैवयोगेन पारिजातकृते तदा ।
ततर्द्द तरसा विष्णुर्बाणैः शत्रुबलार्द्दन । सैन्यानि देवराजस्य बाणजालैरजिह्मगैः ।
उपेन्द्रं न महेन्द्रोऽथ नैव विष्णु सुरेश्वरं । ताडयामासतुर्व्वीरौ शस्त्रै शक्तावपि प्रभो ।
एकैकमश्वं दशभिर्म्महेन्द्रस्य जनार्द्दन. । विव्याध विशिखैस्तीक्ष्णैरसङ्गैर्ज्जनेश्वर ।
सैन्यान्यपि च देवेन्द्रः शरैरमरसत्तम । छादयामास राजेन्द्र घोरैरस्त्राभिमन्त्रितै. ।

वशी वाणसहस्रैश्च कृष्णो गजमवाकिरत्। गरुडश्च महातेजा बलभिद्धरिवाहनः। ७११५
भूमिष्ठाभ्यां रथाभ्यान्तौ तदहः शत्रुदारणौ। युयुधाते महात्मानौ नारायणसुराधिपौ।
चकम्पे वसुधा कृत्स्ना नौर्जलस्थेव भारत। दिशां दाहेन दिग्देशाः संवृताश्च समन्ततः।
चेलुर्गिरिवराश्चैव पेतुश्च शतशो द्रुमाः। पेतुश्च धरणीपृष्ठे मर्त्या धर्मगुणान्विताः।
निर्घाता. शलभश्चैव पेतुस्तत्र नराधिप। ऊहुश्च सरितः सर्व्वाः प्रतिस्रोतो विशाम्पते।
विपर्य्यस्ता ववुश्चैव पेतुरुल्काश्च निष्प्रभा.। मुहुर्मुहुर्भूतगणा रथनादेन मोहिताः। ७१२०
प्रजज्वाल जले चैव वह्निर्जनपदेश्वर। युयुधुश्च ग्रहैः सार्द्धं ग्रहा नभसि सर्व्वतः।
ज्योतींषि शतशः पेतुः स्वर्गाच्च धरणीतले। दिशां गजा संक्षुभिता नागाश्च धरणीतले।
गर्दभारुणसंस्थानैश्छिन्नाभ्रैरावृतं नभः। विनदद्भिर्महारावैरुल्काशोणितवर्षिभिः।
न भूर्न द्यौर्न गगनं नरेन्द्रत्वप्रभाभवत्। स्वस्थाने सुरवीरौ तु दृष्ट्वा युद्धगतौ तदा।
जेपुर्मुनिगणा मन्त्रान् जगतो हितकाम्यया। ब्राह्मणाश्च महात्मानो व्यतिष्ठंस्तेषु सत्वराः। ७१२५
ततो ब्रह्मा महातेजाः कश्यपं वाक्यमब्रवीत्। गच्छ वध्वा सहादित्या पुत्रौ वारय सुव्रत।
स तथेति तदा देवमुक्त्वा पद्मभवं मुनिः। जगाम रथमारुह्य तयो नरवरान्तिकं।
स्थितन्तु कश्यपं दृष्ट्वा सहादित्या तदान्तरा। उभौ रथाभ्यां धरणीमवतीर्णौ महाबलौ।
न्यस्तशस्त्रौ तु तौ वीरौ ववन्दतुररिन्दमौ। पितरौ धर्मतत्त्वज्ञौ सर्व्वभूतहिते रतौ।
उभौ गृहाय हस्ताभ्यामदितिस्त्वब्रवीद्वचः। अथोदरात्रिवैवं किमन्योन्यं हन्तुमिच्छथः। ७१३०
स्वल्पमर्थं पुरस्कृत्य प्रवृत्तमतिदारुणं। सद्भ्रंशं नेति पश्यामि सर्व्वथा मम पुत्रयोः।
श्रोतव्यं यदि मातुश्च पितुश्चैव प्रजापतेः। न्यस्तशस्त्रौ स्थितौ भूत्वा कुरुतं वचनं मम।
तथेत्युक्त्वा तु तौ देवौ स्नातुकामौ महाबलौ। गङ्गां जग्मतुरेवाथ कथयन्तौ परस्परं।
॥ शक्र उवाच ॥ त्वं प्रभुः कृष्ण लोकस्य राज्येऽहं स्थापितस्त्वया। स्थापयित्वा कथं नाम पुनर्म्मामत्र मन्यसे।
भ्रातृत्वमुपगम्यैवं ज्येष्ठत्वं प्रतिपूज्य च। कथं कमलपत्राक्ष निर्व्वाणं कर्त्तुमर्हसि। ७१३५
स्नात्वा तु जाह्नवीतोये पुनरभ्यागतौ नृप। यत्रादितिः काश्यपश्च महात्मानौ दृढव्रतौ।
प्रियसङ्गमनं नाम तं देशं मुनयोऽवदन्। यत्र तौ सङ्गतौ चोभौ पितृभ्यां कमलेक्षणौ।
ततः शक्रस्य कौरव्य दत्त्वा वाचाऽभयं तदा। यत्र देवगणाः सर्व्वे समेता धर्मचारिणः।
ततो ययुर्विमानैस्तु देवाः सर्व्वे त्रिपिष्टपं। श्रद्धया परमया युक्तास्तेषामेवानुरूपया।
कश्यपश्चादितिश्चैव तथा शक्रजनार्द्दनौ। विमानमेकमारुह्य गता राजंस्त्रिपिष्टपं। ७१४०
ते शक्रसदनं प्राप्य रम्यं सर्व्वगुणान्वितं। ऊषुरेकत्र कौरव्य मुदिता धर्मचारिणः।
शची तु कश्यपं पत्न्या सहितं धर्मवत्सला। उपाचरन्महात्मानं सर्व्वभूतहिते रतं।
ततस्तस्यां प्रभातायां रजन्यामब्रवीद्धरिं। अदितिर्धर्मतत्त्वज्ञा सर्व्वभूतहितङ्करं।
उपेन्द्र द्वारकां गच्छ पारिजातं नयस्व च। वध्वाः संप्रापयस्वेमं पुण्यकं हृदयेप्सितं।

पुष्पके सत्यया प्राप्ते पुनरेव त्वया तथा । नन्दने पुरुषश्रेष्ठ स्थाप्यः स्थाने यथोचिते ।
एवमस्त्विति कृष्णेन देवमाता यशस्विनी । उक्ता धर्मगुणैर्युक्ता नारदेन महात्मना ।
ततोऽभिवाद्य पितरं मातरञ्च जनार्द्दनः । महेन्द्रं सह शच्या च प्रतस्थे द्वारकां प्रति ।
ददौ कृष्णाय पौलोमी नियोगात् कुरुनन्दन । सर्व्वासामेव कृष्णस्य भार्य्याणां धर्मचारिणी ।
दिव्यानां सर्व्वरत्नानां वाससाञ्च मनस्विनी । नानारागविचित्राणां महेवारजसामपि ।
भार्य्याणाञ्च सहस्राणि यानि षोडश माधवे । प्रतिगृह्य महातेजाः प्रययौ द्वारकां प्रति ।
संपूज्यमानो ह्यमरैः सुकर्म्मा पुण्यकर्म्मभिः । समत्यकः सपुत्रश्च प्राप्तो रैवतकं गिरिं ।
स तत्र स्थापयित्वा तु पारिजातं वरद्रुमं । सत्यकं प्रेषयामास द्वारकां द्वारमालिनीं ।
॥ कृष्ण उवाच ॥ पारिजातमिहानीतं महेन्द्रभवनान्मया । निवेदय महाबाहो भैमानां भैमवर्द्धन ।
अद्य द्वारवतीश्चैव पारिजातं वरद्रुमं । प्रवेशयिष्ये नगरे शोभा प्रक्रियतां शुभा ।
इत्युक्तः सत्यको गत्वा तथोक्ता पुनरागतः । कुमारैरपरैः सार्द्धं शाम्बप्रभृतिभिः प्रभो ।
ततोऽग्रतः पारिजातमारोप्य गरुडे तदा । प्रद्युम्नो द्वारकां रम्यां विवेश रथिनाम्वरः ।
शैव्याद्यहययुक्तेन रथेनानुययौ हरिः । तस्यानु रथमुख्येन सत्यकः शाम्ब एव च ।
ये त्वन्ये नृप वार्ष्णेया यानैर्बहुविधैस्तथा । ययुः प्रहृष्टास्तत कर्म्म पूजयन्तो महात्मनः ।
सत्यवादिस्तरं श्रुत्वा यादवा नागरास्तथा । विस्मयं परमं जग्मुरप्रमेयस्य कर्म्मणा ।
तं दिव्यकुसुमं वृक्षं दृष्ट्वा मर्त्यनिवासिनः । राजन्न तत्पुर्हृष्टाः पश्यमाना महोदयं ।
तदद्भुतमचिन्त्यञ्च मदकोकिलकिलाण्डजं । वृक्षोत्तमं पश्यतां वै वृद्धानामगमज्जरा ।
येऽन्धाः सचक्षुषः सर्व्वे सम्बभूवुः क्षणादिव । विरोगा रोगिणश्चासन् घ्रात्वा गन्धं वनस्पतेः ।
स्वपन्तः कोकिलाः श्वेताः श्रुत्वा मर्त्यनिवासिनः । बभूवुर्हृष्टमनसो ववन्दुश्च जनार्द्दनं ।
नानाविधानि वाद्यानि गेयानि मधुराणि च । शुश्रुवुस्तस्य वृक्षस्य नातिदूरगता नराः ।
योऽयं संकल्पयामास गन्धं हृद्यं नरस्तदा । स तमेव समाजघ्रौ पारिजातसमुद्भवं ।
ततः प्रविश्य रम्यान्तु द्वारकां यदुनन्दनः । वसुदेवं महात्मानं ददृशे देवकीन्तदा ।
कुकुराधिपतिश्चैव बलं भ्रातरमेव च । वृद्धांश्च यादवानन्यान् सानार्द्दनमरोपमान् ।
विसृज्य तान् वै भगवाननादिनिधनोऽच्युतः । संपूज्य च यथान्यायं स्वमेव भवनं गतः ।
स सत्यभामया वासं विवेश मधुसूदनः । पारिजात तरुश्रेष्ठं गृहाय गदपूर्व्वजः ।
सा देवी पूजयामास प्रहृष्टा वासवानुजं । प्रतिजग्राह तञ्चापि पारिजातं महाद्रुमं ।
मनोपितेन स तरुस्त्वा भवति भारत । महत्त्वाद्वासुदेवस्य तदद्भुतमभून्महत् ।
कदाचिद्द्वारकां सर्व्वां प्रच्छादयति भारत । कदाचिद्धस्तहार्य्यस्तु भवन्यङ्गुष्ठसन्निभः ।
ननन्द सत्या कौरव्य देवी प्राप्तमनोरथा । पुण्यकार्थञ्च सम्भारान् सम्भर्त्तुमुपचक्रमे ।
यानि द्रव्याणि कौरव्य जम्बुद्वीपे तु कानिचित् । योग्यानि तानि कृष्णेन संहृतानि महात्मना ।

मुनिं तदा संस्तुतवान् स नारदं जनार्द्दनः सर्व्वगुणोदितं वशी । प्रतिग्रहार्थं सतकस्य सत्यया यथोपदिष्टं स पुरन्दरानुज ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे चतुस्त्रिंशदधिकशतोऽध्याय ॥ १२४ ॥

॥ वैशम्पायन उवाच ॥ अथ कृष्णस्य कौरव्य ध्यातमात्रे तपोधन । आजगाम मुनिश्रेष्ठो नारदो वदताम्वर ।
तं पूजयित्वा विधिवद्वासुदेवो विशाम्पते । प्रतिग्रहार्थं विधिवच्छ्रीमानभ्यनिमन्त्रयत् ।
तत कालं च संप्राप्ते स्नातं देवो महामुनि । संपूज्य माल्यैर्गन्धैश्च भोजयामास भारत ।
सार्व्वकामिकमन्नाद्य सर्व्वभूतहृदव्यय । सत्यया प्रियया सार्द्धं प्रहृष्टेनान्तरात्मना ।
पुष्पदामावसज्याथ कण्ठे कृष्णस्य भाविनी । ववन्ध कृष्णं सुभगा पारिजाते वनस्पतौ ।
अद्भिर्द्ददौ नारदाय ततोऽनुज्ञाप्य केशव । देवी धेनुसहस्रञ्च काञ्चनस्य च पर्व्वत ।
हिरण्यरूप्यमिश्रञ्च मणिरत्नयुतस्य च । तिलमिश्रस्य च तथा धान्यैरन्यैर्युतस्य च ।
प्रतिगृह्य तु तत् सर्व्वं नारदो मुनिसत्तम । प्रहृष्टो वदतां श्रेष्ठो मुक्त्वा केशवमब्रवीत ।
भो केशव मदीयस्त्वमद्भिर्दत्तोऽसि सत्यया । स त्वं मामनुगच्छस्व कुरुष्व यद्ब्रवीम्यह ।
प्रयाम कान्त इत्येवमब्रवीन्मधुसूदन । प्रजन्तमनुवव्राज नारदञ्च जनार्द्दन ।
परिहासान् बहुविधान् कृत्वा मुनिवरस्तत । तिष्ठस्व गच्छामीत्युक्त्वा परिहासविचक्षण ।
अपनीय तत कण्ठात् पुष्पदामैनमब्रवीत् । कपिलां गां सवत्सां भो निष्क्रयार्थं प्रयच्छ मे ।
तिलकृष्णाजिनं स्वयं प्रयच्छ त्वञ्च काञ्चनं । एषोऽत्र निष्क्रय कृष्ण विहितो वृषकेतुना ।
तथेत्युक्त्वा हृषीकेशस्तथा चक्रे जनाधिप । उवाच तं मुनिश्रेष्ठं हसित्वा मधुसूदन ।
वरं वरय धर्म्मज्ञ यत्ते नारद काङ्क्षितं । तव दाताऽस्मि धर्म्मज्ञ परा प्रीतिर्हि मे त्वयि ।
॥ नारद उवाच ॥ नित्यमेवास्तु मे प्रीतो भवान् विष्णो सनातन । त्वत्प्रभावात्तु सालोक्यं प्रजेयं ते महामते ।
श्रयोनिजो भवेयञ्च नारायण मताङ्कृते । भवेयं ब्राह्मणश्चैव देव जात्यन्तरेष्वहं ।
एवमस्त्विति तं देवो विष्णु प्रोवाच भारत । तुतोष च ततो धीमान्नारदो मुनिसत्तम ।
षोडशस्त्रीसहस्राणि विष्णोरतुलतेजस । निमन्त्रितानि कौरव्य सत्यया हरिकान्तया ।
तासां ददौ मणियोग्यमेकैका हरिवल्लभा । शय्या यो वासुदेवस्य पुरा दत्तो नराधिप ।
पारिजातो यथेभ्यत्र मत प्रवृत्ते तदा । आज्ञया वासुदेवस्य नारदेन महात्मना ।
निमन्त्रिता गणा सर्व्वे केशवेन महात्मना । विभूतिं पारिजातस्य ददृशु कुरुनन्दन ।
पाण्डवांश्चानयामास सदैव प्रयया हरि । द्रौपद्या च महातेजास्तथैव च सुभद्रया
सुतयशांश्च सम्रुता भीष्मकं ससुत तथा । अन्यानपि च कौरव्य मित्रसम्बन्धिवान्धवान् ।
रेमे च सह पार्थेन फाल्गुनेन जनार्द्दन । साम्ब पुरो महातेजा परमर्द्धा वसनृप ।
धर्म्मारे गतो याते केशिहाऽमरसन्निभ । पारिजात पुन स्वर्गमनयत्सर्व्वभावन ।
गत्वा तं कश्यपञ्च दृष्ट्वा स्वपितरौ प्रभु । शक्रेण सहितो धीमानमेयपराक्रम ।

तमुवाचादितिर्माता प्रणतं मधुसूदनं । शौर्य्यात्त्वमेव वा नित्यं भवत्वमरसत्तम ।
मनोरथं ममैवं त्वं पूरयस्व जनार्द्दन । तथाऽस्त्वित्यब्रवीत्कृष्णस्ततो मातरमात्मवान् ।
आमन्त्रयित्वा पितरौ देवराजानमब्रवीत् । वासुदेवो महातेजाः कालप्राप्तमिदं वचः । ७११५
महादेवेन देवेश सन्दिष्टोऽस्मि महात्मना । अन्तर्भूमितले ऽवध्यानसुरान् प्रति मानद ।
तदितो दशरात्रेण हन्ताऽहमसुरोत्तमान् । तत्रोपरिष्टात् स्थातव्यं प्रवरेण महात्मना ।
जयन्तेन च वीरेण दानवानां जिघांसया । एकोऽत्र मानुषो देवो देवपुत्रस्तथाऽपरः ।
अवध्याः किल देवैस्ते ब्रह्मणो वरदर्पिताः । अस्माभिः किल हन्तव्या मानुषत्वमुपागतैः ।
तथेति कृष्णं स हरिः प्रीतरूपस्तदाऽब्रवीत् । सस्वजातेऽथ तौ देवावन्योन्यं जनमेजय । ७१२०
ददौ किरीटं कृष्णाय शक्रोऽमृतसमुद्भवं । प्रीतात्मा कुरुशार्दूल कुण्डलद्वयमेव च ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पञ्चविंशदधिकशततोऽध्यायः ॥ १२५ ॥

॥ जनमेजय उवाच ॥ पुण्यकानां समोत्पत्तिं कथयस्व तपोधन । द्वैपायनप्रसादेन सर्व्वं हि विदितं तव ।
॥ वैशम्पायन उवाच ॥ उमया पुण्यकविधिर्नरेन्द्रोत्पादितः पुरा । शृणु येन विधानेन लोके धर्म्मभृताम्वर ।
स्वर्गान्नीते पारिजाते कृष्णेनाक्लिष्टकर्म्मणा । यथा द्वारवतीं धीमान्नारदो मुनिसत्तमः ।
देवासुरे नृपश्रेष्ठ संग्रामे समुपस्थिते । षट्पुरस्य वधे घोरे महादेवाज्ञयाऽनघ । ७१२५
कृष्णेन सहितं विप्रं नारदं धर्म्मवित्तमं । आसीनं परिपप्रच्छ रुक्मिणी भैष्मकी नृप ।
ततो जाम्बवती देवी सत्यभामा च भाविनी । गान्धारराजपुत्त्री च योगयुक्ता नराधिप ।
देव्यश्च नृप कृष्णस्य वक्ष्येऽन्या वै समागताः । कुलशीलगुणोपेता धर्म्मशीलाः पतिव्रताः ।
॥ रुक्मिण्युवाच ॥ मुने धर्म्मभृतां श्रेष्ठ सर्व्वज्ञ वदताम्वर । उत्पत्तिं पुण्यकानां त्वं वक्तुमर्हसि सुव्रत ।
विधिश्च फलयोगश्च दानं कालं तथैव च । कौतूहलं नः परमं तच्छिन्धि द्विपदाम्वर । ७१३०
॥ नारद उवाच ॥ शृणु वैदर्भि धर्म्मज्ञे सपत्नीभिः सहानघे । पुण्यकानां विधिः प्रोक्तो यथा देवि पुरो मया ।
यथा चैता मतं देवी पुण्यकार्थं शुचिव्रता । व्रतावसानेऽथ तया सख्यो देवि निमन्त्रिताः ।
अदित्याद्याः सुताः सर्व्वा दक्षस्याक्लिष्टकर्म्मणः । पौलोमी च शची देवी ख्याता लोके पतिव्रता ।
रोहिणी च महाभागा सोमस्य दयिता सती । फाल्गुनी च तथा पूर्व्वा रेवती च विशाम्पते ।
तथा शतभिषा चैव मघा च कुरुनन्दन । एताभिर्हि महादेवी पूर्व्वमाराधिता सति । ७१३५
गङ्गा सरस्वती चैव वेलगङ्गा च निम्नगा । तथा वैतरणी चैव गण्डकी चैव भारत ।
अन्याश्च सरितो रम्या लोपामुद्रा च भारत । सत्यशान्या जगद्देवि धारयन्ति हि ताः शुभाः ।
शुभाश्च गिरिनन्दिन्यो वह्निकन्याश्च सुव्रताः । स्वाहा चाग्निप्रिया देवी सावित्री च यशस्विनी ।
ऋद्धिः कुवेरकान्ता च ज्येष्ठमहिषी तथा । भार्य्या पितृपतेश्चैव यमुपत्न्यस्तथैव च ।
श्रीर्धृतिस्तथा कीर्त्तिराशा मेधा च सुव्रता । प्रीतिर्म्मतिश्च ख्यातिश्च सन्नतिश्च तपोधनाः । ७१४०
देव्यः सत्यस्तथैवान्याः सर्व्वभूतहिते रताः । तासां व्रतावसाने च पूजासत्कोऽम्बिका तथा ।

तिलरत्नमयं दत्त्वा पर्व्वतं सर्व्वधान्यवत्। वासोभिर्व्वहुभिर्मुख्यैर्नानारागै सुमध्यमे ।
प्रतिग्रह्य च ता पूजां दत्तां देव्या तपोधना । उपविष्टा कथाश्चित्राः कुर्व्वत्यो भर्तृदेवते ।
पुण्यकार्थं कथास्तासामासन् देवी प्रश्नस या । विधिश्च पुण्यकस्याथ सतीनां भर्तृदेवते ।
तासां मतेन साध्वीनां सर्व्वासां सोमनन्दिनी । पर्य्यपृच्छदुमा देवी पुण्यकानां विधिम्परं ।
उमा तासां प्रियार्थन्तु पुण्यकान्यब्रवीत्तदा । समवं मम वैदर्भि सर्व्वभूतहिते रता ।
मह्येव चोमया दत्त स तदा रत्नपर्व्वत । प्रतिगृह्य मया चैव कृतो ब्राह्मणसात्शुभे ।
उमा त्वरुन्धतीं साध्वीमामन्त्र्येदमभाषत । शृणु कल्याणि वक्ष्यामि सर्व्वाभि सहिता शुभे ।
पुण्यकानां विधिं कृत्स्नं यथावदनुपूर्व्वशः । यथा देवि मया दृष्ट पुरा शेष विधिं शुभे ।
इति श्रीमहाभारते खिलेपु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पुण्यकविधौ षट्त्रिंशदधिकशततोऽध्यायः ॥ १२६ ॥
॥ उमोवाच ॥ सर्व्वदाहं यदा भर्त्तुः प्रसादेन शुचिस्मिते । तदा पुरा मया दृष्टः पुण्यकानां विधिः शुभ. ।
सनातन पुण्यविधिरिति बुद्ध्याऽवगन्यता । महादेवप्रसादेन मया दृष्टस्त्वरुन्धति ।
पुण्यकानि च सर्व्वाणि चीर्णवत्यस्म्यनिन्दिते । अनुज्ञया भगवतो भर्त्तुः सर्व्वस्य धीमतः ।
सतीत्वं धर्मचरणं यस्या नित्यमखण्डितं । पुण्यकानां विधिस्तस्याः पुराणे परिकीर्त्तितः ।
दानोपवासपूर्णानि सुकृतान्यप्यरुन्धति । निष्फलान्यसतीनान्तु पुण्यकानि तथा शुभे ।
या वञ्चयन्ति भर्त्तारं योनिदुष्टा ह्यसत्स्त्रियः । न तु तासां पुण्यफलमस्ति ता निरयङ्गमाः ।
साध्व्यो जगद्धारयन्ति सुशीलाः पतिदेवताः । अनन्या धर्मनिश्चाश्च सताः पन्थानमाश्रिताः ।
अवाग्दुष्टाः शौचयुक्ता धृतिमत्यः शुभव्रताः । सततं साधुवादिन्यो धारयन्ति जगत खलु ।
व्याधितः पतितो वाऽपि दीनो वाऽपि कथञ्चन । न त्यक्तव्यः स्त्रिया भर्त्ता धर्म एष सनातनः ।
अकार्य्यकारिणं वाऽपि पतितं वाऽपि निर्गुणं । स्त्री पतिन्तारयत्येव यथा त्मान शुभानने ।
योनिदुष्टे स्त्रिया नास्ति प्रायश्चित्तं हतैव सा । वाग्दुष्टे विहितं सद्भिः प्रायश्चित्तं पुरातने ।
भर्त्तुश्छन्देन कर्त्तव्यं व्रतकं सर्व्वदा स्त्रिया । उपवासोऽपि वा धन्ये काङ्क्षन्त्या सुकृताङ्गतिं ।
कल्पान्तरसहस्रेषु न स्त्री सा लभते गतिं । तिर्य्यग्योनिसहस्रेषु पच्यते योनिविभ्रमात् ।
यदि सा नाम मानुष्यं स्त्री लभेदसती सती । चाण्डालयोनौ दुर्मेधा जायते कुक्कुराशना ।
भर्त्ता देव सदा ज्ञेया सद्भिर्दृष्टस्तपोधने । यस्या हि तुष्यते भर्त्ता सा सती धर्मचारिणी ।
केवलहतानान्तु स्त्रीणां लोको न शोभन । भर्त्तर्य्येव मनो यासां सद्भावेन व्यवस्थितं ।
कर्मणा मनसा वाचा पतिं नातिचरन्ति याः । तासां पुण्यफलं धेयं पुण्यके समुदाहृत ।
पुण्यकानां विधिं कृत्स्नमतः शृणुतु शोभने । निबोध सह सर्व्वं भिर्दृष्टो यस्तपसा मया ।
कृत्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत् सती । उपवासार्थमथ वा व्रतकार्थं शुचिस्मिते ।
... सततं ... च । ... पाच सकुमं ... तथ ।
... निष्य प्रतिष्ठाप्य ... । ततो भर्त्तु सती दद्यात् ... च ।

आत्मनोऽपि निषेक्तव्यं ततः शिरसि तज्जलं । त्रैलोक्ये सर्व्वतीर्थेषु स्नानमेतदुदाहृतं ।
उपवासेषु कर्त्तव्यमेतद्धि व्रतकेषु च । स्नानमेतद्धि सामान्यं स्त्रीणां पुंसाञ्च भाविनि ।
अरुन्धति मया दृष्टं तपसा हरतेजसा । अशल्यविद्धं शयनमासनञ्च तथाविधं ।
स्वयं प्रक्षालनञ्चापि पादयोरनुशब्दितं । अश्रुप्रपातो रोषश्च कलहश्च क्षत. सति ।
उपवासाद्व्रताच्चापि सद्यो भ्रंशयति स्त्रियः । शुक्लमेव सदा वास. प्रशस्तञ्चन्द्रसम्भवे । ७७७४
अन्तर्द्धारुकञ्चैव उपवासे व्रते तथा । पादुकार्थं तृणैः कार्य्यं सर्व्वदा व्रतके सति ।
उपवासेऽपि च विधिरेष एव प्रकीर्त्तितः । प्रसादनञ्चाञ्जनञ्च गन्धान् सुमनसस्तथा ।
व्रतके चोपवासे च नित्यमेव विवर्ज्जयेत् । दन्तकाष्ठं शिर.स्नानमुद्वर्त्तनमथापि च ।
विवर्ज्जितं सदा सर्व्वं शौचार्थन्तु विधीयते । बिल्वामलकफलैः शुद्धैः स्नानञ्चैव समाचरेत् ।
प्रक्षालनं वै शिरसः सदा स्यादिष्टिसिद्धिभिर्जलै. । शिरसोऽभ्यञ्जनं धाम्नि नैव तावत् प्रशस्यते । ७७७९
पादयोर्न च गात्रस्य स्नेहेनेति स्थितिः स्मृता । गोयानमुष्ट्रयानञ्च खरयानञ्च वर्ज्जयेत् ।
नग्नस्नानञ्च सततं न व्रते ह्युपवासके । नदीजलेन स्नानञ्च प्रशस्तं सोमनन्दिनि ।
शुभे तडागवाप्यादौ विशीर्णे जलवर्जिते । गत्वा स्नानं प्रशस्तन्तु सदैव खलु सर्व्वथा ।
अलाभे त्ववरुद्धा स्त्री घटस्नानं समाचरेत् । नवैश्च कुम्भै. स्नातव्यं विधिरेष सनातनः ।
स्नानन्तु शिरसो दृष्टं मया दृष्टं तपोबलात् । ७७८४

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पुण्यकविधौ सप्तविंशदधिकशततोऽध्यायः ॥ १२७ ॥

॥ उमोवाच ॥ विधिनैतेन कृत्स्नेन स्त्री सदा भर्तृदेवता । चरेत् संवत्सरं दान्ता षण्मासान्मासमेव वा ।
स्त्रियो ह्यावाहयेत् साध्वीरेकादश समाधिना । स्वयञ्चैव विधिर्दृष्टो व्रतकानां मया शुभः ।
अच्छिद्रं स्यात् सतीः सर्व्वा या मूलव्रतिनी भवेत् । तासान्तु निष्क्रयो देयः कालदेशानुरूपत ।
ततो मासान्तशुक्लस्य तिथौ च नवमी तथा । आराधयित्वा कर्त्तव्यं व्रतकस्यापि वर्ज्जनं ।
उपवासमहोरात्रं त्रिरात्रञ्चापि निश्चिता । आदौ चान्ते च कुर्व्वीत व्रतकस्य सुसिद्धये । ७७९०
क्षुरकर्म्म ततो भर्त्तुरात्मनश्चैव कारयेत् । उत्सादनञ्च वपनं तस्मिन्नहनि सेव्यतं ।
ततो विवाहवत् स्नानं विहितं पुण्यके शुभे । मण्डनञ्चैव विहितं माल्यधारणमेव च ।
कुम्भैश्च स्नाप्यमानेमं साध्वी मन्त्रमुदीरयेत् । भर्त्तृपादौ नमस्कृत्य मनसा वाऽथ वा गिरा ।
आपो देव्य सर्व्वेषां विश्वधात्र्यो दिव्या मदन्त्या याः मद्दरा धर्म्मराज्यः । हिरण्यवर्णाः पावकाः शिवा मे च रसेन श्रेयसे
मां जुषन्तु ।
* अथापि स्वतो मन्त्र. सर्व्वकान्यच मे शृणु । मन्त्राः पुराणविहिताः स्त्रीणां सर्व्वाङ्गशोभने । ७७९५
शुभा ऽप्यपा गुणिनी पुत्रधर्म्मा भर्त्ता चाकं कामदा स्यां वरेण्या । मा कर्म्मणा मनसा वाऽपि वाचा भर्त्तुर्भवेयं रुपती स्यामहं
वशगा ।
सपत्नीनामधि नित्यं भवेयं सुपुत्रा स्यां सुभगा चारुरूपा । सम्पन्नाज्ञा गुणवादिनी च सर्व्वात्मना स्यामदरिद्रा भवेयं ।

पतिश्च मे स्यात् सुमुखो मत्प्रतीक्षो नित्यं मद्भक्तः स्वात्मवत्तिर्मद्गतिश्च । प्रीतिश्च नौ चाक्रवाकानुरूपा मनो विरागो न
भवेत् साधुत् च स्यात् ।

लोकान् साध्वीनामुत्तमानां मजेयं याभिः सर्व्वं धार्य्यते विश्वरूपं । उभे कुले याः शुभाः पावयन्ति पितुर्भर्त्तुश्च पतिभक्त्यै
धिता. सा ।

भूमिर्वायुर्ज्जलमाकाशमग्निरन्त. श्चेतनः प्रकृतिर्यो महांश्च । अहङ्कारस्व मम साक्ष्ये नियुक्ताः सरेयुर्मे मुनयो निश्चयश्च
मतश्च । ७८००

यैरारब्धो देहिनां भौतिकोऽयं विधि. सत्त्वाद्यैर्गुणयुक्त. सबीजे. । सन्त्वेते मे साक्षिणः सर्व्वसंस्था व्रते चास्मिन्निश्चये चापि
वृत्ते ।

चन्द्रादित्यौ पुण्यपापौ यमश्च दिशः सर्व्वा दश चात्मा च मेयं । सन्त्वेते वै साक्षिणः सर्व्व एव व्रते चास्मिन्निश्चये चापि
वृत्ते ।

मन्त्रैरेतैः पुराणोक्तैः सर्व्वद्रव्याभिमन्त्रणं । प्रनषर्य्याप्रभृति वै पुराणे समुदाहृतं ।
स्नात्वाऽथ वाससी दद्यात् भर्त्तुः कर्त्ता स्वयं शुभे । अथात्मकर्त्तितं न स्याच्छुभे विघ्नेन केनचित् ।
वासोऽन्यदेव दद्याच्च श्वेतं मुख्यं नवं शुचि । स्वकर्त्तितं सूत्रतन्तु वाससा तेन मिश्रयेत् । ७८०५
ततो द्विजं शुचिं दान्तं ज्ञानविज्ञानकोविदं । भोजयेच्च यथाशक्त्या सह भर्त्रा सुमध्यमे ।
ब्राह्मणस्यापि दातव्यं वासोयुग्मं महातपे । शय्या यानं स्वर्हं धान्यं दासी दासस्तथैव च ।
अलङ्कारः शक्तितश्च रत्नपर्व्वत एव च । सर्व्वधान्यैः समुत्क्षिप्तस्तिलैश्च सविशेषतः ।
वासोभिश्च प्रतिच्छन्नो नानावर्णैररुन्धति । हस्त्यश्वावचयश्चैव देया गौरेव वा ध्रुवं ।
लवणप्रतिमां दद्यान्नवनीतस्य चापरां । गुडस्य मधुनश्चैव सुवर्णस्य च शोभनां । ७८१०
तथैव सर्व्वगन्धानां रसानां पृथगेव च । तथा सुमनसां दद्याद्वृक्षस्योदुम्बरस्य च ।
फलानाञ्चैव सर्व्वेषां वाससामपि नन्दिनि । चित्रप्रतिकृतिश्चैव काष्ठस्य प्रतिमास्तथा ।
शिलाप्रतिकृतिश्चैव दध्नोऽथ पयसस्तथा । सर्पिषा दूर्व्वया चैव धान्यान्यामयभीरुति ।
कालदेशानुरूपञ्च देयं विभवत. सति । अल्पं वा बहुलं वाऽपि भर्त्तुश्छन्देन सर्व्वदा ।
तिलपात्रं प्रदातव्यं न देयं न तु शोभने । गौस्त्वशक्यं प्रदातव्या कपिला कांस्यमेव च । ७८१५
कृष्णाजिनञ्च सुभगे सतिलं वाससाऽन्वितं । आदर्शश्चैव कूर्च्चश्च तथाऽजिनमनिन्दिते ।
एतद्दत्त्वा सर्व्वकामानाप्नोति वरवर्णिनि । पुरोधिका पुत्रवती सुभगा रूपभाविनी ।
स्पष्टहस्ता धनाढ्या च स्त्री भवत्यमलेक्षणा । दत्त्वया लभते चैव कन्या रूपगुणान्विताः ।
भवन्ति सुभगाढ्याश्चैव च पुरोधिका. । पुत्रवत्यो धनाढ्याश्च शीलवत्यश्च नित्यदा ।
अरुन्धतिव्रतं दान्ते मयैतत् प्रथमं व्रतं । उमाव्रतिकमित्येवं ख्यातं शान्तिकं खलु । ७८२०
एतदेवोत्तमं स्त्रीणां व्रतं तस्मात् समाचरेत् । सर्व्वकामानवाप्नोति स्त्री ह्येतदनिन्दिते ।
एतद्व्रतकराश्चैव देवदेवो वृषध्वजः । पुराऽमितविधे सौम्ये प्रियार्थे मम सर्व्वदा ।

मतकर्म्यावसाने तु देयं भोज्यञ्च नित्यदा। स्त्रीणां प्रदेयाः कामाश्च प्रद्युम्नः कालदेशयोः ।
एकैकस्य प्रदातव्यं मतकं वरवर्णिनि। इच्छातो ब्राह्मणानान्तु देयमन्नं सदक्षिणं ।
पायसं तत्र दातव्यं मतके नान्यदिष्यते। नात्र प्राणिवध कार्य्यं पुराणे नियता श्रुति ।
अथ द्वितीयं वक्ष्यामि मतकं सोमसप्रभे। महादेवप्रसादेन दृष्टवत्यस्मि यच्छुभे ।
सर्व्वाः पुत्त्रफला नार्य्य श्रद्धिरेतदुदाहृतं। तस्मादर्थिप्रतीं दद्यात् सपुत्त्रकरकान् शुभे ।
ज्येष्ठाषाढौ शुभौ माघौ पुरोक्तं विधिमाचरेत्। अथवा ज्येष्ठमेवैकमाषाढं वा समाचरेत् ।
ततो मासद्वये पूर्णे मासे वा वरवर्णिनि। सपुत्त्रकरकान्दद्यात् फाणितप्रतिपूरितान्।
सर्पिषः पयसश्चैव दध्नोऽथ मधुनोऽनघे। जलस्य च तथा दद्यात् पूरयित्वा सुमध्यमे।
एकस्मै ज्ञानवृद्धाय सुव्रताय जितात्मने। सपुत्त्रकरकान्दद्यात् यावन्तो मनसः प्रियाः ।
इच्छेद्दुहितरं चेद्धि स्त्रीणां कामकरं तत । किञ्चिद्द्रव्यं सुताकामा सुतां प्राप्नोत्यसंशयं ।
गौर्व्वाऽथ काञ्चनं वाऽपि दक्षिणार्थं प्रशस्यते। विप्रस्याच्छादनं देयमवश्यञ्च शुचिस्मिते।
यज्ञोपवीतं मतके दद्यान्नारी शुचिव्रता। सपुत्त्रकरकाणान्तु विधिनैवं विपश्चिता ।
अपत्याख्यानयोगेन ब्राह्मणेभ्यः शुचिव्रता। संवत्सरं सुपूर्णञ्च व्रतधर्म्मानुपालिनी।
करकामपि दद्याच्च पूर्णे संवत्सरे शुभे। अनुज्ञया सदा भर्त्तुः सत्यवादिन्यरुन्धति।
सुवर्णसूत्रं विप्राय क्षौमं वा दातुमर्हति। यज्ञोपवीतं विप्रस्य मतकं सार्व्वकामिकं।
यज्ञोपवीतं कनकं दक्षिणाञ्चापि शक्तितः । प्रयच्छती सती स्त्री हि सर्व्वान् कामान् समश्नुते।
नवं न भक्षयेत् किञ्चिन्नारी धान्यमयो फलं। पुष्पं वा नोपभुञ्जीत यावदेवं समाचरेत्।
एकभक्तेन धर्म्मज्ञे पुष्पकं कर्त्तुमर्हति। ब्राह्मणाय ततो देयं भर्त्तुश्च तदनन्तरं।
एवं संवत्सरं कृत्वा सुभगा रूपशालिनी। भवत्यविधवा चैव स्त्री धनाढ्या तथैव च।
वार्त्ताकानि न खादेद्या स्त्री पूर्णं परिवत्सरं। न सा पुत्त्रविनाशं हि पश्यतीत्यवगम्यतां।
श्यामकं मृगमांसञ्च नित्यमेव विवर्ज्जयेत्। नाप्नोति मरणं नारी चाप्नोति पतिदेवतां।
अलावूं वर्ज्जयेन्नारी तथैवोत्पादिकामपि। कलशीं काञ्चनं नाद्याद्या भर्त्तुः सुखमिच्छति।
पूर्णे संवत्सरे दद्यादेकैकं शाकमादितः । सुदक्षिणा पुत्त्रवती भवत्यपि पुरोधिका।
स्वयं प्रक्षालयाना स्त्री स्वपादावेवमादितः । प्रतिष्ठां लभते नित्यमुद्वेगरहिता सती।
दिवा सूर्य्यस्य मार्गेण वर्त्तयेत् स्त्री पतिव्रता। एवं संवत्सरं पूर्णं रात्रावन्नं विवर्ज्जयेत्।
सा जीवपुत्त्रा सुभगा भवत्यमरवर्णिनी। अधितिष्ठति सर्व्वांश्च सपत्नीनां च संशय ।
पूर्णे संवत्सरे दद्यात् सौवर्णं सूर्य्यमुत्तमं। ब्राह्मणायाभिरूपाय दरिद्राय यशस्विने।
फलानि चाथ पुष्पाणि भक्ष्याण्यपि च सुव्रता। दद्यादनस्तमितके चरितव्रतका तथा।
अथ वाऽस्तंगते सूर्य्ये भुङ्क्ते स्त्री नियता सती। चन्द्रमण्डपूपानि भोज्यानि वरवर्णिनि।
सा दद्यात् काञ्चनं छत्रं सवत्सां च पयस्विनीं। अभिरूपाय विप्राय सामग्नं सप्रशान्तिनं।

चन्द्रशीतलगात्री सा भवत्यमरवर्णिनी। सुभगा दर्शनीया च पुत्रवत्यपि भाविनी।
पौर्णमास्यान्तु सततं प्राप्ते सोमोदयेऽङ्गना। अर्घं दद्यात् सुमनसां साचतं सकुशं तथा।
यावकञ्च वलिं कुर्य्याद्दधिना सह संयुतं ॥ एवं या कुरुते नित्यं सर्व्वान् कामानवाप्नुयात्। ७५५
अदृष्ट्वा या तु नाश्नाति सूर्य्यं नारी पतिव्रता। दुर्द्दिने वाऽथ वा वर्षे सेष्टान् कामानवाप्नुते।
काञ्चनं शक्तितो दद्यात् सा विप्राय मनस्विनी। सुभगा दर्शनीया च भवत्यमरवर्णिनी।
इति श्रीमहाभारते खिलेषु हरिवंशे पारिजातहरणे पुण्यकविधौ अष्टाविंशदधिकशततोऽध्यायः ॥ १२८ ॥
॥ भगवत्युवाच ॥ निर्व्विष्टव्यं शरीरं यैर्व्रतकैः पुण्यकैरपि। अरुन्धति प्रवक्ष्यामि सहैताभिर्व्वरे शृणु।
कृष्णाष्टमी या चपति स्याद्वा मूलफलाशना। ब्राह्मणायैकमशनं सा दत्त्वा भर्त्तृदेवता।
शुक्लवस्त्रा शुभाचारा गुरुदैवतपूजिका। एवं संवत्सरं कृत्वा ततो दद्याद्द्विजातये। ७६०
*गोवालरज्जुसुकृतं चामरञ्च ध्वजं तथा। दक्षिणापूर्व्वमिष्टान्नं कृत्वा वाऽपि शुचिस्मिते।*
ऊर्म्मिमन्तः स्वरालापाः श्रोणिदेशावलम्बिन.। तस्या भवन्ति केशास्तु भक्तिमत्या हि भर्त्तरि।
शिरो निर्व्विष्टुकामा तु गोमयेन शिरः सती। प्रक्षालयेन्मलं कृत्वा पयसा श्रीफलेन च।
गोमूत्रञ्च सदा प्राश्नेच्छिर.स्नानञ्च निश्रयेत्। कृष्णां चतुर्द्दशीमेतत् कर्त्तव्यं वरवर्णिनि।
भवत्यविधवा चैव सुभगा विज्वरा तथा। शिरोरोगैश्च नैवास्या. शरीरमभितप्यते। ७६५
दर्शनीयं ललाटं या स्त्री काङ्क्षति शुचिस्मिते। तिथिं प्रतिपदं नित्यं सा चपेदेकभोजना।
पयसा च तथाऽश्नीयाद्यावत् संवत्सरो गतः। ब्राह्मणस्य तथा दद्यात् पट्टं रूप्यमयं शुभं।
ललाटं रूपसम्पन्नं तेनाप्नोत्यङ्गना सती। द्वितीयां स्त्री सदा सौम्ये भ्रुवोरिच्छेत् सुरूपतां।
अनन्तरोपवासेन शाकभक्ताशना सती। ततः संवत्सरे पूर्णे ब्राह्मणान् स्वस्ति वाचयेत्।
फलै. परिणतै. सौम्ये माषाणां दक्षिणान्वितैः। लवणेन च भद्रन्ते घृतमात्रेण चानघे। ७७०
भ्रुवौ विधाय सा दद्यान्मृगनाभिमये शुभे। श्रवणौ रूपसम्पन्नाविच्छन्ती स्त्री सुमध्यमे।
नचत्रे श्रवणे प्राप्ते भ्रुवं भुञ्जीत यावकं। ततः संवत्सरे पूर्णे कर्णौ दद्याद्धिरण्मयौ।
घृते प्रक्षिप्य विप्राय पयसा सहिते शुभे। नासामिच्छेल्ललाटान्तां मध्यमावधिवर्ज्जितां।
तिलगुल्मं सदा सिञ्चेद्यावत् पुष्पैर्द्धि रचितः। अनन्तरोपवासेन सेकव्य. सलिलैः सदा।
तस्मादादाय पुष्पाणि घृते प्रक्षिप्य दापयेत्। स्वक्षी भवेयमिति या स्त्री काङ्क्षेदरुन्धतीह्नवे। ७७५
अनन्तरं सा भुञ्जीत पयसा वा घृतेन वा। तत. संवत्सरे पूर्णे पद्मपत्राणि पण्डिता।
तथैवोत्पलपत्राणि न्यसेत् चीरे शुचिस्मिते। सत्माना नि विप्राय ततो दद्यात् सती सति।
कृष्णसारसमानाक्षी स्त्री दत्त्वा भवति स्म वै। इच्छेदोष्ठौ चारुरूपौ या स्त्री धर्म्मगुणान्विते।
सा स्थण्डिलेन च पिबेदुदकं वत्सरं सती। अयाचितेन भुञ्जीत नवम्यां धर्म्मभागिनी।
ततः संवत्सरे पूर्णे विद्रुमं दातुमर्हति। तेन विम्बफलाभोष्ठी स्त्री भवत्येव शोभने। ७८०
सुभगा च वपुपुत्त्रधनाढ्या गोमती तथा। या चारुरूपानिच्छेत दन्तानमरवर्णिनि।

शुक्लाष्टमी न सा ऽश्नीयाद्भक्तद्वयमनिन्दिता । ततः संवत्सरे पूर्णे दद्याद्रौप्यमयान् शुभान् ।
दन्तान् प्रचिन्त्य धर्म्मज्ञे पयस्तिगुणोदिते । तेन सा तिलपुष्पाभान् दन्तानाप्नोति या सती ।
सौभाग्यमपि चाप्नोति सपुत्रत्वं तथाऽनघे । सर्व्वमेव मुखं कान्तमिच्छथा रुचिरानने ।
सा पौर्णमास्यामश्नातु प्राप्ते चन्द्रोदये शुभे । यावकं पयसा सिद्धं दत्त्वा विप्राय भाविनी । ७८५
ततः संवत्सरे पूर्णे चन्द्रं रूप्यमयं शुभं । पद्मे फुल्लेऽभिसंन्यस्य ब्राह्मणं स्वस्ति वाचयेत् ।
पूर्णचन्द्रमुखी तेन दानेन स्त्री शुभे भवेत् । स्तनाविच्छति या नारी तृणराजफलोपमौ ।
अयाचितं दशम्यां सा नित्यमश्नीत वाग्यता । संवत्सरे ततः पूर्णे द्वे बिल्वे काञ्चने शुभे ।
सदक्षिणे ब्राह्मणाय प्रयच्छति धृतात्मने । सौभाग्यं परमाप्नोति बहून् पुत्रांस्तथैव च ।
सदोन्नतस्तनी चैव भवत्यमरवर्णिनि । शातोदरत्वमन्विच्छेत् वर्पेदेकान्नभोजना । ७९०
पञ्चम्यां तु न भोक्तव्यमन्नं तोयेन नित्यदा । ततः संवत्सरे पूर्णे दद्याज्जातीलतां शुभे ।
फुल्लां सदक्षिणां धन्ये ब्राह्मणाय धृतात्मने । हस्ताविच्छति या नारी रूपयुक्तौ सुमध्यमे ।
द्वादशी सा चपत्नेव शाकैः सर्व्वैरनिन्दिते । संवत्सरे ततः पूर्णे पद्मे रौक्मे ददातु सा ।
ब्राह्मणायाभिरूपाय तथा पद्मद्वयं शुभे । श्रोणीं विशालामन्विच्छेत् स्त्री चपत्नेव सुव्रते ।
त्रयोदशीमेकभक्तमश्नात्विवं ह्ययाचितं । ततः संवत्सरे पूर्णे स्वर्णं संप्रयच्छतु । ७९५
प्रजापतिमुखाकारं कृत्वा तत्र वरानने । काञ्चनं तत्र दातव्यं तदाकारस्य सर्व्वदा ।
अञ्जनेन च धर्म्मज्ञा शनकैरवचूर्णयेत् । रत्नानि चैव पूर्णानि वासो रक्तञ्च दापयेत् ।
तेन श्रोणीमभिमतां स्त्री सौम्ये प्रतिपद्यते । मधुरां वाचमिच्छन्ती वर्ज्जयेल्लवणं सती ।
संवत्सरं वा मासं वा दापयेल्लवणं ततः । सदक्षिणं ब्राह्मणाय परं माधुर्य्यमिच्छती ।
श्रुतवाक्याच्छतगुणं भवत्यमरवर्णिनी । गूढगुल्फशिरौ पादाविच्छन्त्या सोमनन्दिनि । ८००
पर्व्वसु पर्व्वसु वरारोहे भोक्तव्य कृसरौदन । अग्निर्वा ब्राह्मणो वाऽपि न स्प्रष्टव्य सदा पदा ।
यदा यदा स्पृशेत्तस्य वन्देत नयनाऽन्विते । पादेन न च वै पादं प्रक्षालयितुमर्हति ।
एतैर्नियमैर्युक्ता धर्म्मज्ञा पतिदेवता । कूर्म्मौ रुक्ममयौ दद्याद्ब्राह्मणाय पतिव्रता ।
तौ वराय ब्राह्मणाय स्थापयित्वा घृते ऽनघे । पद्मे चाधोमुखे कृत्वा दद्याद्विप्राय नन्दिनि ।
रक्तैर्द्रव्यैर्म्मिश्रयित्वा काञ्चनैरलङ्कृते । सर्व्वमेव तु या गात्रमिच्छत्यतिमनोहरं । ८०५
विरात्रं पुष्यकाले सा चरेतु पतिदेवता । कौमुदामय वाषाढ्यां माघ्यामाश्वयुजे तथा ।
मातरं पितरञ्चैव मन्यते ऽतिथिदैवतं । घृतञ्च नित्यं विप्रेभ्यो ददातु लवणं तथा ।
सर्व्वाश्चर्यं न्यदे चैव करोतु पतिदेवता । उपलेपञ्च धर्म्मज्ञा बलिकर्म्म च मानिनि ।
वाग्दुष्टा चैव मा शुभ्रे भवत्वात्मार्य्यपण्डिता । पर्य्यश्नातु च मा किञ्चिदपि शाकं यशस्विनि ।
कलिं सर्व्वतथ्यञ्च परित्यजतु भाविनी । ८१०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे व्रतविधौ ऊनपञ्च त्रिंशदधिकशततोऽध्यायः ॥ १३८ ॥

॥ उमोवाच ॥ यान्यवान् सगुणा निकृन्त्यैकभक्तेन नित्यदा । सप्तमीं सप्तमीं नित्यं क्षपयेत् स्त्री पतिव्रता ।
ततः संवत्सरे पूर्णे दद्यात् धेनुं हिरण्मयं । सदक्षिणं ब्राह्मणाय शुभवन्तुमती भवेत् ।
करञ्जे दीपकं दद्यात् सदा या प्रमदावरे । पूर्णे संवत्सरे दद्यात् सौवर्णं दीपकं ततः ।
कृत्वा सा स्त्री भवेद्भर्त्तुरिष्टा पुत्रवती तथा । सपत्नीनामपि तथा दीपवज्ज्वलते शुभे ।
या नोपभोजिनी नित्यं नैव च स्यादरुन्तुदा । न च स्यादुन्मना सौम्ये नित्यञ्च पतिदेवता । ७९१५
शौचान्विता च सततं न च रूक्षाभिभाषिणी । श्वश्रूश्वशुरयोर्नित्यं शुश्रूषानिरता सती ।
किं तस्या व्रतकैः कृत्यं किं वा स्यादुपवासकैः । या भर्त्तृदेवता नित्यं सत्यधर्मगुणान्विता ।
विधवा स्त्री तु या हि स्याद्दैवयोगात् सती सति । तस्या वक्ष्यामि यो धर्मः पुराणोक्तः सुमध्यमे ।
पतिं संकल्पयित्वा सा चित्रस्थं वाऽथ मृण्मयं । तस्य पूजां सदा कुर्य्यात्तस्या धर्ममनुस्मरेत् ।
तत एवाभ्यनुज्ञाप्य नित्यं याचेत सुव्रता । व्रतके चोपवासे च भोजने च विशेषतः । ७९२०
भर्त्तृलोकान् प्रजत्येवं न चेदतिक्रमेत् पतिं । शाण्डिली सूर्य्यवज्ज्वाति सततं पतिदेवता ।
अद्य प्रभृति सर्व्वेषां देवानाञ्चैव योषितः । द्रक्ष्यन्ति पुण्यकविधिं पौराणं याः सनातनाः ।
मुनिश्च नारदः कृत्स्नं पौराणं शास्यते विधिं । उपवासस्य धर्म्मात्मा व्रतकानां तथैव च ।
अदितिश्चापि सेन्द्राणी लक्ष्म सोमसुते वरे । प्रवर्त्तने पुण्यकानां व्रतकानाञ्च सर्व्वदा ।
कीर्त्तनीयाः सतीनां हि भविष्यथ गुणान्विताः । उपवासव्रतविधिं यथावदिह कृत्स्नशः । ७९२५
प्रादुर्भावेषु सर्व्वेषु भार्य्या विष्णोर्महात्मनः । ख्यास्यन्ति पुण्यकविधिं नित्यमेव सनातनं ।
विशेषधर्म्मो धर्म्माणां स्त्रीधर्म्मेषु प्रशस्यते । पतिभक्तिरदुष्टत्वमवाग्दुष्टत्वमेव च ।
॥ नारद उवाच ॥ एवमुक्तास्तु ता देव्यो महादेव्या तपोधनाः । जग्मुर्हृष्टा महादेवीं प्रणिपत्य हरप्रियां ।
अदितिर्व्रतकञ्चक्रे शृणु यद्धर्म्मचारिणी । उमाव्रतविधिः सर्व्वः पूर्व्वोद्दिष्टस्तया कृतः ।
पारिजाते निबध्याथ मम दत्तस्तु कश्यपः । अदितिर्व्रतकं चक्रे शृणु यद्धर्म्मचारिणी । ७९३०
उमाव्रतविधिः सर्व्वः पूर्व्वोद्दिष्टस्तया कृतः । पारिजाते निबध्याथ मम दत्तस्तु काश्यपः ।
अदितिव्रतकं नाम तद्दत्तं सत्यभामया । तदेव व्रतकं दत्तं सावित्र्या धर्म्मनित्यया ।
तेनैव पुत्रैः संपूर्णमिदं लब्धधिकं कृतं । सन्ध्याकाले च संप्राप्ते स्नाने स्थाने तथैव च ।
पूजनं वा नमस्कारो जपश्च द्विगुणः स्मृतः । सावित्रीव्रतकं कृत्वा तथादितिव्रतं सती ।
भर्त्तुः कुलं पितृकुलमात्मानञ्चैव तारयेत् । इन्द्राणी व्रतकं चक्रे तदेवानं यथाविधि । ७९३५
रक्तमभ्यधिकं वासो भोजनञ्चैव सानिशं । चतुर्थे दिवसे चापि पुण्यकार्थे विधिः स्मृतः ।
अहोरात्रोपवासश्च देयं कुम्भफलं तदा । गङ्गया व्रतकं दत्तं तदेवीमे यशस्करि ।
स्नानमभ्यधिकं कार्य्यं सद्यःपश्यात्मनो जले । अन्यस्मिन् वा जले साधनकाले हरिनिधे ।
एतद्गङ्गास्नानं नाम सर्व्वकामप्रदं स्मृतं । सप्त सप्त च सप्ताय कुलानि हरिवल्लभे ।
स्त्री तारयति धर्म्मज्ञा गङ्गाव्रतकचारिणी । देयं कुम्भफलं गङ्गाया व्रतके शुभे । ७९४०

तारणं पारणञ्चैव तद्व्रतं मार्गकार्त्तिकं । यत्नभार्य्या चकाराय व्रतं यामरथं शुभे।
हेमन्ते तत्तु कर्त्तव्यमाकाशे हरिवल्लभे । इमानि चैव वाक्यानि ब्रूयादाकाशमाश्रिता ।
स्नाता शुचिसमाचारा नमस्कृत्य पतिं शुभे । चराम्यहं यामरथं हिमं पृष्ठेन धारये ।
पतिव्रता जीवपुत्रा भवेयञ्च पुरोधिका । सपत्नीनामधितिष्ठेयं पश्येयञ्चैव मा यमं ।
सभर्तृपुत्रा जीवेयं चिरं सुसुखमेव च । पतिलोकञ्च गच्छेयं भवेयं धनिनी तथा । ७९०५
सुचेला मृष्टहस्ता च स्वजनेष्टा गुणान्विता । एवं कृत्वा ततो विप्रं मधुना स्वस्ति वाचयेत्।
तिलैरपि तथा कृष्णैः पायसेन तु भोजयेत् । एवं व्रतानि देवीभिः कृतान्यमरवर्णिनि ।
महादेव्या पुरोक्तानि रुद्रपत्न्या हरिप्रिये । अहं ब्रवीमि तपसा महीयेन समन्विताः ।
सर्वा द्रक्ष्यथ पुण्यानि व्रतकानि तथैव च । पौराणान्युमया देव्या यानि दृष्टानि वै पुरा ।
कल्याणगुणयुक्तानि पावनानि शुभानि च । ७९१०
॥ वैशम्पायन उवाच ॥ रुक्मिणी व्रतकञ्चक्रे दृष्ट्वा व्रतकविस्तरं । उमया वरदानेन दृष्ट्वा दिव्येन चक्षुषा ।
उमाव्रतकवत्सर्व्वं रूपदानं तथाऽधिकं । रत्नमालाप्रदानञ्च तथाऽन्नं वार्त्तिकार्त्तिकं ।
तथा जाम्बवती चक्रे पुरोमाव्रतकं यथा । ददावभ्यधिकं सा तु रत्नहर्म्यं मनोहरं ।
सत्या ददौ तथैवाथ पुरोमाव्रतकं यथा । पौष्मभ्यधिकं वात्सल्यया दत्तमुमाव्रते ।
रोहिण्या चाथ फाल्गुन्या मघया च पुरातने । व्रतानि खलु दत्तानि बहूनि कुरुनन्दने । ७९१५
ददौ शतभिषा चैव व्रतकं पुण्यलक्षणं । येन नक्षत्रमुख्यत्वं जगाम कुरुनन्दन ।
इति श्रीमहाभारते खिलेषु हरिवंशे पारिजातहरणे उमाव्रतके चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
॥ जनमेजय उवाच ॥ वैशम्पायन धर्मज्ञ व्यासशिष्य तपोधन । पारिजातस्य हरणे घटपुरं परिकीर्त्तितं ।
निवासोऽसुरमुख्यानां दारुणानां तपोधन । तेषां वधं मुनिश्रेष्ठ कीर्त्तयस्वाद्य कृत्य च ।
॥ वैशम्पायन उवाच ॥ त्रिपुरे निहते वीरे रुद्रेणाक्लिष्टकर्म्मणा । तत्रायुधाना बहवो बभूवुरसुरोत्तमाः ।

अनादिमध्यनिधनः सोमो देवो महेश्वरः। तमस्तुत्य सुखं स्वर्गे वस्तुमिच्छन्ति येऽसुराः। ७९७०
ते नेपुस्तत्र केचित्तु दुरात्मानो महासुराः। अयेमुरपरे राजन्नसुरा भव्यभावनाः।
नेयुर्ये तु दुरात्मानस्तानुवाच पितामहः। वरयध्वं वरं वीरा रुद्रक्रोधम्हते ऽसुराः।
त ऊचुः सर्व्वदेवानामवध्याः स्यामहे विभो। पुराणि षट् च नो देव भवन्त्वर्म्महीतले।
सर्व्वकामसमृद्धार्थं षट्पुरं चास्तु नः प्रभो। वयञ्च षट्पुरं गत्वा वत्स्याम च सुखं प्रभो।
रुद्रादुग्रं भयं न स्यायेन नो ज्ञातयो हताः। निहतं त्रिपुरं दृष्ट्वा भीताः स्म तपसां निधे। ७९७५
॥ पितामह उवाच ॥ असुरा भवतावध्या देवानां शङ्करस्य च। न बाधिष्यथ चेद्विप्रान् सत्पथस्थान् सतां प्रियान्।
विप्रोपघातं मोहाच्चेत् करिष्यथ कथञ्चन। नाशं यास्यथ विप्रा हि जगतः परमा गतिः।
नारायणाद्धो भेतव्यं कुर्व्वद्भिर्ब्राह्मणाहितं। सर्व्वभूतेषु भगवान् हितं धत्ते जनार्द्दनः।
ते गता असुरा राजन् ब्रह्मणाऽथ विसर्ज्जिताः। येऽपि भक्ता महादेवमसुरा धर्म्मचारिणः।
स्वयं हि दर्शनं तेषां ददौ त्रिपुरनाशनः। श्वेतं वृषभमारुह्य सोमः सप्रवरः प्रभुः। ७९८०
उवाच चेदं भगवानसुरान् स कृताञ्जलीन्। वैरमुत्सृज्य दम्भञ्च हिंसाञ्चासुरसत्तमाः।
मामेव चाश्रितास्तस्माद्वरं साधु ददामि वः। यैर्दीक्षिताः स्थ मुनिभिः सत्क्रियापरमैर्द्विजैः।
सह तैर्गम्यतां स्वर्गं प्रीतोऽहं वः स्वकर्म्मणा। इह ये चैव वत्स्यन्ति तपसा ब्रह्मवादिनः।
अपि कापिथ्यिकास्तेषां लोका यथा मम। इह मासान्तपर्य्यन्तो यः करिष्यति मानवः।
वानप्रस्थेन विधिना पूजयन्मां तपोधन। वर्षाणान्तु सहस्रस्य तपसां प्राप्यते फलं। ७९८५
कृत्वा त्रिरात्रं विधिवत्तस्मिने येप्सितां गतिं। अर्कदीपे निवसतो द्विगुणं तद्भविष्यति।
नीचे देशे च भद्रं वो वरमेतं ददाम्यहं। श्वेतवाहननामानं यश्च मां पूजयिष्यति।
सर्व्वो भयचित्तोऽपि गतिं स मम यास्यति। औडुम्बरान् वाटमूलान् द्विजान् कापिथ्यिकानपि।
तथा भृगालवाटीयान्धर्म्मात्मानो दृढव्रतान्। मुनींश्च ब्रह्मवाटीयान् सविशेषेण ये नराः।
पूजयिष्यन्ति सततं ते यास्यन्तीप्सितां गतिं। इत्युक्त्वाऽथ महादेवो भगवान् श्वेतवाहनः। ७९९०
तैरेव सहितः सर्व्वैरुद्रलोकं जगाम वै। जम्बूमार्गं गमिष्यामि जम्बूमार्गे वसाम्यहं।
एवं संकल्पयानोऽपि रुद्रलोके महीयते।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे एकचत्वारिंशदधिकशतोऽध्यायः॥ १४१॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु चतुर्व्वेदः षडङ्गवित्। ब्राह्मणो याज्ञवल्क्यस्य शिष्यो धर्म्मगुणान्वितः।
ब्रह्मदत्तेति विख्यातो विप्रो वाजसनेयिनां। अश्वमेधः कृतस्तेन वसुदेवस्य धीमतः।
स शावस्त्यरदीक्षायां दीक्षितः षट्पुरालये। शावत्त्यायाः शुभे तीरे सुनद्या मुनिसुष्टया। ७९९५
सखा च वसुदेवस्य सहाध्यायी द्विजोत्तमः। उपाध्यायश्च कौरव्य वीरदेवोऽर्यमहात्मनः।
वसुदेवस्तत्र यातो देवक्या सहितः प्रभो। यजमानं षट्पुरस्थं यथा शक्रो बृहस्पतिं।
तत्र ब्रह्मदत्तस्य यज्ञस्य बहुदक्षिणं। उपासन्त मुनिश्रेष्ठा महात्मानो दृढव्रताः।

व्यासोऽहं याज्ञवल्क्यश्च सुमन्तुर्जैमिनिस्तथा । द्युतिमान् जाजलिश्चैव देवलाद्याश्च भारत ।
श्रद्धयाऽनुरूपया युक्तं वसुदेवस्य धीमतः । यथेप्सितान् ददौ कामान् देवकी धर्मचारिणी । ८०००
वासुदेवप्रभावेण जगत्सर्वं महीतले । तस्मिन् सत्रे वर्त्तमाने दैत्याः षट्पुरवासिनः ।
निकुम्भाद्याः समागम्य तमूचुर्वरदर्पिताः । कार्य्यतां यज्ञभागो नः सोमं पास्यामहे वयं ।
कन्याश्च ब्रह्मदत्तो नो यजमानः प्रयच्छतु । दक्षः सन्ततस्य कन्याश्च रूपवत्यो महात्मनः ।
आहूय ताः प्रदातव्याः सर्व्वथैव हि नः श्रुतं । रत्नानि च ब्रह्मदत्तो विशिष्टानि ददातु नः ।
अन्यथा न तु यष्टव्यं वयमाज्ञापयामहे । एतच्छ्रुत्वा ब्रह्मदत्तस्तानुवाच महासुरान् । ८००५
यज्ञभागो न विहितः पुराणे ऽसुरसत्तमाः । कथं सत्रे सोमपानं शक्यं दातुं मया हि वः ।
पृच्छतेह मुनिश्रेष्ठान् वेदभाष्यार्थकोविदान् । कन्या हि मम या देवास्ताश्च संकल्पिता मया ।
अन्तर्वेद्यां प्रदातव्या सद्‌गुणानामसंशयं । रत्नानि तु प्रयच्छामि मान्येनाहं विचिन्त्यतां ।
बलान्नैव प्रदास्यामि देवकीपुत्त्रमाश्रितः । निकुम्भाद्यास्तु रुषिताः पापाः षट्पुरवासिनः ।
यज्ञवाटं विलुलुपुर्ह्रुः कन्याश्च तास्तथा । तं दृष्ट्वा सम्प्रहृत्तन्तु दध्यावानकदुन्दुभिः । ८०१०
वासुदेवं महात्मानं बलभद्रं गदं तथा । शिदिलाऽथ ततः कृष्णः प्रद्युम्नमिदमब्रवीत् ।
गच्छ कन्यापरित्राणं कुरु पुत्त्राद्य मायया । यावद्यादवसैन्येन षट्पुरं यान्त्यहं प्रभो ।
स ययौ षट्पुरं वीरः पितुराज्ञाकरस्तदा । निमेषान्तरमात्रेण गत्वा कार्ष्णि महाबलः ।
कन्यास्ता मायया धीमानाजह्रे स महाबलः । मायामयीश्च कृत्वाऽन्या न्यस्तवान् रुक्मिणीसुतः ।
मा भैरिति च धर्म्मात्मा देवकीमुक्तवांस्तदा । मायामयीस्तु ता हृत्वा सुतास्तस्य दुरासदाः । ८०१५
षट्पुरं विविशुर्दैत्याः परितुष्टा नराधिप । कर्म्म चासार्य्यते तत्र विधिदृष्टेन कर्म्मणा ।
यद्विशिष्टं शतगुणं तदभूच्च नराधिप । एतस्मिन्नन्तरे प्राप्ता राजानश्चैव भारत ।
सत्रे निमन्त्रिताः पूर्व्वं ब्रह्मदत्तेन धीमता । जरासन्धो दन्तवक्रः शिशुपालस्तथैव च ।
पाण्डवा धार्त्तराष्ट्राश्च मालवाः साङ्गणास्तथा । रुक्मी चैवाकृतिश्चैव नीलो नार्म्मद एव च ।
विन्दानुविन्दावावन्त्यौ शल्यः शकुनिरेव च । राजानश्चापरे वीरा महात्मानो दृढायुधाः । ८०२०
आवासिता नातिदूरे षट्पुरस्य च भारत । तान्दृष्ट्वा नारदः श्रीमानचिन्तयदतन्द्रितः ।
सरसं यादवानाञ्च भविष्यति समागमः । अत्र हेतुरयं युद्धे तस्मात्तत् प्रयताम्यहं ।
एवं सञ्चिन्तयित्वा तु निकुम्भभवनं गतः । पूजितः स निकुम्भेन दानवैश्च तथाऽपरैः ।
उपविष्टः स धर्म्मात्मा निकुम्भमिदमब्रवीत् । कथं विरोधं यदुभिः कृत्वा स्वप्स्यथ तु दैत्याः ।
यो ब्रह्मदत्तः स कृष्णः स हि तस्य विभुः सखा । शतानि सप्त भार्य्याणां ब्रह्मदत्तस्य धीमतः । ८०२५
आनीता वसुदेवस्य सुतस्य प्रियकाम्यया । शतद्वयं ब्राह्मणीनां राजन्यानां तथा शतं ।
वैश्यानां शतमेकञ्च शूद्राणां शतमेव च । ताभिः शुश्रूषितो धीमान्दुर्व्वासा धर्म्मवित्तमः ।
तेन तासां वरो दत्तो मुनिना पुण्यकर्म्मणा । एकैकस्यामथो राजन्नेका दुहिता तथा ।

रूपेणानुपमाः सर्व्वा वरदानेन धीमतः। कन्या भवन्ति तनयास्तस्यासुर पुनः पुनः।
सङ्गने सङ्गमे वीर भर्तृभिः शयने सह। सर्व्वपुष्पमयं गन्धं स्रवन्ति च वराङ्गना।
सर्व्वदा यौवने न्यस्ताः सर्व्वाश्चैव पतिव्रताः। सर्व्वा गुणैरप्सरसां गीतनृत्यगुणोदयं।
जानन्ति सर्व्वा दैतेय वरदानेन धीमतः। पुत्राश्च रूपसम्पन्नाः शास्त्रार्थकुशलास्तथा।
स्वे स्वे स्थिता वर्णधर्म्मे यथावदनुपूर्व्वशः। ताः कन्या मैममुख्यानां दत्ताः मायेण धीमता।
अवशेषं शतन्त्वेकं यदानीतं किल त्वया। तदर्थं यादवा वीर योधयिष्यन्ति सर्व्वथा।
साहाय्यार्थन्तु राजानो नियन्तां हेतुपूर्व्वकं। ब्रह्मदत्तसुतार्थञ्च रत्नानि विविधानि च।
दीयन्तां भूमिपालानां साहाय्यार्थं महात्मनां। आतिथ्यं क्रियताञ्चैव ये समेयन्ति वै नृपाः।
एवमुक्ते तया चक्रुरसुरास्तेऽतिहृष्टवत्। लब्ध्वा पञ्चशतं कन्या रत्नानि विविधानि च।
यथार्हेण नरेन्द्रैस्ता विभक्ता भक्तिवत्सला। ऋते पाण्डुसुतान् वीरान् वारिता नारदेन ते।
निमेषान्तरमात्रेण तत्र गत्वा महात्मना। तुष्टैस्तैरसुरा ह्युक्ता राजन् भूमिपसत्तमैः।
सर्व्वकामसमृद्धार्थैर्भवद्भिः स्वगमे स्वयं। अर्च्चिताः स्म यथान्यायं चत्तं किं वः प्रयच्छतु।
चत्तं नार्च्चितपूर्व्वं हि दिव्यैर्भोगैर्भवद्विधैः। निकुम्भोऽथाब्रवीद्धृष्ट चत्वं सुररिपुस्तदा।
सम्वर्त्तयित्वा चत्तस्य माहात्म्य सत्यमेव च। युद्धं नो रिपुभिः सार्द्धं भविष्यति नृपोत्तमाः।
साहाय्यं दातुमिच्छामो भवद्भिस्तत्र सर्व्वथा। एवमस्त्विति तानूचुः चत्रियाः चीणकल्मषाः।
पाण्डवेयानृते वीरान् श्रुतार्थान्नारदाद्विभो। चत्रियाः सन्निविष्टास्ते युद्धार्थं कुरुनन्दन।
पत्न्यस्तु ब्रह्मदत्तस्य यज्ञवाटं गता अपि। कृष्णोऽपि सेनया सार्द्धमाययौ षट्पुरं विभुः।
महादेवस्य वचनमुद्वहन्मनसा नृप। स्थापयित्वा द्वारवत्यामाहुकं पार्थिवं तथा।
स तया सेनया सार्द्धं पौराणां हितकाम्यया। यज्ञवाटस्याविदूरे देवो निविविशे विभुः।
देशे प्रवरकल्याणे वसुदेवप्रचोदितः। दत्तगुल्मप्रतिसरं कृत्वा तं विधिवत् प्रभुः।
प्रद्युम्नमटने श्रीमान् रक्षार्थं विनियुज्य वै।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे द्वाचत्वारिंशदधिकशततमोऽध्यायः ॥१४२॥
॥ वैशम्पायन उवाच ॥ सुहूर्त्ताभ्युदिते सूर्य्ये जनचक्षुषि निर्म्मले। बलः कृष्णः सात्यकिश्च तार्च्यमारुह्य सुंदरा।
बद्धगोधाङ्गुलित्राणा दंशिता युद्धकाङ्क्षिणः। विश्वेश्वरं देवं नमस्कृत्य सुरोत्तमं।
आवर्त्तायां जले स्नात्वा रुद्रेण वरदत्तया। गङ्गायाः कुरुशार्द्दूल रुद्रवाक्येन पुण्यया।
प्रद्युम्नमपि सैन्यस्य वियति स्थाप्य मानदः। रक्षार्थं यज्ञवाटस्य पाण्डवान् विनियुज्य च।
शेषां सेनां गुहाद्वारि भगवान् विनियुज्य च। जयन्तमथ सम्प्रार प्रवरञ्च सताङ्गति।
तावपि तत्पुरेवाय स्वयञ्चापश्यतं तदा। वियत्येव नियुक्तौ तौ प्रद्युम्न इव भारत।
ततः कृष्णस्य वचनादाहतो रणदुन्दुभिः। जलजा मुरजाश्चैव वाद्यान्यथपराणि च।
मकरो रचितो व्यूहः शार्ङ्गेन च गदेन च। शारणश्चोद्धवश्चैव भोगी वैतरणस्तथा।

अनाधृष्टिश्च धर्म्मात्मा विपृथु पृथुरेव च । कृतवर्म्मा सुदंष्ट्रोऽथ विचक्रुररिमर्द्दन. ।
सनत्कुमारो धर्म्मात्मा चारुदेष्णश्च भारत । अनिरुद्धसहायौ तौ पृष्ठानीकं ररक्षतु ।
शेषा यादवसेना तु व्यूहमध्ये व्यवस्थिता । रथैरश्वैर्नरैर्नागैराकुला कुलवर्द्धन । ८०१०
षट्पुरादपि निष्क्रान्ता दानवा युद्धदुर्म्मदा । आरुह्य मेघनादांश्च गर्द्दभानपि हस्तिन ।
मकरान्शिशुमारांश्च हयानपि च भारत । महिषानथ खड्गांश्च उष्ट्रानपि च कच्छपान् ।
एतैरेव रथैर्युक्ता विविधायुधपाणय । किरीटपीठमुकुटैरङ्गदैरपि मण्डिता ।
नानर्द्दमानैर्विविधैस्तूर्य्यैर्नेमिस्वनाकुलै । प्रध्मायमानै शङ्खैश्च महाम्बुदसमस्वनै ।
तासामसुरसेनानां युध्यतीना जनेश्वर । निकुम्भो निर्ययावग्रे देवानामिव वासव । ८०१५
भूमिं द्याञ्च वद्बधिरे दानवास्ते बलोत्कटा । नदन्तो विविधान्नादान् क्ष्वेडन्तश्च पुन पुन ।
राजसेनाऽपि संयत्ता चेदिराजपुरोगमा । असुराणा सहायार्थं निश्रिता जनमेजय ।
दुर्य्योधनभ्रातृशतं चेदिराजानुगाग्रजं । स्थित रथैर्नरव्याघ्र गन्धर्व्वनगरोपमै ।
कठिना नादिनो वीर द्रुपदस्यन्दनास्तथा । रुक्मी चैव कृतिश्चैव तस्थतुर्निश्चितौ रणे।
तालवृक्षप्रतीकाशे धुन्वानौ धनुषी शुभे । शल्यश्च शकुनिश्चोभौ भगदत्तश्च पार्थिव । ८०२०
जरासन्धस्त्रिगर्त्तश्च विराटश्च महोत्तर । युद्धार्थमुद्यता वीरा निकुम्भाद्या जयैषिण: ।
युयुत्समाना यदुभिर्देवैरिव महासुरा । ततो निकुम्भ समरे शरैराशीविषोपमै ।
ततर्द्द समरे सेनां भैमानां भीमदर्शनां । सेनापतिरनाधृष्टिर्मन्दश तत्र यादव ।
ततर्द्द घोरैर्बाणौघैश्चित्रपुङ्खै शिलाशितै । न रथो ऽसुरमुख्यस्य ददृशे न च वाजिन ।
न ध्वजो न निकुम्भस्य सर्व्वं बाणाभिसंवृतं । स परीत्य ततो वीरो निकुम्भो मायिनाम्वर । ८०२५
अस्तम्भयदनाधृष्टिं मायया भैमसत्तमं । स्तम्भयित्वानयद्वीरं गुहां षट्पुरसंज्ञितां ।
रुद्ध्वा चाभ्यगमद्वीरं मायया बलमाश्रित । पुनरेव निकुम्भस्तु कृतवर्म्माणमाहवे।
अनयच्चारुदेष्णञ्च भोजं वैतरणं तथा । सनत्कुमारमाद्यांश्च तथैव निशठोल्मुकौ ।
बहूंश्चैवापरान् भैमान्मायाबलसमाश्रित । न तस्य ददृशे देहो मायाच्छन्नो जनेश्वर ।
नयतो यादवान् घोरां गुहां षट्पुरसंज्ञितां । तद्दृष्ट्वा कदनं घोरं भैमानां भैमवर्द्धन. । ८०३०
चुकोप भगवान् कृष्णो बल सयक एव च । सविशेषं तथा काम शाम्बश्च परवीरहा ।
अनिरुद्धश्च दुर्द्धर्षो भैमास्च बहवोऽपरे । तत. शार्ङ्गायुध शार्ङ्गं कृत्वा सज्यं नरेश्वर ।
दानवेषु प्रसक्तेषु हर्षेष्विव कृताशन । तं दृष्ट्वा दानवा देवमभिदुद्रुवुरीश्वरं ।
कालभा. कालगर्भाभा प्रदीप्तमिव पावकं । समुच्छ्रिता शतघ्नीश्च परिघांश्च महस्रश ।
शूलानि चाशितुल्यानि सदीप्तांश्च परश्वधान् । पर्व्वताग्राणि वृक्षांश्च घोराश्च विपुला शिला. । ८०३५
चिच्छेद च गजाश्वांस्तानथानपि हयानपि । नारायणश्शितैस्तान् सर्व्वान्ददाह सहसेव ।
बाणाग्निना महातेजा जगद्धितकरो हरि: । शारदं सर्व्वं यद्वद्वह्नीर गवां पति. ।

तदद्भुतमपश्यन्त बाणवर्षमरिन्दमः । न सेहिरे ऽसुरा बाणान्नारायणधनुश्च्युतान् ।
वर्षं पर्ज्जन्यविहितं वालुकासेतवो यथा । न शेकुः प्रमुखे स्थातुं कृष्णस्यासुरसत्तमाः ।
व्यादितास्यस्य सिंहस्य वृषभा इव भारत । ते बध्यमानाः कृष्णेन दिवमाचक्रमुस्तदा । ८८९०
जीविताशां वहन्तस्तु नारायणभयार्द्दिताः । तानाकाशगतान्निन्द्रियेर्ज्जयन्त प्रवरस्तदा ।
निजघ्नुः शरैर्घोरैर्ज्वलनार्च्चिःसमैः प्रभो । निपेतुरसुराणान्तु शिरांसि धरणीतले ।
तृणराजफलानीव मुक्तानि शिखरान्तरे । निपेतुर्व्वाहवश्छिन्ना दैत्यानां वसुधातले ।
कालेन पहता वीर पञ्चवक्त्रा इवोरगाः । रौक्मिणेयस्ततः सृष्ट्वा घोरां मायामयीं गुहां ।
अदृश्यन्निष्क्रमद्वीर चलं प्रवेष्टुमुद्यतः । गदेन सह धर्म्मात्मा शारणेन शठेन च । ८८९५
साम्बेन चापरैश्चापि पूर्व्वं येन प्रवेशिता । प्रमथ्य तरसा कर्षं यतन्तं रणमूर्द्धनि ।
जग्राह बलवान् कार्ष्णिं प्रस्फुरन्तं ततस्ततः । विनद्य च गुहा वीरो घोरां मायामयीं नृप ।
दुर्य्योधनञ्च राजानं विराटद्रुपदावपि । शकुनिञ्चैव शल्यञ्च नीलञ्चापि नदीसुतं ।
विन्दानुविन्दावावन्त्यौ जरासन्धञ्च भारत । त्रिगर्त्तान्मालवांश्चैव वाह्लीकांश्च महाबलान् ।
धृष्टद्युम्नादयश्चैव पाञ्चालानस्त्रकोविदान् । तथाकृतिमुवाचेदं मातुलं रुक्मिणं विव च । ८९००
शिशुपालञ्च राजानं भगदत्तञ्च भारत । सम्बन्धञ्च गुरुत्वञ्च मानयामि नराधिपाः ।
गुहामिमां घोररूपां ये न प्रवेशयामि वः । विल्वोदकेश्वरेणाहमाज्ञप्तः शूलपाणिना ।
प्रवेष्टव्या नरेन्द्रास्ते गुहायामिति धीमता । आश्रित्य शाम्बरीं मायां निकुम्भेन महात्मना ।
प्रवेशितान् यादवांश्चैव मोचयिष्यामि सर्व्वथा । इत्युक्तो शिशुपालस्तु राजभिः परिस्तथा ।
शरैस्ततर्द्दतान् भैमान् प्रद्युम्नं सविशेषतः । विल्वोदकेश्वरं देवं रौक्मिणेयो नरान् च । ८९०५
आरभन्नृपतिं वद्धुं शिशुपालं महाबलं । ततः पाशसहस्रैर्हि गृहाय प्रवरोत्तम ।
शैलादिरब्रवीद्वीर रौक्मिणेयं महाबलं । विल्वोदकेश्वरो देवः प्राह त्वां यदुनन्दन ।
सर्व्वं कुरु तथा राजावुक्तस्त्वं भो यथा मया । कन्यार्थं रत्नलुब्धांस्तु बधानेमान्नराधिपान् ।
पाशैस्त्वमेव मोकुञ्च प्रमाणं यदुनन्दन । असुरांस्तु महाबाहो निःशेषान् कर्त्तुमर्हसि ।
एवमेव च वक्तव्यस्त्वया वीर जनार्द्दन । ततः स भगदत्तञ्च शिशुपालञ्च भूमिपं । ८९१०
आकृतिञ्चैव रुक्मिञ्च शेषांश्चान्यान्नराधिपान् । बबन्ध हरदत्तैस्तैः पाशैरुत्तमवीर्य्यधृक् ।
मायामयीं गुहाञ्चैनाननयत् कुरुवर्द्धन । बद्धा च रौक्मिणेयोऽय निश्वसन्त इवोरगान् ।
अनिरुद्धस्य काराय रचितारं स्वमात्मजं । तेषां निरवशेषेण बबन्ध यदुवर्द्धन ।
सेनापतीन् क्षत्रियांश्च कोषाध्यक्षांश्च भारत । हस्त्यश्वरथवृन्दांश्च चकार च तथात्मसात् ।
अव्ययः स तदा हन्तुमसुरानुद्यतः प्रभो । सनत्कुर एवोवाच ब्रह्मदत्त द्विजोत्तम । ८९१५
विस्रब्धं वर्त्ततां कर्म्म मा भैः पश्य धनञ्जय । न देवेभ्यो नासुरेभ्यो नान्येभ्यो द्विजसत्तम ।

भयं हि विद्यते तस्य गोप्तारो यस्य पाण्डवाः । न चासुरैस्तव सुताः स्पृष्टाः स्वल्पपि तेजसा ।
रङ्गवाटे निरोद्ध्यैता मायया निहता मया ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
॥ वैशम्पायन उवाच ॥ बद्धेषु भूमिपालेषु सानुगेषु विशाम्पते । आविवेशासुरांश्चैव कश्मलं जनमेजय ।
दिशः प्रसस्रुस्ते वीरा बध्यमानाः समन्ततः । कृष्णानन्तप्रभृतिभिर्यदुभिर्युद्धदुर्मदैः । ८११०
निकुम्भस्तानथोवाच रुष्टो दानवसत्तमः । भित्त्वा प्रतिज्ञां किं मोहाद्भयार्त्ता याथ विक्लवाः ।
हीनप्रतिज्ञाः कान् लोकान् प्रयास्यथ पलायिताः । अगत्वापचितिं युद्धे ज्ञातीनां कृतनिश्चयाः ।
परत्र जित्वेह भोक्तव्यं रिपून् समरकर्कशान् । हतेन चापि शूरेण वस्तव्यं त्रिदिवे सुखं ।
पलायित्वा गृहं गत्वा कस्य द्रक्ष्यथ वै मुखं । दारान् वक्ष्यथ किञ्चापि धिग्धिक् किं किं न लज्जथ ।
एवमुक्ता निवृत्तास्ते लज्जमाना नृपासुराः । द्विगुणेन च वेगेन युयुधुर्यदुभिः सह । ८११५
उत्सवे युद्धशौण्डानां नानाप्रहरणैर्नृप । ये यान्ति यज्ञवाटन्तु तान्निघ्नन्ति धनञ्जयः ।
यमौ भीमश्च राजा च धर्म्मपुत्त्रो युधिष्ठिरः । तां प्रयातान् जघानेन्द्रिः प्रवरश्च द्विजोत्तमः ।
अथासुरासृक्तोयाढ्या केशशैवलशाद्वला । चक्रकूर्म्मरथावर्त्ता गजशैलानुशोभिनी ।
ध्वजकुन्ततरुच्छन्ना स्तनिताक्रुष्टशब्दिनी । गोविन्दशैलप्रभवा भीरुचित्तप्रमाथिनी ।
अस्थिबुद्बुदफेनाढ्या असिमत्स्यतरङ्गिणी । सुस्राव शोणितनदी नदीव जलदागमे । ८१२०
तान्दृष्ट्वैव निकुम्भस्तु वर्द्धमानांश्च शात्रवान् । हतान् सर्व्वान् सहायांश्च वीर्य्याद्देवोत्पपात ह ।
स वारितो जयन्तेन प्रवरेण च भारत । शरैः कुलिशसङ्काशैर्निकुम्भो रणकर्कशः ।
सन्निवृत्य च दुष्टात्मा परिघेण दुरासदः । प्रवरं ताडयामास स पपात महीतले ।
ऐन्द्रिस्तं पतितं भूमौ बाहुभ्यां परिषस्वजे । विदित्वा चैव सप्राणं हित्वाऽसुरमभिद्रुतः ।
अभिद्रुत्य निकुम्भञ्च निस्त्रिंशेन जघान ह । परिघेणापि दैतेयो जयन्तं समताडयत् । ८१२५
तत्स्तत्राचलद्धात्रं निकुम्भश्चेन्द्रिणाहवे । स चिन्तयामास तदा बध्यमानो महासुरः ।
कृष्णेन सह योद्धव्यं वैरिणा ज्ञातिघातिना । आमयामि किमात्मानमाहवे शक्रसूनुना ।
एवं स निश्चयं कृत्वा तत्रैवान्तरधीयत । जगाम चैव युद्धार्थं यत्र कृष्णो महाबलः ।
तं दृष्ट्वैरावणस्कन्धमास्थितो बलनाशनः । द्रष्टुमभ्यागतो युद्धं जहृषे सह दैवतैः ।
साधु साध्विति पुत्त्रञ्च परितुष्टश्च सस्वजे । प्रवरञ्चापि धर्म्मात्मा सस्वजे मोहवर्ज्जितं । ८१३०
देवदुन्दुभयश्चापि प्रणेदुर्व्योमवाग्यथा । जयमानं रणे दृष्ट्वा जयन्तं रणदुर्ज्जयं ।
ददर्शाथ निकुम्भस्तु केशवं रणदुर्ज्जयं । अर्ज्जुनेन स्थितं सार्द्धं यज्ञवाटाविदूरतः ।
स नादं सुमहत् कृत्वा पक्षिराजमताडयत् । परिघेण सुघोरेण बलं सत्यकमेव च ।
नारायणञ्चार्ज्जुनञ्च भीमञ्चाथ युधिष्ठिरं । यमौ च वसुदेवञ्च शाम्बं कामञ्च वीर्य्यवान् ।

युयुधे मायया दैत्य शीघ्रकारी च भारत। न चैन ददृशु सर्व्वे सर्व्वशस्त्रविशारदा । ८६४५
यदा तु नैवापश्यन्त तदा विल्वोदकेश्वरं। दध्यौ देव हृषीकेश प्रमथाना गणेश्वरं।
ततस्ते ददृशु सर्व्वे प्रभावादतितेजस । विल्वोदकेश्वरस्याशु निकुम्भ मायिनाम्वरं।
कैलासशिखराकारं यमन्तमिव धिष्ठित। आक्रयन्तं रणे कृष्णं वैरिणं ज्ञातिनाशन।
सव्यगाण्डीव एवाय पार्थस्तस्य रथेषुभि । परिघश्चैव गात्रेषु विव्याधैनमयाशक्रन्।
ते वाणास्तस्य गात्रेषु परिघे च जनाधिप। भग्ना शिलाशिता सर्व्वे निपेतु कुञ्चिता क्षितौ। ८६५०
विफलानस्त्रयुक्तांस्तान्दृष्ट्वा वाणान्धनञ्जय । पप्रच्छ केशवं वीर किमेतदिति भारत।
पर्व्वतानपि भिन्दन्ति मम वज्रोपमा शरा । किमिदं देवकीपुत्त्र विस्मयोऽत्र महात्मन।
तमुवाच तत कृष्ण प्रहसन्निव भारत। महद्भूतं निकुम्भोऽयं कौन्तेय शृणु विस्तरं।
पुरा गत्वोत्तरकुरूस्तपस्तेपे महाबल । शतं वर्षसहस्राणां देवशत्रुर्दुरासदः।
अथैन छन्दयामास वरेण भगवान् हर । स वव्रे त्रीणि रूपाणि न वध्यानि सुरासुरै । ८६५५
तमुवाच महादेवो भगवान वृषभध्वज । मम वा ब्राह्मणानाम्वा विष्णोर्व्वा ऽप्रियमाचरन्।
भविष्यसि हरेर्बध्यो न त्वन्यस्य महासुर। ब्रह्मण्योऽहञ्च विष्णुश्च विप्रा न परमा गति ।
स एष सर्व्वशस्त्राणामवध्य पाण्डुनन्दन। त्रिदेहोऽतिप्रमाथी च वरदत्तश्च दानव ।
भानुमत्याऽपहरणे देहोऽस्यैको हतो मया। अवध्यं षटपुरं देहमिदमस्य दुरात्मन ।
दितिं शुश्रूषति त्वेको देहोऽस्य तपसाऽन्वित । अन्यस्तु देहो घोरोऽस्य येनावसति षट्पुरं। ८६६०
एतत्ते सर्व्वमाख्यातं निकुम्भचरितं मया। त्वन्यास्य बधे वीर कथा पश्चाद्भविष्यति ।
तयो कथयतोरेवं कृष्णयोरसुरस्तदा। गुहां षट्पुरसञ्ज्ञां तां विवेश रणदुर्ज्जय ।
अन्विय तस्य भगवान् विवेश मधुसूदन । तां षट्पुरगुहां घोरां दुर्द्धर्षां कुरुनन्दन।
चन्द्रसूर्य्यप्रभाहीनां ज्वलन्ती स्वेन तेजसा। सुखदु खोष्णशीतानि प्रयच्छन्ती यथेप्सितं।
तत्र प्रविश्य भगवानपश्यत्तान् जनाधिपान्। युयुधे सह घोरेण निकुम्भेन जनाधिप। ८६६५
कृष्णस्यानुप्रविष्टास्तु बलाद्या यादवास्तथा। प्रविष्टाश्च तथा सर्व्वे पाण्डवाश्च महात्मन ।
समेतास्तु प्रविष्टास्ते कृष्णस्यानुमतेन वै। युयुधे स तु कृष्णेन रौक्मिणेय प्रचोदित ।
आनयद्यादवान सर्व्वान यानयं बान्धवान् पुरा। ते मुक्ता रौक्मिणेयेन प्राप्ता यत्र जनार्द्दन ।
प्रहृष्टमनस सर्व्वे निकुम्भवधकाङ्क्षिण । राजानो वीर मुञ्चेति पुन काममयाव रेत्।
मुमोच चाथ तान् वीरान् रौक्मिणेय प्रतापवान्। अधोमुखमुखा सर्व्वे बद्धमौना नराधिपा। ८६७०
लज्जयाऽभिप्लुता वीरास्तस्थुर्नष्टश्रियस्तदा। निकुम्भमपि गोविन्द प्रयतन्त जयम्प्रति।
योधयामास भगवान् घोरमात्मरिपु हरि । परिघेणाहत कृष्णो निकुम्भेन स्तन विभो।
गदया चापि कृष्णेन निकुम्भस्ताडितो स्तने। तावुभौ मोहमापन्नौ सुप्रहारहतौ तदा।
तत प्रव्यथितान् दृष्ट्वा पाण्डवांश्चाथ यादवान्। जेपुर्मुनिगणास्तत्र कृष्णस्य हितकाम्यया।

तुष्टुवुश्च महात्मानं वेदप्रोक्तैः स्तवैस्तथा । ततः प्रत्यागतप्राणो भगवान् केशवस्तदा । ८१७५
दानवश्च पुनर्वीरावुद्यतौ समरं प्रति । वृषभाविव नर्दन्तौ गजाविव च भारत ।
शालावृकाविव क्रुद्धौ प्रहरन्तौ रणोत्कटौ । अथ कृष्णं तदोवाच नृप वागशरीरिणी ।
चक्रेण शमयस्वैनं देवब्राह्मणकण्टकं । इतिहोवाच भगवान् देवो विल्वोदकेश्वरः ।
धर्म्मं यशश्च विपुलं प्राप्नुहि त्वं महाबल । तथेत्युक्त्वा नमस्कृत्वा लोकनाथं कृताञ्जलिः ।
सुदर्शनं मुमोचाथ चक्रं दैत्यकुलान्तकं । तन्निकुम्भस्य चिच्छेद शिरः प्रवरकुण्डलं । ८१८०
नारायणभुजोत्सृष्टं सूर्य्यमण्डलवर्च्चसं । तत् पपात शिरस्तस्य भूमौ ज्वलितकुण्डलं ।
मेघमत्तो गिरेः शृङ्गान्मयूर इव भूतले । निकुम्भे निहते तस्मिन्देवो विल्वोदकेश्वरः ।
तुतोष च नरव्याघ्र जगत्त्रासकरे विभौ । पपात पुष्पवृष्टिश्च शक्रसृष्टा नभस्तलात् ।
देवदुन्दुभयश्चैव प्रणेदुररिनाशन । ननन्द च जगत् कृत्स्नं मुनयश्च विशेषतः ।
दैत्यकन्याश्च भगवान् यदुभ्यः शतशो ददौ । क्षत्रियाणाञ्च भगवान् सान्त्वयित्वा पुनः पुनः । ८१८५
रत्नानि च विचित्राणि वासांसि प्रवराणि च । रथानां वाजियुक्तानां षट्सहस्राणि केशवः ।
अददत् पाण्डवेयेभ्यः प्रीतात्मा गदपूर्व्वजः । तदेव चाथ प्रवरं षट्पुरं पुरवर्द्धनः ।
दिजाय ब्रह्मदत्ताय ददौ तार्क्ष्यवरध्वजः । सत्रे समाप्ते च तदा शङ्खचक्रगदाधरः ।
विसर्ज्जयित्वा तत्त्वज्ञः पाण्डवांश्च महाबलः । विल्वोदकेश्वरस्याथ समाजमकरोत् प्रभुः ।
मांसस्तूपशताकीर्णं बेक्रन्नं व्यञ्जनाकुलं । नियुद्धकुशलान्मल्लान् देवो मल्लप्रियस्तदा । ८१९०
योधयित्वा ददौ भूरि वित्तं वस्त्राणि चात्मवान् । मातापितृभ्यां सहितो यदुभिश्च महाबलः ।
अभिवाद्य ब्रह्मदत्तं ययौ द्वारवतीं पुरीं । स विवेश पुरीं रम्यां हृष्टपुष्टजनाकुलां ।
पुष्पचित्रपथां वीरो वन्द्यमानो नरैः पथि । इमं यः षट्पुरवधं विजयं चक्रपाणिनः ।
शृणुयाद्वा पठेद्वाऽपि स युद्धे जयमाप्नुयात् । अपुत्रो लभते पुत्रमधनो लभते धनं ।
व्याधितो मुच्यते रोगाद्बद्धश्चाप्यथ बन्धनात् । इदं पुंसवनं प्रोक्तं गर्भाधाने च भारत । ८१९५
श्राद्धेषु पठितं सम्यगक्षय्यकरणं स्मृतं ।

इदममरवरस्य भारत प्रथितबलस्य जयं महात्मनः । सततमिह हि यः पठेन्नरः सुगतिमितो भजते गतज्वरः ।
मणिकनकविचित्रपाणिपादो निरतिशयार्कगुणोऽरिहादिमध्यः । चतुरुदधिशयश्चतुर्विधात्मा जयतिजगत्पुरुषः सहस्रनामा ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे चतुश्चत्वारिंशदधिकशततोऽध्यायः ॥ १४४ ॥

॥ जनमेजय उवाच ॥ श्रुतोऽयं षट्पुरवधो रम्यो मुनिवरोत्तम । पुरोक्तमन्धकवधं वैशम्पायन कीर्त्तय ।
भानुमत्याश्च हरणं निकुम्भस्य वधन्तथा । प्रब्रूहि वदतां श्रेष्ठ परं कौतूहलं हि मे । ८२००
॥ वैशम्पायन उवाच ॥ तेषु तेषु च दैत्येषु निहतेषु च विष्णुना । तपसा राधयामास मारीचं कश्यपं दितिः ।
तपसा कालयुक्तेन तया शुश्रूषया मुने । आनुकूल्येन च तया माधुर्य्येण च भारत ।
परितुष्टः कश्यपस्तु तामुवाच तपोधनां । परितुष्टोऽस्मि ते भद्रे वरं वरय सुव्रते ।

॥ दितिरुवाच ॥ हतपुत्राऽस्मि भगवन् देवैर्द्धर्म्मभृताम्बर। अवध्यं पुत्रमिच्छामि देवैरमितविक्रमं।
॥ कश्यप उवाच ॥ अवध्यस्ते सुतो देवि दाक्षायणि भवेदिति। देवानां संशयो नात्र कश्चित् कमललोचने। ८९१५
देवदेवमृते रुद्रं तस्य न प्रभवाम्यहं। आत्मा ततस्ते पुत्रेण रक्षितव्यो हि सर्व्वथा।
अन्वालभत तां देवीं कश्यपः सत्यवागथ। अस्पृष्टोदरदेशे तु सा पुत्रं सुषुवे ततः।
सहस्रबाहुं कौरव्य सहस्रशिरसं तथा। द्विसहस्रेक्षणञ्चैव तावच्चरणमेव च।
स व्रजत्यन्धवद्यस्मादनन्धोऽपि हि भारत। तमन्धकोऽयं नाम्नेति प्रोचुस्तत्र निवासिनः।
अवध्योऽस्मीति लोकान् स सर्व्वान् बाधति भारत। हरत्यपि च रत्नानि सर्व्वाण्यात्मबलाश्रयात्। ८९२०
बाधयत्यात्मवीर्य्येण निरुद्धाप्सरसां गणान्। स्वेच्छन्मूर्च्छितोऽत्यर्थं सर्व्वलोकभयङ्करः।
परदारापहरणं पररत्नविलोपनं। चकार सततं मोहादन्धकः पापनिश्चयः।
त्रैलोक्यविजयं कर्त्तुमुद्यतः स तु भारत। सहायैरसुरैः सार्द्धं बहुभिः सर्व्वशर्धिभिः।
तं श्रुत्वा भगवान् शक्रः कश्यपं पितरं ब्रवीत्। अन्धकेनेदमारब्धमीदृशं मुनिसत्तम।
आज्ञापय विभो कार्य्यमस्माकं समनन्तरं। यवीयसः कथं नाम सोढव्यं स्यान्मुने मया। ८९२५
दृष्टपुत्रे प्रहर्त्तव्यं कथं नाम मया विभो। इहात्रभवती कुर्य्यान्मन्युं मयि हते मुने।
देवेन्द्रवचनं श्रुत्वा कश्यपोऽथाब्रवीन्मुनिः। वारयिष्यामि देवेन्द्र सर्व्वथा भद्रमस्तु ते।
अन्धकं वारयामास दित्या सह तु कश्यपः। त्रैलोक्यविजयाद्वीर कृच्छ्रकृच्छ्रेण भारत।
वारितोऽपि स दुष्टात्मा बाधत्येव दिवौकसः। तैस्तैरुपायैर्दुष्टात्मा प्रमथ्य च तथा परान्।
बभञ्ज कानने वृक्षानुद्यानानि च दुर्म्मतिः। उच्चैःश्रवःसुतानश्वान् बलादश्वानयद्दिव। ८९३०
नागान् दिग्गजसुतान् दिव्यानपि च भारत। बलाद्धरति देवानां पश्यतां बलदर्पितः।
देवानाप्याययन्त्येव ये यज्ञास्तपसा तथा। तेषाञ्चकार विध्वंसं दुष्टात्मा देवकण्टकः।
नेशुर्धर्म्मास्त्रयो वर्णास्तैर्नैव तपांस्यपि। अन्धकस्य भयाद्राजन् यज्ञविघ्नानि कुर्व्वतः।
तस्येच्छया वाति वायुरादित्यश्च तपत्युत। चन्द्रमाः सहनक्षत्रो दृश्यते नैव वा पुनः।
न व्रजन्ति विमानानि विहायसि प्रभो प्रभो। अन्धकस्यातिघोरस्य बलदृप्तस्य दुर्म्मतेः। ८९३५
गिरौ स्वारवषट्कारं जगद्घोर तदाऽभवत्। अन्धकस्यातिघोरस्य भयात् कुरुकुलोद्वह।
कुरूनथोत्तरान् पापो द्रावयामास भारत। भद्राश्वान् केतुमालांश्च जम्बूद्वीपांस्तथैव च।
मानयन्ति च तं देवा दानवाश्च दुरासदाः। भूतानि च तथाऽन्यानि समर्थान्यपि सर्व्वथा।
ऋषयो बध्यमानास्तु समेता ब्रह्मवादिनः। अचिन्तयन्नन्धकस्य वधं धर्म्मभृताम्बर।
तेषां बृहस्पतिर्मध्ये धीमानिदमथाब्रवीत्। नास्य रुद्रादृते मृत्युर्विहितो वै कश्यपेन। ८९४०
तथा वरे दीयमाने काश्यपेनाभिमन्त्रितं। नाहं रुद्रात् परित्रातुं शक्त इत्येव धीमता।
तमुपायं चिन्तयामः सर्व्वे येन सनातनः। जानीयात् सर्व्वभूतानि पीड्यमानानि शङ्करः।
विदितार्थो हि भगवान् सर्व्वस्य जगतः प्रभुः। अस्मत्प्रमार्ज्जनं देवः करिष्यति सतां गतिः।

शतं हि देवदेवस्य भवस्य जगतो गुरोः । सन्तोऽसङ्ख्या रक्षितव्या ब्राह्मणास्तु विशेषतः ।
ते वयं नारदं सर्व्वे प्रयामः शरणं द्विजं । उपायं वेत्स्यते तत्र वयस्यो हि भवस्य स । ८१३५
बृहस्पतिवचः श्रुत्वा सर्व्वे तेऽथ तपोधनाः । त्राणार्थं नारदं प्रोचुस्तांस्तथेति स चोक्तवान् ।
ऋषिष्वथ तु यातेषु यत्कार्य्यं नारदो मुनिः । विचार्य्य मनसा विद्वानिति कार्य्यं स दृष्टवान् ।
स देवदेवं भगवान् द्रष्टुं मुनिरथाययौ । मन्दारवनमध्यस्थो यत्र नित्यं वृषध्वजः ।
स तत्र रजनीमेकामुषित्वा मुनिसत्तमः । मन्दाराणां वने रम्ये दयितः शूलपाणिनः ।
आजगाम पुनः स्वर्गं लब्ध्वाऽनुज्ञां वृषध्वजात् । मन्दारपुष्पैः सुकृतां मालामाबध्य भारत । ८१४०
ग्रथितां सविशेषान्तां सर्व्वगन्धोत्तमोत्तमां । सान्तानमाल्यदामञ्च तैरेव कुसुमैः कृतं ।
तच्च कण्ठे समासज्य महागन्धं नराधिप । आययावन्धको यत्र दुरात्मा बलदर्पितः ।
अन्धकस्त्वथ तं दृष्ट्वा गन्धमाघ्राय चोत्तमं । सन्तानकानां स्रग्मालां महागन्धां महामुने ।
कुत्रेयं पुष्पजातिर्व्वा कमनीया तपोधन । गन्धान् वर्णांश्च तांस्तान् हि भोः पुष्यति मुहुर्मुहुः ।
स्वर्गे सन्तानकुसुमान्यतिवर्त्तन्ति सर्व्वथा । कः प्रभुस्तस्य देशस्य शक्यं वानयितुं मुने । ८१४५
आचक्ष्व यद्यनुग्राह्या वयं ते देवतातिथे । तमुवाच मुनिश्रेष्ठः प्रहसन्निव भारत ।
यद्वाय दक्षिणे हस्ते महतस्तपसो निधिः । मन्दरः पर्व्वतश्रेष्ठो वीर कामगमं वनं ।
तत्र चैवंविधं पुष्पं भोः सृष्टिः शूलपाणिनः । न तु तत्र वने कश्चिदच्छन्देन महात्मनः ।
प्रवेष्टुं लभते तद्वै रक्षन्ति प्रवरोत्तमाः । नानाप्रहरणा घोरा नानावेशा दुरासदाः ।
अवध्याः सर्व्वभूतानां महादेवाभिरक्षिताः । नित्यं प्रक्रीडते तत्र सोमः सप्रवरो हरः । ८१५०
मन्दारद्रुमषण्डेषु सर्व्वात्मा सर्व्वभावनः । तपोविशेषैराराध्य हरं त्रिभुवनेश्वरं ।
शक्य मन्दारपुष्पाणि प्राप्तुं काश्यपवंशज । । स्त्रीरत्नमणिरत्नानि यानि चान्यानि चाप्यथ ।
काङ्क्षितानि फलन्ति स्म ते द्रुमा हरवल्लभाः । न तत्र सूर्य्यः सोमोऽथ तपत्यतुलविक्रम ।
स्वयम्प्रभं तरुवनं तद्धि दुःखविवर्ज्जितं । तत्र गन्धान् स्रवन्त्यन्ये वस्त्राण्यन्ये महाद्रुमाः ।
वासांसि विविधान्यन्ये सुगन्धीनि महाबल । भक्ष्यं भोज्यञ्च पेयञ्च चोष्यं लेह्यं तथैव च । ८१५५
लभ्य स्ववने तेभ्यो विविधं मनसेप्सितं । पिपासा वा बुभुक्षा वा ग्लानिश्चिन्ताऽपि वाऽनघ ।
स मन्दारवने वीर भवतीत्युपधार्य्यतां । न ते वर्णयितुं शक्या गुणा वर्षशतैरपि ।
गुणा ये तत्र वर्त्तन्ते स्वर्गाद्बहुगुणोत्तराः । अतीव विशेषांल्लोकान् स महेन्द्रान्न संशयः ।
एकाहमपि यस्तत्र वसेद्वै दितिजोत्तम । स्वर्गस्यापि हि तत् स्वर्गं सुखानामपि तत् सुखं ।
सम्भव जगतः सर्व्वमिति मे धीयते मनः । ८१६०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकवधे पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
॥ वैशम्पायन उवाच ॥ अन्धको नारदवचः श्रुत्वा तत्त्वेन भारत । मन्दरं पर्व्वतं गन्तुं मनो दध्ने महासुरः ।
सोऽसुरान् सुमहातेजाः समानीय महाबलः । जगाम मन्दरं क्रुद्धो महादेवालयं तदा ।

तं महाभ्रप्रतिच्छन्नं महौषधिसमाकुलं। नानासिद्धसमाकीर्णं महर्षिगणसेवितं।
चन्दनागुरुदृक्षाढ्यं सरलद्रुमसङ्कुलं। किन्नरोद्गीतरम्यञ्च सङ्गनागसमाकुलं।
वातोद्धूतैर्वनैः फुल्लैर्नृत्यन्तमिव च क्वचित्। प्रस्रुतैर्धातुभिश्चित्रैर्विलिप्तमिव च क्वचित्। ८२६५
पक्षिस्वनैः सुमधुरैर्नदन्तमिव च क्वचित्। हंसैः षट्चरणैः कीर्णं प्रपतद्भिरितस्ततः।
महाबलैश्च महिषैश्चरद्भिर्दैत्यनाशनैः। चन्द्रांशुविमलैः सिंहैर्भूषितं हिमसच्चयं।
मृगराजशताकीर्णं मृगवृन्दनिषेवितं। स मन्दरगिरिं प्राह रूपिणं बलदर्पितः।
वेत्सि त्वं हि यथाऽवध्यो वरदानादहं पितुः। मम चैव वशे सर्व्वं त्रैलोक्यं सचराचरं।
प्रतियोद्धुं न मां कश्चिदिच्छत्यपि गिरे भयात्। पारिजातवनञ्चास्ति तव मानो महागिरे। ८२७०
सर्व्वकामप्रदैः पुष्पैर्भूषितं रत्नमुत्तमं। तदाचक्ष्वोपभोक्ष्यामि तद्वनं तव सानुजं।
किं करिष्यसि क्रुद्धस्त्वं मनो हि त्वरते मम। चातारं नात्र पश्यामि मया खल्वर्द्दितस्य ते।
इत्युक्तो मन्दरस्तेन तत्रैवान्तरधीयत। ततोऽन्धकोऽतिहर्षितो वरदानेन दर्पितः।
मुमोच नादं सुमहदिदं वचनमब्रवीत्। याच्यमानो मया नाम यस्मात्त्वं बहुमन्यसे।
अहं चूर्णीकरोमि त्वां बलं पर्व्वत पश्य मे। एवमुक्त्वा गिरेः शृङ्गमुत्पाट्य बहुयोजनं। ८२७५
निष्पिपेष गिरेस्तस्य शृङ्गेऽयान्यत्र वीर्य्यवान्। सह तैरसुरैः सर्व्वैर्वरदानेन दर्पितः।
तं प्रच्छन्ननदीजालं भज्यमानं महागिरिं। विदित्वा भगवानुद्र्यकारानुग्रहं गिरेः।
अविशीर्णतरं वीर मत्तद्विपमृगायुतं। नदीजालैर्व्विङ्गतरैरायुतं चित्रकाननं।
नभस्युनः पुरा यदत्तदेव विराजते। अथ देवप्रभावेण शृङ्गाण्युत्पाटितानि तु।
विप्राणि चासुरानेव घ्नन्ति घोराणि भारत। विप्रा ये प्रपलायन्ते शृङ्गाणि तु महासुराः। ८२८०
शृङ्गैस्तेस्ते स्म बध्नन्ति पर्व्वतस्य जनाधिप। ये त्वस्यास्त्वसुरास्तत्र तिष्ठन्ति गिरिसानुषु।
शृङ्गैस्ते न स्म बध्यन्ते मन्दरस्य महागिरेः। ततोऽन्धकस्तदा दृष्ट्वा सेनां तां मृदितां तया।
कुपितः सुमहानादं नदित्वेदं तदाऽब्रवीत्। आह्वये तं वनं यस्य युद्धार्थमुपतिष्ठतु।
किं त्वयाऽचल युद्धेन हताः स्म च्छद्मना रणे। एवमुक्ते त्वन्धकेन वृषभेण महेश्वरः।
संप्राप्तः शूलमुद्यम्य देवोऽन्धकजिघांसया। प्रमथानां गणैश्चैव वृतो वै बहुलोचनः। ८२८५
तथा भूतगणैश्चैव धीमान् भूतगणेश्वरः। प्रचकम्पे ततः कृत्स्नं त्रैलोक्यं कुपिते हरे।
सिन्धवश्च प्रतिस्रोतमूहुः प्रज्वलितोदकाः। जग्मुर्दिशोऽपि दाहाय सर्व्वतो हरतेजसा।
युयुधुश्च ग्रहाः सर्व्वे विपरीता जनाधिप। चेलुश्च गिरयस्तत्र कान्ति कुरुकुलोद्वह।
प्रववर्षाथ पर्ज्जन्यः सधूमाङ्गारवृष्टयः। उष्णभावश्चन्द्रमा दाभीत् सूर्य्यः शीतप्रभस्तथा।
न सह्यापि विदुस्तत्र मुनयो ब्रह्मवादिनः। वडवाः सुषुवुर्गा वै गावोऽश्वानपि चानघ। ८२९०
पेतुश्च य मेदिन्यामच्छिन्ना भग्नमात् हताः। या धन्ते वृषभा गाव गावश्चारुरुहुः शम्।
रासभा यातुधानाश्च पिशाचाश्चापि सर्व्वशः। विपरीतं शरद्दृष्ट्वा सह देवतयागतं।

मुमोच भगवाञ्छूलं प्रदीप्ताग्निसमप्रभं । तत् पपात हरोत्सृष्टमन्धकोरसि दुर्द्धरं ।
भस्म चाकरोद्रौद्रमन्धकं साधुकण्टकं । ततो देवगणाः सर्व्वे मुनयश्च तपोधनाः ।
शङ्करं तुष्टुवुश्चैव जगच्चैव निर्वृतिं । देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात ह । ८२९५
त्रैलोक्यं निर्वृतञ्चासीन्नरेन्द्र विगतज्वरं । प्रजगुर्देवगन्धर्व्वा ननृतुश्चाप्सरोगणाः ।
जेपुश्च ब्राह्मणा वेदानीजुश्च क्रतुभिस्तथा । ग्रहाः प्रकृतिमापेदुरूहुर्नद्यो यथा पुरा ।
न जज्वाल जले वह्निराशाः सर्व्वाः प्रसेदिरे । मन्दरः पर्व्वतश्रेष्ठः पुरेव विरराज ह ।
श्रिया परमया जुष्टः सर्व्वतेजःसमुच्छ्रयात् । रेमे सोमश्च भगवान् पारिजातवने हरः ।
सुप्रचारान् सुरान् कृत्वा शक्रादीन् धर्म्मतः प्रभुः । ८३००

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकवधे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

॥ जनमेजय उवाच ॥ मुनेऽन्धकवधः श्राव्यः श्रुतोऽयं खलु भो मया । शान्तिस्त्रयाणां लोकानां कृता देवेन धीमता ।
निकुम्भस्य हतं देहं द्वितीयं चक्रपाणिना । यदर्थञ्च यथा चैव तद्भवान् वक्तुमर्हति ।
॥ वैशम्पायन उवाच ॥ श्रद्दधानस्य राजर्षे वक्तव्यं भवतोऽनघ । चरितं लोकनाथस्य हरेरमिततेजसः ।
द्वारवत्यां निवसतो विष्णोरतुलतेजसः । समुद्रयात्रा संप्राप्ता तीर्थे पिण्डारके नृप ।
उग्रसेनो नरपतिर्वसुदेवश्च भारत । निक्षिप्तौ नगराध्यक्षौ शेषाः सर्व्वे विनिर्गताः । ८३०५
पृथग्बलः पृथग्धीमान् लोकनाथो जनार्द्दनः । गोष्ठ्यः पृथक् कुमाराणां नृदेवामरतेजसां ।
गणिकानां सहस्राणि निःसृतानि नराधिप । कुमारैः सह वार्ष्णेयैरूपवद्भिः स्वलङ्कृतैः ।
दैत्याधिवासे निर्ज्जित्य यदुभिर्दृढविक्रमैः । वेश्या निवेशिता वीर द्वारवत्यां सहस्रशः ।
सामान्यास्ताः कुमाराणां क्रीडानार्य्यो महात्मनां । इच्छाभोग्या गुणैरेव राजन्या वेशयोषितः ।
स्थितिरेषा हि भैमानां कृताः कृष्णेन धीमता । स्त्रीनिमित्तं भवेद्वैरं मा यदूनामिति प्रभो । ८३१०
रेवत्या चैकया सार्द्धं बलो रेमे ऽनुकूलया । चक्रवाकानुरागेण यदुश्रेष्ठः प्रतापवान् ।
कादम्बरीपानकलो भूषितो वनमालया । चिक्रीड सागरजले रेवत्या सहितो बलः ।
षोडशस्त्रीसहस्राणि जले कमललोचनः । रमयामास गोविन्दो वेशरूपेण सर्व्वदृक् ।
अहमिष्टा मया सार्द्धं जले वसति केशवः । इति ता मेनिरे सर्व्वाः राजन्नारायणस्त्रियः ।
सर्व्वाः सुरतसंहृष्टाः सर्व्वाः सुरततर्पिताः । मानमूहुश्च ताः सर्व्वा गोविन्दबहुमानजं । ८३१५
अहमिष्टाऽहमिष्टेति स्निग्धे पश्चिमे तदा । नारायणस्त्रियः सर्व्वा मुदा शशाधिरे शुभाः ।
करजदशनचिह्नानि कुचाधरगतानि ताः । दृष्ट्वा दृष्ट्वा जहृषिरे दर्पणेष्वमलेक्षणाः ।
गोत्रमुद्दिश्य कृष्णस्य जगिरे कृष्णयोषितः । पिबन्त्य इव कृष्णस्य नयनैर्वदनाम्बुजं ।
कृष्णार्पितमनोदृष्ट्यः कान्ता नारायणस्त्रियः । मनोहरतरा राजन्नभवन्नेकनिश्चयाः ।
एकार्पितमनोदृष्ट्यो मैथ्यौ तायकिरेऽङ्गनाः । नारायणेन देवेन तर्प्यमाणमनोरथाः । ८३२०
शिरांसि गर्व्वितान्यूहुः सर्व्वा निरवशेषतः । यासभं केशवमयं बहुमन्यचारुदर्शनाः ।

ताभिस्तु सह चिक्रीड सर्व्वाभिर्हरिरात्मवान् । वैश्वरूप्येण विधिना समुद्रे विमले जले ।
उवाह सर्व्वगन्धाढ्यं स्वच्छं वारि महोदधिः । तोयञ्चालवणं वीर वासुदेवस्य शासनात् ।
गुल्फदघ्नं जानुदघ्नमूरुदघ्नमथापि वा । नार्य्यस्ताः स्तनदघ्नं वा जलं समभिकाङ्क्षितं ।
सिषिचुः केशवं पत्न्यो धारा इव महोदधिं । सिषेच ताश्च गोविन्दो मेघः फुल्लता इव । ८२१५
अवलम्ब्यापराः कण्ठे हरिं हरिणलोचनाः । उपगूहस्व मां वीर पतामीत्यब्रुवन् स्त्रियः ।
काश्चित् काष्ठमयैस्तेरुः प्लवैः सर्व्वाङ्गशोभनाः । क्रौञ्चबर्हिणनागानामाकारसदृशैः स्त्रियः ।
मकराकृतिभिश्चान्या मीनाभैरपि चापराः । बहुरूपाकृतिधरैः पुप्लुवुश्चापराः स्त्रियः ।
स्तनकुम्भैस्तथा तेरुः कुम्भैरिव तथाऽपराः । सलिले तु समुद्रस्य हर्षयन्त्यो जनार्द्दनं ।
रराम सह रुक्मिण्या जले तस्मिन्मुदा युतः । येनैव कार्य्ययोगेन रमन्यमरसत्तमः । ८२२०
तत्तदेव हिताश्चक्रुर्मुदा नारायणस्त्रियः । तनुवस्त्रावृतास्तन्व्यो लीलायन्त्यस्तथाऽपराः ।
चिक्रीडुर्वासुदेवस्य जले जलजलोचनाः । यस्या यस्यास्तु यो भावस्तां तेनैव केशवः ।
अनुप्रविश्य भावज्ञो निनायात्मवशं वशी । हृषीकेशोऽपि भगवान् हृषीकेशः सनातनः ।
बभूव देशकालेन कान्तावशगतः प्रभुः । कुलशीलसमोऽस्माकं योग्योऽयमिति मेनिरे ।
देशरूपेण वर्त्तन्तमङ्गनास्ता जनार्द्दनं । दृष्ट्वा दाक्षिण्ययुक्तन्तु स्मितपूर्व्वाभिभाषिणं । ८२२५
कृष्णं भार्य्याश्चक्रमिरे भक्त्या च बहुमेनिरे । श्रयन्तीष्च कुमाराणां प्रकाशं स्त्रीगणैः सह ।
अलञ्चक्रुर्जलं वीरा सागरस्य गुणाकराः । गीतनृत्यविधिज्ञानां तासां स्त्रीणां जनेश्वर ।
तेजसा व्याहतानान्ते दाक्षिण्यात्तस्थिरे वशे । दृष्ट्वा नृत्यानुगीतानि तथा स्वाभिनयान्यपि ।
तूर्य्याण्युत्तमनारीणां मुमुदुर्यदुपुङ्गवाः । पञ्चचूडां ततः कृष्णः कौवेरीश्च वराप्सराः ।
माहेन्द्रीश्चानयामास वैश्वरूप्येण हेतुना । ताः शौवा चाप्रमेयात्मा सान्त्वयित्वा जगत्प्रभुः । ८२३०
उत्थापयित्वा प्रणताः कृताञ्जलिपुटास्तदा । क्रीडायुवत्यो भैमानां प्रविशध्वमशङ्किताः ।
मत्प्रियार्थं वरारोहा रमयध्वञ्च यादवान् । दर्शयध्वं गुणान् सर्व्वान्नृत्यगीतैरहःसु च ।
तथाऽभिनययोगेषु वाद्येषु विविधेषु च । एवं कृते विधास्यामि श्रेयो वो मनसेप्सितं ।
मच्छरीरसमा ह्येते सर्व्वे निरवशेषतः । शिरसाज्ञां तु ताः सर्व्वाः प्रतिगृह्य हरेस्तदा ।
क्रीडायुवत्यो भैमानां ताः प्रविष्टाऽप्सरोवराः । ताभिः प्रविष्टमात्राभिर्द्योतितः स महार्णवः । ८२३५
सौदामिनीभिर्नभसि घनवृन्द इवानघ । ता जले स्थलवत् स्थित्वा जलवाद्यान्यवादयन् ।
चक्रुरभिनयं सम्यक् स्वर्गावास इवाङ्गनाः । गन्धैर्माल्यैश्च ता दिव्यैर्वस्त्रैश्चायतलोचनाः ।
हेलाभिर्हासभावैश्च जह्रुर्भैममनांस्यथ । कटाक्षैरिङ्गितैर्हासैः क्वेलिरोषैः प्रसादितैः ।
मनोऽनुकूलैर्भैमानां समाजह्रुर्मनांसि ताः । उत्क्षिप्योत्क्षिप्य चाकाशं यातस्कन्धान् धर्षय ताम् ।
मृदिरावमगाम् भैमानानयन्ति वराङ्गनाः । कृष्णोऽपि तेषां प्रीत्यर्थं विशङ्कं पिबति प्रभुः । ८२४०

आभाषितं किञ्चिदिवापलेच्य नादानुनादान् भगवान्मुमोच । हसन् विहारांश्च चकार हर्षादाप्यागमं कृष्णविनोदनार्थं ।
कृष्णाज्ञया सातिशयानि तत्र यथानुरूपाणि ददुर्युवत्यः । रत्नानि वस्त्राणि च रूपवन्ति जगत् प्रधानानि नृदेव
सूनो । ८४१०
माल्यानि च स्वर्गसमुद्भवानि सन्तानदामान्यथ मुक्तकानि । सर्व्वर्तुकान्यप्यनयंस्तदानीं ददुर्हरेरिङ्गितकालतज्ज्ञाः ।
राधावसाने त्वथ गृह्य हस्ते महामुनिं नारदमप्रमेयं । पपात कृष्णो भगवान् समुद्रे साचाजितीञ्चार्ज्जुनमेव चाथ ।
उवाच चामेयपराक्रमोऽथ शैनेयमीषत्प्रहसन् पृथुश्रीः । द्विधाकृताः स्मः पततां स्म भूत्वा क्रीडाजले नोऽस्तु सहाङ्गनाभिः ।
सरेवतीकोऽस्तु सलोऽर्द्धनेता पुत्रा मदीयाश्च सहार्द्धभैमाः । भैमार्द्धमेवाथ बलात्मजाश्च मत्पक्षिणः सन्तु समुद्रतोये ।
आज्ञापयामास ततः समुद्रं कृष्णः स्थिरं प्राञ्जलिनं प्रतीत. । सुगन्धतोयो भव मृष्टतोयस्तथा भव ग्राहविवर्ज्जितश्च । ८४१५
दृश्या च ते रत्नविभूषिता च सा वेलिका भूरथ पत्सुखा च । मेनानुकूलश्च जनस्य यत्तत् प्रयच्छ विज्ञास्यसि मत्प्रभा
वात् ।
भवस्व पेयोऽप्यथ वाऽप्यपेयो यो यस्य सर्व्वस्य मनोनुकूल. । वैदूर्य्यमुक्तामणिहेमचित्रा भवन्तु मत्स्यास्त्वयि सौम्यरूपाः ।
विसृज्य रत्नं कमलोत्पलानि सुगन्धिमुख्यर्परसत्तमाणि । षट्पादजुष्टानि मनोहराणि चारूणि कीलालसमन्वितानि ।
मैरेयमाध्वीकसुरासवानां कुम्भांश्च पूर्णान् स्थपयस्व तोये । जाम्बुनदं पाननिमित्तमेषां पात्रं पयुर्थेषु ददस्व भैमाः ।
पुष्पोडुपैर्वासितशीततोयो भवाप्रमत्त. खलु तोयराशे । यथा व्यलीकं न भवेद्यदूनां सस्त्रीजनानां कुरु तत्प्रयत्नं । ८४२०
इतीदमुक्ता भगवान् समुद्रं ततस्तु चिक्रीड सहार्ज्जुनेन । सिषेच पूर्व्वं नृप नारदन्तु साचाजितीकृष्णमुखेङ्गितज्ञा ।
ततो मदाघूर्णितचारुदेहः पपात रामः सलिले सलोलं । साकारमालम्ब्य करं करेण मनोहरां रेवतराजपुत्रीं ।
कृष्णात्मजा ये त्वथ भैममुख्या रामस्य पक्षाः पतिताः समुद्रे । विरागवस्त्राभरणा प्रहृष्टाः क्रीडाभिरामा मदिराविलासाः ।
शेषास्तु भैमा हरिमभ्युपेताः क्रीडाभिरामा निशठोल्मुकाद्या. । विचित्रवस्त्राभरणाश्च मत्ताः सन्तानमाल्याचितकण्ठदेशाः ।
वीर्य्योपपन्नाः कृतचारुचिह्ना विलिप्तगात्रा जलयन्त्रहस्ताः । गीतानि तद्देशमनोहराणि स्वरोपपन्नान्यथ गायमानाः । ८४२५
तत. प्रचक्रुर्जलवादितानि नानास्वराणि प्रियवाद्यघोषाः । महाप्सरोभिस्त्रिदिवालयाभिः कृष्णाज्ञया वेशवधूशतानि ।
आकाशगङ्गाजलवाद्यतज्ज्ञाः सदा युवत्यो मदनैकचित्ताः । आवादयंस्ता जलदर्दुरांश्च वाद्यानुरूपं जगिरे च हृष्टाः ।
कुशेशयाकोशविशालनेत्राः कुशेशयापीडविभूषिताश्च । कुशेशयानां रविबोधितानां जह्रुः श्रियं ताः सुरवारमुख्याः ।
स्त्रीवक्त्रपद्मैः शकलेन्दुकल्पैरराज राजन् शतशः समुद्रः । यदृच्छया दैवविधानतो वा नभो यथा चन्द्रसहस्रकीर्णं ।
समुद्रमेघः स रराज राजञ्छतह्रदास्त्रीप्रभयाऽभिरामः । सौदामिनीभिश्च इवाम्बुमार्गे देदीप्यमानो नभसीव मेघः । ८४३०
नारायणश्चैव स नारदश्च सिषेच पक्षे कृतचारुचिह्नः । बलं सपक्षं कृतचारुचिह्नं स चैव पक्षं मधुसूदनस्य ।
हस्तप्रमुक्तैर्जलयन्त्रकैश्च प्रहृष्टरूपाः सिषिचुस्तदानीं । रागोद्धता वारुणिमण्डमत्ताः संकर्षणाधोक्षजदेवपत्न्यः ।
आरक्तनेत्रा जलमुक्तिसक्ताः स्त्रीणां समक्षं पुरुषायमाणाः । तेनोपरेमुः सुचिरञ्च भैमा मानं वहन्तो मदनं मदञ्च ।
अतिप्रसङ्गन्तु विदित्य कृष्णस्तान् वारयामास रथाङ्गपाणिः । स्वयं प्रवृत्तो जलवाद्यमन्दे. स नारदः पार्थसहायवांश्च ।
कृष्णेङ्गितज्ञा जलयुद्धसङ्गङ्क्षिमा निवृत्ता दृढमानिनोऽपि । नित्यं तथानन्दकराः प्रियाणां प्रियाश्च तेषां ननृतुः प्रती
ताः । ८४३१

सर्व्वैः षोडशभिः सार्द्धं स्त्रीसहस्रैर्मुदाऽन्वितः । प्रभावज्ञास्तु ते वीराः कृष्णस्यामिततेजसः ।
न जग्मुर्विस्मयं भैमा गाम्भीर्य्यं परमाश्रिताः । केचिद्रैवतकं गत्वा पुनरायान्ति भारत ।
गृहाण्यन्ये वनान्यन्ये काङ्क्षितान्यरिमर्द्दन । अपेयः पेयसलिलः सागरश्चाभवत्तदा ।
आज्ञया लोकनाथस्य विष्णोरतुलतेजसः । अधावन् स्थलवच्चापि जले जलजलोचनाः ।
गृह्य हस्ते तथा नार्य्यो युक्ता मज्जंस्तथापि ते । भक्ष्यभोज्यानि पेयानि चोष्यं लेह्यन्तथैव च । ८३५५
बहुप्रकारं मनसा ध्याते तेषां भवत्युत । अम्लानमाल्यधारिण्यस्ताः स्त्रियस्तानिन्दितान् ।
रहःसु रमयाञ्चक्रुः स्वर्गे देवरतानुगाः । नौभिर्ब्बहुप्रकाराभिश्चिक्रीडुरपराजिताः ।
स्नाताऽनुलिप्ता मुदिताः सायाह्नेऽन्धकवृष्णयः । आयतायतुरस्राश्च वृत्ताश्च स्वस्तिकास्तथा ।
प्रासादा नौषु कौरव्य विहिता विश्वकर्म्मणा । कैलासमन्दरच्छन्दा मेरुच्छन्दास्तथैव च ।
तथा नानावयश्छन्दास्तथेहामृगरूपिणः । वैदूर्य्यतोरणैश्चित्राश्चित्राभिर्म्मणिभक्तिभिः । ८३६०
मसारगल्वर्कमयैश्चित्रा भक्तिशतैरपि । सक्रीडगरुडच्छन्दाश्चित्राः कनकरीतिभिः ।
क्रौञ्चच्छन्दाः शुकच्छन्दा गजच्छन्दास्तथाऽपरे । कर्णधारैर्म्महोतास्ता नावः कार्त्तस्वरोज्ज्वलाः ।
सलिलं क्षोभयामासुः सागरस्य महोर्म्मिमन् । समुच्छ्रितैः सितैः पोतैर्यानपात्रैस्तथैव च ।
नौभिश्च शल्लिकाभिश्च शुशुभे वरुणालयः । पुराण्याकाशगामीनि गन्धर्व्वाणामितस्ततः ।
बभ्रमुः सागरजले भैमयानानि भारत । नन्दनच्छन्दयुक्तेषु यानपात्रेषु भारत । ८३६५
नन्दनप्रतिमं सर्व्वं विहितं विश्वकर्म्मणा । उद्यानानि सभा वृक्षा दीर्घिकाः स्यन्दनानि च ।
निवेशितानि शिल्पानि तादृशान्यत्र सर्व्वथा । स्वर्गच्छन्देषु चान्येषु समासात् स्वर्गसन्निभाः ।
नारायणाज्ञया वीर विहिता विश्वकर्म्मणा । वनेषु रुरुवुर्हृष्टं मधुरञ्चैव पक्षिणः ।
मनोहरतरञ्चैव भैमानाममिततेजसां । देवलोकोद्भवाः श्वेता विलेपुः कोकिलास्तथा ।
मधुराणि विचित्राणि यदूनां काङ्क्षितानि च । चन्द्रांशुसमरूपेषु हर्म्यपृष्ठेषु बर्हिणः । ८३७०
ननृतुर्म्मधुरारावाः शिखण्डिगणसंवृताः । पताकायानपात्राणां सर्व्वपक्षिगणायुताः ।
भ्रमरैरुपगीताश्च स्रग्दामासक्तवासिभिः । नारायणाज्ञया वृक्षाः पुष्पाणि मुमुचुर्भृशं ।
ऋतवश्चानुरूपाणि विहायसि गतास्तदा । ववौ मनोहरो वातो रतिखेदहरः सुखः ।
रजोभिः सर्व्वपुष्पाणां युक्तश्चन्दनशैत्यभृत् । शीतोष्णमिश्रता तत्र बभूव वसुधापते ।
वासुदेवप्रसादेन भैमानां क्रीडतां तदा । न क्षुत्पिपासे न ग्लानिर्न चिन्ता शोक एव च । ८३७५
आविवेश तदा भैमान् प्रभावाच्चक्रपाणिनः । अप्रशान्तमहातूर्य्या गीतनृत्योपशोभिताः ।
बभूव सागरक्रीडा भैमानाममितौजसां । बहुयोजनविस्तीर्णं समुद्रं सलिलाशयं ।
बद्धा चिक्रीडुरिन्द्राभा भैमाः कृष्णाभिरक्षिताः । परिच्छदस्यानुरूपं यानपात्रं महात्मनः ।
नारायणस्य देवस्य विहितं विश्वकर्म्मणा । रत्नानि यानि त्रैलोक्ये विशिष्टानि विशाम्पते ।
कृष्णस्य तानि सर्व्वाणि यानपात्रेऽतितेजसः । पृथक् पृथग्निवासाश्च स्त्रीणां कृष्णस्य भारत । ८३८०

मणिवैदूर्य्यचित्राङ्गाः कार्त्तस्वरविभूषिताः। सर्व्वर्त्तुकुसुमाकीर्णाः सर्व्वगन्धाधिवासिताः।

षट्पदैश्चैवोपगीताः शकुनैः स्वर्गवासिभिः।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि भानुमतीहरणे सप्तचत्वारिंशदधिकशततमोऽध्यायः॥ १४७॥

॥ वैशम्पायन उवाच॥ रेमे बलश्चन्दनपङ्कदिग्धः कादम्बरीपानकलः प्रदृष्टः। रक्तेक्षणो रेवतिमाश्रयित्वा प्रलम्बबाहुः स्खलितः प्रयातः।

नीलाम्बुदाभे वसने वसानश्चन्द्रांशुगौरो मदिराविलाक्षः। रराज रामोऽम्बुदमध्यनेत्य संपूर्णबिम्बो भगवानिवेन्दुः।

वामैककर्णामलकुण्डलश्रीः स्मेरं मनोज्ञाब्जकृतावतंसः। तिर्य्यक्कटाक्षं प्रियया मुमोद रामो मुखं चार्व्वभिवीक्षमाणः। ८८८५

अथाज्ञया कंसनिकुम्भशत्रोरुदाररूपोऽप्सरसां गणः सः। द्रष्टुं मुदा रेवतिमाजगाम बलालयं स्वर्गसमानमृद्ध्या।

तां रेवतीञ्चाप्यथ वाऽपि रामं सर्व्वा नमस्कृत्य वराङ्गयष्ट्यः। वाद्यानुरूपं ननृतुः सुगाव्यः समन्ततोऽन्या जगिरे च सम्यक्।

चक्रुस्तथैवाभिनयेन सर्व्वं यथावदेषां प्रियमर्थयुक्तं। हृद्यानुकूलञ्च बलस्य तस्य तयाज्ञया रेवतराजपुत्र्याः।

पुनःपुनश्चाप्यथ तथैव तासां तद्देशभाषाकृतिवेशयुक्ताः। सहस्ततालं ललितं सलीलं वराङ्गनाः स्वरताडिताङ्गाः।

सङ्कर्षणाधोक्षजनन्दनानि सङ्कीर्त्तयन्त्योऽथ च मङ्गलानि। कंसप्रलम्बादिवधञ्च रम्यं चाणूरघातञ्च तथैव रङ्गे। ८८९०

यशोदयाथ प्रथितं यशोऽथ दामोदरत्वञ्च जनार्दनस्य। वधं तथाऽरिष्टकधेनुकाभ्यां व्रजे च वासं शकुनीवधञ्च।

यथा च भग्नौ यमलार्ज्जुनौ च सृष्टिं वृकाणामपि कालयुक्तां। स कालियो नागपतिर्ह्रदे च कृष्णेन दान्तश्च यथा दुरात्मा।

शङ्खं ह्रदादुद्धरणञ्च वीर पद्मोत्पलानां मधुसूदनेन। गोवर्द्धने ऽर्थे च गवां धृतोऽभूद्यथा च कृष्णेन जनार्दनेन।

कुब्जां यथा गन्धकपेषिकाञ्च कुब्जत्वहीनां कृतवांश्च कृष्णः। अवामनं वामनकञ्च चक्रे कृष्णो यथात्मानमजोऽप्यनिन्द्यः।

सौभप्रमाथञ्च हलायुधत्वं वधं परस्याथ च देवशत्रोः। गान्धारकन्या वहने नृपाणां रथे तथा योजनमूर्च्छितानां। ८८९५

तथा सुभद्राहरणे जयञ्च युद्धे च बालाह्वकजम्बुमाले। रत्नप्रवेकञ्च युधाजितेर्यन् समाहृतं शक्रसमक्षमासीत्।

एतानि चान्यानि च चारुरूपा जगुः स्त्रियः प्रीतिकराणि राजन्। सङ्कर्षणाधोक्षजहर्षणानि चित्राणि चानेककथाश्रयाणि।

कादम्बरीपानमदोत्कटस्तु बलः प्रहृष्टः स चुकूर्द रामः। सहस्ततालं मधुरं समञ्च स भार्य्यया रेवतराजपुत्र्या।

तं कूर्दमानं मधुसूदनः स दृष्ट्वा महात्मा हर्षान्वितात्मा। चुकूर्द सत्या सहितो महात्मा बलस्य धीमान् हर्षागमार्थं।

समुद्रयात्रार्थमथागतश्च चुकूर्द पार्थो नरलोकवीरः। कृष्णेन सार्द्धं मुदितश्चुकूर्द सुभद्रया चैव वराङ्गयष्ट्या। ८९००

गदश्च धीमानथ सारणश्च प्रद्युम्नशाम्बौ नृप सात्यकिश्च। सात्राजितीसूनुरुदारवीर्य्यः स चारुदेष्णश्च सचारुरूपः।

वीरौ कुमारौ निशठोल्मुकौ च रामात्मजौ वीरतमौ चुकूर्द्दतुः। अक्रूरसेनापतिशङ्कवश्च तथाऽपरे भैमकुलप्रधानाः।

तथानपायं ववृधे सदार्णो कृष्णप्रभावेण जनेशपुत्र। आपूर्णमापूर्णमुदारकीर्त्तेः चुकूर्दयद्भिर्नृपभैमसुख्यैः।

सैरामसक्तैरतिकूर्द्दमानैर्यदुप्रवीरैरमरप्रकाशैः। हर्षान्वितं वीर जगत्तदा ऽभूत्क्षिणुश्च पापानि नरेन्द्रसूनोः।

देवातिथिस्तत्र च नारदोऽथ विप्रः प्रियार्थं मधुकैटभघ्नोः। चुकूर्द मध्ये यदुसत्तमानां जटाकलापागलितैकदेशः। ८९०५

रामप्रणेता धुरि राजपुत्र स एव तत्राभवदप्रमेयः। मध्यञ्च गत्वा स चुकूर्द भूयो हेलाविकारैः सविडम्बिताङ्गैः।

स सत्यभामामथ केशवञ्च पार्थं सुभद्राञ्च बलञ्च देवं। देवीं तथा रैवतराजपुत्रीं सन्दृश्य सन्दृश्य जहास धीमान्।

ता हासयामास स धैर्य्ययुक्तास्तैस्तैरुपायैः परिहासशीलः। चेष्टानुकारैः स्मितानुकारैर्लीलानुकारैरपरैश्च धीमान्।

पद्मामरागेषु च तत्र कार्य्यं तस्यैकदेशावयवेन राजन्। सेवाभिधानं सुकुमारजातिं निष्ठां सुदुःखे न नराः प्रयान्ति।
छालिक्यगान्धर्व्वगुणोदयेषु ये देवगन्धर्व्वमहर्षिसंघाः। निष्ठां प्रयान्तीत्यवगच्छ बुद्ध्या छालिक्यमेवं मधुसूदनेन। ८५६५
भैमोत्तमानां नरदेवदत्तं लोकस्य चानुग्रहकाम्ययैव। गतं प्रतिष्ठाममरोपगेयं बाला युवानश्च तथैव वृद्धाः।
क्रीडन्ति भैमाः प्रवरोत्सवेषु पूर्व्वन्तु बालाः समुदाहरन्ति। वृद्धास्य पश्चात् प्रतिमानयन्ति स्थानेषु नित्यं प्रतिमानयन्ति।
मर्त्येषु मर्त्यान् यदवोऽतिवीराः स्ववंशधर्म्मं समनुस्मरन्त। पुरातनं धर्म्मविधानतज्ज्ञाः प्रीतिं प्रमाणं न वयः प्रमाणं।
प्रीतिप्रमाणानि हि सौहृदानि प्रीतिं पुरस्कृत्य हि ते दशार्हाः। वृष्ण्यन्धका पुत्त्रसखा बभूवुर्विषज्जिताः केशिविनाशनेन।
स्वर्गं गताश्चाप्सरसां समूहाः कृत्वा प्रणामं मधुकैटभघ्नो। प्रहृष्टरूपस्य प्रहृष्टरूपा विनोदिता केशिनिषूदनेन। ८५७०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि भानुमतीहरणे अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

॥ वैशम्पायन उवाच ॥ तेषां क्रीडाप्रसक्तानां यदूनां पुण्यकर्म्मणां। छिद्रमासाद्य दुर्व्वुद्धिर्दैवशत्रुर्दुरासदः।
कन्यां भानुमती नाम भानोर्दुहितरं नृप। जहारात्मवधाकाङ्क्षी निकुम्भो नाम दानवः।
अन्तर्हितो मोहयित्वा यदूनां प्रमदाजनं। मायावी मायया राजन् पूर्व्ववैरमनुस्मरन्।
भ्रातुर्हि वज्रनाभस्य तस्य कन्या प्रभावती। प्रद्युम्नेन हृता वीर वज्रनाभस्तथा हतः।
भानोरेव तयारण्ये वसत्यवसरेण हि। अस्वाधीने दुराधर्षे छिद्रज्ञो दानवाधमः। ८५७५
कन्यापुरे महानादः सहसा समुपस्थितः। तस्यां ह्रियत्यां कन्यायां रुदत्यां समितिञ्जय।
वसुदेवाहुकौ वीरौ दंशितौ निर्गतावुभौ। आर्त्तनादमुपश्रुत्य भानो कन्यापुरे तदा।
न दृष्टिगोचरे तौ तु ददृशातेऽपकारिणं। तथैव दंशितौ यातौ यत्र कृष्णो महाबलः।
श्रुत्वावमानन्तु महदाहुरोष जनार्द्दन। पार्थेन सहितस्तार्क्ष्यं नागशत्रुमरिन्दमः।
रथे त्वमनुगच्छेति संदिश्य मकरध्वजं। त्वरेति गरुडं वीरः संदिदेश च काश्यपं। ८५८०
वज्रं नगरमायान्तं निकुम्भं रणदुर्ज्जयं। पार्थकृष्णौ महात्मानावभिदुद्रुवतुररिन्दमौ।
प्रद्युम्नस्य महातेजा मायिनां प्रवरो नृप। प्रद्युम्नस्त्वथ तं दृष्ट्वा त्रिधात्मानमथाकरोत्।
तान् सर्व्वान् योधयामास निकुम्भः प्रहसन्निव। बहुकण्टकगुर्व्वीभिर्गदाभिरमरोपमः।
सव्येनालम्ब्य हस्तेन कन्यां भानुमती नृप। दक्षिणेनाथ हस्तेन गदया प्रहरत्युत।
कन्यायार्थं न कृष्णो वा कामो वा नृपसत्तम। निर्दयं प्रहरन्ति स्म निकुम्भे च महासुरे। ८५८५
समर्थास्ते महात्मानः शत्रुं हन्तुं दुरासदं। निगृह्यसुर्नरपतेर्दयाभारावपीडिताः।
श्रेष्ठो धनुष्मतां पार्थ सर्व्वेषां कुशलो युधि। नागोद्धविधिना दैत्यं शरपङ्क्त्या जघान ह।
तैस्तु वैतस्तिकैर्व्वाणैर्विव्यधुर्दानवं युधि। न कन्यां कलया युक्त्या शिक्षया च महीपते।
ततः स कन्यया सार्द्धं तत्रैवान्तरधीयत। आसुरीमाश्रितो मायां न तां वेत्ति हि कश्चन।
तं कृष्णो रौक्मिणेयश्च पृष्ठतोऽनुययुस्तदा। हारीत शकुनो भूत्वा तस्थावथ महासुरः। ८५९०
तं वाणैः पुनरेवाथ वीरो भूयो धनञ्जय। वैतस्तिकैर्म्मर्म्मभिद्भिः कन्यां रक्षन्नताडयत्।
स इमां पृथिवीं कृत्स्नां सप्तद्वीपां महासुरः। बभ्रामानुगतश्चैव तैर्वीरैररिमर्द्दन।

स्थितौ नारायणाभ्याशे निकुम्भवधनिश्चितौ । प्रद्युम्नोऽप्यथ मायावी विदितः कृष्णमब्रवीत ।
निकुम्भस्तात नास्त्यत्र गतः क्वापि सुदुर्म्मतिः । प्रद्युम्नेनैवमुक्ते तु तत्सनाश कलेवरं ।
प्रजहासाथ भगवानर्ज्जुनेन सह प्रभुः । तथायुतसहस्राणि निकुम्भानां जनाधिप । ८५२५
ददृशुस्ते तदा वीर क्षितौ दिवि च सर्व्वतः । सहस्राण्येव कृष्णन्तु तथापार्थमरिन्दम ।
रौक्मिणेयं तथा वीरं तदद्भुतमिवाभवत् । पाण्डवस्य धनुः केचित् केचिदस्य महाशरान् ।
अन्येऽस्य जगृहुर्हस्तावन्ये पादौ महासुराः । एवं गृहाय तं वीरमगमंस्ते विहायसं ।
पार्थानामपि कोट्यस्तु गृहीतानां तदाभवन् । नान्तं ददर्श कृष्णश्च कार्ष्णिश्च रिपुनाशनौ ।
विच्छिद्य तौ शरैर्वीरौ निकुम्भं पार्थवर्ज्जितौ । एकैकस्तु द्विधाच्छिन्नो द्वैधीभवति भारत । ८५३०
दिव्यज्ञानस्तदा कृष्णो भगवांश्च दृष्टवान् । निकुम्भं तत्त्वतश्चापि ददर्श मधुसूदनः ।
स्रष्टारं सर्व्वमायानां हर्त्तारं फाल्गुनस्य च । स चक्रेण शिरस्तस्य चकर्त्तासुरसूदनः ।
पश्यतां सर्व्वभूतानां भूतभव्यभवो हरिः । स मुक्त्वा फाल्गुनं राजंश्छिन्ने शिरसि भारत ।
पपातासुरमुख्योऽथ छिन्नमूल इव द्रुमः । अथाकाशगतं पार्थं पतमानं विहायसः ।
कृष्णवाक्येन जग्राह कार्ष्णिर्विद्यति मानदः । निकुम्भे पतिते भूमौ समाश्वास्य धनञ्जयं । ८५३५
जगाम द्वारकां वीरः पार्थकामसमन्वितः । समियाय दशार्होऽथ द्वारकां मुदितो विभु ।
नारदश्च महात्मानं ववन्दे यदुनन्दनः । नारदोऽथ महातेजा भानुं यादवमब्रवीत् ।
भानो माकार्षीर्मन्युं त्वं श्रूयतां भैमनन्दन । क्रीडन्त्या रैवतोद्याने दुर्व्वासाः कोपितोऽनया ।
स शशाप ततो रोषान्मुनिर्दुहितरं तव । अतिदुर्ललिता कन्या शत्रुहस्तं गमिष्यति ।
सुतार्थे ते मया सार्द्धं मुनिभिः स प्रसादितः । बालां व्रतवतीं कन्यामनागसमिमां मुने । ८५४०
शप्तवानसि धर्म्मज्ञ कथं धर्म्मभृताम्वर । अनन्तरं विधत्स्वात्र वयं विज्ञापयामहे ।
अस्माभिरेवमुक्तस्तु दुर्व्वासा भैमनन्दन । उवाचाधोमुखो भूत्वा मुहूर्त्तं कृपयान्वितः ।
यदवोचमहं वाक्यं तत्तथा न तदन्यथा । रिपुहस्तमवश्यं हि गमिष्यति न संशयः ।
अदूषिता तु धर्म्मेण भर्त्तारमुपलप्स्यते । बहुपुत्त्रा बहुधना सुभगा च भविष्यति ।
सुगन्धिगन्धा च सदा कुमारी च पुनः पुनः । न च शोकमिमं घोरं तन्वङ्गी धारयिष्यति । ८५४५
एवं भानुमती वीर सहदेवाय दीयतां । श्रद्धानः स शूरस्य धर्म्मशीलश्च पाण्डवः ।
ततो भानुमतीं भानुर्द्ददौ माद्रीसुताय वै । सहदेवाय धर्म्मात्मा नारदस्य वचः स्मरन् ।
आनीतः सहदेवश्च प्रेषिते चक्रपाणिना । विवाहे च तदा वृत्ते सभार्य्यः स्वपुरं गतः ।
इमं कृष्णस्य विजयं यः पठेच्छृणुयादथ । विजयं सर्व्वकृत्येषु श्रद्धानो लभेन्नरः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि भानुमतीहरणे ऊनपञ्चाशदधिकशततोऽध्यायः ॥ १४९ ॥
॥ जनमेजय उवाच ॥ भानुमत्यापहरणं विजयं केशवस्य च । छालिक्यानयनञ्चैव देवलोकान्महामुने । ८५५०
क्रीडाश्च सागरे दिव्या वृष्णीनाममितौजसां । अशेषं परमाश्चर्य्यं मुने धर्म्मभृताम्वर ।

वज्रनाभवधं श्रुत्वं निकुम्भवधकीर्त्तने। तन्मे कौतूहलं श्रोतुं प्रसादाद्भवतो मुने।
॥ वैशम्पायन उवाच ॥ हन्त ते वर्त्तयिष्यामि वज्रनाभवधं नृप। विजयञ्चैव कामस्य शाम्बस्यैव च भारत।
मेरो मानौ नरपते तपस्तेपे महासुर। वज्रनाभ इतिख्यातो निश्चित समितिञ्जय।
तस्य तुष्टो महातेजा ब्रह्मा लोकपितामहः। वरेणच्छन्दयामास तपसा परितोषित। ८६८५
अवध्यतां स देवेभ्यो वव्रे दानवसत्तम। पुरं वज्रपुरञ्चैव सर्व्वरत्नमयं शुभं।
अच्छन्देन प्रवेशश्च न वायोरपि भारत। अचिन्तितेन कामानामुपपत्तिं नराधिप।
शाखानगरमुख्यानां संवाहानां शतानि च। नगरस्याप्रमेयस्य समन्ताज्जनमेजय।
तथा तदभवत्तस्य वरदानेन भारत। उवास वज्रनगरे वज्रनाभो महासुरः।
कोटिशो वरलब्धास्तमसुरा परिवार्य्यते। ऊषुर्वज्रपुरे राजन् सम्बाहेषु तथैव च। ८६९०
शाखानगरमुख्येषु रम्येषु च नराधिप। हृष्टपुष्टप्रमुदिता नृपदेवस्य शत्रव।
वज्रनाभोऽथ दुष्टात्मा वरदानेन दर्पित। पुरस्थ चात्मनश्चैव जगद्बाधितुमुद्यत।
महेन्द्रमब्रवीद्गत्वा देवलोकं विशाम्पते। अहमीशितुमिच्छामि त्रैलोक्यं पाकशासन।
अथवा मे प्रयच्छस्व युद्धं देवगणेश्वर। सामान्यञ्च जगत्कृत्स्नं काश्यपानां महात्मनां।
स बृहस्पतिना सार्द्धं मन्त्रयित्वा सुरेश्वर। वज्रनाभं सुरश्रेष्ठ प्रोवाच कुरुवंशज। ८६९५
सत्रे स दीक्षित सौम्य कश्यपो न पिता मुनि। तस्मिन् वृत्ते यथान्यायं तथा स हि करिष्यति।
तत स पितरं गत्वा कश्यपं दानवोऽब्रवीत्। यथोक्तं देवराजेन तमुवाचाथ कश्यप।
सत्रे वृत्ते करिष्यामि यथान्याय्यं भविष्यति। त्वन्तु वज्रपुरे पुत्र वस गच्छ समाहित।
एवमुक्ते वज्रनाभ स्वमेव भवनं गत। महेन्द्रोऽपि ययौ देवो द्वारकां द्वारमालिनीं।
गत्वा चान्तर्हितो देवो वासुदेवमथाब्रवीत्। वज्रनाभस्य वृत्तान्तं तमुवाच जनार्द्दन। ८७००
शौरेरुपस्थितो देव वाजिमेधो महाक्रतु। तस्मिन् वृत्ते वज्रनाभं पातयिष्यामि वासव।
तत्रोपायं प्रवेशे तु चिन्तयाव सताङ्गते। नानिच्छया प्रवेशोऽस्ति तत्र वायोरपि प्रभो।
ततो गतो देवराजो वासुदेवेन सत्कृत। वाजिमेधे च संप्राप्ते वसुदेवस्य भारत।
तस्मिन् यज्ञे वर्त्तमाने प्रवेशार्थं सुरात्तमौ। चिन्तयामासतुर्वीरौ देवराजाच्युतावुभौ।
तत्र यज्ञे वर्त्तमाने सुनाट्येन नटस्तदा। महर्षीनतोषयामास भद्रनामेति नामत। ८७०५
तं वरेण मुनिश्रेष्ठाश्छन्दयामासुरात्मवत्। स वव्रे हि नटो भद्रो वरं देवेश्वरोपम।
देवेन्द्रदृष्ट्याच्छन्देन सरस्वत्या प्रचोदित। प्रणिपत्य मुनिश्रेष्ठानश्वमेधे समागतान्।
॥ नट उवाच ॥ भोज्यो द्विजानां सर्व्वेषां भवेयं मुनिसत्तमा। सप्तद्वीपाञ्च पृथिवीं विचरेयमिमामहं।
प्रसिद्धाकाशगमन सत्कुर्व्वंश्च विशेषत। अवध्य सर्व्वभूतानां स्थावरा ये च जङ्गमा।
यस्य यस्य च वेशेन प्रविशेयमहं खलु। मृतस्य जीवतो वापि भावेनोत्पादितस्य च। ८७१०
स तूर्य्यस्तादृशः स्यां वै जरारोगविवर्ज्जित। तुष्येयुर्मुनयो नित्यमन्ये च मम सर्व्वदा।

एवमस्त्विति स प्रोक्तो ब्राह्मणैर्नृपते नटः । सप्तद्वीपां वसुमतीं पर्य्यटत्यमरोपमः ।
पुराणि दानवेन्द्राणामुत्तरांश्च कुरूंस्तथा । भद्राश्वान् केतुमालांश्च कालाम्रद्वीपमेव च ।
पर्व्वणीषु तु सर्व्वासु द्वारकां यदुमण्डिताम् । आयाति वरदत्तः स लोकवीरो महानटः ।
ततो हंसान् धार्त्तराष्ट्रान् देवलोकनिवासिनः । उवाच भगवाञ्छक्रः सान्त्वयित्वा सुरेश्वरः । ८५८५
भवन्तो भ्रातरोऽस्माकं काश्यपा देवपक्षिणः । विमानवाहा देवानां सुकृतीनां तथैव च ।
देवानामस्ति कर्त्तव्यं कार्य्यं शत्रुवधान्वितं । तत् कर्त्तव्यं न मन्त्रश्च भेत्तव्योऽयं कथञ्चन ।
न कुर्व्वतां देवताज्ञामुग्रो दण्डः पतेदपि । सर्व्वत्राप्रतिषिद्धं वो गमनं हंससत्तमाः ।
गत्वा प्रवेशमन्येषां वज्रनाभपुरोत्तमं । इतोऽन्तःपुरवापीषु चरमुख्यचितं हि वः ।
तस्यास्ति कन्यारत्नं हि त्रैलोक्यातिशयं शुभं । नाम्ना प्रभावती नाम चन्द्राभेव प्रभावती । ८५९०
वरदानेन सा लब्धा मात्रा किल वरानना । हैमवत्या महादेव्याः सकाशादिति नः श्रुतं ।
स्वयम्वरा च सा कन्या बन्धुभिः स्थापिता सती । आत्मेच्छया पतिं हंसा वरयिष्यति शोभना ।
तद्भवद्भिर्गुणा वाच्याः प्रद्युम्नस्य महात्मनः । सद्भूताः कुलरूपस्य शीलस्य वयसस्तथा ।
यदा सा रक्तभावा तु वज्रनाभसुता सती । तस्याः सकाशात् सन्देशो नयितव्यः समाधिना ।
प्रद्युम्नस्य पुनस्तस्मादानयध्वं तथैव च । स्वबुद्ध्या प्राप्तकालञ्च सविधेयं हितं मम । ८५९५
नेत्रवक्त्रप्रसादश्च कर्त्तव्यस्तत्र सर्व्वथा । तथा तथा गुणा वाच्याः प्रद्युम्नस्य महात्मनः ।
यथा यथा प्रभावत्या मनस्तत्र भवेत् स्थिरं । वृत्तान्तश्चानुदिवसं प्रदेयो मम सर्व्वथा ।
द्वारवत्यान्तु कृष्णस्य भ्रातुर्मम यवीयसः । तावद्यत्नश्च कर्त्तव्यः प्रद्युम्नो यावदात्मवित् ।
पर्य्यावर्त्तदरारोहां वज्रनाभसुतां विभुः । अवध्यास्ते तु देवानां ब्रह्मणो वरदर्पिताः ।
देवपुत्रैर्हि हन्तव्याः प्रद्युम्नप्रमुखैर्युधि । नटो दत्तवरस्तस्य वेशमास्थाय यादवाः । ८६००
प्रद्युम्नाद्या गमिष्यन्ति वज्रनाभविनाशनाः । एतच्च सर्व्वं कर्त्तव्यमन्यच्च स्वयमेव हि ।
प्राप्तकाले विधातव्यमस्माकं प्रियकाम्यया । प्रवेशस्तत्र देवानां नास्ति हंसाः कथञ्चन ।
वज्रनाभेप्सिते तत्र प्रवेशः खलु सर्व्वथा ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि प्रद्युम्नोत्तरे पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

॥ वैशम्पायन उवाच ॥ ते वासववचः श्रुत्वा हंसा वज्रपुरं ययुः । पूर्व्वोचितं हि गमनं तेषां तत्र नराधिप ।
ते दीर्घिकासु रम्यासु निपेतुर्वीर पक्षिणः । पद्मोत्पलैरावृतासु काञ्चनैः स्पर्शनक्षमैः । ८६०५
ते वै नन्दन्तो मधुरं संस्कृतापूर्व्वभाषिणः । पूर्व्वमप्यागतास्ते तु विस्मयं जनयन्ति हि ।
अन्तःपुरोपभोग्यासु चित्रवापीषु ते नृप । दृष्टास्ते वज्रनाभस्य त्रिपिष्टपनिवासिनः ।
आलपन्तः सुमधुरं धार्त्तराष्ट्रा जनेश्वर । स तानुवाच दैतेयो धार्त्तराष्ट्रानिदं वचः ।
त्रिपिष्टपे नित्यरता भवन्तश्चारुभाषिणः । यदैवेच्छोत्सवोऽस्माकं भवद्भिरवगम्यते ।
आगन्तव्यं जानपादाः स्वमिदं भवतां गृहं । विस्रब्धैश्च प्रवेष्टव्यं त्रिपिष्टपनिवासिभिः । ८६१०

ते तथोक्ताः शकुनयो वज्रनाभेन भारत। तथेत्युक्त्वा हि विविशुर्दानवेन्द्रनिवेशनं।
चक्रुः परिचयं ते च देवकार्य्यव्यपेक्षया। मानुषालापिनस्ते तु कथाश्चक्रुः पृथग्विधाः।
वंशे बद्धाः काश्यपानां सुकृतीनां सुभागिनां। स्त्रियो रेमुर्विशेषेण शृण्वन्त्यः सङ्गताः कथाः।
ततो विचरतीं हंसा ददृशुश्चारुहासिनीं। प्रभावतीं वरारोहां वज्रनाभसुतां तदा।
हंसाः परिचितां चक्रुस्तां ततश्चारुहासिनीं। सखीं शुचिमुखी चक्रे हंसी राजसुतां तदा। ८९१५
सा तां कदाचित् पप्रच्छ वज्रनाभसुतां सखीं। विस्रम्भितां पृथक्सूक्तैराख्यानकशतैर्वरां।
त्रैलोक्यसुन्दरीं वेद्मि त्वामहं हि प्रभावति। रूपशीलगुणैर्देवि किञ्चित्त्वां वक्तुमुत्सहे।
व्यतिक्रामति ते भीरु यौवनं चारुहासिनि। यदतीतं पुनर्नैति गतं स्रोत इवाम्भसः।
कामोपभोगतुल्या हि रतिर्देवि न विद्यते। स्त्रीणां जगति कल्याणि सत्यमेतद्ब्रवीमि ते।
स्वयम्वरे तु न्यस्ता त्वं पित्रा सर्व्वाङ्गशोभने। न च कांश्चिद्वरयसे देवासुरकुलोद्भवान्। ८९२०
व्रीडिता यान्ति सुश्रोणि प्रत्याख्यातास्त्वया शुभे। रूपशौर्य्यगुणैर्युक्ताः सदृशास्त्वत्कुलस्य हि।
आगतान्नेच्छसे देवि सदृशान् कुलरूपयोः। इहैष्यति किमर्थं त्वां प्रद्युम्नो रुक्मिणीसुतः।
त्रैलोक्ये यस्य रूपेण सदृशोऽस्य कुलेन वा। गुणैर्वा चारुसर्व्वाङ्गि शौर्य्येणाप्यस्ति वा शुभे।
देवेषु देवः सुश्रोणि दानवेषु च दानवः। मानुषेष्वपि धर्म्मात्मा मानुषः स महाबलः।
यं सदा देवि दृष्ट्वा हि स्रवन्ति जघनानि हि। आपीनानीव धेनूनां स्रोतांसि सरितामिव। ८९२५
स पूर्णचन्द्रेण मुखं नयने वा कुशेशयैः। उरसा हामोपमातुं हि मृगेन्द्रेणाथ वा गतिं।
जगतः सारमुद्धृत्य पुत्त्रः स विहितः शुभे। कृत्वानङ्गं वरे साङ्गं विष्णुना प्रभविष्णुना।
हृतेन शम्बरो बाल्ये येन पापो निवर्हितः। मायाश्च सर्व्वाः संशप्ता न च शीलं विनाशितं।
यान् यान् गुणान् पृथुश्रोणि मनसा कल्पयिष्यसि। एष्टव्यास्त्रिषु लोकेषु प्रद्युम्ने सर्व्व एव ते।
रुच्या वह्निप्रतीकाशः क्षमया पृथिवीसमः। तेजसा सूर्य्यसदृशो गाम्भीर्य्येण ह्रदोपमः। ८९३०
प्रभावती शुचिमुखीमितिहोवाच भाविनी।
॥ प्रभावत्युवाच ॥ विष्णुर्मानुषलोकस्थः श्रुतः सुबहुशो मया। पितुः कथयतः सौम्य नारदस्य च धीमतः।
शत्रुः किल स दैत्यानां वर्ज्जनीयः किलानघे। कुलानि किल दैत्यानां तेन दग्धानि भामिनि।
प्रदीप्तेन रथाङ्गेन शार्ङ्गेण गदया तथा। शाखानगरदेशेषु वसन्ति किल येऽसुराः।
इत्येते दानवेन्द्रेण संदिश्यन्ते हितं प्रति। मनोरथो हि सर्व्वासां स्त्रीणामेवं शुचिस्मिते। ८९३५
भवेद्धि मे पतिकुलं श्रेष्ठं पितृकुलादिति। यदिनालाभ्युपाय. स्यात्तस्येहागमनं प्रति।
महाननुग्रहो मे स्यात् कुलं स्यात् पावितञ्च मे। समर्थनां मे पृष्ट्वा त्वं प्रयच्छ शुचिलापिनि।
प्रद्युम्नः श्लाघया भर्त्ता मम वृष्णिकुलोद्भवः। अत्यन्तवैरी दैत्यानामुद्वेजनकरो हरिः।
असुराणां स्त्रियो हृष्टाः कथयन्त्यो मया श्रुताः। प्रद्युम्नस्य यथा जन्म पुरस्तादपि मे श्रुतं।
यथा च तेन निहतो बलवान् कालशम्बरः। हृदि मे वर्त्तते नित्यं प्रद्युम्नः खलु सत्तमे। ८९४०

हेतुः स नास्ति यस्तेन यथा मम समागमः। दासी तवाहं सख्यार्हं दूतिं त्वाञ्च विसर्ज्जये।
पण्डितासि वदोपायं मम तस्य च सङ्गमे। ततस्तां सान्त्वयित्वा सा प्रहसन्तीदमब्रवीत्।
॥ शुचिमुख्युवाच॥ तव दूती गमिष्यामि तवाहं चारुहासिनि। इमां भक्तिं तवोदारां प्रवक्ष्यामि शुचिस्मिते।
तथा चैव करिष्यामि यथैष्यति तवान्तिकं। साक्षात् कामेन सुश्रोणि भविष्यसि सकामिनी।
इति मे भाषितं सत्यं स्मरेथाः शुचिलोचने। कथाकुशलतां पित्रे कथयस्वायतेक्षणे।
ममलं तच मे देवि हितं सम्यक् प्रपत्स्यसे। इत्युक्ता सा तया चक्रे यत्तत् सा तामथाब्रवीत्।
दानवेन्द्रस्य तां हंसीं पप्रच्छान्तःपुरे तदा। प्रभावत्या समाख्याता कथाकुशलता तव।
तत्त्वं शुचिमुखि ब्रूहि कथायोग्यतया वरे। किं त्वया दृष्टमाश्चर्य्यं जगत्युत्तमपक्षिणि।
अदृष्टपूर्व्वमन्यैर्व्वा योग्यायोग्यमनिन्दिते। सोवाच वज्रनाभन्तु हंसी नरवरोत्तम।
श्रूयतामित्यथामन्त्र्य दानवेन्द्रं महाद्युतिं। दृष्टा मे शाण्डिली नाम साध्वी दानवसत्तम।
आश्चर्य्यं कर्म्म कुर्व्वन्ती मेरुपार्श्वे मनस्विनी। सुमनाश्चैव कौशल्या सर्व्वभूतहिते रता।
कश्चिदिरशाण्डिल्या शैलपुत्र्या. शुभा सखी। नटश्चैव मयादृष्टो मुनिदत्तवरः शुभः।
कामरूपी च भोज्यश्च त्रैलोक्ये नृत्यसम्मतः। कुरूनथाप्युत्तरान् वीर कालाम्रद्वीपमेव च।
भद्राश्वान् केतुमालांश्च द्वीपानन्यांस्तथानघ। देवगन्धर्व्वगेयानि नृत्यानि विविधानि च।
स वेत्ति देवान्नृत्येन विस्माययति सर्व्वथा।
॥ वज्रनाभ उवाच॥ श्रुतमेतन्मया हंसि न चिरादिव विस्तरं। चारणानां कथयतां सिद्धानाञ्च महात्मनां।
कुतूहलं ममाप्यस्ति सर्व्वथा पक्षिनन्दिनि। नटे दत्तवरे तस्मिन् संस्तवस्तु भविष्यते।
॥ हंस्युवाच॥ सप्तद्वीपान् विचरति नटः स दितिजोत्तम। गुणवन्तं जनं श्रुत्वा गुणहार्य्यः स सर्व्वथा।
तव चेच्छृणुयाद्वीर सम्भूतं गुणविस्तरं। नटं तदा गतं विद्धि पुरं तव महासुर।
॥ वज्रनाभ उवाच॥ उपायः सृज्यतां हंसि येनेह स नटः शुभे। आगच्छेन्मम भद्रन्ते विषयं पक्षिनन्दिनि।
ते हंसा वज्रनाभेन कार्य्यहेतोर्व्विसर्जिताः। देवेन्द्रायाथ कृष्णाय शशंसुः सर्व्वमेव तत्।
अथोपेन्द्रेण प्रद्युम्नो नियुक्तस्तत्र कर्म्मणि। प्रभावत्याश्च संसर्गे वज्रनाभवधे तथा।
देवीं मायां समाश्रित्य संविधाय हरिर्नटं। नटवेशेन भैमानां प्रेषयामास भारत।
प्रद्युम्नं नायकं कृत्वा साम्बं कृत्वा विदूषकं। पारिपार्श्वं गदं वीरमन्यान् भैमांस्तथैव च।
वारमुख्या नटी कृत्वा तत्तूर्य्यसदृशं तदा। तथैव भद्रं भद्रस्य महायाश्च तथाविधान्।
प्रद्युम्नविहितं रम्यं विमानं ते महारथाः। जग्मुरारुह्य कार्य्यार्थं देवानाममितौजसां।
एकैकस्य समारूपे पुरुषाः पुरुषस्य ते। स्त्रीणाञ्च सदृशाः सर्व्वे स्वरूपैर्नराधिप।
ते वज्रनगरस्याथ शाखानगरमुत्तमं। जग्मुर्दानवमुख्यस्य सुपुरं नाम भारत।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि प्रद्युम्नोत्तरे एकपञ्चाशदधिकशततमोऽध्यायः॥ १५१॥
॥ वैशम्पायन उवाच॥ ततः सुपुरवासीनामसुराणां नराधिप। पूर्व्वश्रुतो नटः प्राप्त कौतूहलमजीजनत्।

नटस्याय ददुर्दैत्याः सत्कारं परया मुदा । सपर्य्यार्थं ददुश्चापि रत्नानि सुबहून्यथ ।
ततः स ननृते तत्र वरदत्तो नटस्तथा । स्वपुरे पुरवासीनां परं हर्षं समादधत् ।
रामायणं महाकाव्यमुद्दिश्य नाटकीकृतं । जन्म विष्णोरमेयस्य राक्षसेन्द्रवधेप्सया ।
लोमपादो दशरथ ऋष्यशृङ्गं महामुनिं । शान्तामानाययामास गणिकाभिः सहानघ ।
रामलक्ष्मणशत्रुघ्ना भरतश्चैव भारत । ऋष्यशृङ्गश्च शान्ता च तथारूपैर्नटैः कृतै ।
तत्कालजीविनो दृष्ट्वा दानवा विस्मयं गता । आचचक्षुश्च तेषां वै रूपतुल्यत्वमच्युत ।
संस्काराभिनयौ तेषां प्रस्तावानाञ्च धारणं । दृष्ट्वा सर्व्वं प्रवेशश्च दानवा विस्मयं गता ।
ते रक्ता विस्मयान्नेदुरसुराः परया मुदा । उत्थायोत्थाय नाट्यस्य विशेषेषु पुनः पुनः ।
ददुर्व्वस्त्राणि तुष्टाश्च भैवेयं वलयानि च । हारान्मनोहरांश्चैव हेमवैदूर्य्यभूषितान् ।
पृथगर्थेषु दत्तेषु श्लोकैस्ते तुष्टुवुर्नटाः । असुरांश्च मुनींश्चैव गोत्रैरभिजनैरपि ।
प्रेषितं वज्रनाभस्य शाखानगरवासिभिः । नटस्य दिव्यरूपस्य नरेन्द्रागमनं तदा ।
पुरा श्रुतार्थो दैत्येश प्रेषयामास भारत । आनीयतां वज्रपुरं नटोऽसाविति हर्षित. ।
दानवेन्द्रवचः श्रुत्वा शाखानगरवासिभि । नीता वज्रपुरं रम्यं नटवेशेन यादवा. ।
आवासश्च ततो दत्त. सुकृतो विश्वकर्म्मणा । एष्टव्यं यच्च तत् सर्व्वं दत्तं शतगुणोत्तरं ।
अथाकालोत्सवं चक्रे वज्रनाभो महासुर. । कारयामास रम्यञ्च चमूवाटं प्रहृष्टवत् ।
ततस्तान् परिविश्रान्तान् प्रेक्षार्थाय प्रचोदयत् । दत्त्वा रत्नानि भूरीणि वज्रनाभो महासुरः ।
उपविष्टश्च तान्द्रष्टुं सह ज्ञातिभिरात्मवान् । छन्ने चान्तःपुरं स्थाप्य चक्षुर्द्देशे जनाधिप ।
भैमापि बद्धनेपथ्या नटवेशधरास्तथा । कार्य्यार्थं भीमकर्म्माणो नृत्यार्थमुपचक्रमु ।
ततो घनं सशुषिरं मुरजानकभूषितं । तन्त्री स्वरगुणैर्विद्धामातोद्यानप्यवादयन् ।
ततस्तु देवगान्धारं छालिक्यं श्रवणामृतं । भैमस्त्रिय प्रजगिरे मन श्रोत्रसुखावहं ।
आगान्धारे ग्रामरागे गङ्गावतरणं तदा । विद्धमासारितं रम्यं जगिरे स्वरसम्पदा ।
लयतालसम श्रुत्वा गङ्गावतरणं शुभं । असुरान् रामयामासुरुत्थायोत्थाय भारत ।
नान्दीञ्च वादयामास प्रद्युम्नो गद एव च । शाम्बश्च वीर्य्यसम्पन्नः कार्य्यार्थं नटताङ्गत ।
शाम्बान्ते च तदा श्लोकं गङ्गावतरणाश्रितं । रौक्मिणेयस्तदोवाच सम्यक् स्वभिनयान्वितं ।
रम्भाभिसारं कौवेरं नाटकं ननृतुस्तत । शूरो वारणरूपेण रम्भावेशा मनोवती ।
नलकूवरस्तु प्रद्युम्न शाम्बस्तस्य विदूषक । कैलासो रूपितश्चापि मायया यदुनन्दनै ।
शापश्च दत्त कुद्धेन वारणस्य दुरात्मन. । नलकूवरेणाथ यथा रम्भा चाऽप्यथ सान्त्विता ।
एतत् प्रकरणं वीरा ननृतुर्यदुनन्दना । नारदस्य मुने कीर्त्तिं सर्व्वशस्य महात्मन ।
पादोद्धारेण नृत्येन तथैवाभिनयेन च । तुष्टुवुर्दानवा वीरा भैमानाममितौजसां ।
ते ददुर्म्मंस्यमुख्याणि रत्नान्याभरणानि च । हारांस्तरलविद्धांश्च वैदूर्य्यमणिभूषितान् ।

विमानानि विचित्राणि रथांश्चाकाशगामिनः । गजानाकाशगांश्चैव दिव्यनागकुलोद्भवान् । ८७००
चन्दनानि च दिव्यानि शीतानि रसवन्ति च । गुरूणगुरुमुख्यानि गन्धाढ्यानि च भारत ।
चिन्तामणीनुदारांश्च चिन्तिते सर्वकामदान् । शेषांस्तु सुवक्त्रीषु ददतो दानवास्तदा ।
धनरत्नैर्विरहिताः हृताः पुरुषसत्तम । स्त्रियो दानवमुख्यानां तथैव च जनेश्वर ।
ततो हंसी प्रभावत्याः सखी प्राह प्रभावतीं । गताऽस्मि द्वारकां रम्यां भैमगुप्तामनिन्दिते ।
प्रद्युम्नश्च मया दृष्टो विविक्ते चारुलोचनः । भक्तिश्च कथिता तस्य मया तव शुचिस्मिते । ८७०५
तेन चोक्तेन कामश्च हृतः कमललोचने । यच्च महोपममये तथा चाह समागमः ।
तदद्य रुचिरश्रोणि तव प्रियसमागमः । स ह्यागमिष्यति भाषन्ते सिद्धा भैमकुलोद्भवाः ।
ततः प्रभावती हृष्टा हंसीं तामिदमब्रवीत् । उषिताऽस्मि समाश्वासे समुत्सर्पसि सुन्दरि ।
त्वयाऽहं सहितावासे द्रष्टुमिच्छामि केशवं । निःसाध्वसा भविष्यामि तथा कुरु विचक्षणे ।
हंसी तथेति चोवाच सखीं कमललोचनां । आरुरोह च तद्धर्म्यं प्रभावत्या विचक्षणा । ८७१०
विश्वकर्मकृते तस्मिन् हर्म्यपृष्ठे प्रभावती । संविधानमकारयत प्रद्युम्नागमनं प्रति ।
तस्मिन् कृते संविधाने काममानाययितुं ययौ । प्रभावतीमनुज्ञाप्य हंसी वायुसमा गतौ ।
सा गत्वाऽभ्यागता हंसी प्रभावतीमथाब्रवीत् । अभ्येति रौक्मिणेयोऽसावायतायतलोचने ।
प्रद्युम्नो नीयमानस्तु ददृशे माल्यमालवान् । भ्रमरैरावृतं वीरः सुगन्धमरिमर्दनः ।
निलिल्ये तत्र माल्ये च भूत्वा मधुकरस्तदा । प्रभावत्या नीयमाने विदितार्थः प्रतापवान् । ८७१५
प्रवेशितश्च तन्माल्यं स्त्रीभिर्मधुकरायुतं । उपनीतं प्रभावत्यै स्त्रीभिस्तद्भ्रमरावृतं ।
अविदूरे च विन्यस्तं प्रभावत्या जनाधिप । अस्तगते रवौ सौम्य सन्ध्याकाले ह्युपस्थिते ।
स भैमप्रवरो वीरस्तैः महार्घैर्विशोभितः । कर्णोत्पले प्रभावत्या निलिल्ये जनकेरिव ।
ततः प्रभावती हंसीमुवाच वदतां वरा । उदयस्थं पूर्णचन्द्रं समीक्ष्यातिमनोहरं ।
सखि दहन्ति मेऽङ्गानि मुखञ्च परिशुष्यति । शीतांशुं यदि वातीव कोऽयं व्याधिरनौषधः । ८७२०
इन्धद्विगुणभास्वत्समभो पूर्णनिशाकरः । सर्वादिश शीतरश्मिः संविहारो ह्यतिप्रियः ।
न दृष्टपूर्वो हि मया श्रुतिमात्रेण काङ्क्षितः । अहो धूमायतेऽङ्गानि स्त्रीस्वभावश्च धिक् खलु ।
कल्पयामि यथा बुद्ध्या यदि नाभ्येति मे प्रियः । कुमुद्वतीगतं मार्गं हा गमिष्याम्यकिञ्चना ।
मद्भाग्यविषेणास्मि दष्टा हा हा मनस्विनी । शीतवीर्य्याः प्रकृत्यैव जगतो ह्लादनाः सुखाः ।
दहन्ति मम गात्राणि किं नु चन्द्रगभस्तयः । प्रकृत्या शीतलो वायुर्नानापुष्परजोवहः । ८७२५
दावाग्निसदृशो मेऽद्य दन्दहीति शुभां तनुं । तदतः संकल्पयत्येतत् धैर्यं कार्य्यमिवात्मनः ।
नावतिष्ठति निर्व्वीर्य्ये मन सङ्कल्पधर्षितं । विमनस्काऽस्मि मुह्यामि वेपथुर्मे महान् हृदि ।
संभ्रमीति च मे दृष्टिर्हा यामि ध्रुवं क्षयं ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि प्रद्युम्नोत्तरे वज्रनाभीये द्विपञ्चाशदधिकशततोऽध्यायः ॥ १५२ ॥

॥ वैशम्पायन उवाच ॥ आविष्टेयं मया बाला सर्व्वथेत्यवगम्य तु । कार्ष्णिर्हृष्टेन मनसा हंसीमिदमुवाच ह ।
दैत्येन्द्रतनयां प्राप्तमवगच्छस्व मामिह । षट्पदैः सह षट्पादो भूत्वा माल्ये निलीय तु ।
विधेयोऽस्मि प्रभावत्या यथेष्टं मयि वर्त्ततां । इत्युक्ता दर्शयामास सुरूपो रूपमात्मनः ।
तद्धर्म्यपृष्ठं प्रभया द्योतितं तस्य धीमतः । अभिभूता प्रभा चैव राजंश्चन्द्रोद्भवा शुभा ।
प्रभावत्याश्च तं दृष्ट्वा ववृधे कामसागरः । चन्द्रस्येवोदये प्राप्ते पर्व्वण्यां सरितांपतिः ।
सलज्जाधोमुखी किञ्चित् किञ्चित्तिर्य्यगवेक्षिणी । प्रभावती तदा तस्थौ निश्चलेवामलेक्षणा ।
करेणाधःप्रदेशे तां चारुभूषणभूषिते । स्पृष्ट्वोवाच वरारोहां रोमाञ्चिततनूरुहं ।
मनोरथशतैर्लब्धं किं पूर्णेन्दुसमप्रभं । अधोमुखं मुखं कृत्वा न मां किञ्चित् प्रभाषसे ।
प्रभोपमर्दं माकार्षीर्वदनस्य वरानने । साध्वसं त्यज्यतां भीरु दासः साध्वनुगृह्यतां ।
न कालमिव पश्यामि भीरु भीरुत्वमुत्सृज । याचाम्येषोऽञ्जलिं कृत्वा प्राप्तकालं निबोध मे ।
गान्धर्व्वेण विवाहेन कुरुष्वानुग्रहं मम । देशकालानुरूपेण रूपेणानुत्तमा सती ।
उपस्पृश्य ततो भैमो मणिस्थं जातवेदसं । जुहाव समये वीरः पुण्यमन्त्रानुदीरयन् ।
जग्राह च करं तस्या वराभरणभूषितं । चक्रे प्रदक्षिणञ्चैव तं मणिस्थं हुताशनं ।
प्रजज्वाल स तेजस्वी मानयन्नच्युतात्मजं । भगवान् जगतः साक्षी शुभस्याप्यशुभस्य च ।
उद्दिश्य दक्षिणां वीरो विप्राणां यदुनन्दनः । उवाच हंसीं द्वारस्था तिष्ठावां रक्ष पक्षिणि ।
तस्यां प्रयातायां कार्ष्णिस्तां चारुलोचनां । ग्रहाय दक्षिणे हस्ते निनाय शयनोत्तमं ।
ऊरावथोपवेश्यैनां सान्त्वयित्वा पुनः पुनः । चुचुम्ब सकचं गण्डे वासयन्मुखमारुतैः ।
ततोऽस्या आपपौ वक्त्रं पद्मं मधुकरो यथा । आलिलिङ्गे च सुश्रोणीं क्रमेण रतिकोविदः ।
अरमयद्दृश्यैनां स चेङ्गितवान्मुदा । आप हृत्स्थञ्च रत्यर्थं रतिकार्य्यविशारदः ।
उवाच स तया सार्द्धं रमन् कृष्णसुतः प्रभुः । अरुणोदयकाले च ययौ यत्र नटालयः ।

देहार्द्धेन तु कौरव्य सिषेवे स प्रभावती । सङ्गतिं विनयं शीलं लीलां दाक्ष्यं विलासितां ।
स्पृहयन्त्यसुरा दृष्ट्वा विदग्धाश्च महात्मनां । रूपं विलासं गन्धञ्च स्रजो भावामथार्थ्यितां । ८७१०
तासां यादवनारीणां स्पृहयन्त्यसुरस्त्रियः । वज्रनाभस्य तु भ्राता सुनाभो नाम विश्रुतः ।
दुहितृद्वयञ्च नृपते तस्य रूपगुणान्वितं । एका चन्द्रवती नाम्ना गुणवत्यथ चापरा ।
प्रभावत्यालयं ते तु मजतः खलु नित्यदा । ददृशाते तु ते तत्र रतिसक्तां प्रभावतीं ।
परिपप्रच्छतुश्चैव विस्रम्भोपगतां सतीं । सोवाच मम विद्याऽस्ति याऽधीता काङ्क्षितं पतिं ।
रत्यर्थमानयत्याशु सौभाग्यञ्च प्रयच्छति । देवं वा दानवं वापि विवशं सद्य एव हि । ८७१५
साऽहं रमामि कान्तेन देवपुत्त्रेण धीमता । दृश्यतां मत्प्रभावेण प्रद्युम्न सुप्रियो मम ।
ते दृष्ट्वा विस्मयं याते रूपयौवनसम्पदं । पुनरेवाब्रवीत्ते तु भगिन्यौ चारुहासिनी ।
प्रभावती वरारोहा कालप्राप्तमिदं वचः । देवा धर्म्मरता नित्यं दम्भशीला महासुराः ।
देवास्तपसि रक्ता हि सुखे रक्ता महासुराः । देवाः सत्ये रता नित्यमनृते तु महासुराः ।
धर्म्मस्तपश्च सत्यञ्च यत्र तत्र जयो ध्रुवं । देवपुत्त्रौ वरयतं पती विद्यां ददाम्यहं । ८७२०
उचितौ मत्प्रभावेण सद्य एवोपलप्स्यथः । तां तथेत्यूचतुर्हृष्टे भगिन्यौ चारुलोचनां ।
परिपप्रच्छ भैमञ्च कार्य्यन्तात् प्रति मानिनी । स पितृव्यं गदं वीरं साम्बञ्चाप्यब्रवीत्तदा ।
रूपान्वितौ सुशीलौ च शूरौ च रणकर्म्मणि ।
॥ प्रभावत्युवाच ॥ परितुष्टेन दत्ता मे विद्या दुर्व्वाससा पुरा । परितुष्टेन सौभाग्यं सदा कन्यात्वमेव च ।
देवदानवयक्षाणां यं ध्यास्यसि स ते पतिः । भवितेति मया चैव वीरोऽयमभिकाङ्क्षितः । ८७२५
गृह्णीतं तदिमां विद्यां सद्यो वां प्रियसङ्गमः । ततो जगृहतुर्हृष्टे तां विद्यां भगिनीमुखात् ।
दध्यतुर्गदसाम्बौ च विद्यामभ्यस्य ते शुभे । तौ प्रद्युम्नेन सहितौ प्रविष्टौ भैमनन्दनौ ।
प्रच्छन्नं मायया वीरौ कार्ष्णिना मायिना नृप । गान्धर्व्वेण विवाहेन तावथ रिपुसूदनौ ।
पाणिं जगृहतुर्वीरौ मन्त्रपूर्व्वं सतां प्रियौ । चन्द्रवत्या गदः साम्बो गुणवत्या तु कौरवि ।
रेमिरेऽसुरकन्याभिर्वीरास्ते यदुपुङ्गवाः । मार्गमाणास्त्वनुज्ञां ते शक्रकेशवयोस्तदा । ८७३०

इतिश्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभीये प्रद्युम्नोत्तरे त्रिपञ्चाशदधिकशतोऽध्यायः ॥ १५२ ॥

वैशम्पायन उवाच ॥ नभो नभस्येऽथ निरीक्ष्य मासि कामस्तदा तोयदछन्दकीर्णं । प्रभावतीञ्चारुविशालनेत्रामुवाच पूर्णेन्दुनिकाशवक्त्रां ।
वाननाभो वरगात्रि चन्द्रो न दृश्यते सुन्दरि चारुबिम्बः । लक्ष्मीपाशप्रतिमैर्निरुद्धो बलाहकैश्चारुनिरन्तरोरु ।
दृश्यते सुभ्रु तडिद्घनस्था त्वं हेमचार्व्वाभरणान्वितेव । मुञ्चन्ति धाराश्च घना मदन्तस्तद्धाररष्टैः सदृशा वराङ्गि ।
नप्रदेशेषु बलाकपंक्तयस्त्वद्दन्तपङ्क्तिप्रतिमा विभान्ति । निमग्नपद्मानि सरःसु सुभ्रु न भान्ति तोयानि रयाकुलानि ।
अमी घना वायुवशोपयाता बलाकमालामलचारुदन्ताः । अन्योन्यमभ्याहनितुं प्रवृत्ता वनेषु नागा इव शुक्लदन्ताः । ८७३५

धनुस्त्रिवर्णं वरगात्रि पश्य कृतं तवापाङ्गमिवाननस्थं । विभूषयन्तं गगणं घनांस्र प्रहर्षणं कामिजनस्य कान्ते ।
घनाम्बुदस्य प्रतिनर्द्दमानान्निरीक्ष्य सुश्रोणि शिखीन् प्रहृष्टान् । समाहृतानुच्छ्रितपिच्छभारान् प्रियाभिरामानुपनृत्यमानान् ।
हर्म्येषु चान्ये शशिपाण्डरेषु राजन्ति सुश्रोणि मयूरसंघाः । मुहूर्त्तशोभामतिचारुरूपां दत्त्वा पतन्तो वडभीपुटेषु ।
प्रक्लिन्नपक्षास्तकमस्तकेषु मुहूर्त्तचूडामणितां विधाय । प्रयान्ति भूमिं नवशाद्वलानामाशङ्कमाना धृतचारुदेहाः ।
प्रवाति धारान्तरनिःसृतस्य सुखोऽनिलश्चन्दनपङ्कशीतः । कदम्बसर्ज्जार्ज्जुनपुष्पभूतं समावहन् गन्धमनङ्गबन्धुं । ८०५०
रतिश्रमखेदविनाशहेतुर्नवोदभारानयने च हेतुः । न मारुतः स्याद्यदि चारुगात्रि न मेघकालो मम वल्लभः स्यात् ।
एवंविधेषु प्रियसङ्गमेषु रतावसाने यदुपैति वायुः । रतिश्रमखेदहर सुगन्धिस्ततः परं किं सुखमस्ति लोके ।
जलाप्लुतानीक्ष्य महानदीनां सुगात्रि हंसाः पुलिनानि हृष्टाः । गताः श्रमं मानसवासलुब्धाः ससारसाः क्रौञ्चगणानुविद्धाः ।
न भान्ति नद्योऽद्य सरांसि चैव हृतश्रियश्चायतचारुनेत्रे । गतेषु हंसेष्वथ सारसेषु रथाङ्गनुत्राङ्कयनेषु चैव ।
भोगैकदेशेन शुभं शयानं ध्रुवं जगन्नाथमुपेन्द्रमीशं । निद्राऽभ्युपेता वरकालतज्ज्ञा श्रियं प्रणम्योत्तमचारुरूपा । ८०५५
निद्रायमाणे भगवत्युपेन्द्रे मेघाम्बराक्रान्तनिशाकरोऽद्य । पद्मामलाभः कमलायताक्षि कृष्णस्य वक्त्रानुकृतिं करोति ।
कदम्बनीपार्ज्जुनकेतकानां स्रजो ध्रुवं कृष्णमुपानयन्ति । पुष्पाणि चान्यान्यृतवः समस्ताः कृष्णात् प्रसादानभिकाङ्क्षमाणाः ।
मागास्त्वसन्तो विपदिग्धवक्त्राः स्पृशन्ति पुष्पाण्यथ पादपान् यान् । पेपीयमाना भ्रमरैर्ज्जनानां कौतूहलं ते जनयन्त्यतीव ।
तोयातिभारामुदवृन्दनद्धं नभः पतिष्यन्तमिवाभिवीक्ष्य । निपानगम्भीरमभिप्रविष्टं मनोहरं चारुमुखस्तनोरु ।
बलाकमालाकुलमाल्यदाम्ना निरीक्ष्य रम्यं घनवृन्दमेतत् । सस्यानि भूमावभिवर्धमानं जगद्धिताय विमलाङ्गयष्टे । ८०६०
जलावलम्बाम्बुदवृन्दकर्षी घनैर्घनान् योधयतीव वायुः । प्रवृत्तचक्रो नृपतिर्वनस्थान् गजान् गजैः स्वैरिव वीर्यदृप्तान् ।
अभीक्ष्णमम्भो विसृजन्ति मेघाः पूतं पवित्रं पवनैः सुगन्धि । हर्षावहं चातकबर्हिणानां वराङ्गनानां जलदप्रियाणां ।
प्लवङ्गमः षोडशपक्षशायी विरौति गोष्ठः सह कामिनीभिः । स्वचौ द्विजातिः प्रियसत्यधर्मा यथा स्वशिष्यैः परिवार्यमाणः ।
गुणो महांस्तोयदकालजोऽयं प्रवृद्धमेघस्तनभीषिता यत् । परिष्वजन्त्यः परिवर्द्धयन्ति विनाऽपि शय्यासमयं प्रियाणां ।
दोषोऽयमेकः सलिलागमस्य मां प्रत्युदारान् वयवर्णशोले । न दृश्यते यत्तव वक्त्रतुल्यो घनप्रच्छन्नतनुः शशाङ्कः । ८०६५
प्रदृश्यते भीरु यदा शशाङ्को घनान्तरस्थो जगतः प्रदीपः । तदाऽनुपश्यन्ति जनाः प्रहृष्टा वक्त्रं प्रवासादिव सन्निवृत्तं ।
विलापशाली प्रियहीनितानां संदृश्यते भीरु यदा शशाङ्कः । नैवोत्सवः प्रोषितकामुकानां दृष्टेव कान्तं भवतीत्यवैमि ।
नैवोत्सवः कान्तसमागतानां दावाग्नितुल्यः प्रियहीनितानां । तेनैव देहेन वराङ्गनानां चन्द्रोऽपि तावत् प्रियविप्रियस्य ।
विनाऽपि चन्द्रेण पुरे स्थितस्ते यतः प्रभा चन्द्रगभस्तिगौरी । गुणागुणं चन्द्रमसो न वेद्मि यतस्ततोऽहं प्रमुखं प्रियस्य ।
अवाप यो साम्राज्यराज्यमीशो दुरापमन्यैः सुकृतैस्तपोभिः । गायन्ति विप्राः पवमानमंशं यं सामगाः पर्व्वणि चाप्युदारं । ८०७०
जिता बुधस्योत्तमवीर्यकर्मा पुरूरवा यस्य सुतो नृदेवः । प्राणाग्निगोष्ठोऽग्निमग्नीजनयो नष्टं शमीगर्भभवं भवात्मा ।
तथैव पद्याधकर्मे महात्मा पुरोर्म्मशोमसरमां वरिष्ठां । यौन पुरा योऽस्थनमन्वदेशो मुनिप्रवीरैर्वरगात्रि घोरैः ।
नृपः क्षुधार्त्तः पुनरेव यस्य श्रीमान् कणोऽग्निर्दिवि पूज्यते च । आयुश्च वंशे नहुषस्य यस्य यो देवराज्यमवाप धीरः ।

देवातिदेवो भगवान् प्रसूतो वंशे हरिर्यस्य जगत्प्रणेता । भैमप्रवीरः सुरकार्य्यहेतोर्यः सुभ्रु दत्तस्य सुतः सुताभि ।
बभूव राजा च वसुश्च यस्य वंशे महात्मा भ्रमिवंशकेतुः । यश्चक्रवर्त्तित्वमवाप वीरः स्वैः कर्मभिः शक्रसमप्रभावः । ८८१८
यदुश्च राजा भ्रमिवंशमुख्यो योऽवाप महामधिराजभावं । भोजाः कुले यस्य नराधिपस्य वीराः प्रसूताः सुरराज तुल्याः ।
न कूटकृद्यस्य नृपोऽस्ति वंशे न नास्तिको नैकृतिकोऽथ वाऽपि । अश्रद्दधानोऽप्यथ वा कदर्थ्यः शौर्येण वा वारिदयाविहीनः ।
वंशे वधूस्त्वं कमलायताक्षि श्लाघ्या गुणानामतिपात्रभूता । कुरु प्रणामं शिखरापदन्ति तस्य त्वमीशस्य सतां प्रियस्य ।
नारायणायात्मभवायनाय लोकायनाय त्रिदशायनाय । खगेन्द्रकेतोः पुरुषोत्तमाय कुरु प्रणामं श्वशुराय देवि ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभीये प्रद्युम्नोत्तरे चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
॥ वैशम्पायन उवाच ॥ सत्रावसाने तु मुनेः कश्यपस्यातितेजसः । जग्मुर्देवासुरा स्थानि स्थानान्यमितविक्रमाः । ८८२०
वज्रनाभोऽपि निर्वृत्ते सत्रे कश्यपमभ्यगात् । त्रैलोक्यविजयाकाङ्क्षी तमुवाचाथ कश्यपः ।
वज्रनाभ निबोधस्व श्रोतव्यं यदि चेन्मम । वस वज्रपुरे पुत्र स्वजनेन समावृतः ।
तपसाऽभ्यधिकः शक्रः शक्रश्चैव स्वभावतः । महात्मनश्च कृतज्ञश्च ज्येष्ठः श्रेष्ठतमो गुणैः ।
राजा कृत्स्नस्य जगतः पात्रभूतः सतां गतिः । संप्राप्तो लोकराज्यं स सर्व्वभूतहिते रतः ।
नैव शक्यस्त्वया जेतुं वज्रनाभ विहन्यसे । अपि चेत् पदा च्युतक्रामन् वै नचिराद्विनशिष्यसि । ८८२५
वज्रनाभस्तु तद्वाक्यं नाभिनन्दति भारत । कालपाशपरीताङ्गो मर्त्तुकाम इवौषधं ।
अभिवाद्य मुदुर्ब्बुद्धिः कश्यपं लोकभावनं । त्रैलोक्यविजयारम्भे मतिञ्चक्रे दुरासदः ।
ज्ञातियोधान् समानीय मित्राणि सुबहूनि च । प्रतस्थे स्वर्गमेवाशु विजिगीषन् विशाम्पते ।
एतस्मिन्नन्तरे देवौ कृष्णेन्द्रौ च महाबलौ । प्रेषयामासतुर्हंसान् वज्रनाभवधं प्रति ।
समागतास्तु तच्छ्रुत्वा यदुमुख्या महाबलाः । मन्त्रयित्वा महात्मानश्चिन्तामापेदिरे तदा । ८८३०
वज्रनाभोऽस्य हन्तव्यः प्रद्युम्नेनेत्यसंशयं । तयोर्दुहितरौ भर्य्याः भक्त्या ताः सर्व्वभावनाः ।
सर्व्वाः सगर्भास्ताश्चैव किन्नु कार्य्यमनन्तरं । प्राप्तः प्रसवकालश्च तासां नातिचिरादिव ।
संमन्त्रयित्वैतदर्थं हंसानूचे महाबल । आख्येयमर्थवत् कृत्स्नं शक्रकेशवयोस्तदा ।
हंसैर्गत्वा तदाख्यातं देवयोस्तद्यथातथं । ताभ्यां हंसास्तु सन्दिष्टा न भेतव्यमिति प्रभो ।
उत्पत्स्यन्ति गुणैः श्लाघ्या पुत्रा व कामरूपिणः । गर्भस्थाः सर्व्ववेदांश्च साङ्गान् वेत्स्यन्त्यनिन्दिताः । ८८३५
तथा चानागतं सर्व्वं मन्त्राणि विविधानि च । सद्य एव युवानश्च भविष्यन्ति सुपण्डिताः ।
एवमुक्ता गता हंसा पुनर्व्वज्रपुरं विभो । शशंसुश्चैव भैमानां शक्रकेशवभाषितं ।
प्रभावती तदा पुत्रं सुषुवे सदृशं पितुः । सद्यो यौवनसंप्राप्तं सर्व्वशत्वञ्च भारत ।
मासमात्रेण सुषुवे देवी चन्द्रवती नृप । चन्द्रप्रभमिति ख्यातं तनयं सदृशं पितुः ।
ददृश यौवनं प्राप्तं सर्व्वज्ञत्वञ्च भारत । गुणवत्यपि पुत्रञ्च गुणवन्तमनिन्दितं । ८८४०
युवानावथ सद्यस्तौ सर्व्वशास्त्रार्थकोविदौ । इन्द्रोपेन्द्रप्रसादेन संवृत्तौ यदुवर्द्धनौ ।

हर्म्यपृष्ठे वर्द्धमाना दृष्टास्ते यदुनन्दना । इन्द्रोपेन्द्रेच्छया वीर नान्यथेत्यवधार्य्यता ।
निवेदिताश्च संभ्रान्तैर्दैत्यैराकाशरक्षिभि । वज्रनाभाय वीराय त्रिपिष्टपजयैषिणे ।
विधार्य्य सर्व्वं गृह्यन्ता ममैते गृहधर्षका । इत्युवाचासुरपतिर्व्वज्रनाभो दुरासद ।
तत सैन्यं समाज्ञप्तमसुरेन्द्रेण धीमता । आवारयामास दिश सर्व्वा कुरुकुलोद्वह । ८८४५
गृह्यन्तामाशु बध्यन्तामिति वाचस्ततस्तत । उच्चेरुरसुरेन्द्रस्य शासनादरिशासिन ।
तच्छ्रुत्वा व्यथितास्तेषा मातर पुत्रवत्सला । रुरुदुस्ता रुदन्त्योऽथ प्रद्युम्न सहसाऽब्रवीत् ।
माभैष्ट जीवमानेषु स्थिरेष्वस्मासु सर्व्वथा । कि नो दैत्या करिष्यन्ति सर्व्वथा भद्रमस्तु व ।
प्रभावतीमथोवाच प्रद्युम्नो विक्लवा स्थिता । पिता तव गदापाणि पितृव्याश्च स्थितास्तव ।
भ्रातरश्चैव ते देवि ज्ञातयश्च तथाऽपरे । एते पूज्याश्च मान्याश्च तवार्य्ये खलु सर्व्वथा । ८८५०
भगिन्यौ पृच्छ भद्रन्ते कालोऽथ खलु दारुण । मरण सहमानाना युध्यता विजयो ध्रुव ।
दानवेन्द्रादयो ह्येते योत्स्यन्तेऽस्मद्वधैषिण । किमत्र कार्य्यमस्माभि सर्व्वथाकान्तरस्थितै ।
प्रभावती रुदन्ती तु प्रद्युम्नमिदमब्रवीत् । शिरस्यञ्जलिमाधाय जानुभ्या पतिता क्षितौ ।
गृहाण शस्त्रमात्मान रक्ष शत्रुनिवर्हण । जीवन् पुत्राश्च दाराश्च द्रष्टाऽसि यदुनन्दन ।
आर्य्या नृवर वैदर्भीमनिरुद्धश्च मानद । रक्षैतान्मोचयात्मान व्यसनादरिमर्द्दन । ८८५५
दुर्व्वाससा वरो दत्तो मुनिना मम धीमता । वैधव्यरहिता त्वञ्च जीवपुत्रा भविष्यसि ।
एष मे हृदयाश्वासो भविता न तदन्यथा । सूर्य्याग्नितेजसो वाक्य मुनेरिन्द्रानुजात्मज ।
इत्युक्ताऽथासिमादाय सुपरिमृष्टा मनस्विनी । प्रददौ रौक्मिणेयाय जयस्वेति वर वरा ।
स त जग्राह धर्म्मात्मा प्रहृष्टेनान्तरात्मना । प्रणम्य शिरसा दत्त प्रियया भक्तियुक्तया ।
चन्द्रवत्यपि निस्त्रिंशं गदाय प्रददौ मुदा । तदा गुणवती चैव शाम्बायापि महात्मने । ८८६०
हंसकेतुमथोवाच प्रद्युम्न प्रणत प्रभु । इहैव शाम्बसहितो युध्यस्व सह दानवै ।
आकाशे दिक्षु सर्व्वासु योत्स्याम्यहमरिन्दम । इत्युक्त्वाऽथ रथ चक्रे मायया मायिनाम्वर ।
सहस्रशिरस नाग कृत्वा सारथिमात्मवान् । अनन्तभोग कौरव्य सर्व्वनागोत्तमोत्तम ।
स तेन रथमुख्येन हर्षयन् वै प्रभावती । चचारासुरसैन्येषु व्रणेष्विव हुताशन ।
शरैराशीविषप्रख्यैरर्द्धचन्द्रानुकारिभि । भेदनैश्छेदनैश्चैव ततर्द दितिसम्भवान् । ८८६५
असुराश्च रणे मत्ता कार्ष्णिं सर्व्वैरितस्तत । अथ कमलपत्राक्ष पर नियममास्थिता ।
चिच्छेद बाहून् केषाञ्चित् केयूरवलयोज्ज्वलान् । सकुण्डलानि चान्येषा शिरास्यपि स चिच्छिदे ।
सुरद्विषा शिरोभिस्तै कायैश्च सकलैरपि । असृग्वाहा नदी कीर्णा प्रद्युम्नेनातितेजसा ।
देवेश्वरो देवगणै सहित समितिञ्जय । ददर्श मुदितो युद्ध भैमाना दितिजै सह ।
ये गदञ्चैव साम्बञ्च दैत्या समभिदुद्रुवु । ते ययुर्निधन सर्व्वे यादासीव महोदधौ । ८८७०
विषम तत्तदा युद्ध दृष्ट्वा देवपतिर्हरि । गरुड प्रेषयामास स्व रथं हरिवाहन ।

दिदेश मातलिसुतं यन्तारञ्च सुवर्च्चसं । शाम्बायैरावणं नागं प्रेषयामास चेश्वरः ।
जयन्तं रौक्मिणेयस्य सहायमददद्विभुः । ऐरावणमधिष्ठातुं प्रवरं संप्रयुक्तवान् ।
देवपुत्त्राविमौ वीरावप्रमेयपराक्रमौ । अनुज्ञाप्य सुराध्यक्षं ब्रह्माणं लोकभावनं ।
तं मातलिसुतञ्चैव गजमैरावतं तदा । देवः प्रेषितवान् शक्रो विधिज्ञो वरकर्म्मसु । ८८७५
चीणमस्य तपो बध्यो यदूनामेष दुर्म्मतिः । प्रदिशन्ति तु भूतानि सर्व्वत्र तु यथेप्सितं ।
प्रद्युम्नश्च जयन्तश्च प्राप्तौ हर्म्म्यं महाबलौ । असुरान् शरजालौघैर्व्विक्रामन्तौ प्रणाश्य तु ।
गदं कार्ष्णिस्तदोवाच दुर्व्वार्थं रणदुर्ज्जय. । उपेन्द्रानुज शक्रेण रथोऽयं प्रेषितस्तव ।
हरियुङ्मातलिसुतो यन्ता चायं महाबलः । प्रवराधिष्ठितश्चायं शाम्बस्यैरावणो गज. ।
अथोपहारो रुद्रस्य द्वारकायां महाबल । श्व एष्यति हृषीकेशस्तस्मिन् वृत्तेऽच्युतानुज । ८८८०
तस्याज्ञया बधिष्यामो वज्रनाभं सबान्धवं । प्रभ्युत्थानकृतं पापं त्रिपिष्टपजयं प्रति ।
करिष्यामो विधानन्तु नैष शत्रुं सुतान्वितं । विजेतव्यप्रमादन्तु कर्त्तव्यमिति मे मतिः ।
कलत्ररक्षणं कार्य्यं सर्व्वोपायैर्नरैर्बुधैः । कलत्रधर्षणं लोके मरणादतिरिच्यते ।
एवं सन्दिश्य भैम स गदशाम्बौ महाबल. । प्रद्युम्नकोऽप्य सहजे मायया दिव्यरूपया ।
तमश्च नाशयामास दैत्यसृष्टं दुरासदं । जहृषे देवराजश्च तं दृष्ट्वा रिपुमर्द्दनं । ८८८५
ददृशु' सर्व्वभूतानि कार्ष्णिं सर्व्वेषु शत्रुषु । अन्तरात्मनि वर्त्तन्तं चेतज्ञमिव तं विदुः ।
एवं व्यतीता रजनी रौक्मिणेयस्य युध्यत' । असुराणां त्रिभागश्च निहतो नातितेजसा ।
यावद्धि योधयामास कार्ष्णिर्दैत्यान् रणाजिरे । सन्ध्योपास्ता जयन्तेन तावद्विष्णुपदीजले ।
अयोधयज्जयन्तश्च यावद्दैत्यान्महाबल. । तावदाकाशगङ्गायां भैम. सन्ध्यामुपास्तवान् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभवधे प्रद्युम्नोत्तरे पञ्चपञ्चाशदधिकशततमोऽध्याय. ॥ १५५ ॥
॥ वैशम्पायन उवाच ॥ जगतश्चक्षुषि ततस्तिमुहूर्त्तोदिते रवौ । प्रादुरासीद्धरिर्देवस्तार्क्ष्येणोरगशत्रुणा । ८८९०
हंसवायुमनोभ्यश्च सुशीघ्रतरग खग । ततो वियति शक्रस्य समीपे कुरुनन्दन ।
समेत्य च यथान्यायं कृष्णो वासवसन्निधौ । पाञ्चजन्यं विमुद्ध्मौ दैत्यानां भयवर्द्धनं ।
तं श्रुत्वाऽभ्यागतस्तत्र प्रद्युम्न. परवीरहा । वज्रणाभं जहीत्युक्त. केशवेन त्वरेति च ।
तार्क्ष्यमारुह्य गच्छेति पुनरेव प्रचोदित. । चकार स तथा वीर. प्रणिपत्य सुरोत्तमौ ।
स मनोरंहसा वीरस्तार्क्ष्येणाशु ययौ नृप । अभ्याशं वज्रनाभस्य महाद्वन्द्वस्य भारत । ८८९५
ततस्तार्क्ष्यगतो वीरस्तद्द् रणमूर्द्धनि । वज्रणाभं स्थिरो भूत्वा सर्व्वास्त्रविदरिन्दितः ।
तेन तार्क्ष्यगतेनैव गदया कृष्णसूनुना । उरस्यभिहतो वीरो वज्रणाभो महात्मना ।
स तेनाभिहतो वीरो दैत्यो मोहवशङ्गत. । चकार च भृशं रक्तं बभ्राम च गतासुवत् ।
आश्वसेत्यथ तं कार्ष्णिरुवाच रणदुर्ज्जय. । लब्धसंज्ञ. स वीरस्तु प्रद्युम्नमिदमब्रवीत् ।
साधु यादव वीर्य्येण श्लाघ्यो मम रिपुर्भवान् । प्रतिप्रहारकालोऽयं स्थिरो भव महाबल । ८९००

एवमुक्त्वा महानादं मुक्त्वा मेघशतोपमं । गदां मुमोच वेगेन सघण्टां वज्रकण्टकां ।
तया ललाटेऽभिहतः प्रद्युम्नो गदया नृप । उद्वमन्रुधिरं भूरि मुमोह यदुपुङ्गवः ।
तं दृष्ट्वा भगवान् कृष्णः पाञ्चजन्यं जलोद्भवं । दध्मावाश्वासनकरं पुत्रस्य रिपुनाशनः ।
तं पाञ्चजन्यशब्देन प्रत्याश्वस्तं महाबलं । दृष्ट्वा प्रमुदिता लोका विशेषेणेन्द्रकेशवौ ।
तस्य चक्रं करे यातं कृष्णच्छन्देन भारत । क्षुरनेमिसहस्रारं दैत्यसङ्घकुलान्तकं । ८८०५
तन्मुमोचाच्युतसुतः शत्रुनाशाय भारत । नमस्कृत्वा सुरेन्द्राय नमस्कृत्वा महात्मने ।
वज्रनाभस्य तत्कायादुच्चकर्त्त शिरस्तदा । नारायणकरोन्मुक्तं दैत्यानामनुपश्यतां ।
गदः सुनाभमवधीद्यतमानं रणाजिरे । हर्म्यपृष्ठे जिघांसन्तं रणदुष्टं भयानकं ।
शाम्बः समरमध्यस्थानसुरानरिमर्द्दनः । निनाय निशितैर्बाणैः प्रेताधिपपरिग्रहं ।
निकुम्भस्तु हते वीरे वज्रनाभे महासुरे । जगाम षट्पुरं वीरो नारायणभयार्द्दितः । ८८१०
निवर्द्दिते रिपौ तस्मिन् वज्रनाभे दुरासदे । अवतीर्णौ महात्मानौ हरी वज्रपुरं तदा ।
लब्धप्रशमनञ्चैव चक्रतुः सुरसत्तमौ । सान्त्वयामासतुश्चैव चालवृद्धं भयार्द्दितं ।
इन्द्रोपेन्द्रौ महात्मानौ मन्त्रयित्वा महाबलौ । आयत्याञ्च तदात्वे च बृहस्पतिमतानुगा ।
वज्रनाभस्य तद्राज्यं चतुर्द्धा चक्रतुर्नृप । विजयस्य चतुर्भागं जयन्ततनयस्य तु ।
प्रद्युम्नस्य चतुर्भागं रौक्मिणेयसुतस्य च । चन्द्रप्रभस्य ददतुश्चतुर्भागं जनेश्वर । ८८१५
कोव्यश्चतस्रो ग्रामाणामधिकास्ता विशाम्पते । शाखापुरसहस्राणि स्फीतं वज्रपुरोपमं ।
चतुर्द्धा चक्रतुस्तत्र संहृष्टौ शक्रकेशवौ । कम्बलाजिनवासांसि रत्नानि विविधानि च ।
चतुर्द्धा चक्रतुर्धीरौ वीर वासवकेशवौ । ततोऽभिषिक्तास्ते वीरा राजानो वासवाज्ञया ।
देवदुन्दुभिवाद्येन नृप विष्णुपदोजलैः । स्वयं शक्रेण देवेन केशवेन च धीमता ।
चापि वेश्मे महात्मानः शक्रमाधवनन्दनाः । विजयस्य प्रसिद्धेव गतिर्वियति धीमतः । ८८२०
मात्स्येन गुणेनापि साधयानां महात्मनां । अभिषिच्य जयन्तन्तु वासवो भगवान् ब्रवीत् ।
त्वयैते वीर संरक्ष्या राजानः समितिञ्जय । मम वंशकरो ह्येकः केशवस्य चयोऽनघ ।
अवध्याः सर्वभूतानां भविष्यन्ति ममाज्ञया । गमनागमनञ्चैव दिवि सिद्धं भविष्यति ।
त्रिविष्टपं द्वारकाञ्च रम्यां भैमाभिरक्षितां । दिशागजसुरश्चागान् हयांश्चैव.अश्वोऽश्वयान् ।
रूपधेयां सुपर्णञ्च रथांश्चाप्युरुनानपि । गजैरावतसुतौ प्रद्युम्नरिपुघ्नयोः । ८८२५
सपक्षाकारगौ वीर साम्बस्य च गदस्य च । चाकाशेन पुरीं यातुं द्वारकां भैमरक्षितां ।
चापातौ च युवौ द्रष्टुं चयोद्यं भैमनन्दनौ । इति सन्दिश्य भगवान् देवराज पुरन्दरः ।
जगाम भगवान् स्वर्गं द्वारकामपि केशव । चक्रायुधानुविगृह्य गदः प्रद्युम्न एव च ।
जग्मतु द्वारकां यातान्ते राज्ये सदश्वकाः । चत्वारि तानि राज्यानि सैरा. पार्श्वे सुरोत्तमे ।
स्थापितानि च जगत्यास्मिन् क्षात्रधर्मपरश्रिमः । विद्युतो भैमनाभे पुष्टे सर्गे चापि दुर्भिक्षु । ८८३०

गदप्रद्युम्नशाम्बास्ते गता वज्रपुरं विभो। ततः प्राप्य पुनर्यान्ति स्वर्गं स्वैः कर्मभिः शुभैः।
प्रसादेन च कृष्णस्य लोककर्त्तुर्जनेश्वर। प्रद्युम्नोत्तरमेतत्ते नृदेव कथितं मया।
धन्यं यशस्यमायुष्यं शत्रुनाशनमेव च। पुत्त्रपौत्त्रा विवर्द्धन्ते आरोग्यधनसम्पदा।
धर्मो विपुलमाप्नोति द्वैपायनवचो यथा।
इति श्रीमहाभारते खिलेषु हरिवंशे प्रद्युम्नोत्तरे वज्रनाभवधे षट्पञ्चाशदधिकशतोऽध्यायः॥ १५६ ॥
॥ वैशम्पायन उवाच॥ ददर्शाथ पुरीं कृष्णो द्वारकां गरुडे स्थितः। देवसद्मप्रतीकाशां समन्तात् प्रतिनादितां। ८८०५
मणिपर्व्वतयन्त्राणि तथा क्रीडागृहाणि च। उद्यानवनमुख्यानि वडभीचत्वराणि च।
संप्राप्ते च तदा कृष्णे वसुदेवात्मजे पुरीं। विश्वकर्म्माणमाहूय देवराजोऽब्रवीदिदं।
प्रियमिच्छसि चेत् कर्त्तुं मह्यं शिल्पवताम्बर। कृष्णप्रियार्थं भूयस्त्वं प्रकुरुष्व मनोहरां।
उद्यानशतसम्बाधां द्वारकां स्वर्गसन्निभां। कुरुष्व विबुधश्रेष्ठ यथा मम पुरी तथा।
यत्किञ्चित्त्रिषु लोकेषु रत्नभूतं प्रपश्यसि। तेन संयुज्यतां क्षिप्रं पुरी द्वारवती त्वया। ८८१०
कृष्णो हि सुरकार्य्येषु सर्व्वेषु सततोत्थितः। संग्रामान् घोररूपांश्च विगाहति महाबलः।
तामिन्द्रवचनात् कृत्वा विश्वकर्म्मा पुरीं ततः। अलञ्चक्रे समन्ताद्वै यथेन्द्रस्यामरावती।
तां ददर्श दशार्हाणामीश्वरः पक्षिवाहनः। विश्वकर्म्मकृतैर्द्दिव्यैरभिप्रायैरलङ्कृतां।
तां तदा द्वारकां दृष्ट्वा विभुर्नारायणो हरिः। हृष्टः सर्व्वार्थसम्पन्नः प्रवेष्टुमुपचक्रमे।
सोऽपश्यद्वृक्षषण्डांश्च रम्यान्दृष्टिमनोहरान्। द्वारकां प्रति दाशार्हश्चिचितां विश्वकर्म्मणा। ८८१५
पद्मषण्डाकुलाभिश्च हंससेवितवारिभिः। गङ्गासिन्धुप्रकाशाभिः परिखाभिर्वृतां पुरीं।
प्राकारेणार्कवर्णेन शातकौम्भेन राजता। वयमूर्द्ध्नि निविष्टेन द्यां यथैवाभ्रमालया।
काननैर्नन्दनप्रख्यैस्तथा चैत्ररथोपमैः। बभौ चाक्रपरिक्षिप्ता द्वारका द्यौरिवाम्बुदैः।
बभौ रैवतकः शैलो रम्यसानुगुहाजिरः। पूर्व्वस्यां दिशि लक्ष्मीवान् मणिकाञ्चनतोरणः।
दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते। इन्द्रकेतुप्रतीकाशः पश्चिमस्यां तथा क्षयः। ८८२०
उत्तरां दिशमत्यर्थं विभूषयति वेणुमान्। मन्दराद्रिप्रतीकाशः पाण्डुरः पार्थिवर्षभ।
चित्रकं पञ्चवर्णञ्च पाञ्चजन्यवनं महत्। सर्व्वर्तुकवनञ्चैव भाति रैवतकं प्रति।
लतावेष्टितपर्य्यन्तं मेरुप्रभवनं महत्। भाति भार्गवनञ्चैव पुष्करञ्च महद्वनं।
चम्पकैर्निजकैश्चैव मन्दारैरुपशोभितं। शतावर्त्तवनञ्चैव करवीरकरम्भि च।
भाति चैत्ररथञ्चैव नन्दनञ्च वनं महत्। रमणं भावनञ्चैव वेणुमद्वै समन्ततः। ८८२५
वैदूर्य्यपत्रैर्नलिनैर्युता मन्दाकिनी नदी। भाति पुष्करिणी रम्या पूर्व्वस्यां दिशि भारत।
माणवी भूमिमानञ्च केशवस्य प्रियैषिभिः। वज्रभिर्द्देवगन्धर्व्वैर्देवैः दिव्यैर्विश्वकर्म्मणा।
महानदी द्वारवती पञ्चधाद्विसर्व्वतः शुभा। प्रविष्टा पुण्यसलिला भावयन्ती समन्ततः।
अप्रमेयां महोत्सेधामगाधपरिखायुतां। प्राकारवरसम्पन्नां सुधापाण्डरलेपनां।

तीक्ष्णयन्त्रशतघ्नीभिर्हैमजालैश्च भूषिता । आयसैश्च महाचक्रैर्ददर्श द्वारकां पुरीं । ८६०
अष्टौ रथ सहस्राणि नगरे किङ्किणीकिनां । समुच्छ्रितपताकानि यथा देवपुरे तथा ।
अष्टयोजनविस्तीर्णामचलां द्वादशायतां । द्विगुणोपनिवेशाञ्च ददर्श द्वारकां पुरीं ।
अष्टमार्गमहारथ्यां महाषोडशचत्वरां । एकमार्गपरिक्षिप्तां साक्षादुशनसा कृतां ।
स्त्रियोऽपि यस्यां युध्येरन् किमु वृष्णिमहारथाः । व्यूहानामुत्तमा मार्गाः सप्त चैव महापथाः ।
तत्र वै विहिताः साक्षाद्दिविधा विश्वकर्मणा । तस्मिन् पुरवरश्रेष्ठे दाशार्हाणां यशस्विनां । ८६५
वेश्मानि जहृषे दृष्ट्वा ततो देवकिनन्दनः । काञ्चनैर्मणिसोपानैरुपेतानि सुहर्षणे. ।
भीमघोषमहाघोषै. प्रासादवरचत्वरैः । समुच्छ्रितपताकानि पारिप्लववनानि च ।
काञ्चनाग्राणि भास्वन्ति प्रासादशिखराणि च । गृहाणि रमणीयानि मेरुकूटनिभानि च ।
पाण्डुपाण्डरशृङ्गैश्च शातकुम्भपरिष्कृतैः । रत्नसानुगुहाशृङ्गैर्विचित्रैरिव पर्व्वतैः ।
पञ्चवर्णैः सुवर्णैश्च पुष्पवृष्टिसमप्रभैः । पर्ज्जन्यतुल्यनिर्घोषैर्नानारूपैरिवाद्रिभिः । ८७०
दावाग्निज्वलितप्रख्यैर्निर्म्मितैर्विश्वकर्मणा । आलिखद्भिरिवाकाशमतिचन्द्रार्कभास्वरैः ।
तैर्ह्रदैर्महाभागैर्बभासे तद्दनं क्रमैः । वासुदेवेन्द्रपर्ज्जन्यैर्गृहमेघैरलङ्कृता ।
ददृशे द्वारका चारु मेघैर्द्यौरिव संवृता । साक्षाद्भगवतो वेश्म विहितं विश्वकर्मणा ।
ददृशे वासुदेवस्य चतुर्योजनमायतं । तावदेव च विस्तीर्णमप्रमेयं महाधनं ।
प्रासादवरसम्पन्नैर्युक्तं जगति पर्व्वतैः । यच्चकार महाभागस्त्वष्टा वासवचोदितः । ८७५
प्रासादश्चैव हेमाभं सर्व्वभूतमनोहरं । मेरोरिव गिरेः शृङ्गमुच्छ्रितं काञ्चनं महत ।
रुक्मिण्याः प्रवरं वासं विहितं विश्वकर्मणा । सत्यभामा पुनर्वेश्म यदावसत पाण्डरं ।
विचित्रमणिसोपानं तद्विदुर्भोगवानिति । विमलादित्यवर्णाभिः पताकाभिरलङ्कृतं ।
चतुरंशसमोद्देशो चतुर्दिक्षु महाध्वजः । स च प्रासादमुख्योऽथ जाम्बवत्या विभूषितः ।
प्रभयाऽभ्यभवत् सर्व्वांस्तानन्यान् भास्करो यथा । उपचद्भास्करवर्णाभस्तयोरन्तरमाश्रितः । ८८०
विश्वकर्म्मकृतो दिव्यः कैलासशिखरोपमः । जाम्बूनद इवादीप्तः प्रदीप्तज्वलनोपमः ।

योजनायतविस्कम्भं सर्व्वरत्नमयं शुभं । स श्रीमान् विरजा नाम यत्राजत्तत्र सुप्रभः । ८९९०
उपस्थानगृहं यत्तु केशवस्य महात्मनः । तस्मिन् सुविहिता सर्व्वे रुक्मदण्डाः पताकिनः ।
सदने वासुदेवस्य मार्गसञ्जवनध्वजाः । रत्नजालानि तावन्ति यावन्तस्ते निवेशिताः ।
आहृत्य यदुसिंहेन वैजयन्तो ऽचलो महान् । हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरः प्रति ।
षष्टितालसमुत्सेधमर्द्धयोजनमायतं । सकिन्नरमहानागं तदप्यमिततेजसा ।
पश्यतां सर्व्वनागानमानीतं लोकविश्रुतं । आदित्यपथगं यत्तु मेरोः शिखरमुत्तमं । ८९९५
पुण्डरीकशतैर्जुष्टं विमानैश्च हिरण्मयैः । जाम्बूनदमयं दिव्यं त्रिषु लोकेषु विश्रुतं ।
तदप्युत्पाट्य कृष्णार्थमानीतं विश्वकर्मणा । भ्राजमानमतीवाग्र्यं सर्व्वौषधिसमन्वितं ।
तदिन्द्रवचनात्त्वष्टा कार्य्यहेतोः समानयत् । पारिजातश्च तत्रैव केशवेनाहृतः स्वयं ।
नीयमाने हि तत्रासीद्युद्धमद्भुतकर्मणः । कृष्णस्य ये ऽभ्यरक्षन्त देवाः पादपमुत्तमं ।
पुण्डरीकशतैर्जुष्टा विमानैश्च हिरण्मयैः । विहिता वासुदेवार्थं रत्नपुष्पफलद्रुमाः । ९०००
पद्मषण्डजलोपेता रत्नसौगन्धिकोत्पलाः । मणिहेमसवाकीर्णाः पुष्करिण्यः सरांसि च ।
तासां परमकूलानि शोभयन्ति महाद्रुमाः । शालास्तालाः कदम्बाश्च शतशाखाश्च रोहिणाः ।
ये च हैमवता वृक्षा ये च मेरुरुहास्तथा । आहृत्य यदुसिंहार्थं विहितं विश्वकर्मणा ।
रक्तपीतारुणश्यामाः श्वेतपुष्पाश्च पादपाः । सर्व्वर्त्तुफलसम्पन्नास्तेषु काननसन्धिषु ।
समकूलजलोपेताः शीतशर्करवालुकाः । तस्मिन् पुरवरे सद्य प्रसन्नसलिला ह्रदाः । ९००५
पुष्पाकुलजलोपेता नानाद्रुमलताकुलाः । अपरास्वाभवन्नद्यो हेमशर्करवालुकाः ।
मत्तबर्हिणसङ्घैश्च कोकिलैश्च सदामदैः । बभूवुः परमोपेतास्तस्यां पुर्य्यान्तु पादपाः ।
तत्रैव गजयूथानि पुरे गोमहिषास्तथा । निवासश्च कृतस्तत्र वराहमृगपक्षिणां ।
पूर्य्यां तस्यान्तु रम्यायां प्रासादो वै हिरण्मयः । व्यक्तं किष्कुशतोत्सेधो विहितो विश्वकर्मणा ।
ते च ते च महाशैलाः सरितश्च सरांसि च । परिक्षिप्तानि भौमेन वनान्युपवनानि च । ९०१०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि द्वारवतीविशेषनिर्म्माणे सप्तपञ्चाशदधिकशततमो ऽध्यायः ॥ १५७ ॥
॥ वैशम्पायन उवाच ॥ एवमालोकयानः स द्वारकां वृषभेक्षणः । अपश्यत स्वसदनं कृष्णः प्रासादशतशोभितं ।
मणिस्तम्भसहस्राणामयुतैर्विधृतं सितैः । सौवर्णैर्ज्वलनप्रख्यैर्मणिविद्रुमराजतैः ।
तत्र तत्र प्रभासद्भिश्चित्रकाञ्चनवेदिकैः । प्रासादस्तत्र सुमहान् कृष्णोपस्थानिको ऽभवत् ।
स्फाटिकस्तम्भविधृतो विस्तीर्णः सर्व्वकाञ्चनः । पद्माकुलजलोपेता रक्तसौगन्धिकोत्पलाः ।
मणिहेमनिभाश्चित्रा रत्नसोपानभूषिताः । मत्तबर्हिणजुष्टाश्च कोकिलैश्च सदामदैः । ९०१५
बभूवुः परमोपेता वाप्यश्च विकचोत्पलाः । विश्वकर्म्मकृताः शैलाः प्राकारास्तस्य वेश्मनः ।
व्यक्तं किष्कुशतोत्सेधः परिखापरिवेष्टितः । तद्गृहं वृष्णिसिंहस्य निर्म्मितं विश्वकर्म्मणा ।
महेन्द्रवेश्मप्रतिमं समन्तादर्द्धयोजनं । ततस्तं पाण्डरं शौरिर्मूर्द्ध्नि तिष्ठन् गरुत्मतः ।

ततः सान्दीपनिं पूर्वमभिवाद्य जनार्दनः । ववन्दे वृष्णिनृपतिमाहुकं विनयान्वितः ।
तथाऽश्रुपरिपूर्णाक्षमानन्दागतचेतसं । ववन्दे सह रामेण पितरं वासवानुजः ।
उपगम्य तथा श्रेयान् सत्कृत्य च यथार्हतः । सर्वेषां नाम जग्राह दाशार्हाणामधोक्षजः ।
ततः सर्वाणि दिव्यानि सर्वरत्नमयानि च । आसनाग्र्याणि विविशुरुपेन्द्रप्रमुखास्तथा ।
ततस्तद्धनमघर्यं किङ्करैर्यत् समाहृतं । तत्सभामानयामासुः पुरुषाः कृष्णशासनात् ।
ततः संमानयामास दाशार्हान् यदुसत्तमः । सर्वान्दुन्दुभिशब्देन पूजयिष्यन् जनार्दनः ।
तामासनवतीं रम्यां मणिविद्रुमतोरणां । सभां सर्वदशार्हास्ते विविशुः कृष्णशासनात् ।
ततः पुरुषसिंहैः सा यदुभिः सर्वतो वृता । शुशुभेऽभ्यधिकं शुभ्रा सिंहैर्गिरिगुहा यथा ।
रामेण सह गोविन्दः काञ्चनं महदासनं । उग्रसेनं पुरस्कृत्य भोजवृष्णिपुरस्कृतः ।
तत्रोपविष्टस्तान् वीरान् यथाप्रीति यथावयः । समाभाष्य यदुश्रेष्ठानुवाच पुरुषोत्तमः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि सभाप्रवेशे ऊनषष्ट्यधिकशततमोऽध्यायः ॥ १५८ ॥
॥ कृष्ण उवाच ॥ भवतां पुण्यकीर्त्तीनां तपोबलसमाधिभिः । अपध्यानाच्च पापात्मा भौमः स नरको हतः ।
मोचितुं बन्धनाच्छुभ्रं कन्यान्तःपुरमुत्तमं । मणिपर्वतमुत्पाट्य शिखरं वै तदाहृतं ।
अयं धनौघः सुमहान् किङ्करैराहृतो मम । ईशा भवन्तो द्रव्यस्य तानुक्त्वा विरराम ह ।
तच्छ्रुत्वा वासुदेवस्य भोजवृष्ण्यन्धका वचः । प्रहृष्टरोमाणः पूजयन्तो जनार्दनं ।
ऊचुश्चैनं नृवीरास्ते कृताञ्जलिपुटास्ततः । नैतच्चित्रं महाबाहो त्वयि देवकिनन्दन ।
यत्त्वया दुष्करं कर्म देवैरपि सुदुष्करं । त्रासये त्वजनान् भोगैरन्यैश्च स्वयमर्जितैः ।
ततः सर्वदशार्हाणामाहुकस्य च याः स्त्रियः । प्रीयमाणाः सभां जग्मुर्वसुदेवदिदृक्षया ।
देवकीप्रमुखा देव्यो रोहिणी च शुभानना । ददृशुः कृष्णमासीनं रामञ्चैव महाभुजं ।
तौ तु पूर्वमभिक्रम्य रोहिणीमभिवाद्य च । अभ्यवादयतान्देवीं देवकीं रामकेशवौ ।
सा ताभ्यामृषभाभ्यां वै पुत्राभ्यां शुशुभेऽधिकं । अदितिर्देवमातेव मित्रेण वरुणेन च ।
ततः प्राप्तो नरान्द्वै तु तस्याः सा दुहिता तदा । एकानंशेति यामाहुर्नरा वै कामरूपिणीं ।
यया सुगुप्तोऽभ्यां यया जज्ञे सुरेश्वरः । यत्कृते सगणं कंसं जघान पुरुषोत्तमः ।
सा कन्या वद्धे तत्र वृष्णिसद्मनि पूजिता । पुत्रवत् पाल्यमाना वै वासुदेवाज्ञया तदा ।
एकानंशेति यामाहुरुत्पन्नां मानवा भुवि । योगकन्यां दुराधर्षां रक्षार्थं केशवस्य ह ।
तां वै सर्वे सुमनसः पूजयन्ति स्म यादवाः । देववद्दिव्यवपुषा कृष्णः संरक्षितो यया ।
ताञ्च तत्रोपसङ्गम्य प्रियामिव सखीं सखा । दक्षिणेन करायेण परिजग्राह माधवः ।
तथैव रामोऽतिबलः संपरिष्वज्य भामिनीं । मूर्द्ध्न्युपाघ्राय सव्येन परिजग्राह पाणिना ।
ददृशुस्ताः स्त्रियो मध्ये भगिनीं रामकृष्णयोः । रुक्मपद्मकरां श्रियं पद्मालयामिव ।
ततोऽक्षतमहावृष्ट्या पुष्पैश्च विविधैः शुभैः । लाजैश्च घृतमिश्रैः स्त्रियो समुपवर्षयन् ।

ततस्ते यादवाः सर्व्वे पूजयन्तो जनार्द्दनं। उपोपविविशुः प्रीताः प्रशंसन्तोऽद्भुतं कृतं।
पूज्यमानो महाबाहुः पौराणां रतिवर्द्धनं। विजहार महाकीर्त्तिर्द्देवैरिव स तैः सह।
समासीनेषु सर्व्वेषु यादवेषु जनार्द्दनं। नियोगाच्चिदशेन्द्रस्य नारदोऽभ्यागमत् सभां।
सोऽथ संपूजित पूज्य प्रूरैसैर्यदुपुङ्गवैः। करे संस्पृश्य गोविन्दं विवेश परमासने। ६८०
सुखोपविष्टस्तान् कृष्णोनुपविष्टानुवाच ह। संप्राप्तं शक्रवचनाज्जानीर्ध्वं मानवर्षभा।
शृणुध्वं राजशार्दूला कृष्णस्यास्य पराक्रमं। यानि कर्म्माणि कृतवान् बाल्यात् प्रभृति केशवः।
उग्रसेनसुतं कंस सर्व्वान्निर्ज्जित्य यादवान्। राज्यं जग्राह दुर्ब्बुद्धिर्ब्बद्धा पितरमाहुकं।
समाश्रित्य जरासन्धं श्वशुरं कुलपांसन। भोजवृष्ण्यन्धकान् सर्व्वानवमन्य सुदुर्मति।
ज्ञातिकार्य्यं चिकीर्षंस्तु वसुदेव प्रतापवान्। उग्रसेनस्य रक्षार्थं स्वपुत्रं पर्य्यरक्षत। ६८५
स गोपे सह धर्म्मात्मा मथुरोपवने वसन्। अत्यद्भुतानि कर्म्माणि कृतवान्मधुसूदन।
प्रत्यक्षं शूरसेनानां श्रयतां महदद्भुतं। अधोऽसेन शयानेन शकटान्तरचारिणा।
राक्षसी निहता रौद्री शकुनीवेशधारिणी। पूतना नाम घोरा सा महाकाया महाबला।
विषदिग्धं स्तनं क्षुद्रा प्रयच्छन्ती जनार्द्दने। ददृशुस्तां विनिहतां राक्षसीं ते वनौकस।
बले सुतां महाघोरां भीषणां विकृताननां। पुनर्ज्जातोऽयमित्याहुरुक्तस्तस्मादधोक्षज। ६९०
अत्यद्भुतमिदञ्चासीदपश्चिमः पुरुषोत्तम। पादाङ्गुष्ठेन शकटं क्रीडमानो व्यलोडयत्।
दाम्ना चोलूखले बद्धो विप्रकुर्व्वन् कुमारकान्। यमलार्ज्जुनवृक्षौ द्वौ ख्यातो दामोदरस्तत।
कालियश्च महानागो दुराधर्षो महाबल। क्रीडता वासुदेवेन निर्ज्जितो यमुनाह्रदे।
अक्रूरस्य समक्षञ्च यन्नागभवने प्रभु। पूज्यमानस्तदा नागैर्द्दिव्यं वपुरधारयत्।
शीतवातार्द्दिता गाश्च दृष्ट्वा कृष्णेन धीमता। धृतो गोवर्द्धन शैल सप्तरात्रं महात्मना। ६९५
शिशुना वासुदेवेन गवां त्राणार्थमिच्छता। तथा सुदुष्टोऽतिबलो महाकायो नराशन।
गोपतिर्व्वासुदेवेन रिष्टको विनिपातितः। धेनुक सुमहाकायो दानव सुमहाबल।
निहतो वासुदेवेन गवां त्राणाय दुर्म्मति। सुनामानममित्रघ्न सर्व्वसैन्यपुरस्कृतं।
वृकैर्व्विद्रावयामास पशीहं समुपस्थितं। रौहिणेयेन सङ्गम्य वने विचरता पुन।
गोपवेशधरेणैव कंसस्य भयमाहित। तथा प्रजगत शौरिर्द्दंष्ट्रायुधबलं हयं। ७००
अप्रहं भोजराजस्य जघान पुरुषोत्तम। प्रलम्बश्च महाकायो रौहिणेयेन धीमता।
दानवो मुष्टिनैकेन कंसामात्यो निपातित। एतौ हि वसुदेवस्य सुतौ देवसुतोपमौ।
वसुधायां महावीर्य्यौ भ्रमगार्ग्येण संकृतौ। जन्मप्रभृति चाप्येतौ गार्ग्येण परमर्षिणा।
यथा तथ्येन विज्ञाय संस्कारं प्रतिपादितौ। यदा तिमौ नरश्रेष्ठौ स्थितौ यौवनसंमुखे।
सिंहशावाविवोदीर्णौ मत्तौ हैमवतौ यथा। ततो मनांसि गोपीना हरमाणौ महाबलौ। ७०५
चारणां गोष्ठचरौ वीरौ देवपुत्रोपमद्युतौ। रतौ जले वा युद्धे वा क्रीडासु विविधासु च।

नन्दगोपस्य गोपाला न शेकुः प्रसमीक्षितुं । व्यूढोरस्कौ महाबाहू बालस्कन्धाविवोद्गतौ ।
श्रुत्वेमौ व्यथितः कंसो मन्त्रिभिः सहितोऽभवत् । नाशकच्च यदा कंसो ग्रहीतुं बलकेशवौ ।
निजग्राह ततः कोपाद्वसुदेवं सबान्धवं । महोग्रसेनेन तदा घोरवद्गाढबन्धनं ।
कालं महान्तमवसत् कृच्छ्रमानकदुन्दुभिः । कंसस्तु पितरं बद्ध्वा शूरसेनान् शशास ह । ८११०
जरासन्धं समाश्रित्य तथैवाकृतिभीष्मकौ । कस्यचित्त्वथ कालस्य मथुरायां महोत्सवं ।
पिनाकिनं समुद्दिश्य चक्रे कंसो नराधिप । तत्र मल्लाः समाजग्मुर्नानादेश्या विशाम्पते ।
नर्त्तना गायनाश्चैव कुशला नृत्यसामसु । ततः कंसो महातेजा रङ्गवाटं महाधनं ।
कुशलैः कारयामास शिल्पिभिः साधुनिष्ठितैः । तत्र मञ्चसहस्राणि पौरजानपदैर्जनैः ।
समाकीर्णान्यदृश्यन्त ज्योतींषि गगने यथा । भोजराजः श्रिया जुष्टं रङ्गवाटं महर्द्धिमत् । ८११५
आरुरोह ततः कंसो विमानं सुकृती यथा । रङ्गद्वारि गजं मत्तं प्रभूतायुधकल्पितं ।
शूरैरधिष्ठितं कंस स्थापयामास वीर्य्यवान् । यदा हि स महातेजा रामकृष्णौ समागतौ ।
शुश्राव पुरुषव्याघ्रौ सूर्य्याचन्द्रमसाविव । तदाप्रभृति यत्तोऽभूद्वधं प्रति नराधिप ।
न च शिश्ये सुखं रात्रौ रामकृष्णौ विचिन्तयन् । श्रुत्वा तु रामः कृष्णश्च तं समाजमनुत्तमं ।
उभौ विविशतुर्वीरौ शार्दूलौ गोव्रजं यथा । ततः प्रवेशे संरब्धौ रक्षिभिः पुरुषर्षभौ । ८१२०
हत्वा कुवलयापीडं समादिनमरिन्दमौ । अवमृद्य दुराधर्षौ रङ्गं विविशतुस्तदा ।
चाणूरान्ध्रौ विनिष्पिष्य केशवेन बलेन च । औग्रसेनिः सुदुष्टात्मा सानुजो विनिपातितः ।
यत् कृतं यदुसिंहेन देवैरपि सुदुष्करं । कर्म्म तत् केशवादन्यः कर्त्तुमर्हति कः पुमान् ।
यद्धि नाधिगतं पूर्व्वैः प्रह्लादबलिशम्बरैः । तदिदं प्रापितं वित्तं शौरिणा भवतां कृते ।
एतेन सुरमाक्रम्य दैत्यं पञ्चजनं तथा । निष्क्रम्य शैलसंघातान्निसुन्दः सगणो हतः । ८१२५
नरकश्च हतो भौमः कुण्डले चाहृते शुभे । प्राप्तश्च दिवि देवेषु केशवेन महद्यशः ।
वीतशोकभयाबाधाः कृष्णबाहुबलाश्रयाः । यजध्वं विविधैर्यज्ञैर्यादवा वीतमत्सराः ।
देवानां सुमहत् कार्य्यं कृतं कृष्णेन धीमता । प्रियमावेदयाम्येष भवतां भद्रमस्तु वः ।
यदिष्टं वो यदुश्रेष्ठाः कर्त्ताऽस्मि तदतन्द्रितः । भवतामस्मि यूयञ्च मम युष्मास्वहं स्थितः ।
इति संबोधयन् कृष्णमब्रवीत् पाकशासनः । स मां प्रेषीत सुरश्रेष्ठः प्रीतस्तुष्टो यथा वयं । ८१३०
यत्र ह्रीः श्रीः स्थिता तत्र यत्र श्रीस्तत्र सन्नतिः । सन्नतिर्ह्रीस्तथा श्रीश्च नित्यं कृष्णे महात्मनि ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नारदवाक्ये नवत्यधिकशततमोऽध्यायः ॥ १९० ॥
॥ नारद उवाच ॥ सादिता भौरवाः पाशा निसुन्दनरकौ हतौ । कृतः क्षेम्यः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ।
शौरिणा पृथिवीपालास्त्रासिताः स्वर्द्धिनो रणे । धनुषश्च निनादेन पाञ्चजन्यस्वनेन च ।
मेघप्रख्यैरथानीकैर्दाक्षिणात्यैः सुरक्षितं । रुक्मिणं युधि निर्ज्जित्य महाबलपराक्रमं ।
रुक्मिणीमाजहाराग्र्यां केशवो वृष्णिपुङ्गवः । ततः पर्ज्जन्यघोषेण रथेनादित्यवर्च्चसा । ८१३५

उवाह महिषीं भोजां शङ्खचक्रगदासिभृत्। जारूथ्यामाहृतिः क्राथः शिशुपालश्च निर्ज्जितः।
वक्रश्च सह सैन्येन शतधन्वा च निर्ज्जितः। इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुमान्।
हतः सौभपतिः श्रीमान् शाल्वश्च दृढधन्वना। पर्व्वतानां सहस्रन्तु चक्रेण पुरुषोत्तमः।
विकीर्य्य पुण्डरीकाक्षो क्रुमसेनमपोथयत्। महेन्द्रशिखरे चैव निमिषान्तरचारिणौ।
जघान पुरुषव्याघ्रो रावणस्याभितश्चरौ। इरावत्यां महाभोजावग्निसूर्य्यसमौ युधि। ८१०
गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना। अक्षप्रपातने चैव निमिर्हंसश्च दानवौ।
उभौ तावपि कृष्णेन सानुगौ विनिपातितौ। दग्धा वाराणसी चैव केशवेन महात्मना।
सराष्ट्रः सानुबन्धश्च काशीनामधिपो हतः। विजित्य च मयं संख्ये शरैः सन्नतपर्व्वभिः।
अथैन्द्रसेनिरानीतः कृष्णेनाद्भुतकर्म्मणा। वेष्टितः सर्व्वयादोभिः सागरेषु महाबलः।
प्राप्य लोहितकूटञ्च कृष्णेन वरुणो जितः। महेन्द्रभवने जातो देवैर्गुप्तो महात्मभिः। ८१५
अचिन्तयित्वा देवेन्द्रं पारिजातद्रुमो हृतः। पाण्ड्यं पौण्ड्रं कलिङ्गञ्च मात्स्यञ्चैव जनार्द्दनः।
जघान सहितान् सर्व्वान् वङ्गराजं तथैव च। एष चैकशतं हत्वा रणे राज्ञां महात्मनां।
गान्धारीमावहद्धीमान्महिषीं प्रियदर्शनां। तथा गाण्डीवधन्वानं क्रीडन्तं मधुसूदनः।
जिगाय भरतश्रेष्ठं कुन्त्याः प्रमुखतो विभुः। द्रोणं द्रौणिं कृपं कर्णं भीष्मञ्चैव सुयोधनं।
चक्रानुयाने सहितान् जिगाय पुरुषोत्तमः। सभोयः प्रियमन्विच्छन् शङ्खचक्रगदासिभृत्। ८२०
सौवीरराजस्य सुतां प्रसह्य हृतवान् प्रभुः। पर्य्यन्तां पृथिवीं कृत्स्नां सायां सरथकुञ्जरां।
वेणुदारिकृते यश्चाज्जिगाय पुरुषोत्तमः। अवाप तपसो वीर्य्यं बलमोजश्च माधवः।
पूर्व्वदेहे जहारायं बलेस्त्रिभुवनं हरिः। वज्रासनिगदाखड्गैस्त्रासयन्निव दानवैः।
यस्य नाधिगतो मृत्युः पुरं प्राग्ज्योतिषं प्रति। अभिभूतश्च कृष्णेन सगणः स महाबलः।
बलेः पुत्रो महावीर्य्यो बाणो द्रविणवत्तरः। पीठं तथा महाबाहुं कंसामात्यं जनार्द्दनः। ८२५
पैठिकञ्चासिलोमानं निजघान महाबलः। जम्भैरावतञ्चापि विरूपञ्च महायशाः।
जघान पुरुषव्याघ्रो दैत्यं मानुषरूपिणं। तथा नागपतिं तोये कालियञ्च महौजसं।
निर्ज्जित्य पुण्डरीकाक्ष. प्रेषयामास सागरं। संजीवयामास मृतं पुत्रं सान्दीपनेस्तथा।
निर्ज्जित्य पुरुषव्याघ्रो यमं वैवस्वतं हरिः। एवमेव महाबाहुः शास्ता सर्व्वदुरात्मनां।
देवांश्च ब्राह्मणांश्चैव ये दिषन्ति सदा नृप। निहत्य नरकं भौममाहृत्य मणिकुण्डले। ८३०
देवमातुर्द्दरौ चैव प्रीत्यर्थं वज्रपाणिनः। एवं सदैव दैत्यानां सुराणाञ्च महायशाः।
भयाभयकरः कृष्णः सर्व्वलोकेश्वरो विभुः। संस्थाप्य धर्म्मं मर्त्येषु यज्ञैरिष्टाप्तदक्षिणैः।
कृत्वा देवार्थममितं स्वस्थानं प्रतिपत्स्यते। कृष्णा भोगवतीं रम्यामृषिकान्तां महायशाः।
द्वारकामात्मसात् कृत्वा समुद्रं गमयिष्यति। बहुरत्नसमाकीर्णां चैत्ययूपशताङ्किता।
द्वारका वरुणावासं प्रवेक्ष्यति सकानना। तां सूर्य्यसदनप्रख्यां मतज्ञः शार्ङ्गधन्वनः। ८३५

निसृष्टां वासुदेवेन सागरः प्लावयिष्यति । सुरासुरमनुष्येषु नासीन्न भविता क्वचित्।
य इमामावसेत कश्चिदन्यो वै मधुसूदनात्। एवमेष दशार्हाणां विधाय विधिमुत्तमं।
विष्णुर्नारायणः सोमः सूर्य्यश्च सविता स्वयं। अचिन्त्यस्त्वप्रमेयश्च यथाकामचरो वशी।
मोदत्येष सदा भूतैर्बालक्रीडनकैरिव । न प्रमातुं महाबाहुः शक्योऽयं मधुसूदन ।
परं ह्यपरमेतस्माद्विश्वरूपान्न विद्यते । स्तुतोऽयमेवं शतशस्तथा शतसहस्रशः । ९९७०
अन्तो हि कर्म्मणामस्य दृष्टपूर्व्वो न केनचित्। एवमेतानि कर्म्माणि शिशुर्म्मध्यवयास्तथा ।
कृतवान् पुण्डरीकाक्षः सङ्कर्षणसहायवान । इत्युवाच पुरा व्यासस्तपोदिव्येन चक्षुषा ।
महायोगी महाबुद्धिः सर्व्वप्रत्यक्षदर्शिवान् ।
॥ वैशम्पायन उवाच ॥ इति संस्तूय गोविन्दं महेन्द्रवचनादृषिः । यदुभिः पूजितः सर्व्वैर्नारदस्त्रिदिवं ययौ ।
ततस्तदसु गोविन्दो दिदेशान्धकवृष्णिषु । यथार्थं पुण्डरीकाक्षो विधिवन्मधुसूदनः । ९९७५
यादवाश्च धनं प्राप्य विधिवद्भूरिदक्षिणैः । यज्ञैरिष्ट्वा महात्मानो द्वारकामावसन् पुरीं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नारदवाक्ये एकषष्ट्यधिकशततोऽध्यायः ॥ १६१ ॥
॥ जनमेजय उवाच ॥ बह्वीनां स्त्रीसहस्राणामष्टौ भार्य्याः प्रकीर्त्तिताः । तासामपत्यान्यष्टानां भगवान् प्रब्रवीतु मे ।
॥ वैशम्पायन उवाच ॥ अष्टौ महिष्यः पुत्त्रिण्य इति प्राधान्यतः स्मृताः । सर्व्वा वीरप्रजाश्चैव तास्वपत्यानि मे शृणु ।
रुक्मिणी सत्यभामा च देवी नग्नजिती तथा । सुदत्ता च तथा शैव्या लक्ष्मणा जालहासिनी ।
मित्रविन्दा च कालिन्दी जाम्बवत्यथ पौरवी । सुभीमा च तथा माद्री रुक्मिणीतनयान् शृणु । ९९८०
प्रद्युम्नः प्रथमं जज्ञे शम्बरान्तकरः सुतः । द्वितीयश्चारुदेष्णश्च वृष्णिसिंहो महारथः ।
चारुभद्रश्चारुगर्भः सुदंष्ट्रो द्रुम एव च । सुषेणश्चारुगुप्तश्च चारुविन्दश्च वीर्य्यवान्।
चारुबाहुः कनीयांश्च कन्या चारुमती तथा । जज्ञिरे सत्यभामाया भानुर्भीमरथः क्षुपः ।
रोहितो दीप्तिमांश्चैव ताम्रपक्षो जलान्तकः । भानुर्भीमरिका चैव ताम्रपर्णा जलन्धमा ।
चतस्रो जज्ञिरे तेषां स्वसारो गरुडध्वजात्। जाम्बवत्याः सुतो जज्ञे शाम्बः समितिशोभनः । ९९८५
मित्रवान्मित्रविन्दश्च मित्रवत्यपि चाङ्गना । मित्रबाहुः सुनीथश्च नग्नजित्याः प्रजाः शृणु ।
भद्रकारो भद्रविन्दः कन्या भद्रवती तथा । सुदत्तायान्तु शैव्यायां संग्रामजिदजायत ।
सत्यजित सेनजिच्चैव तथा शूरः सपत्नजित्। सुभीमायाः सुतो माद्र्या वृकाश्वो वृकनिर्वृतिः ।
कुमारो वृकदीप्तिश्च लक्ष्मणायाः प्रजाः शृणु । गात्रवान् गात्रगुप्तश्च गात्रविन्दश्च वीर्य्यवान् ।
जज्ञिरे गात्रवत्याऽथ भगिन्याऽनुजया सह । अश्रुतश्च सुतो जज्ञे कालिन्द्याः श्रुतसम्मतः । ९९९०
अश्रुतः श्रुतसेनायै प्रददौ मधुसूदनः । तं प्रदाय हृषीकेशस्तां भार्य्यां मुदितोऽब्रवीत ।
एष वामुभयोरद्य दायादः शाश्वती समाः । बृहत्यान्तु गदस्याङ्ग शैव्यायामङ्गदः सुतं ।
उत्पन्नं कुमुदश्चैव श्वेतं श्वेता तथाऽङ्गना । अगावहः सुमित्रश्च शुचिश्चित्ररथस्तथा ।
चित्रसेनः सुदेवायाश्चित्रा चित्रवती तथा । वनस्तम्बश्च जज्ञाते स्तम्बः स्तम्बवनश्च ह ।

निविशनो वनस्तस्मात् कन्या त्वम्बवती तथा। उपासङ्गस्य तु सुतौ वज्राक्षः क्षिप्र एव च। ९८९५
कौशिक्यां सुतसोमायां यौधिष्ठिर्य्यां युधिष्ठिर। कापाली गरुडश्चैव जज्ञाते चित्रयोधिनौ।
एवमादीनि पुत्त्राणां सहस्राणि निबोध मे। दशायुतं समाख्याता वासुदेवस्य ते सुताः।
अयुतानि तथा चाष्टौ शूरा रणविशारदाः। जनार्द्दनस्य प्रभवः कीर्त्तितोऽयं यथा तथा।
प्रद्युम्नस्य सुतो जज्ञे वैदर्भ्यां राजसत्तम। अनिरुद्धो रणे योद्धा जज्ञे स मृगकेतनः।
रेवत्यां बलदेवस्य जज्ञाते निशठोल्मुकौ। भ्रातरौ देवसङ्काशावुभौ पुरुषसत्तमौ। ९९००
सुतनुश्च नराची च शौरेरास्तां परिग्रहः। पौण्ड्रश्च कपिलश्चैव वसुदेवस्य तौ सुतौ।
नराच्यां कपिलो जज्ञे पौण्ड्रश्च सुतनूसुत। तयोर्नृपोऽभवत् पौण्ड्रः कपिलश्च वनं ययौ।
तुल्यासमभवद्वीरो वसुदेवान्महाबलः। जरा नाम निषादानां प्रभुः सर्व्वधनुष्मतां।
काश्यां सुपार्श्वं तनयं लेभे स हि तरस्विनं। सानुवञ्चोऽनिरुद्धस्य वज्रस्त्वादावजायत।
वज्राज्जज्ञे प्रतिरथः सुचारुस्तस्य चात्मज। अनमित्राच्छिनिर्जज्ञे कनिष्ठाद्वृष्णिनन्दनात्। ९९०५
शिनेस्तु सत्यवाग्जज्ञे सत्यकश्च महारथ। सत्यकस्यात्मज शूरो युयुधानस्त्वजायत।
असङ्गो युयुधानस्य कुणिस्तस्याभवत् सुतः। तूर्णेर्युगन्धरः पुत्त्र इति वंश समाप्यते।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वृष्णिवंशानुकीर्त्तने द्विषष्ट्यधिकशततमोऽध्यायः॥ १६२॥
॥ जनमेजय उवाच ॥ य एष भवता पूर्व्वं शम्बरघ्नेत्युदाहृत। प्रद्युम्न स कथं जघ्ने शम्बरं तद्ब्रवीहि मे।
॥ वैशम्पायन उवाच ॥ रुक्मिण्यां वासुदेवस्य लक्ष्म्यां कामो धृतव्रत। शम्बरान्तकरो जज्ञे प्रद्युम्नः कामदर्शन।
तं सप्तरात्रे संपूर्णे निशीथे सूतिकागृहात्। जहार कृष्णस्य सुतं शिशुं वै कालशम्बरः। ९९१०
विदितं तच्च कृष्णस्य देवमायानुवर्त्तिनः। ततो न निगृहीत स दानवो युद्धदुर्म्मदः।
स मृत्युना परीतायुर्म्मायया प्रजहार तं। दोर्भ्यामुत्क्षिप्य नगरं स्वं निनाय महासुर।
अनपत्या तु तस्यासीद्भार्य्या रूपगुणान्विता। नाम्ना मायावती नाम मायेव शुभदर्शना।
ददौ तं वासुदेवस्य पुत्त्रं पुत्त्रमिवात्मजं। तस्या महिष्या मायिन्या दानवः कालचोदितः।
मायावती तु तं दृष्ट्वा संप्रहृष्टतनूरुहा। हर्षेण महता युक्ता पुनः पुनरुदैक्षत। ९९१५
अथ तस्या निरीक्षन्त्याः स्मृतिः प्रादुर्ब्बभूव ह। अयं स मम कान्तोऽभूत् सत्यैवं चान्वचिन्तयत्।
अयं स नाथो भर्त्ता मे यस्यार्थे क्षि दिवानिशं। चिन्ताशोकह्रदे मग्ना न विन्दामि रतिं क्वचित।
अयं भगवता पूर्व्वं देवदेवेन शूलिना। खेदितेन हतोऽनङ्गो दृष्टो जात्यान्तरे मया।
कथमस्य स्वमं दास्ये मातृभावेन जानती। भर्त्तुर्भार्य्या त्वहं भूत्वा वक्ष्ये वा पुत्त्र इत्युत।
एवं सञ्चिन्त्य मनसा धात्र्यास्तं सा समर्पयत्। रसायनप्रयोगैश्च शीघ्रमेवान्ववर्द्धयत्। ९९२०
धात्र्याः सकाशात् स च तां ऊढवान् रुक्मिणिनन्दनः। मायावतीमविज्ञानात्मने ज्ञामेव मातरं।
सा च तं वर्द्धयामास कार्ष्णिं कमललोचनं। मायाश्चास्मै ददौ सर्व्वा दानवीः काममोहिता।
स यदा यौवनस्थस्तु प्रद्युम्नः कामदर्शन। चिकीर्षितज्ञो नारीणां सर्व्वास्त्रविधिपारग।

तं सा मायावती कान्तं कामयामास कामिनी । इङ्गितैश्चापि वीचन्ती मासोभयत सस्मिता ।
प्रसज्जन्तीन्तु तां देवीं सभावे चारुहासिनीं । ८११९
॥ प्रद्युम्न उवाच ॥ मातृभावं व्यतिक्रम्य किमेवं वर्त्तसेऽन्यथा । अहो दुष्टस्वभावाऽसि स्त्रीत्वे चपलमानसा ।
या पुत्रभावमुत्सृज्य मयि लोभात् प्रवर्त्तसे । ननु तेऽहं सुत. सौम्ये कोऽयं शीलविपर्य्ययः ।
तत्त्वमिच्छाम्यहं देवि कथितं को न्वयं विधि । विद्युत्सम्पातचपल स्वभाव खलु योषितां ।
या नरेषु प्रसज्जन्ते नगाग्रेषु घना इव । यदि तेऽहं सुत सौम्ये यदि वाऽन्यात्मज शुभे ।
कथितं तत्त्वमिच्छामि किमिदं ते चिकीर्षितं । एवमुक्ता तु सा भीरु कामेन व्यथितेन्द्रिया । ८१२०
प्रियं प्रोवाच वचनं विविक्ते केशवात्मजं । न त्वं मम सुत. कान्त नापि ते शम्बर पिता ।
रूपवानसि विक्रान्तस्त्व जात्या वृष्णिनन्दन. । पुत्रस्त्व वासुदेवस्य रुक्मिण्या नन्दिवर्द्धन ।
दिवसे सप्तमे बालो जातमात्रो ऽपवाहित । सूतिकागारमध्यात्त्वं शिशुरुत्तानशायित ।
मम भर्त्रा हृतोऽसि त्वं बलवीर्य्यप्रवर्त्तिना । पितुस्ते वासुदेवस्य धर्षयित्वा गृहं महत् ।
पाकशासनकल्पस्य हृतस्त्वं शम्बरेण ह । सा च ते करुणं माता त्वां बालमनुशोचती । ८१२१
अत्यर्थं तप्यते वीर विवत्सा सौरभी यथा । स हि शक्रादपि महान् पिता ते गरुडध्वज ।
इह त्वां नाभिजानाति बालमेवापवाहितं । कान्त वृष्णिकुमारस्त्वं न हि त्वं शम्बरात्मज ।
वीर नैवंविधान् पुत्रान् दानवा जनयन्ति हि । अतोऽहं कामयामि त्वां न हि त्वं जनितो मया ।
रूपन्ते सौम्य पश्यन्ती सीदामि हृदि दुर्ब्बला । यन्मे व्यवसितं कान्त यच्च मे हृदि वर्त्तते ।
तन्मे मनसि वार्ष्णेय प्रतिसन्धातुमर्हसि । एष ते कथित सर्व्व. सद्भावस्त्वयि यो मम । ८१२२
यथा न मम पुत्रस्त्वं न पुत्र शम्बरस्य च । श्रुत्वैवमखिलं सर्व्वं मायावत्या प्रभाषितं ।
चक्रायुधात्मज क्रुद्ध शम्बरं स समाह्वयत् । सर्व्वमायास्वभिज्ञो ऽसौ नाम विश्राव्य चात्मन. ।
अहो दानव दुष्टात्मा केशवस्यात्मजं शिशुं । हरते निर्भयस्यैव भयमद्य करोम्यह ।
कथं वै क्रोधमागच्छेद्युध्यते च कथं मया । प्रथमं किं करिष्यामि येन कुप्यति मन्दधी ।
अस्ति चास्य ध्वजं चित्रं सिंहकेतुविभूषितं । तोरण स्कन्धमासाद्य उच्छ्रितं मेरुशृङ्गवत् । ८१२३
एतदुन्मथ्य पातिष्ये भल्लेन निशितेन च । ध्वजच्छेदं विदित्वाऽथ शम्बरो निष्क्रमिष्यति ।
ततो युद्धेन हत्वाजौ गन्ताऽस्मि द्वारकां प्रति । इत्युक्त्वा सज्यमाचक्रे शरश्चापमोजसा ।
चिच्छेद ध्वजरत्नन्तु शम्बरस्य महाभुज । तच्छ्रुत्वा तु ध्वजच्छेदं प्रद्युम्नेन महात्मना ।
क्रुद्धस्त्वाज्ञापयामास पुत्रान् वै कालशम्बर । जिघांसध्व महावीरा रौक्मिणेयं त्वरान्विता ।
नैतं वै द्रष्टुमिच्छामि मम विप्रियकारकं । श्रुत्वा तु शम्बराद्वाक्यं सुतास्ते शम्बरस्य ह । ८१२४
सन्नद्धा निर्ययुर्हृष्टा प्रद्युम्नवधकाङ्क्षया । चित्रसेनोऽतिसेनश्च विष्वक्सेनजितस्तथा ।
श्रुतसेन सुषेणश्च सोमसेनो मनस्तथा । सेनानी सैन्यहन्ता च सेनहा धैनिकस्तथा ।
सेनस्कन्धोऽतिषेनश्च शनको जनकस्तत । सकलो विकल शान्त स शान्तान्तकरो विभु ।

कुम्भकेतुः सुदंष्ट्रश्च केशिरित्येवमादयः । चक्रतोमरशूलानि पट्टिशासिपरश्वधान् ।
गृहीत्वा निर्ययुर्द्दृष्टा मृत्युना परिचोदिताः । आकर्षंस्तमनित्रं वै तस्थु संग्राममूर्द्धनि । ९१९५
प्रद्युम्नस्तु महाबाहुरयमारुह्य मत्सरं । निर्ययौ चापमादाय संग्रामाभिमुखस्तदा ।
तत प्रवृत्तं युद्धन्तु तुमुलं लोमहर्षणं । शम्बरस्य च पुत्त्राणां केशवस्य तु सूनुना ।
ततो देवाः सगन्धर्व्वाः समहोरगचारणाः । देवराजं पुरस्कृत्य विमानाग्रेषु विष्ठिताः ।
नारदस्तुम्बुरुश्चैव हाहाहूहूश्च गायनाः । अप्सरोभिः परिवृताः सर्व्वे तत्रावतस्थिरे ।
देवराजप्रतीहारो गन्धर्व्वश्चित्रमद्भुतं । शशंस देवराजाय वज्रिणे चित्रमद्भुतं । ९२००
शम्बरस्य शतं पुत्त्रा एकः कृष्णस्य चात्मजः । बहूना युध्यतामेष कथं विजयमाप्नुयात् ।
तच्छ्रुत्वा भाषितं तस्य प्रहस्य बलसूदनः । उवाच वचनञ्चेदं शृणु योऽस्य पराक्रमः ।
कामोऽयं पूर्व्वदेहे तु हरकोपाग्निनिर्ज्जितः । रत्या प्रसादितो देवः कामपत्न्या त्रिलोचनः ।
परितुष्टेन देवेन वरमस्याः प्रदीयत । विष्णुर्म्मनुष्यदेहस्तु द्वारकायां भविष्यति ।
तस्य पुत्त्रस्तु ते भर्त्ता भविष्यति न संशयः । अनङ्ग इति विख्यातस्त्रिलोकेषु महायशाः । ९२०५
तत्रोत्पन्नो महातेजाः शम्बरं घातयिष्यति । सप्ताहे जातमात्रन्तु रुक्मिण्याः क्रोडसंस्थितं ।
आस्थाय शम्बरो मायां प्रद्युम्नमपनेष्यति । तद्गच्छ शम्बरगृहं भार्य्या मायावती भव ।
मायाछन्नप्रतिच्छन्ना शम्बरं मोहयिष्यसि । तत्र त्वमात्मनः कान्तं बालरूपं विवर्द्धय ।
प्राप्तयौवनदेहस्तु शम्बरं निहनिष्यति । ततस्त्वयाऽसहानङ्गो द्वारकां वै गमिष्यति ।
रंस्यते त्वया स हृष्टं शैलपुत्त्र्या त्वहं यथा । एवमादिश्य देवेशो जगाम पुरुषोत्तमः । ९२१०
कैलासं मेरुसङ्काशं सिद्धचारणसेवितं । कामपत्नी प्रणम्याथ देवदेवमुमापतिं ।
जगाम शम्बरगृहं कालयान्तं प्रतीक्षती । एवमेष महाबाहुः शम्बरं निहनिष्यति ।
सपुत्त्रस्य च प्रद्युम्नो हन्ता तस्य दुरात्मनः ।

प्रद्युम्न समराकाङ्क्षी तस्थौ संग्राममूर्द्धनि । इतं पुत्रशतं श्रुत्वा शम्बर क्रोधमादधे ।
सूतं सञ्चोदयामास रथं मे संप्रयोजय । राज्ञो वाक्यं निशम्याथ प्रणम्य शिरसा भुवि ।
स सैन्यञ्चोदयामास रथञ्च सुसमाहितं । युक्तमृक्षसहस्रेण सर्पयोक्त्रेण योजित । ९२८३
शार्दूलचर्मसंवेष्टं किङ्किणीजालमालिनं । ईहामृगगणाकीर्णं पङ्क्तिभक्तिविराजितं ।
ताराचित्रपिनद्धाङ्गं स्वर्णकूवरभूषितं । सुपताकं महोच्छ्रायं मृगराजाग्रकेतनं ।
सुविभक्तवरूथञ्च लोहेशाव अवन्धुरं । मन्दरोदग्रशिखरं चारुचामरभूषितं ।
नचत्रमालापिहितं हेमदण्डसमाहितं । विराजमानं श्रीमन्तमरोहञ्छम्बरस्तदा ।
काञ्चनं चित्रसन्नाहं धनुर्गृह्य शरांस्तथा । प्रस्थित. समराकाङ्क्षी मृत्युना परिचोदित । ९२९०
चतुर्भि सचिवै सार्द्धं सैन्येन महता वृत । दुर्द्धर केतुमाली च शत्रुहन्ता प्रमर्द्दन ।
एतै परिवृतो ऽमात्यैर्युयुत्सु प्रस्थितो रणे । दश नागसहस्राणि रथानां द्वे शते तथा ।
हयानाञ्चाष्टसाहस्रे प्रयुतैश्च पदातिनां । एतै प्ररिवृतो योधै शम्बर प्रययौ तदा ।
प्रयातस्य तु संग्रामे उत्पातान्युत्थितानि वै । गृध्रचक्राकुले व्योम्नि सन्ध्याकाराभ्रगादिता. ।
गर्ज्जन्ति परुष मेघा निर्घातश्चाम्बरात्पतत । शिवा विनेदुरशिव सैन्यं संकालयन्महत् । ९२९५
ध्वजशीर्षे ऽपतद्गृध्र काञ्चन वै दानवाह्वजे । रथाग्रे पतितश्चास्य कबन्धो भुवि दृश्यते ।
चिचीकूचीति वाशन्ति शम्बरस्य रथोपरि । स्वर्भानुग्रस्त आदित्य परिघे परिवेष्टित ।
स्फुरते नयनञ्चास्य सव्यं भयनिवेदनं । बाहु प्रकम्पते सव्य प्रास्खलन्वयवाजिन ।
ध्वाङ्क्षो मूर्द्ध्नि निपतित शम्बरस्य सुरारिण । ववर्ष रुधिरं देव शर्करं क्षारमिश्रितं ।
उल्कापातसहस्राणि निपेतूरणमूर्द्धनि । प्रतोदो न्यपतद्धस्तात् सरायेर्हययायिन । ९३००
एतानचिन्तयित्वा तु उत्पातान् समुपस्थितान । प्रययौ शम्बर क्रुद्ध प्रद्युम्नवधकाङ्क्षया ।
भेरीशङ्खमृदङ्गाना पणवानकदुन्दुभे । युगपत्ताड्यमानानां पृथिवी समकम्पत ।
तेन शब्देन महता सन्त्रस्ता मृगपक्षिण । समन्ताद्दुद्रुवुस्तस्माद्भयविक्लवचेतसा ।
रणमध्ये स्थित कार्ष्णिश्चिन्तयन्निधनं रिपो । सैन्यै परिवृतोऽसखौ युद्धाय कृतनिश्चय ।
क्रुद्ध शरसहस्रेण प्रद्युम्नं समताडयत् । अप्राप्तांश्चैव तान् बाणां चिच्छेद कृतहस्तवत् । ९३०५
प्रद्युम्नो धनुरायम्य शरवर्षं मुमोच ह । तत्र सैन्ये न स ह्यस्ति यो न विद्ध शरेण वै ।
प्रद्युम्नशरघातेन तत् सैन्यं विमुखीकृतं । शम्बरस्य रथाभ्याशे स्थित सत्यज्य भीतवत् ।
स्वबलं विद्रुतं दृष्ट्वा शम्बर क्रोधमूर्च्छित । आज्ञापयामास तदा सचिवान्दानवेश्वर ।
गच्छध्वं मन्त्रियोगेन प्रहरध्वं रिपो सुतं । नोपेक्षणीय शत्रुर्हि बध्यता चिप्रमेव वै ।
उपेक्षित इव व्याधि शरीरं नाशयेद्ध्रुवं । तदेष दुर्मति पापो वध्यतां मन्त्रिसत्तमा । ९३१०
ततस्ते सचिवा क्रुद्धा शिरसा गृह्य शासनं । शरवर्षं प्रमुञ्चन्तस्त्वरिताश्चोद्दवन्यान ।
तान्दृष्ट्वा धावत सञ्चो क्रुद्धो मकरकेतन । चापमुद्यम्य संभ्रान्तस्तस्थौ प्रमुखतो बली ।

दुर्द्धरं पञ्चविंशत्या शरैः सन्नतपर्व्वभिः । बिभेद सुमहातेजाः केतुमालिं त्रिषष्टिभिः ।
सप्तत्या शत्रुहन्तारं द्वाशीत्या तु प्रमर्द्दनम् । बिभेद परमामर्षी रुक्मिण्या नन्दिवर्द्धनः ।
ततस्ते सचिवाः क्रुद्धाः प्रद्युम्नं शरवृष्टिभिः । निजघ्नुः समरे वीरास्तदद्भुतमिवाभवत् । ९११५
एकैकशो बिभिदिरे षष्टिभिः षष्टिभिः शरैः । तानप्राप्तान् शरान् बाणैश्चिच्छेद मकरध्वजः ।
ततोऽर्द्धचन्द्रमादाय दुर्द्धरस्य स सारथिम् । जघान पश्यतां राज्ञां सर्व्वेषां सैनिकस्य वै ।
चतुर्भिरथ नाराचैः सुपत्रैः कङ्कवाजितैः । जघान चतुरः सोऽश्वान् दुर्द्धरस्य रथं प्रति ।
एकेन योक्त्रं च्छत्रञ्च ध्वजमेकेन सत्पुरम् । षष्ठ्या च युगचक्राणि चिच्छेद मकरध्वजः ।
ततोऽर्द्धचन्द्रमादाय कङ्कपत्रं सुतेजितम् । मुमोच हृदये तस्य दुर्द्धरस्याल्पजीविनः । ९१२०
स गतासुर्गतश्रीको गतसत्त्वो गतप्रभः । निपपात रथोपस्थात् क्षीणपुण्य इव ग्रहः ।
दुर्द्धरे निहते शूरे दानवे दानवेश्वरः । केतुमाली शरव्रातैरभिदुद्राव कार्ष्णिजम् ।
प्रद्युम्नमभिसंक्रुद्धो भ्रुकुटीभीषणाननः । कृत्वा ऽभ्यधावत् सहसा तिष्ठ तिष्ठेति चाब्रवीत् ।
संक्रुद्धः कृष्णसूनुस्तु शरवर्षैरवाकिरत् । पर्व्वतं वारिधाराभिः प्रावृषीव यथा घनः ।
स विद्धो दानवामात्यः प्रद्युम्नेन धनुष्मता । चक्रमादाय चिक्षेप प्रद्युम्नवधकाङ्क्षया । ९१२२
तमप्राप्तं सहस्रारं कृष्णचक्रसमद्युतिम् । निपत्योत्पत्य जग्राह सर्व्वेषामेव पश्यताम् ।
तेनैव तस्य चिच्छेद केतुमालेः शिरस्तदा । तद्दृष्ट्वा कर्म्म विपुलं रौक्मिणेयस्य देवराट् ।
विस्मयं परमं प्राप्तः सर्व्वैर्देवगणैः सह । गन्धर्व्वाप्सरसश्चैव पुष्पवर्षैरवाकिरन् ।
केतुमालिं हतं दृष्ट्वा शत्रुहन्ता प्रमर्द्दनः । महाबलप्रमूढेन प्रद्युम्नमथ दुद्रुवे ।
ते गदां मुषलं चक्रं प्रासतोमरसायकान् । भिन्दिपालान् कुठारांश्च भास्वरान् कूटमुद्गरान् । ९१२०
युगपत् संविपन्ति स्म बधार्थं कृष्णनन्दने । सोऽपि तान्यस्त्रजालानि शस्त्रजालैरनेकधा ।
चिच्छेद बहुधा वीरो दर्शयन् पाणिलाघवम् । गजान् सोऽभ्यहनत् क्रुद्धो गजारोहान् सहस्रशः ।
रथान् सारथिभिः सार्द्धं हयांश्चैव ममर्द्द च । पातयंस्तु शरव्रातैर्विद्धः कश्चिदीक्ष्यते ।
एवं सर्व्वाणि सैन्यानि ममन्थ मकरध्वजः । नदीं प्रावर्त्तयद्घोरां शोणितास्रुतरङ्गिणीम् ।
मुक्ताहारोर्म्मिकलिलां मांसमेदोस्थपङ्किलाम् । छत्रद्वीपां शरावर्त्तां रथैः पुलिनमण्डिताम् । ९१२५
केयूरकुण्डलापूर्णां ध्वजमत्स्यविभूषिताम् । नागग्राहवतीं रौद्रामसिनक्रविभूषिताम् ।
केशशैवलसञ्छन्नां श्रोणिसूत्रमृणालिकाम् । वराननसपद्माञ्च हंसचामरवीजिताम् ।
शिरस्तिमिसमाकीर्णां शोणितौघप्रवर्त्तिनीम् । नदीं दुस्तरणीं भीमामनङ्गेन प्रवर्त्तिताम् ।
दुष्प्रेक्ष्यां दुर्गमां रौद्रां हीनतेजःसुदुस्तराम् । शस्त्रग्राहवतीं घोरां यमराष्ट्रविवर्द्धिनीम् ।
तत्र रुक्मिसुतः श्रीमान् विलोडयति धन्विनः । शत्रुहन्तारमाश्रित्य शरानभ्यकिरन् बहून् । ९१३०
शत्रुहन्ता पुनः क्रुद्धो मुमोच शरमुत्तमम् । प्रद्युम्नस्य समासाद्य हृदये निपपात च ।
स विद्धस्तेन बाणेन प्रद्युम्नो न व्यकम्पत । शक्तिं जग्राह बलवान् शत्रुहन्त्रे मुमूर्षवे ।

सा विसृष्टा रौक्मिणेयेन शक्तिर्ज्वालाकुला रणे । पपात हृदयं भित्त्वा दग्ध्वाशनिसमस्वना ।
भिन्नहृदय सस्ताङ्गो मुक्तचर्म्मास्त्रिबन्धन । पपात रुधिरोद्गारी शत्रुहन्ता महाबलः ।
पतितं शत्रुहन्तारं दृष्ट्वा तस्थौ प्रमर्द्दन । जग्राह मुसलं सोऽथ वचनञ्चेदमाददे । ९१४५
तिष्ठ किं प्राकृतैरेभि करिष्यसि रणप्रिय । मां योधयस्व दुर्ब्बुद्धे ततस्त्वं न भविष्यसि ।
वृष्णिवंशे कुले जात शत्रुरस्मत्पिता तव । पुत्रं हन्ताऽस्म्यहं तस्य ततोऽसौ निहतो भवेत् ।
मृतेन तेन दुर्ब्बुद्धे सर्व्वदेवजयो भवेत् । दैतेया दानवा सर्व्वे मोदन्तां हतशत्रव ।
हते त्वयि समास्वेश त्वत्समुत्थेन शोणिते । शम्बरस्य तु पुत्राणां करोम्युदककर्म्मक्रियां ।
अद्य भीष्मसुता मन्दा करुणं विलपिष्यति । निहतं त्वाञ्च श्रुत्वैव यौवनस्थं गतायुषं । ९१५०
स ते पिता चक्रधरो विफलाशो भविष्यति । हतं त्वां स विदित्वा तु प्राणांस्त्यक्ष्यति मन्दधी ।
इत्युक्त्वा परिघेणाशु ताडयद्रुक्मिणीसुतं । स ताडितो महातेजा रौक्मिणेय प्रतापवान् ।
दोर्भ्यामुत्क्षिप्य तस्यैव रथं सद्यो व्यचूर्णयत् । सोऽवप्लुत्य रथात्तस्मात् पदातिरवतस्थिवान् ।
तां गदां गृह्य सहसा रौक्मिणेयमुपाद्रवत् । तयैव गदया काम प्रमर्द्दनमपोथयत् ।
हतं प्रमर्द्दनं दैत्या दृष्ट्वा सर्व्वे प्रदुद्रुवु । न शक्ताः प्रमुखे स्थातुं सिंहत्रासाद्गजा इव । ९१५५
सारमेय यथा दृष्ट्वाऽविगणो विप्रणश्यति । तथा सैन्या निषीदन्ति प्रद्युम्नस्य भयार्द्दिताः ।
पतजादिग्धवस्त्रा वै मुक्तकेशा ह्यशोभना । रजस्वलेव युवती सेना सन्निभगृह्यते ।
मदनशरविभिन्ना सैनिकानभ्युपायाद्युवतिसदृशवेशा साध्वसै. पोड्यमाना । रतिसमरसमर्क्का वीक्षितुं सोच्छ्वसन्ती समरहगम
नकामा नेच्छते स्थातुमत्र ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शम्बरसैन्यभङ्गे चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
॥ वैशम्पायन उवाच ॥ शम्बरस्तु तत क्रुद्ध सूतमाह विशाम्पते । शत्रुप्रमुखतो वीर रथं मे वाहय द्रुतं ।
यावदेनं शरैर्हन्मि मम विप्रियकारकं । ततो भर्त्तुर्व्वच श्रुत्वा सूतस्तत्प्रियकारक । ९१६०
हयान् सञ्चोदयामास चामीकरविभूषितान् । त दृष्ट्वा रथमायान्तं प्रद्युम्न फुल्ललोचन ।
सन्दधे चापमादाय शर कनकभूषणं । तेनाहनत् सुसंक्रुद्ध कोपयन् शम्बरं रणे ।
हृदये ताडितस्तेन देवशत्रु सुविक्लव । रथशक्तिं समाश्रित्य तस्थौ सोऽथ विचेतन ।
स चेतनां पुन प्राप्य धनुरादाय शम्बर । विव्याध कार्ष्णिं कुपित सप्तभिर्निशितै शरै ।
तानप्राप्तान् शरान् सोऽथ सप्तभि सप्तधाऽच्छिनत् । शम्बरञ्च जघानाथ सप्तत्या निशितै शरै । ९१६५
पुन शरसहस्रेण कङ्कबर्हिणवाससा । अहनच्छम्बर क्रोधाद्धाराभिरिव पर्व्वतं ।
प्रदिशो विदिशश्चैव शरधारासमावृता । अन्धकारीकृत व्योम दिनकर्त्ता न दृश्यते ।
ततोऽन्धकारमुत्सार्य वैद्युतास्त्रेण शम्बर । प्रद्युम्नस्य रथोपस्थे शरवर्षं मुमोच ह ।
तदस्त्रजालं प्रद्युम्न शरेणानतपर्व्वणा । चिच्छेद बहुधा राजन्दर्शयन् पाणिलाघवं ।
हते तस्मिन्महावर्षे शरेण कार्ष्णिना तदा । द्रुमवर्षं मुमोचाथ मायया कालशम्बरः । ९१७०

द्रुमवर्षोत्थितं दृष्ट्वा प्रद्युम्नः क्रोधमूर्च्छितः। आग्नेयास्त्रं मुमोचाथ तेन वृक्षानशातयत्।
भस्मीभूते वृक्षवर्षे शिलासंघातमुत्सृजत्। प्रद्युम्नस्तन्तु वायव्यैः शोत्सारयत संयुगे।
ततो मायां परां चक्रे दैत्यस्तु प्रतापवान्। सिंहान् व्याघ्रान् वराहांश्च तरक्षूनृक्षवानरान्।
वारणान् वारिदप्रख्यान् हयानुष्ट्रान् विशाम्पते। मुमोच धनुरायम्य प्रद्युम्नस्य रथोपरि।
गान्धर्व्वास्त्रेण चिच्छेद सर्व्वांस्तान् खण्डशस्तदा। प्रद्युम्नेन तु तां मायां पातितां वीक्ष्य शम्बरः। ८९७५
अन्यां मायां मुमोचाथ शम्बरः क्रोधमूर्च्छितः। गजेन्द्रान् भिन्नरदनान् षष्टिहायनयौवनान्।
महामात्रोत्तमारूढान् कल्पितान् वर्णगर्व्वितान्। तामापतन्तीं मायान्तु कार्ष्णिः कमललोचनः।
सैंहीं मायां समुत्स्रष्टुं चक्रे बुद्धिं महामनाः। सा सृष्टा सिंहमाया तु रौक्मिणेयेन धीमता।
माया नागमयी नष्टा आदित्येनेव शर्व्वरी। निहतां हस्तिमायान्तु दृष्ट्वाऽसौ दानवेश्वरः।
मायां संमोहनीं नाम सोऽसृजद्दानवोत्तमः। तां सृष्टां मोहनीं नाम मायां मयविनिर्म्मितां। ८९८०
संज्ञास्त्रेण तु प्रद्युम्नो नाशयामास वीर्यवान्। शम्बरस्तु ततः क्रुद्धो मायया नष्टया तया।
सैंहीं मायां महातेजाः सोऽसृजद्दानवेश्वरः। सिंहानापततो दृष्ट्वा रौक्मिणेयः प्रतापवान्।
अस्त्रं गान्धर्व्वमादाय शरभानसृजत्तदा। तेऽष्टापदा बलोदग्रा नखदंष्ट्रायुधा रणे।
सिंहान् विद्रावयामासुर्वायुर्जलधरानिव। सिंहान् विद्रावितान्दृष्ट्वा मायया ऽष्टापदेन वै।
शम्बरश्चिन्तयामास कथमेनं निहन्मि वै। अहो सुबालभावोऽयं यन्मया न हतः शिशुः। ८९८५
प्राप्तयौवनदेहस्तु कृतास्त्रश्चापि दुर्म्मतिः। तत् कथं निहनिष्यामि शत्रुं रणशिरःस्थितं।
माया मे तिष्ठते तीव्रा पान्नगी नाम भीषणा। दत्ता मे देवदेवेन हरेणासुरघातिना।
तां सृजामि महामायामाशीविषसमाकुलां। तया दग्धेत दुष्टात्मा घोर मायामयो बली।
सा सृष्टा पान्नगी माया विदग्धा नागसमाकुला। तया पन्नगमय्या तु सरथः सह वाजिभिः।
ससूतः सहप्रद्युम्नः संयतः शरबन्धनैः। बध्यमानं तदा दृष्ट्वा आत्मानं वृष्णिवंशजः। ८९९०
मायां चिन्तयामास सौपर्णीं सर्पनाशिनीं। सा चिन्तिता महामाया प्रद्युम्नेन महात्मना।
सुपर्णा विचरन्ति स्म सर्पा नष्टा महाविषाः। भग्नायां सर्पमायायां प्रशंसन्ति सुरासुराः।
साधु वीर महाबाहो साधु रुक्मिणिनन्दन। यत्त्वया धर्षिता माया तेन स्म परितोषिताः।
हतायां सर्पमायायां शम्बरश्चिन्तयन् पुनः। अस्ति मे कालदण्डाभो मुद्गरो हेमभूषितः।
सम्प्रतिहतं युद्धे देवदानवमानुषैः। पुरा यो मम पार्व्वत्या दत्तः परमतुष्टया। ८९९५
गृहाण शम्बरेमं मुद्गरं हेमभूषितं। मया सृष्टं स्वदेहे वै तपसस्तु मुद्गरं।
मायास्तम्भकरं नाम सर्व्वासुरविमर्द्दनं। अनेन दानवा रौद्रा बलिनो नगचारिणः।
शस्त्रैरेव निराक्रान्ता सगणा सूदिता मया। प्राणसंशयमापन्ने त्वया मोक्ष्यं महाप्रभो।
इत्युक्त्वा पार्व्वती देवी तत्रैवान्तरधीयत। तदहं मुद्गरं घोरं मोक्ष्यामि मम शत्रवे।
तस्य शिरसि चित्तेन देवराजो ऽभ्यभाषत। गच्छ मातलि शीघ्रं त्वं प्रद्युम्नस्य रथं प्रति। ९०००

संबोधय महाबाहुं पूर्व्वजातिस्म स्मारय । वैष्णवास्त्रं प्रयच्छास्मै वधार्थे शम्बरस्य च ।
अभेद्य कवचञ्चास्मै प्रयच्छासुरसूदने । एवमुक्तो मघवता नारद प्रययौ त्वरन् ।
आकाशे विष्ठितोवाच मकरध्वजकेतनं । कुमार पश्य मां प्राप्तं देवगन्धर्व्वनारदं ।
प्रेषित देवराजेन तव सम्बोधनाय वै । स्मर त्वं पूर्व्वकं भाव कामदेवोऽसि मानद ।
हरकोपानलाद्दग्धस्तेमानङ्गत्त्वमिहोच्यसे । त्व रुक्मिण्यां जातोऽसि रुक्मिण्या गर्भसम्भव । ८०५
जातोऽसि केशवेन त्वं प्रद्युम्न इति कीर्त्तितं । अ ह्य शम्बरेण त्वमिहानीतोऽसि मानद ।
सप्तरात्रे त्वसंपूर्णे सूतिकागारमध्यत । वधार्थं शम्बरस्य त्वं ह्रियमाणो सुरेश्वित ।
केशवेन महाबाहो देवकार्य्यार्थसिद्धये । यैषा मायावती नाम भार्य्या वै शम्बरस्य तु ।
रतिं तां विद्धि कल्याणी तव भार्य्यां पुरातनीं । तव या रक्षणार्थाय शम्बरस्य गृहेऽवसत् ।
भार्य्या शरीरजा न्यस्य मोहनार्थं दुरात्मन । रतिरुत्पादनार्थाय प्रेषयत्यनिशं तदा । ८१०
एवं प्रद्युम्न बुद्धा वै तव भार्य्या प्रतिष्ठिता । हत्वा त शम्बरं वीर वैष्णवास्त्रेण संयुगे ।
गच्छ मायावतीं भार्य्यां द्वारकां गन्तुमर्हसि । गृहाण वैष्णवञ्चास्त्रं कवचञ्च महाप्रभं ।
शक्रेण तव संदिष्टं प्रेषितं मधुसूदन । शृणु मे चापरां वाचं क्रियतामविशङ्कया ।
अस्य देवरिपोस्तात मुद्गरो नित्यमूर्ज्जित । पार्व्वत्या तुष्टया दत्त सर्व्वशत्रुनिवर्हण ।
अमोघश्चैव सग्रामे देवदानवमानवै । तदस्त्रप्रतिघातार्थं देवीं संकर्त्तुमर्हसि । ८११
स्तुत्वा चैव नमस्या च महादेवी रणोत्सुके । तत्र वै क्रियता यत्न संग्रामे रिपुणा सह ।
इत्युक्ता नारदो वाक्य प्रययौ यत्र वासव ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शम्बरवधे नारदवाक्ये पञ्चषष्ठ्यधिकशततोऽध्याय ॥ १६५ ॥
॥ वैशम्पायन उवाच ॥ शम्बरस्तु तत क्रुद्धो मुद्गर तं समाददे । मुद्गरे गृह्यमाणे तु दारुणाः समुत्थिता ।
पर्व्वताश्चलिता सर्व्वे चलित वसुधातल । उन्मार्गा सागरा जाता सशुन्यश्चापि देवता ।
घटप्रचक्राकुलं व्योम उल्कापातो बभूव ह । ववर्षे रुधिरं देव. परुष पवनो ववौ । ८१२
एवं दृष्ट्वा महोत्पातान् प्रद्युम्न स त्वरान्वित । अवतीर्य्य रथाद्वीर कृताञ्जलिपुट स्थित ।
देवीं सस्मार मनसा पार्व्वतीं शङ्करप्रिया । प्रणम्य शिरसा देवीं स्तोतु समुपचक्रमे ।
॥ प्रद्युम्न उवाच ॥ ओंनम कात्यायन्यै गुहस्य जनन्यै नम । नमस्त्रैलोक्यमायायै कात्यायन्यै नमो नम ।
नम शत्रुविनाशिन्यै नमो गौर्य्यै गिरीशायै । नमस्ते शुम्भहननीं निशुम्भहृदि दारणीं ।
कालरात्रिं नमस्येऽहं कुमारीञ्चापि नित्यश । कान्तारवासिनी देवीं नमस्यामि कृताञ्जलि । ८२२
विन्ध्यवासिनीं दुर्गम्ना रणदुर्गा रणप्रियां । नमस्यामि महादेवीं जयाञ्च विजयान्तथा ।
अपराजितां नमस्येऽहमजिता शत्रुतापनीं । घण्टाहस्ता नमस्यामि घण्टामालाकुलान्तथा ।
त्रिशूलिनी नमस्यामि महिषासुरघातिनीं । सिंहवाहा नमस्यामि सिंहप्रवरकेतना ।
एकानंशां नमस्यामि गायत्रीं यज्ञसत्कृतां । सावित्रीञ्चापि विप्राणां नमस्येऽहं कृताञ्जलि ।

रक्ष मां देवि सततं संग्रामे विजयं कुरु । इति कामवचः श्रुत्वा दुर्गा सुप्रीतमानसा । ९३१०
उवाच वचनं देवी सुप्रीतेनान्तरात्मना । पश्य पश्य महाबाहो रुक्मिण्या नन्दिवर्द्धन ।
वरं वरय वत्स त्वममोघं दर्शनं मम । देव्यास्तु वचनं श्रुत्वा रोमाञ्चेद्धतमानसः ।
प्रणम्य शिरसा देवीं विज्ञाप्तुमुपचक्रमे । यदि त्वं देवि तुष्टाऽसि दीयतां मे यदीप्सितं ।
वरस्त्वं वरदे याचे सर्व्वामित्रेषु मे जयः । यस्त्वया मुद्गरो दत्तः शम्बरस्यात्मघस्मरः ।
एष मे गात्रमासाद्य माला पद्ममयी भवेत् । तथाऽस्त्विति च साऽप्युक्ता तत्रैवान्तरधीयत । ९३१५
प्रद्युम्नस्तु महातेजाः प्रहृष्टो रथमारुहत् । मुद्गरं तु गृहीत्वाऽथ शम्बरः क्रोधमूर्च्छितः ।
भ्रामयित्वा स चिक्षेप प्रद्युम्नोरसि वीर्य्यवान् । स गत्वा मदनाभ्यासं माला भूत्वाऽथ पौष्करी ।
प्रद्युम्नस्य तु कण्ठे सा समासक्ता व्यराजत । नक्षत्राणान्तु मालायां यथा परिवृतोडुराट् ।
ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः । साधु साध्विति वाचोचुः पूजयन् केशवात्मजं ।
मुद्गरं पुष्पभूतं तु दृष्ट्वा प्रद्युम्नसन्निधौ । वैष्णवं परमास्त्रं तु नारदेन यदाहृतं । ९३२०
सन्दधे चापमानम्य इदं वचनमब्रवीत् । यद्यहं रुक्मिणीपुत्रः केशवस्यात्मजो ह्यहं ।
तेन सत्येन बाणेमं जहि त्वं शम्बरं रणे । इत्युक्त्वा चापमाकृष्य सन्धाय च महामनाः ।
चिक्षेप शम्बरस्याथ दहन् लोकत्रयं यथा । स क्षिप्तो वृष्णिसिंहेन बाणः क्रव्यादमोहनः ।
हृदयं शम्बरस्याथ भित्त्वा धरणिमागमत् । नैवास्य मांसं न स्नायुर्नास्थि न त्वङ् न शोणितं ।
सर्व्वं तद्भस्मसाद्भूतं वैष्णवास्त्रस्य तेजसा । हते दैत्ये महाकाये दानवे शम्बराधमे । ९३२५
जगुर्देवगन्धर्व्वा ननृतुश्चाप्सरोगणाः । उर्व्वशी मेनका रम्भा विप्रचित्तिस्तिलोत्तमा ।
ननृतुर्हृष्टमनसो जगत् स्थावरजङ्गमं । देवराजस्तु सुप्रीतः सर्व्वदेवगणैः सह ।
प्रद्युम्नं पुष्पवर्षेण समभ्यर्चत् प्रहृष्टवत् ।
अथ समरहते तु दैत्यराजे मधुमथनसुतेन वैष्णवास्त्रैः । विगतरिपुभयाः सुराश्च जग्मुर्मकरविभूषणकेतनं स्तुवन्तः ।
स च समरपरिश्रमं वहन् वै नगरमुखं प्रविवेश रौक्मिणेय । प्रियतन इव कान्तया प्रहृष्टस्त्वरितपदं रतिदर्शनञ्चकार । ९३३०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि शम्बरवधे प्रद्युम्नकृतदुर्गास्तवे षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

॥ वैशम्पायन उवाच ॥ समाप्तमायो मायाज्ञो विक्रान्तः समरेऽव्ययः । श्रुष्टस्यो निहतो युद्धे मायावी कालशम्बरः ।
तस्मिन्नवान्ते नगरे निहत्यासुरसत्तमं । स्त्रह मायावतीं देवीमागच्छन्नगरं पितुः ।
सोऽन्तरीक्षगतो भूत्वा मायया भीमविक्रमः । आजगाम पुरीं रम्यां रक्षितां तेजसा पितुः ।
सोऽन्तरीक्षात् प्रपतितः केशवान्तःपुरे शिशुः । मायावत्या सह तदा रूपवानिव मन्मथः ।
तस्मिंस्तत्रावपतिते स्त्रियश्च केशवस्य याः । विस्मिताश्चैव हृष्टाश्च भीताश्चैवाभवंस्तदा । ९३३५
ततस्तं कामसङ्काशं कान्तया सह सङ्गतं । प्रेक्षन्त्यो हृष्टवदनाः पिबन्त्यो नयनासवं ।
तं विनीतमुखं दृष्ट्वा सञ्चमानं पदे पदे । अभवन् स्निग्धसंकल्पाः सर्व्वास्ताः कृष्णयोषितः ।
रुक्मिणी चैव तं दृष्ट्वा शोकार्त्ता पुत्रगृद्धिनी । सपत्नीशतसंकीर्णा सबाष्पा वाक्यमब्रवीत् ।

यादृक स्वप्ने मया दृष्टो निशाया यौवने गते । कर्म्मारिणा समानीय दत्त सोहारपल्लवं ।
शशिरश्मिप्रतीकाश मुक्तादाम च शोभनं । केशवेनाङ्कमारोप्य मम कण्ठे न्यबध्यत । ९११०
श्यामा सुचारुकेशा स्त्री शुक्ल म्बरविभूषिता । पद्महस्ता निरीक्षन्ती प्रविष्टा मम वेश्मनि ।
तया पुनरहं गृह्य स्नापिता रुचिराम्बुना । कुशेशयमयी माला स्त्री संगृह्याय पाणिना ।
मम मूर्द्धन्युपाघ्राय दत्ता स्रक् सा तया मम । एवं स्वप्न कीर्त्तयन्ती रुक्मिणी हृष्टमानसा ।
सखीजनवृता देवी कुमार प्रेक्ष्य त मुहु । धन्याया खल्वय पुत्रो दीर्घायु प्रियदर्शन ।
ईदृश कामसङ्काशो यौवने प्रथमे स्थित । जीवपुत्त्रा त्वया पुत्र का सा भाग्यसमन्विता । ९११५
किमर्थश्चाम्युदश्याम सभार्य्यस्त्वमिहागत । अस्मिन वयसि सुव्यक्त प्रद्युम्नो मम पुत्रक ।
भवेद्यदि न नीत स्यात् कृतान्तेन बलीयसा । व्यक्तं वृष्णिकुमारोऽय न मिथ्य मम तर्कितं ।
विज्ञातोऽसि मया चिह्नैर्विना चक्र जनार्द्दन । मुखं नारायणस्येव केशा केशान्त एव च ।
ऊरू वक्षो भुजौ तुल्यौ हलिन श्वशुरस्य मे । कस्त्व वृष्णिकुलं सर्व्वं द्योतयन वपुषा स्थित ।
अहो नारायणस्यापि दिव्या त्वमपरा तनु । एतस्मिन्नन्तरे कृष्ण सहसा प्रविवेश ह । ९१२०
नारदस्य वच श्रुत्वा शम्बरस्य वधं प्रति । सोऽपश्यत्त सुतं श्रेष्ठ सिद्ध मन्मथलक्षणै ।
स्नुषा मायावती चैव हृष्टचेता जनार्द्दन । सोऽब्रवीत् सहसा देवी रुक्मिणीं देवतामिव ।
अय स देवि सम्प्राप्त पुत्त्रस्तापधरस्तव । अनेन शम्बर हत्वा मायायुद्धविशारद ।
हृता मायाश्च ता सर्व्वा याभिर्देवानबाधत । सती चेय शुभा साध्वी भार्य्याऽपि तनयस्य ते ।
मयावतीति विख्याता शम्बरस्य गृहोषिता । मा च ते शम्बरस्येयं पत्नीति भवतु व्यथा । ९१२५
मन्मथे तु गते नाशं गते चानङ्गतां पुरा । कामपत्नी स कान्तैषा शम्बरस्य रति प्रिया ।
मायारूपेण त दैत्य मोहयन्त्यसकृच्छुभा । न चैषा तस्य कौमारे वशे तिष्ठति शोभना ।
आत्ममायामय कृत्वा रूप शम्बरमाविशत । पत्न्येषा मम पुत्त्रस्य स्नुषा तव वराङ्गना ।
लोककान्तस्य साहाय्य करिष्यति मनोमय । प्रवेशयैना भवन पूज्या ज्येष्ठा स्नुषा मम ।
चिरात् प्रनष्ट स्वसुत भजस्व पुनरागत । ९१३०
॥ वैशम्पायन उवाच ॥ श्रुत्वा तु वचन देवी कृष्णेनोदाहृत तदा । प्रहर्षमतुल लब्ध्वा रुक्मिणी वाक्यमब्रवीत ।
अहो धन्यतराऽस्मीति वीरपुत्त्रसमागमात । अद्य मे सफल काम पूर्णस्त्वद्य मनोरथ ।
चिरप्रनष्टपुत्त्रस्य दर्शनात् प्रियया सह । आगच्छ भवनं पुत्त्र प्रविश प्रियया सह ।
ततोऽभिवाद्य चरणौ गोविन्द मातरञ्च स । प्रद्युम्न पूजयामास हलिनञ्च महाबल ।
उत्थाप्य त परिष्वज्य मूर्द्धन्युपाघ्राय वीर्य्यवान । प्रद्युम्नं बलिना श्रेष्ठ केशव परवीरहा । ९१३५
स्नुषाश्चोत्थाप्य तां देवी रुक्मिणी रुक्मभूषणा । परिष्वज्योपसंगृह्य स्नेह गद्गदभाषिणी ।
सनेतं भवन पत्न्या शच्येन्द्रमदितिर्यथा । प्रवेशयामास तदा रुक्मिणी सुतमागत ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि प्रद्युम्नगमने सप्तषष्ट्यधिकशततमोऽध्याय ॥ १६७ ॥

॥ वैशम्पायन उवाच ॥ अत्राश्चर्य्याद्भुतं मन्त्रमाह्निकं जयतांवर। यं जप्वा तु नृपश्रेष्ठ सायम्भूतात्मतां भजेत्।
कीर्त्तितं बलदेवेन कृष्णेनैवानुकीर्त्तितं। धर्म्मकामैश्च मुनिभिर्ऋषिभिश्चापि कीर्त्तितं।
सुरासुरगुरुर्ब्रह्मा पातु मां जगतीपतिः। तथोङ्कारवषट्कारौ सावित्री विधयस्त्रयः। ८८९०
ऋचो यजूंषि सामानि छन्दांस्याथर्व्वणानि च। चत्वारः सखिला वेदाः सरहस्याः सविस्तराः।
पुराणमितिहासश्च खिलान्युपखिलानि च। अङ्गान्युपाङ्गानि तथा व्याख्यानानि च पान्तु मां।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं। इन्द्रियाणि मनो बुद्धिस्तथा सत्त्वं रजस्तमः।
व्यानोदानः समानश्च प्राणोऽपानश्च पञ्चमः। वायवः सप्त चैवान्ये यैश्चायत्तमिदं जगत्।
मरीचिरङ्गिराऽत्रिश्च पुलस्त्य पुलहः क्रतुः। भृगुर्व्वशिष्ठो भगवान् पान्तु ते मां महर्षयः। ८८९५
कश्यपाद्याश्च मुनयश्चतुर्द्दश दिशो दश। नरनारायणौ देवौ सगणौ पान्तु मां सदा।
रुद्राश्चैकादश प्रोक्ता आदित्या द्वादशैव तु। अष्टौ च वसवो देवा अश्विनौ द्वौ प्रकीर्त्तितौ।
ह्रीः श्रीर्लक्ष्मीः स्वधा मेधा तुष्टिः पुष्टिः स्मृतिर्धृतिः। अदितिर्दितिर्दनुश्चैव सिंहिका दैत्यमातरः।
हिमवान् हेमकूटश्च निषधः श्वेतपर्व्वतः। ऋषभः पारियात्रश्च विन्ध्यो वैदूर्य्यपर्व्वतः।
सह्याद्रयश्च मलयो मेरुमन्दरदर्दुराः। क्रौञ्चकैलासमैनाका पान्तु मां धरणीधराः। ८९००
शेषश्च वासुकिश्चैव विशालाक्षश्च तक्षकः। एलापत्रः शुक्लिकर्णः कम्बलाश्वतरावुभौ।
हस्तिभद्रः पिठरकः कर्कोटकधनञ्जयौ। तथा पूरणकश्चैव नागश्च करवीरकः।
सुमनास्यो दधिमुखस्तथा शृङ्गारपिण्डकः। मणिनागश्च भगवांस्त्रिषु लोकेषु विश्रुतः।
नागराडधिकर्णश्च तथा हारिद्रकोऽपरः। एते चान्ये च बहवो ये चान्ये नानुकीर्त्तिताः।
भूधराः सत्यधर्म्माणः पान्तु मां भुजगेश्वराः। समुद्राः पान्तु चत्वारो गङ्गा च सरितांवरा। ८९०५
सरस्वती चन्द्रभागा शतद्रुर्द्देविका शिवा। इरावती विपाशा च सरयूर्यमुना तथा।
कुल्माषी च रथोष्मा च वाहुदा च हिरण्वदा। प्लक्षा चेक्षुमती चैव स्रवन्ती च दृषद्वती।
ख्याता चर्म्मण्वती चैव पुण्या चैव वधूसरा। एताश्चान्याश्च सरितो यश्चान्या नानुकीर्त्तिताः।
उत्तरापथगामिन्यः सलिलैः स्नपयन्तु मां। सिप्रा चर्म्मण्वती पुण्या मही श्वभ्रवती शुभा।
वेण्वा गोदावरी सीता कावेरी कोङ्कणावती। कृष्णवेण्वा शुक्तिमती तमसा पुष्पवाहिनी। ८९१०
ताम्रपर्णी ज्योतिरथा उत्पलोडुम्बरावती। नदी वैतरणी पुण्या विदर्भा नर्म्मदा शुभा।
वितस्ता वै भीमरथी एला चैव महानदी। कालिन्दी गोमती पुण्या नदः शोणश्च विश्रुतः।
एताश्चान्याश्च वै नद्यो याश्चान्या नानुकीर्त्तिताः। दक्षिणापथवाहिन्यः सलिलैः स्नपयन्तु मां।
सिन्धुर्वेजवती चैव भोजान्ता वनमालिका। पूर्व्वभद्रा ऽपराभद्रा निर्म्मला च सरद्रुमा।
ख्याता वेत्रवती चैव चापदाधीति विश्रुता। प्रस्तावती लुण्ठनदी पुण्या रम्या सरस्वती। ८९१५
मित्रघ्ना चेन्दुमाला च तथा मधुमती नदी। उमा गुरुनदी चैव वापी च विमलोदका।
विमला विमलोदा च मत्तगङ्गा पयस्विनी। एताश्चान्याश्च वै नद्यो याश्चान्या नानुकीर्त्तिताः।

ता मां समभिषिञ्चन्तु पश्चिमामाश्रिता दिशं । भागीरथी पुण्यजला प्राच्यां दिशि समाश्रिता।
सा तु दहतु मे पापं कीर्त्तिता शम्भुना धृता । प्रभासश्च प्रयागश्च नैमिषं पुष्कराणि च।
गङ्गातीर्थं कुरुक्षेत्रं श्रीक्षेत्रं गौतमाश्रमं । रामह्रदं विनशनं रामतीर्थन्तथैव च । ९५२०
गङ्गाद्वारं कनखलं सोमो वै यत्र चोत्थितः। कपालमोचनं तीर्थं जम्बूमार्गश्च विश्रुतं ।
सुवर्णविन्दु विख्यातं तथा कनकपिङ्गलं । दशाश्वमेधिकञ्चैव पुण्याश्रमविभूषितं ।
वदरी चैव विख्याता नरनारायणाश्रमः । विख्यातं फल्गुतीर्थञ्च तीर्थं भद्रवटं तथा।
कोकामुखं पुण्यतमं गङ्गासागरमेव च। मगधेषु तपोदश्च गङ्गाह्रदश्च विश्रुतः।
तीर्थान्येतानि पुण्यानि सेवितानि महर्षिभिः। मां स्नावयन्तु सलिलैः कीर्त्तिताकीर्त्तितानि वै । ९५२५
धर्मार्थकामविषयो यशःप्राप्तिः शमो दमः । वहुशोऽंशोऽथ पर्ज्जन्यो यमो नियम एव च ।
कालो नयः सन्नतिश्च क्रोधो मोहः क्षमा धृतिः । विद्युतो ऽभ्राण्योषधय. प्रमादोन्मादविग्रहाः।
यक्षाः पिशाचा गन्धर्व्वाः किन्नरा. सिद्धचारणाः । नक्तञ्चराः खेचारिणो दंष्ट्रिणः प्रियविग्रहाः ।
लम्बोदराश्च मलिनः पिङ्गाक्षा विश्वरूपिणः। मरुतः सहपर्ज्जन्या कलाश्रुटिलवक्षणाः।
नक्षत्राणि यथाश्चैव ऋतवः शिशिरादयः। मासाहोरात्रयश्चैव सूर्य्याचन्द्रमसौ तथा। ९५३०
आमोदश्च प्रमोदश्च प्रहर्ष. शोक एव,च। मन्युस्तमस्तप. सत्यं श्रुतिः सिद्धिः स्मृतिस्तथा।
रुद्राणी भद्रकाली च भद्रषष्ठी च वारुणी। भामी च कालिका चैव शाण्डिली चैव विश्रुता।
आर्य्या कुहू. सिनीवाली भीमा वैवदती रतिः। एकानंशा च कुष्माण्डी देवी कात्यायनी तथा ।
लोहित्यायनमाता च देवकन्याश्च या स्मृताः। गोनन्दा देवपत्नी च मां रक्षन्तु सबान्धवं।
नानाभरणवेशाश्च नानारूपाङ्कितानना.। नानादेशविचारिण्यो नानाशस्त्रोपशोभिताः। ९५३५
मेदोमज्जाप्रियाश्चैव मद्यमांसवशाप्रियाः। मार्ज्जारद्वीपिवक्राश्च गजसिंहनिभानानाः।
कङ्कवायसगृध्राणां क्रौञ्चतुल्याननास्तथा । व्यालयज्ञोपवीताश्च चर्म्मप्रावरणास्तथा ।
क्षतजोक्षितरक्ताश्च खरभेरीसमस्वना । मत्सराः क्रोधनाश्चैव प्रासादरुचिरालयाः।
मत्तोन्मत्तप्रमत्ताश्च प्रहसन्त्यश्च विहिताः। पिङ्गाक्ष्य. पिङ्गकेश्यश्च तथा व्यालूनमूर्द्धजाः ।
ऊर्द्धकेश्य. कृष्णकेश्यः श्वेतकेश्यस्तथैव च। नागायुतबलाश्चैव वायुवेगबलास्तथा। ९५४०
एकहस्ता एकपादा एकाक्ष्यः कम्पिताननाः। सङ्कुपत्ताल्पपुत्ताश्च द्विपुत्ताः प्रियमण्डिकाः।
मुखमण्डी विडाली च पूतना गन्धपूतना। शीतवातोष्णवेताली रेवती ग्रहसंज्ञिता।
प्रियहास्या. प्रियक्रोधा. प्रियवासाः प्रियम्वदाः। सुखप्रसादाः सुखदा. सदा द्विजजनप्रियाः।
नक्तञ्चरा. सुखोदर्काः सदा पर्व्वणि दारुणाः। मातरो मातृवत् पुत्र रक्षन्तु मम नित्यशः।
पितामहमुखोद्भूता रौद्रा रुद्राङ्गसम्भवा.। कुमारस्कन्दजाश्चैव ज्वरा वै वैष्णवादयः। ९५४५
महावीर्य्या महाभीमा दर्पोद्भूता महाबलाः। क्रोधजा. क्रोधना. क्रूराः सुरविग्रहकारिणः।
नक्तञ्चराः केशरिणो दंष्ट्रिणः प्रियविग्रहाः। लम्बोदरा जघनिन. पिङ्गाक्षा विश्वरूपिणः।

शतघ्निशूलपरिघप्रासचर्म्मासिपाणयः। पिनाकवज्रमुषलभल्लदण्डायुधप्रियाः।
दण्डिनः कुण्डिनः शूराः जटामुकुटधारिणः। वेदवेदाङ्गकुशला नित्यं यज्ञोपवीतिनः।
व्यालापीडाः कुण्डलिनो वीराः केयूरधारिणः। नानावसनसंवीताश्चित्रस्रगनुलेपनाः।
गजाश्वोष्ट्रर्क्षमार्ज्जारसिंहव्याघ्रनिभाननाः। वराहोलूकगोमायुमृगाखुमहिषाननाः। ८११०
वामना विकटाः कुब्जाः कराला लूनमूर्द्धजाः। सहस्रशतशश्चान्ये सहस्रजटधारिणः।
श्वेतकैलाससङ्काशाः केचिद्दिनकरप्रभाः। केचिज्जलदवर्णाभा नीलाञ्जनचयोपमाः।
एकपादा द्विपादाश्च तथा द्विशिरसोऽपरे। निर्म्मांसास्तालजङ्घाश्च व्यादितास्या भयङ्कराः।
वापीतडागकूपेषु समुद्रेषु सरःसु च। श्मशानशैलवृक्षेषु शून्यागारनिवासिनः।
एते यक्षाश्च सततं रक्षन्तु मम सर्व्वतः। महा गणपतिर्नन्दी महाकालो महाबलः। ८११५
माहेश्वरो वैष्णवश्च ज्वरौ लोकभयावहौ। ग्रामणीश्चैव गोपालो भृङ्गरीटिर्गणेश्वरः।
देवश्च वामदेवश्च घण्टाकर्णः करन्धमः। श्वेतमौदः कपाली च जम्भकः शत्रुतापनः।
मज्जनोन्मज्जनौ चोभौ सन्तापनविलापनौ। निजघासो घसश्चैव स्थूणाकर्णः प्रशोषणः।
उल्कामाली धमधमो ज्वालाजिह्वः प्रमर्द्दनः। संघट्टनः संकुचनः काष्ठभूतः शिवङ्करः।
कुष्माण्डः कुम्भमूर्द्धा च रोचनो वैकृतो ग्रहः। अनिकेतः सुरारिघ्नः शिवश्चाशिव एव च। ८१२०
क्षेमकः पिशिताशो च सुरारिर्हरिलोचनः। भीमको ग्राहकश्चैव तथैवोपमयो ग्रहः।
उपग्रहोऽर्य्यकश्चैव तथा स्कन्दग्रहोऽपरः। चपलो लोमवेतालस्तामसः सुमहाकपिः।
हृदयोद्वर्त्तनश्चण्डः कुण्डाशी कङ्कणप्रियः। हरिश्मश्रुर्गरुत्मान्तो मनोमारुतरंहसः।
पार्व्वत्या रोषसंभूताः सहस्राणि शतानि च। शक्तिमन्तो द्युतिमन्तो ब्रह्मण्याः सत्यसङ्गराः।
सर्व्वकामोपहर्त्तारो हन्तारो द्विषतां मृधे। रात्रावहनि दुर्गेषु कीर्त्तिताकीर्त्तिता गुणैः। ८१२५
तेषां गणानां पतयः सगणाः पान्तु नित्यशः। नारदः पर्व्वतश्चैव गन्धर्व्वाप्सरसाङ्गणाः।
पितरः कारणं कार्य्यमाधयो व्याधयस्तथा। अगस्त्यो गालवो गार्ग्यः शक्तिर्धौम्यः पराशरः।
कृष्णात्रेयश्च भगवानसितो देवलोऽनलः। बृहस्पतिरुतथ्यश्च मार्कण्डेयः श्रुतश्रवाः।
द्वैपायनो विदर्भश्च जैमिनिर्माठरः कठः। विश्वामित्रो वशिष्ठश्च लोमशश्च महानृषिः।
उतङ्कश्चैव रैभ्यश्च पौलोमश्च दितस्त्रितः। ऋषिर्भ्भे कालवृक्षीयो मुनिर्म्मेधातिथिस्तथा। ८१३०
सारस्वतो यवक्रीतः कुशिको गौतमस्तथा। सम्वर्त्त ऋष्यशृङ्गश्च स्वस्त्यात्रेयो विभाण्डकः।
ऋचीको जमदग्निश्च तथौर्व्वस्तपसां निधिः। भरद्वाजः स्थूलशिराः कश्यपः पुलहः क्रतुः।
ऋचदग्निर्हरिश्मश्रुर्व्विजयः काण्व एव च। वैतण्डो च दीर्घतपा वेदयाथांश्च्मान् शिवः।
शुन शेफः शुन पुच्छः शुनोलाङ्गूल एव च। अष्टावक्रो दधीचिश्च श्वेतकेतुस्तथैव च।
उद्दालकः चारपाणिः शङ्खो गौरमुखस्तथा। अग्निवेश्यः शमीकश्च मुमुर्ण्डुमुखस्तथा। ८१३५
एते चान्ये च बहव ऋषयः संशितव्रताः। मुनयः संशितात्मानो ये चान्ये नानुकीर्त्तिताः।

ऋजवः शाधिनः शान्ताः शान्तिं कुर्व्वन्तु मे सदा । त्रयोऽग्नयस्त्रयो वेदास्त्रैविद्यं कौस्तुभो मणिः ।
उच्चैः श्रवा हयः श्रीमान्वैद्यो धन्वन्तरिर्हरिः । अमृतं गौः सुवर्णञ्च दधिगौराश्च सर्षपाः ।
शुक्लाः सुमनसः कन्याः श्वेतच्छत्रं यवाक्षताः । दूर्व्वा हिरण्यं गन्धाश्च बालव्यजनमेव च । ९१८०
तथाऽप्रतिहतं चक्रं महोचन्दनं विषं । श्वेतो वृषः करी मत्तः सिंहो व्याघ्रो हयो गिरिः ।
पृथिवी चोद्धृता लाजा ब्राह्मणा मधु पायसं । स्वस्तिको वर्द्धमानश्च नन्द्यावर्त्तः प्रियङ्गवः ।
श्रीफलं गोमयं मत्स्या दुन्दुभी पटहस्वनः । ऋषिपत्न्यश्च कन्याश्च श्रीमच्छार्ङ्गधनं धनुः ।
रोचना रुचकश्चैव नदीनां सङ्गमोदकं । सुपर्णाः शतपत्राश्च चकोरा जीवजीवकाः ।
नन्दीमुखो मयूरश्च वज्रमुक्ता मणिध्वजाः । आयुध्यानि प्रशस्तानि कार्य्यसिद्धिकराणि च । ९१८५
पुण्यं वै विगतक्लेशं श्रीमद्वै मङ्गलान्वितं । रामेणोदाहृतं पूर्व्वमायु. श्रीजयकाङ्क्षिणा ।
यश्चेदं श्रावयेविद्वान् यश्चेदं शृणुयान्नरः । मङ्गलाष्टशतं स्नातो जपेत् पर्व्वणि पर्व्वणि ।
सधनन्यपरिक्लेशं व्याधिशोकपराभवं । न च प्राप्नोति वैकल्यं परत्रेह च नन्दति ।
धन्यं यशस्यमायुष्यं पवित्रं वेदसम्मितं । श्रीमत् स्वर्ग्यं सदा पुण्यमपत्यजननं शुभं ।
शिवं क्षेमङ्करं नृणां मेधाजननमुत्तमं । सर्व्वरोगप्रशमनं सुकीर्त्तिकुलवर्द्धनं । ९१९०
श्रद्दधानो दयाभूतः प्रपठेदात्मवान्नरः । सर्व्वपापविशुद्धात्मा गतिञ्च लभते शुभां ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि बलदेवाह्निके अष्टपञ्चाधिकशतोऽध्यायः ॥ १९८ ॥
॥ वैशम्पायन उवाच ॥ हते यदैव प्रद्युम्नः शम्बरेणात्मघातिना । मासेऽस्मिन्नेव शाम्बस्तु जाम्बवत्यामजायत ।
बाल्यात् प्रभृति रामेण सोऽस्त्रेषु विनियोजितः । रामादनन्तरश्चैव मानित. सर्व्ववृष्णिभि. ।
जातमात्रे ततः कृष्णा. शुभां नामावसत् पुरीं । निहतामित्रसामन्तः शक्रोद्याने यथाऽमराः ।
यादवोऽश्रियं दृष्ट्वा स्वां श्रियं द्वेष्टि वासवः । जनार्द्दनभयाच्चैव न शान्ति लेभिरे नृपा. । ९१९५
कस्यचित्त्वथ कालस्य पुरे वारणसाह्वये । दुर्य्योधनस्य यज्ञे वै समीयुः सर्व्वपार्थिवाः ।
तां श्रुत्वा माधवीं लक्ष्मीं सपुत्रञ्च जनार्द्दनं । पुरीं द्वारवतीञ्चैव निविष्टां सागरान्तरे ।
दूतैस्ते कृतसन्धानाः पृथिव्यां सर्व्वपार्थिवाः । श्रियं द्रष्टुं हृषीकेशमाजग्मु. कृष्णमन्दिरं ।
दुर्य्योधनमुखा. सर्व्वे धृतराष्ट्रवशानुगाः । पाण्डवप्रमुखाश्चैव धृष्टद्युम्नादयो नृपा. ।
पाण्ड्यचोलकलिङ्गेशा वाह्लीका द्रविडाः खशाः । अक्षौहिणीः प्रकर्षन्तो दश चाष्टौ च भूमिपा. । ९२००
आजग्मुर्यादवपुरीं गोविन्दभुजपालितां । ते पर्व्वतं रैवतकं परिवार्य्यावनीश्वराः ।
विविशुर्य्यो जनाख्यासु स्वासु स्वासु च भूमिषु । तत. श्रीमान् हृषीकेशः सह यादवपुङ्गवै. ।
समीपे मानवेन्द्राणां निर्ययौ कमलेक्षण. । स तेषां नरदेवानां मध्यस्थो मधुसूदनः ।
व्यराजत यदुश्रेष्ठः शरदीव दिवाकरः । स तत्र समुदाचारं यथास्थानं यथावयः ।
कृत्वा सिंहासने कृष्णः काञ्चने निषसाद ह । राजानोऽपि यथास्थानं निषेदुर्विविधेष्वथ । ९२०५
सिंहासनेषु चित्रेषु पीठेषु च नराधिपाः । सयादवनरेन्द्राणां समाज. शुशुभे तदा ।

सुराणामसुराणाञ्च यदर्चि ब्रह्मणो यथा । तेषाञ्चित्राः कथास्तत्र प्रवृत्ताः मत्समागमे ।
यदूनां पार्थिवानाञ्च केशवस्योपशृण्वतः । एतस्मिन्नन्तरे वायुर्व्ववौ मेघरवोद्धतः ।
तुमुलं दुर्द्दिनं चासीत्सविद्युत्स्तनयित्नुमत् । तद्दुर्द्दिनतलं भित्त्वा नारदः प्रत्यदृश्यत ।
संवेष्टितजटाभारो वीणापक्षेण वाग्मिना । स पपात नरेन्द्राणां मध्ये पावकसन्निभः । ९९१०
नारदोऽग्निशिखाकारः श्रीमाञ्छक्रसखो मुनिः । तस्मिन्निपतिते भूमौ नारदे मुनिपुङ्गवे ।
तदद्भुतमहामेघं व्यपाकृष्यत दुर्द्दिनं । सोऽवगाह्य नरेन्द्राणां मध्यं सागरसन्निभं ।
आसनस्थं यदुश्रेष्ठमुवाच मुनिरव्ययं । आश्चर्य्यः खलु देवानामेकस्त्वं पुरुषोत्तम ।
धन्यश्चासि महाबाहो लोके नान्योऽस्ति कश्चन । एवमुक्तः स्मितं कृत्वा प्रत्युवाच मुनिं प्रभुः ।
आश्चर्य्यश्चैव धन्यश्च दक्षिणाभिः सहेत्यहं । एवमुक्तो मुनिश्रेष्ठः प्राह मध्ये महीक्षितां । ९९१५
कृष्ण पर्य्याप्तवाक्योऽस्मि गमिष्यामि यथागतं । तं प्रस्थितमभिप्रेक्ष्य पार्थिवाः शाङ्करीश्वरं ।
गुह्यं मन्त्रमजानन्तो वचनं नारदेरितं । आश्चर्य्यइत्यभिहिते धन्योऽसीति च माधव ।
दक्षिणाभिः सहेत्येवं प्रत्युक्तेऽपि च नारदे । किमेतन्नाभिजानीमो दिव्यं मन्त्रपदं महत् ।
यदि श्राव्यमिदं कृष्ण श्रोतुमिच्छामि तत्त्वत । तानुवाच ततः कृष्णः सर्व्वान् पार्थिवपुङ्गवान् ।
श्रोतव्यं नारदस्त्वेव द्विजो वः कथयिष्यति । ब्रूहि नारद तत्त्वार्थं श्राव्यन्तां पृथिवीक्षितः । ९९२०
यत्त्वयाऽभिहितं वाक्यं मया च प्रतिभाषितं । स पीठे काञ्चने शुभ्रे सूपविष्टः स्वलङ्कृते ।
प्रभवन्तस्य वाक्यस्य प्रवक्तुमुपचक्रमे ।
॥ नारद उवाच ॥ श्रूयतां भो नृपश्रेष्ठा यावन्तः स्थ समागताः । अस्य मन्त्रस्य महतो यथा पारमहङ्गतः ।
अहं कदाचिद्गङ्गाया तीरे त्रिपथगातिथिः । चराम्येकः क्षपापाये दृश्यमाने दिवाकरे ।
अपश्यं गिरिकूटाभं कपालद्वयदेहिनं । क्रोशमण्डलविस्तारं ताव द्विगुणमायतं । ९९२५
चतुश्चरणसंश्लिष्टं क्लिन्नं शैवलशाद्वलं । सम वीणाकृतिं कूर्म्मं गजचर्म्मचयोपमं ।
सोऽहं तं पाणिना स्पृष्ट्वा प्रोक्तवान् जलचारिणं । त्वमाश्चर्य्यशरीरोऽसि कूर्म्म धन्योऽसि मे मतः ।
यस्त्वमेवमभेद्याभ्यां कपालाभ्यां समावृतः । तोये चरसि निःशङ्कः कश्चिदन्यमचिन्तयन् ।
स मामुवाचाम्बुचरः कूर्म्मो मानुषवत्स्वयं । किमाश्चर्य्यं मयि विभो धन्यश्चाहं कथं मुने ।
गङ्गेयं निम्नगा धन्या किमाश्चर्य्यमतः परं । यत्राहमिव सत्त्वानि चरन्त्ययुतशो द्विज । ९९३०
सोऽहं कुतूहलाविष्टो महीं गङ्गामुपस्थितः । धन्याऽसि त्वं सरिच्छ्रेष्ठे नित्यमाश्चर्य्यभूषिता ।
या त्वमेवं महादेहैः श्वापदैरुपशोभिता । ह्रदिनी सागरं यासि रसन्ती तापसाश्रयाम् ।
एवमुक्ता ततो गङ्गा रूपिणी प्रत्यभाषत । नारदं देवगन्धर्व्वं मङ्गल्यं दयितं द्विजं ।
मा मैवं देवगन्धर्व्व संग्रामकलहप्रिय । नाहं धन्या द्विजश्रेष्ठ नाप्याश्चर्य्योपशोभिता ।
तव सत्ये निविष्टस्य वाक्यं मामत्र बाधते । लोकाश्चर्य्यकरो लोके धन्यश्चैवार्णवो द्विज । ९९३५
यत्राहमिव विख्याताः शतशो यान्ति निम्नगाः । सोऽहं विपथगा वाक्यं श्रुत्वाऽर्णवमुपस्थितः ।

आश्चर्य्यः खलु लोकानां धन्यश्चासि महार्णव । येन खल्वसि योनिस्त्वमम्भसां सलिलेश्वर ।
स्थाने त्वां वारिवाहिन्यः सरितो लोकपावनाः । इमाः समभिगच्छन्ति नद्यो लोकनमस्कृताः ।
समुद्रस्त्वेवमुक्तस्तु ततो मामब्रवीद्वचः । स्वं जलौघतलं भित्त्वा व्युत्थितः पवनेरितः ।
मा मैवं देवगन्धर्व्व नास्म्याश्चर्य्यो द्विजर्षभ । वसुधेयं मुने धन्या यत्राहमुपरि स्थितः । ८९४०
एतां तु पृथिवीं लोके किमाश्चर्य्यमतः परं । सोऽहं सागरवाक्येन क्षितिं क्षितितले स्थितः ।
कौतूहलसमाविष्टो ह्यब्रुवं जगतो गतिं । धरित्रि देहिनां योनिर्धन्या खल्वसि शोभने ।
आश्चर्य्येश्चापि भूतेषु महत्या चनया युते । तेन खल्वसि भूतानां धरणी मनुजारणिः ।
क्षमा त्वत्तः प्रसूता च कर्म्म चाम्बरगामिनां । ततो भूः स्तुतिवाक्येन सा मयोक्तेन तेजिता ।
विहाय सहजं धैर्य्यमथ मामभ्यभाषत । देवगन्धर्व्व मा मैवं संग्रामकलहप्रिय । ८९४५
नास्मि धन्या न चाश्चर्य्या पारक्येयं धृतिर्मम । एते धन्या द्विजश्रेष्ठ पर्व्वता धारयन्ति मां ।
एष्वाश्चर्य्याणि दृश्यन्ते एते लोकस्य सेतवः । सोऽहं पर्य्यायवाक्येन पर्व्वतान् समुपस्थितः ।
धन्या भवन्तो दृश्यन्ते बह्वाश्चर्य्याश्च भूधराः । काञ्चनस्यापि रत्नस्य धातूनाञ्च विशेषतः ।
तेन खल्वाकराः सर्व्वे भवन्तो भुवि शाश्वताः । ते ममैतद्वचः श्रुत्वा पर्व्वतास्तस्थुषां वराः ।
ऊचुर्मां सान्त्वयुक्तानि वचांसि वनशोभिनः । ब्रह्मर्षे न वयं धन्या नाप्याश्चर्य्याणि सन्ति नः । ८९५०
ब्रह्मा प्रजापतिर्धन्यः स चाश्चर्य्यः सुरेष्वपि । सोऽहं पितामहं गत्वा सर्व्वप्रभवमव्ययं ।
तस्य वाक्यस्य पर्य्यायं पर्य्याप्तमिव लक्षये । सोऽहं स्वयम्भुवं देवं लोकयोनिं चतुर्मुखं ।
पारम्पर्य्यादुपायातः प्रणामावनताननः । सोऽहं वाक्यसमाप्त्यर्थं श्रावये पद्मयोनये ।
आश्चर्य्यं भगवानेको धन्यश्च जगतो गुरुः । न किञ्चिदन्यत् पश्यामि भूतं यद्भवतां समं ।
त्वत्तः सर्व्वमिदं जातं जगत् स्थावरजङ्गमं । सदेवदानवा मर्त्त्या लोके भूतेन्द्रियात्मकाः । ८९५५
भवन्ति सर्व्वदेवेश दृश्यादृश्यमिदं जगत् । तेन खल्वसि देवाभो देवदेवः सनातनः ।
तेषामेवासि यत् स्रष्टा लोकानामपि भावनः । ततो मां प्राह भगवान् ब्रह्मा लोकपितामहः ।
धन्याश्चर्य्यास्त्रिभिर्वाक्यैः किं मां नारद भाषसे । आश्चर्य्यं परमं वेदा धन्या वेदाश्च नारद ।
ये लोकान्धारयन्ति स्म वेदास्तत्त्वार्थदर्शिनः । ऋक्सामयजुषां सत्यमथर्व्वणि च यन्मतं ।
तन्मयं विद्धि मां विप्र धृतोऽहं तैर्मया च ते । पारमेष्ठ्येन वाक्येन चोदितोऽहं स्वयम्भुवा । ८९६०
वेदोपस्थानिकाशुके मतिसंस्थानविस्तरां । सोऽहं स्वयम्भुवचनाद्वेदान्वै समुपस्थितः ।
उवाच वेदांश्चतुरो मन्त्रप्रवचनार्च्चितान् । धन्या भवन्तः पुण्याश्च नित्यमाश्चर्य्यभूषिताः ।
आधाराश्चैव विप्राणामित्याह प्रजापतिः । स्वयम्भुवोऽपीह परं भवत्सु प्रश्नमागतः ।
युष्मत्परतरं नास्ति श्रुत्या वा तपसाऽपि वा । सत्यवचो तदा वाक्यं वेदा मामभितः स्थिताः ।
आश्चर्य्याश्चैव धन्याश्च यज्ञा वाक्यत्परायणाः । यज्ञार्थं च वयं सृष्टा धात्रा येन स्म नारद । ८९६५
तदस्माकं परा दृष्टा न वयं स्ववशे स्थिताः । स्वयम्भुवः परं वेदा वेदानाञ्च परं क्रतुः ।

ततोऽहमब्रुवं यज्ञान् स्टहस्याग्निपुरस्कृतान् । भो यज्ञाः परमं तेजो युष्मासु खलु लभ्यते ।
ब्रह्मणाऽभिहितं वाक्यं यच्च वेदैरुदीरितं । आश्चर्यमन्यल्लोकेऽस्मिन् भवद्भ्यो नाधिगम्यते ।
धन्याः खलु भवन्तो ये द्विजातीनां स्वयंभुवा । तेन खल्वग्र्यसृष्टिं युष्माभिर्यान्ति तर्पिताः ।
भागैश्च त्रिदशाः सर्व्वे मन्त्रैश्चैव महर्षयः । अग्निष्टोमाद्यो यज्ञा मम वाक्यादनन्तरं । ८८१०
प्रत्यूचुर्मां ततो वाक्यं सर्व्वे यूपध्वजाः स्थिताः । आश्चर्यशब्दो नास्मासु धन्यशब्दोऽपि वा मुने ।
आश्चर्यं परमं विष्णुः स ह्यस्माकं परा गतिः । यदाज्यं वयमश्नीमो हुतमग्निषु पावन ।
तत् सर्व्वं पुण्डरीकाक्षो लोकमूर्त्तिः प्रयच्छति । सोऽहं विष्णुगतिं प्रेप्सुरिह संपतितो भुवि ।
दृष्टश्चायं मया कृष्णो भवद्भिरिह संवृतः । यन्मयाऽभिहितो ह्येष त्वमाश्चर्यंजनार्द्दन ।
धन्यश्चासीति भवतां मध्यस्थो ह्यत्र पार्थिवाः । प्रत्युक्तोऽहमनेनाद्य वाक्यस्यास्य यदुत्तरं । ८८१५
दक्षिणाभिः सहेत्येवं पर्य्याप्तं वचनं मम । यज्ञानाञ्च गतिर्व्विष्णुः सर्व्वेषाञ्च सदक्षिणः ।
दक्षिणाभिः सहेत्येवं प्रश्नो मम समाप्तवान् । कृष्णेनाभिहितं पूर्व्वं पारम्पर्य्यादिहागतं ।
सदक्षिणेऽस्मिन् पुरुषे तद्वाक्यं प्रतिपादितं । यन्मां भवन्तः पृच्छन्ति वाक्यस्यास्य निर्णयं ।
तदेतत् सर्व्वमाख्यातं साधु यामि यथागतं । नारदे तु गते स्वर्गं सर्व्वे ते पृथिवीक्षितः ।
विस्मिता स्वानि राष्ट्राणि जग्मुः सबलवाहनाः । जनार्द्दनोऽपि सहितो यदुभिः पावकोपमैः । ८८२०
स्वमेव भवनं वीरो विवेश यदुपुङ्गवः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि आश्चर्यधन्योपाख्याने ऊनसप्तत्यधिकशतोऽध्यायः ॥ १६९ ॥
॥ जनमेजय उवाच ॥ भूय एव महाबाहो कृष्णस्य जगतीपते । माहात्म्यं श्रोतुमिच्छामि परमं द्विजसत्तम ।
न हि मे तृप्तिरस्तीह शृण्वतस्तस्य धीमतः । कर्म्मणामनुमन्तानां पुराणस्य महात्मनः ।
॥ वैशम्पायन उवाच ॥ नान्तः शक्यः प्रभावस्य वक्तुं वर्षशतैरपि । गोविन्दस्य महाराज श्रूयतामिदमद्भुतं ।
शरतल्पे शयानेन भीष्मेण परिचोदितः । गाण्डीवधन्वा बीभत्सुर्यदाहाक्यं केशवस्य यत् । ८८२५
राज्ञां मध्ये महाराज ज्येष्ठं भ्रातरमब्रवीत् । युधिष्ठिरं जितामित्रमिति तच्छृणु कौरव ।
॥ अर्ज्जुन उवाच ॥ पुराऽहं द्वारकां यातः सम्बन्धीनवलोककः । न्यवसं पूजितस्तत्र भोजवृष्ण्यन्धकोत्तमैः ।
ततः कदाचिद्धर्म्मात्मा दीक्षितो मधुसूदनः । एकाहेन महाबाहुः शास्त्रदृष्टेन कर्म्मणा ।
ततो दीक्षितमासीनमभिगम्य द्विजोत्तमः । कृष्णं विज्ञापयामास परित्राहीति चाब्रवीत् ।
॥ ब्राह्मण उवाच ॥ रक्षाधिकारो भवतः परित्रस्व मां विभो । चतुर्थांशं हि धर्म्मस्य रक्षिता लभते फलं । ८८३०
॥ वासुदेव उवाच ॥ न भेतव्यं द्विजश्रेष्ठ रक्षामि त्वां कुतो भयं । ब्रूहि तत्त्वेन भद्रं ते यद्यपि स्यात् सुदुष्करं ।
॥ ब्राह्मण उवाच ॥ जातो जातो महाबाहो पुत्रो मे ह्रियतेऽनघ । त्रयो हृतास्चतुर्थं मे कृष्ण रक्षितुमर्हसि ।
ब्राह्मण्याः सूतिकाले ऽद्य तत्र रक्षा विधीयतां । यथा प्रियेदपत्यं मे तथा कुरु जनार्द्दन ।
॥ अर्ज्जुन उवाच ॥ ततो मामाह गोविन्दो दीक्षितोऽहं क्रताविह । रक्षां च ब्राह्मणे कार्या सर्व्वावस्थागतैरपि ।
श्रुत्वाऽहमेवं कृष्णस्य ततो वचनमद्भुतं । भो निर्याणय गोविन्द रक्षिष्यामि द्विजं भयात् । ८८३५

इत्युक्तः स स्मितं कृत्वा मामुवाच जनार्दनः। मत्समीपे त्वमुक्तस्तु व्रीडितोऽस्मि नराधिप।
ततो मां व्रीडितं ज्ञात्वा पुनराह जनार्दनः। गम्यतां कौरवश्रेष्ठ शक्यते यदि रक्षितुं।
त्वत्पुरोगाश्च गच्छन्तु वृष्ण्यन्धकमहारथाः। ऋते रामं महाबाहुं प्रद्युम्नञ्च महाबलं।
ततोऽहं वृष्णिसैन्येन महता परिवारितः। तमग्रतो द्विजं कृत्वा प्रयातः सह सैनिकैः।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वासुदेवमाहात्म्ये सप्तत्यधिकशततोऽध्यायः॥ १७०॥
॥ अर्ज्जुन उवाच॥ मुहूर्त्तेन वयं ग्रामं तं प्राप्य भरतर्षभ। विश्रान्तवाहनाः सर्व्वे निवासायोपसंस्थिताः। ९७००
ततो ग्रामस्य मध्येऽहं निविष्टः कुरुनन्दन। समन्ताद्वृष्णिसैन्येन महता परिवारितः।
ततः शकुनयो दीप्ता मृगाश्च क्रूरभाषिणः। दीप्तायां दिशि वाश्यन्तो भयमाविदयन्ति मे।
सन्ध्यारागो जवावर्णो भानुमांश्चैव निष्प्रभः। पपात महतो चोल्का पृथिवी चाप्यकम्पत।
तान् समीक्ष्य महोत्पातान्दारुणांल्लोमहर्षणान्। योगमाज्ञापयं तत्र जनस्योत्सुकचेतसः।
युयुधानपुरोगाश्च वृष्ण्यन्धकमहारथाः। सर्व्वे युक्तरथाः सज्जाः स्वयञ्चाहन्तथाऽभवं। ९७०५
गतेऽर्द्धरात्रसमये ब्राह्मणो भयविक्लवः। उपगम्य भयादस्मानिदं वचनमब्रवीत्।
कालोऽयं समनुप्राप्तो ब्राह्मण्याः प्रसवस्य मे। तथा भवन्तस्तिष्ठन्तु न भवेद्वञ्चना यथा।
मुहूर्त्तादिव पार्थाथ कृपणं रुदितस्वनं। तस्य विप्रस्य भवने ह्रियते ह्रियतेति च।
अथाकाशे पुनर्व्वाचमश्रौषं बालकस्य वै। हा हेति ह्रियमाणस्य न च पश्यामि राक्षसं।
ततोऽस्माभिस्तदा तात शरवर्षैः समन्ततः। विष्टम्भिता दिशः सर्व्वा हृत एव स बालकः। ९७१०
ब्राह्मणोऽर्त्तस्वरं कृत्वा हृते तस्मिन् कुमारके। वाचः स परुषास्तीव्राः श्रावयामास मां तदा।
वृष्णयो हतसंकल्पास्तथाऽहं नष्टचेतनः। मामेव हि विशेषेण ब्राह्मणः प्रत्यभाषत।
रक्षिष्यामीति चोक्तं ते न च रक्षितवानसि। शृणु वाक्यमिदं शेषं यत्त्वमर्हसि दुर्म्मते।
वृथा त्वं स्पर्द्धसे नित्यं कृष्णेनामितबुद्धिना। यदि स्यादिह गोविन्दो नैतदस्याहितं भवेत्।
यथा चतुर्थं धर्म्मस्य रक्षिता लभते फलं। पापस्यापि तथा मूढ भागं प्राप्नोत्यरक्षिता। ९७१५
रक्षिष्यामीति चोक्तं ते न च रक्षितवानसि। मोघं गाण्डीवमेतत्ते मोघं वीर्य्यं यशश्च ते।
न किञ्चिदुक्त्वा तं विप्रं ततोऽहं प्रस्थितस्तदा। सह वृष्ण्यन्धकैः सर्व्वैर्यत्र कृष्णो महाद्युतिः।
ततो द्वारवतीं गत्वा दृष्ट्वा मधुनिघातिनं। व्रीडितः शोकसन्तप्तो गोविन्देनोपलक्षितः।
स तु मां व्रीडितं दृष्ट्वा समाश्वास्य च माधवः। सान्त्वयित्वा च तं विप्रमिदम्वचनमब्रवीत्।
सुघोषश्चैव शैब्यश्च मेघपुष्पबलाहकौ। योजयाश्वानिति तदा दारुकं प्रत्यभाषत। ९७२०
आरोप्य ब्राह्मणं कृष्णो ह्यवरोप्य च दारुकं। मामुवाच ततः शौरिः सारथ्यं क्रियतामिति।
ततः समास्थाय रथं कृष्णोऽहं ब्राह्मण स च। प्रयाताः स्म दिशं सौम्यामुदीचीं कौरवर्षभ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वासुदेवमाहात्म्ये एकसप्तत्यधिकशततोऽध्यायः॥ १७१॥
॥ अर्ज्जुन उवाच॥ ततः पर्व्वतजालानि सरितश्च वनानि च। अगाधं समतिक्रम्य सागरं मकरालयं।

ततोऽर्णवमुदधिः साक्षादुपतिष्ठे जनार्द्दने । प्राञ्जलिः समुपास्थाय किं करोमीति चाब्रवीत् ।
प्रतिगृह्य स तां पूजां तमुवाच जनार्द्दनः । रथपन्थानमिच्छामि त्वया दत्तं नदीपते । ९०२५
अथाब्रवीत् समुद्रस्तु प्राञ्जलिर्गरुडध्वजं । प्रसीद भगवन्नेवमन्योऽप्येवं गमिष्यति ।
त्वयैव स्थापितः पूर्व्वमगाधोऽस्मि जनार्द्दन । त्वया प्रवर्त्तिते मार्गे यास्यामि गमनीयतां ।
अन्येऽप्येवं गमिष्यन्ति राजानो दर्पमोहिताः । एवं सञ्चिन्त्य गोविन्द यत्क्षमं तत् समाचर ।
॥ वासुदेव उवाच ॥ ब्राह्मणार्थेऽस्मदर्थे च कुरु सागर मद्वचः । मदृते न पुमान् कश्चिदन्यस्त्वां धर्षयिष्यति ।
अथाब्रवीत् समुद्रस्तु पुनरेव जनार्द्दनं । अभिशापभयाद्भीतो बाढमेवं भवत्विति । ९०३०
शोषयाम्येष मार्गं ते येन त्वं कृष्ण यास्यसि । रथेन सह सूतेन सध्वजेन च केशव ।
॥ वासुदेव उवाच ॥ मया दत्तो वरः पूर्व्वं न शोषं यास्यसीति ह । मानुषास्ते न जानीयुर्व्विविधान्रत्नसञ्चयान् ।
जलं स्तम्भय साधो त्वं ततो यास्याम्यहं रथी । न हि कश्चित् प्रमाणन्ते रत्नानां वेत्स्यते नरः ।
सागरेण तथेत्युक्ते प्रस्थिताः स्म जलेन वै । स्तम्भितेन यथा भूमौ मणिवर्णेन भास्वता ।
ततोऽर्णवं समुत्तीर्य्य कुरूनथोत्तरान् वयं । क्षणेन समतिक्रान्ता गन्धमादनमेव च । ९०३५
ततस्तु पर्व्वताः सप्त केशवं समुपस्थिताः । जयन्तो वैजयन्तश्च नीलो रजतपर्व्वतः ।
महामेरुः सकैलास इन्द्रकूटश्च नामतः । बिभ्राणा वर्णरूपाणि विविधान्यद्भुतानि च ।
उपस्थाय च गोविन्दं किं कुर्म्मेत्यब्रुवंस्तदा । तांश्चैव प्रतिजग्राह विधिवन्मधुसूदनः ।
तानुवाच हृषीकेशः प्रणामावनतान् स्थितान् । विवरं गच्छतो मेऽद्य रथमार्गं प्रदीयतां ।
ते कृष्णस्य वचः श्रुत्वा प्रतिगृह्य च पर्व्वताः । प्रददुः कामतो मार्गं गच्छतो भरतर्षभ । ९०४०
तत्रैवान्तर्हितास्ते च तदाश्चर्य्यतरं मम । अगच्छच्च रथो याति मेघजालेष्विवांशुमान् ।
ततः कदाचिद्दुःखेन रथमूह्यस्तुरङ्गमाः । पङ्कभूतं हि तिमिरं स्पर्शाद्विज्ञायतेऽनघ ।
अथ पर्व्वतभूतं तत्तिमिरं समपद्यत । तदासाद्य महाराज निष्प्रयत्ना हयाः स्थिताः ।
ततश्चक्रेण गोविन्दः पाटयित्वा तमस्तदा । आकाशं दर्शयामास रथपन्थानमुत्तमं ।
निष्क्रम्य तमसस्तस्मादाकाशे दर्शिते तदा । भविष्यामीति संज्ञा मे भयञ्च विगतं मम । ९०४५
ततस्तेजः प्रज्वलितमपश्यं तत्तदाऽम्बरे । सर्व्वलोकं समाविश्य स्थितं पुरुषविग्रहं ।
तं प्रविष्टो हृषीकेशो दीप्तं तेजोनिधिं तदा । रथ एव स्थितश्चाहं स च ब्राह्मणसत्तमः ।
स मुहूर्त्तात्ततः कृष्णो निश्चक्राम तदा प्रभुः । चतुरो बालकान् गृह्य ब्राह्मणस्यात्मजांस्तदा ।
प्रददौ ब्राह्मणायाथ पुत्रान् सर्व्वान् जनार्द्दनः । त्रयः पूर्व्वं हृता ये च सद्यो जातश्च बालकः ।
प्रहृष्टो ब्राह्मणस्तत्र पुत्रान्दृष्ट्वा पुनः प्रभो । अहञ्च परमप्रीतो विस्मितश्चाभवं नृप । ९०५०
ततो वयं पुनः सर्व्वे ब्राह्मणस्य च ते सुताः । यथागता निवृत्ताः स्म तथैव भरतर्षभ ।
ततः सा द्वारका प्राप्ता क्षणेन भरतर्षभ । असम्प्राप्तेऽर्द्धदिवसे विस्मितोऽहं ततः पुनः ।

सुभुक्तं भोजयित्वा तं द्विजं कृष्णो महायशाः । धनेन तर्पयित्वा च गृहं सम्प्रापयत्तदा ।

॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वासुदेवमाहात्म्ये द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

॥ अर्ज्जुन उवाच ॥ ततः कृष्णो भोजयित्वा शतानि सुबहूनि च । विप्राणामृषिकल्पानां कृतकृत्यो ऽभवत्तदा ।

ततः सह मया भुक्त्वा वृष्णिभोजैश्च सर्व्वशः । विचित्राश्च कथा दिव्याः कथयामास भारत । ९०५५

ततः कथान्ते तत्राहमभिगम्य जनार्द्दनं । अपृच्छन्तद्यथावृत्तं कृत्स्नं यद्दृष्टवानहं ।

कथं समुद्रस्तम्भोदः कृतस्ते कमलेक्षण । पर्व्वतानाञ्च विवरं कृतं ते कथमच्युत ।

तमस्तच्च कथं घोरं घनं चक्रेण पाटितं । तच्च यत् परमं तेजः प्रविष्टोऽसि कथञ्च तत् ।

किमर्थं तेन ते बालास्तदा चापहृताः प्रभो । यच्च ते दीर्घमध्वानं सङ्क्षिप्तं तत्कथं पुनः ।

कथञ्चाल्पेन कालेन कृतं नस्तद्गतागतं । एतत् सर्व्वं यथावृत्तमाचक्ष्व मम केशव । ९०६०

॥ वासुदेव उवाच ॥ मद्दर्शनार्थं ते बाला हृतास्तेन महात्मना । विप्रार्थमेष्यते कृष्णो नागच्छेदन्यथेति ह ।

ब्रह्मतेजोमयं दिव्यं महद्यद्दृष्टवानसि । अहं स भरतश्रेष्ठ मत्तेजस्तत् सनातनं ।

प्रकृतिः सा मम परा व्यक्ताव्यक्ता सनातनी । तां प्रविश्य भवन्तीह मुक्ता योगविदुत्तमाः ।

सा साङ्ख्यानां गतिः पार्थ योगिनाञ्च तपस्विनां । तत्पदं परमं ब्रह्म सर्व्वं विभजते जगत् ।

मामेव तत्परन्तेजो ज्ञातुमर्हसि भारत । समुद्रस्तम्भितोयोऽहमहं स्तम्भयिता जलं । ९०६५

अहं ते पर्व्वताः सप्त ये दृष्टा विविधास्त्वया । पङ्कभूतं हि तिमिरं दृष्टवानसि यद्धि तत् ।

अहं तमो घनीभूतमहमेव च पाटकः । अहञ्च कालो भूतानां धर्मश्चाहं प्रकीर्त्तितः ।

चन्द्रादित्यौ मही शैलाः सरितश्च सरांसि च । चतस्रश्च दिशः सर्व्वा ममैवात्मा चतुर्व्विधः ।

चतुर्व्वर्ण्यं मत्प्रसूतं चातुराश्रम्यमेव च । चातुर्व्विद्यस्य कर्त्ताऽहमिति बुध्यस्व भारत ।

॥ अर्ज्जुन उवाच ॥ भगवन् सर्व्वभूतेश वेत्तुमिच्छामि ते प्रभो । पृच्छामि त्वां प्रपन्नोऽहं नमस्ते पुरुषोत्तम । ९०७०

॥ भगवानुवाच ॥ ब्रह्म च ब्राह्मणाश्चैव तपः सत्यञ्च भारत । उग्रं वृहद्गुणश्चैव मत्तस्तद्विद्धि पाण्डव ।

प्रियस्तेऽहं महाबाहो प्रियो मेऽसि धनञ्जय । तेन ते कथयिष्यामि नान्यथा वक्तुमुत्सहे ।

अहं यजूंषि सामानि ऋचश्चाथर्व्वणानि च । ऋषयो देवता यज्ञा मत्तेजो भरतर्षभ ।

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं । चन्द्रादित्यावहोरात्रा. पक्षा मासास्तथर्त्तवः ।

मुहूर्त्ताश्च कलाश्चैव क्षणा. सम्वत्सरास्तथा । मन्त्राश्च विविधाः पार्थ यानि शास्त्राणि कानिचित् । ९०७५

विद्याश्च वेदितव्यञ्च मत्तः प्रादुर्भवन्ति वै । मन्मयं विद्धि कौन्तेय क्षयं सृष्टिञ्च भारत ।

सच्चासच्च ममैवात्मा सदसच्चैव तत् पर ।

॥ अर्ज्जुन उवाच ॥ एवमुक्तोऽस्मि कृष्णेन प्रीयता भरतर्षभ । तथैव च मनो नित्यमभवन्मे जनार्द्दने ।

एतच्छ्रुतञ्च दृष्टञ्च माहात्म्यं केशवस्य मे । यन्मां पृच्छसि राजेन्द्र भूयश्चातो जनार्द्दने ।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा कुरुश्रेष्ठो धर्म्मराजो युधिष्ठिर. । पूजयामास मनसा गोविन्दं पुरुषोत्तमं । ९०८०

विस्मितश्चाभवद्राजा सह सर्व्वै महोदरैः । राजभिश्च महाभोगैर्ये तत्रासन् समागताः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वासुदेवमाहात्म्ये त्रिसप्तत्यधिकशततोऽध्यायः ॥ १७३ ॥
॥ जनमेजय उवाच ॥ भूय एव द्विजश्रेष्ठ यदुसिंहस्य धीमतः । कर्म्माण्यपरिमेयाणि श्रोतुमिच्छामि तत्त्वतः ।
श्रूयन्ते विविधानि स्म अद्भुतानि महाद्युते । अश्रद्धेयानि गुह्यानि प्राकृतान्यपि सर्व्वशः ।
यान्यहं विविधान्यस्य श्रुत्वा प्रीये महामते । प्रब्रूयाः सर्व्वशस्तात तानि मे शृण्वतोऽनघ ।
॥ वैशम्पायन उवाच ॥ बह्वन्याश्चर्य्यभूतानि केशवस्य महात्मनः । कर्म्माण्युक्तानि वै राजन् भूयश्चैव श्रुतानि ते । ९०७६
कथितानि मया साधो नान्तं शक्यं हि कर्म्मणां । गन्तुं भरतशार्दूल विस्तारेणं महात्मनः ।
अवश्यञ्च मया वाच्यं लेशमात्रेण भारत । विष्णोरतुलवीर्य्यस्य प्रथितोदारकर्म्मणः ।
आनुपूर्व्व्या प्रवक्ष्यामि शृणुष्वैकमना नृप । द्वारवत्यां निवसता यदुसिंहेन धीमता ।
राष्ट्राणि नृपमुख्यानां क्षोभितानि महात्मना । यदूनामन्तरप्रेप्सुर्विचक्रो दानवो हतः ।
पुरं प्राग्ज्योतिषं गत्वा पुनस्तेन महात्मना । समुद्रमध्ये दुष्टात्मा नरको दानवो हतः । ९०७७
वासवञ्च रणे जित्वा पारिजातो हृतो बलात् । निर्ज्जितश्चैव भगवान् वरुणो लोहिते ह्रदे ।
दन्तवक्त्रश्च कारूषो निहतो दक्षिणापथे । शिशुपालश्च संपूर्णे किल्विषे कृपते हतः ।
गत्वा च शोणितपुरं शङ्करेणाभिरक्षितं । बलेः सुतो महावीर्य्यो बाणो बाहुसहस्रवान् ।
महामृधे महाराज जित्वा जीवन्विवर्ज्जितः । निर्ज्जिता पावकाश्चैव गिरिमध्ये महात्मना ।
शाल्वश्च विजितः सङ्ख्ये सौभञ्च विनिपातितः । विक्षोभ्य सागरञ्चैव पाञ्चजन्यो वशीकृतः । ९०७८
हयग्रीवश्च निहतो नृपाश्चान्ये महाबलाः । जरासन्धस्य निधने मोक्षिताश्च नृपास्तदा ।
रथेन जित्वा नृपतीन् गान्धारतनया हृता । अष्टराज्याश्च शोकार्त्ताः पाण्डवाः परिरक्षिताः ।
दाहितं तु वनं घोरं पुरुहूतस्य खाण्डवं । गाण्डीवञ्चाग्निना दत्तमर्ज्जुनायोपपादितं ।
दौत्यञ्च तत् कृतं घोरे विग्रहे जनमेजय । अनेन यदुमुख्येन यदुवंशश्च वर्द्धितः ।
कुन्त्याश्च प्रमुखे शोका प्रतिज्ञा पाण्डवान् प्रति । निवृत्ते भारते युद्धे प्रतिदास्यामि ते सुतान् । ९०८०
मोक्षितश्च महातेजा नृपः शापात् सुदारुणात् । यवनश्च हतः संख्ये कालः ख्यातो महाविश्रुतः ।
कामरैर्हरैः महावीर्यैर्मैन्दद्विविद एव च । विजितौ युद्धदुर्द्धर्षौ जाम्बवांश्च पराजितः ।
सान्दीपनेस्तथा पुत्त्रस्तव चैव पिता नृप । गतौ वैवस्वतवशं जीवितौ तस्य तेजसा ।
संग्रामा बहवः प्राप्ता घोरा नरवरक्षयाः । निहताश्च नृपाः सर्व्वे कृत्वा तद्रूपमद्भुतं ।
जनमेजय युद्धेषु तथा ते वर्णितं मया । ९०८१
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वासुदेवमाहात्म्ये चतुःसप्तत्यधिकशततोऽध्यायः ॥ १७४ ॥
॥ जनमेजय उवाच ॥ भूय एव महाबाहो यदुसिंहस्य धीमतः । कर्म्माण्यपरिमेयाणि श्रुतानि द्विजसत्तम ।
त्वत्तः श्रुतवतां श्रेष्ठ वासुदेवस्य धीमतः । यदेतत् कथितं पूर्व्वं बाणं प्रति महासुरं ।
तदहं श्रोतुमिच्छामि विस्तरेण तपोधन । कथञ्च देवदेवस्य पुत्त्रत्वमसुरो गतः ।

योऽभिगुप्तः स्वयं साक्षात् शङ्करेण महात्मना । महता स गणेनेह सगणेन गुहेन च ।
बलेर्बलवतः पुत्रो ज्येष्ठो भ्रातृशतस्य यः । हतो बाहुसहस्रेण दिव्यास्त्रशतधारिणा । ९८९०
असंख्येयैर्महाकायैर्मायाशतसहस्रैर्बलैः । वासुदेवेन स कथं सङ्ख्ये बाणः पराजितः ।
संरब्धो द्वन्द्वयुद्धार्थी जीवन्मुक्तः कथञ्च सः ।
॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजन् कृष्णस्यामिततेजसः । मनुष्यलोके बाणेन यथाऽभूद्विग्रहो महान् ।
वासुदेवेन यत्रासौ रुद्रस्कन्दसहायवान् । बलिपुत्रो रणश्लाघी जित्वा जीवन् विसर्ज्जितः ।
यथा चास्य वरो दत्तः शङ्करेण महात्मना । नित्यं सान्निध्यता चैव गाणपत्यं यथाऽव्ययं । ९८९५
यथा बाणस्य तद्युद्धं जीवन्मुक्तो यथा च सः । यथा च देवदेवस्य पुत्रत्वं सोऽसुरो गतः ।
यदर्थञ्च महद्युद्धं तत् सर्व्वमखिलं शृणु । दृष्ट्वा वपुः कुमारस्य क्रीडतस्य महात्मनः ।
बलिपुत्रो महावीर्य्यो विस्मयं परमं गतः । तस्य बुद्धिस्तदोत्पन्ना तपश्चर्त्तुं सुदारुणं ।
रुद्रस्याराधनार्थाय यथास्य स्यामहं सुतः । ततोऽलपयदात्मानं तपसा सोऽसुरोत्तमः ।
देवस्तस्य परं तोषं जगाम च सहोमया । श्रीकण्ठश्च परां प्रीतिं गत्वाऽसुरमथाब्रवीत् । ९९००
वरं वृणीष्व भद्रं ते यत्ते मनसि वर्त्तते । अथ बाणोऽब्रवीद्वाक्यं देवदेवं सनातनं ।
देव्याः पुत्रत्वमिच्छामि त्वया दत्तं त्रिलोचन । शङ्करस्तु तथेत्युक्त्वा रुद्राणीमिदमब्रवीत् ।
कनीयान् कार्त्तिकेयस्य पुत्रोऽयं प्रतिगृह्यतां । यत्रोत्थितो महासेनः सोऽग्निजो रुधिरे पुरे ।
तत्रोद्देशे पुरञ्चास्य भविष्यति न संशयः । नाम्ना तच्छोणितपुरं भविष्यति पुरोत्तमं ।
मयाऽभिगुप्तं श्रीमत्तं न कश्चित् प्रसहिष्यति । ततः स निवसन् बाणः पुरे शोणितसाह्वये । ९९०५
राज्यं प्रशास्ति दिव्यं च बाधयन् सर्व्वदेवताः । अथ वीर्य्यमदोत्सिक्तो बाणो बाहुसहस्रवान् ।
अचिन्तयन् देवगणान् युद्धमाकाङ्क्षते सदा । ध्वजञ्चास्य ददौ प्रीतः कुमारो ह्यग्नितेजसं ।
वाहनञ्चैव बाणस्य मयूरं दीप्ततेजसं । न देवा न च गन्धर्व्वा न यक्षा न च पन्नगाः ।
तस्य युद्धे व्यतिष्ठन्त देवदेवस्य तेजसा । त्र्यम्बकेनाभिगुप्तश्च दर्पोत्सिक्तो महासुरः ।
भूयो मृगयते युद्धं त्रिलोचनमथागमत् । स रुद्रमभिगम्याथ प्रणिपत्याभिवाद्य च । ९९१०
बलिसूनुरिदं वाक्यं पप्रच्छ वृषभध्वजं । असकृन्निर्ज्जिता देवाः ससाध्याः समरुद्गणाः ।
मया बलमदोत्सेकात् ससैन्येन तवाश्रयात् । इमं देशं समागम्य वसन्ति स्म पुरे सुखं ।
ते पराजयसंत्रस्ता निराशा मत्पराजये । नाकपृष्ठमुपागम्य निवसन्ति यथासुखं ।
सोऽहं निराशो युद्धस्य जीवितं नाद्य कामये । अयुध्यतो वृथा ह्येषां बाहूनां धारणं मम ।
तद्ब्रूहि मम युद्धस्य कच्चिदागमनं भवेत् । न मे युद्धं विना देव रतिरस्ति प्रसीद मे । ९९१५
ततः प्रहस्य भगवानब्रवीद्वृषभध्वजः । भविता बाण युद्धं ते यथा तच्छृणु दानव ।
ध्वजस्यास्य यदा भङ्गस्तव तात भविष्यति । स्वे स्थाने स्थापितस्याथ तदा युद्धं भविष्यति ।
इत्येवमुक्तः प्रहसन् बाणः सुबहुशो मुदा । प्रसन्नवदनो भूत्वा पादयोः पतितोऽब्रवीत् ।

दिष्ट्या बाहुसहस्रस्य न वृथाधारणं मम । दिष्ट्या सहस्राचमहं विजेता पुनराहवे ।
आनन्दजाश्रुपूर्णाभ्यां नेत्राभ्यामरिमर्द्दन । पद्माञ्जलिमतैर्द्देवं पूजयन् पतितो भुवि । ८८७३
॥ महेश्वर उवाच ॥ उत्तिष्ठोत्तिष्ठ बाहुनाम त्वमत्र कुलस्य च । मद्‌भ्रं प्राप्स्यसे वीर युद्धमप्रतिमं महत् ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्ततो वाणस्त्र्यम्बकेण महात्मना । हर्षेणाभ्युत्थितः शीघ्रं पूजयन् वृषभध्वजं ।
शितिकण्ठविसृष्टस्तु वाणः परपुरञ्जय । ययौ स्वमेव भवन यत्र ध्वजगृहं महत् ।
तत्रोपविष्ट प्रहसन् कुम्भाण्डमिदमब्रवीत् । प्रियमावेदयिष्यामि भवतो यन्मनोनुगं ।
इत्येवमुक्त प्रहसन् वाणमप्रतिमं रणे । प्रोवाच राजन् किन्त्वेतत वक्तुकामोऽसि मे प्रियं । ८८७५
विस्मयोत्फुल्लनयनः प्रहर्षो दैत्यसत्तम । त्वत्तस्तच्छ्रोतुमिच्छामि वरं किं लब्धवानसि ।
देवदेवप्रसादात्तु स्कन्दस्य च महात्मन । ईप्सितं किं त्वया प्राप्तं तन्मे ब्रूहि महासुर ।
शितिकण्ठप्रसादेन स्कन्दगोपायनेन च । कच्चित् त्रैलोक्यराज्यं ते व्यादिष्टं शूलपाणिना ।
कच्चिदिन्द्रस्तव भयात् पातालमुपयास्यति । कच्चिद्विष्णुभयत्रासं विमोच्यन्ति दितेः सुताः ।
यस्य चक्रभयत्रस्ता वसन्ति सलिलाशये । कच्चिच्छार्ङ्गगदापाणे खितस्य परमाहवे । ८८८०
न विष्णोर्भयसंत्रस्ता प्रयास्यन्ति दितेः सुता । पातालवासमुत्सृज्य कच्चित्तव बलाश्रयात् ।
विबुधावासनिरता भविष्यन्ति महासुरा । बलिर्व्विष्णुबलाक्रान्तो बद्धस्तव पिता नृप ।
सलिलौघादितिं सत्य कच्चिद्राज्यमवाप्स्यति । दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं ।
कच्चिद्वैरोचनिं तात द्रक्ष्याम पितरं तव । कच्चित्त्रिभि क्रमै पूर्व्वं हृताल्लोकानिमान् प्रभो ।
पुन प्रत्यानयिष्यामो जित्वा सर्व्वान् दिवौकस । स्निग्धगम्भीरनिर्घोषं शङ्खस्वनपुरोजवं । ८८८५
कच्चिन्नारायणं देवं जेष्याम समितिञ्जयं । कच्चिद्वृषध्वजस्तात प्रसादसुमुखस्तव ।
यथा ते हृदयोत्कम्प साश्रुबिन्दु प्रवर्त्तते । कच्चिदीश्वरतोषेण कार्त्तिकेयमतेन च ।
प्राप्तवानसि सर्व्वेषामस्माकं पार्थिवं पदं । इति कुम्भाण्डवचनैश्चोदित सोऽसुरोत्तमः ।
वाणो वाणीमसंसक्तां प्रोवाच वदतां वर ।
॥ वाण उवाच ॥ चिरात् प्रभृति कुम्भाण्ड न युद्धं प्राप्यते यदा । ततो मया मुदा दृष्ट शितिकण्ठः प्रतापवान् । ८८९०
युद्धाभिलाष सुमहान् देव संजायते मम । अपि प्राप्स्याम्यहं युद्धं मनस्तुष्टिविवर्द्धनं ।
ततोऽहं देवदेवेन हरेणामित्रघातिना । प्रहस्य सुचिरं कालमुक्तोऽस्मि वचनं प्रिय ।
प्राप्स्यसे सुमहद्युद्धं वाण त्वं नचिरादिव । मयूरध्वजभङ्गस्ते भविष्यति यदाऽसुर ।
तदा त्वं प्राप्स्यसे युद्धं सुमहद्दितिनन्दन । ततोऽहं परमप्रीतो भगवन्तं वृषध्वजं ।
प्रणम्य शिरसा देवं तवान्तिकमुपागत । इत्येवमुक्त कुम्भाण्ड प्रोवाच नृपतिस्तदा । ८८९५
अहो न शोभनं राजन् यदेवं भाषसे वच । एकं कथयतोरेव तयोरन्योन्यमुद्धिन ।
ध्वज पपात वेगेन शक्राशनिसमाहत । तं तथा पतितं दृष्ट्वा सोऽसुरो ध्वजमुत्तमं ।

प्रहर्षमतुलं लेभे मेने चाहवमागतं । ततश्चकम्पे वसुधा शक्राशनिसमाहता ।
ननादान्तर्हितो भूमौ वृषदंशो जगर्ज्ज च । देवानामपि यो देवः सोऽप्यवर्षत वासवः ।
शोणितं शोणितपुरे सर्व्वतः पुरमन्तिकात् । सूर्य्यं भित्त्वा महोल्का च पपात धरणीतले । ९८७०
स्वपक्षे चोदितः सूर्य्यो भरणी समपीडयत् । चैत्यवृक्षेषु सहसा धाराः शतसहस्रशः ।
शोणितस्यास्रवन् घोरा निपेतुस्तारका भृशं । राहुरग्रसदादित्यमपर्व्वणि विशाम्पते ।
लोकक्षयकरे काले निर्घातश्चापतन्महान् । दक्षिणां दिशमास्थाय धूमकेतुस्ततोऽभवत् ।
अनिशञ्चाप्यविच्छिन्ना ववुर्व्वाताः सुदारुणाः । श्वेतलोहितपर्य्यन्तः कृष्णग्रीवस्तडिद्द्युतिः ।
त्रिवर्णपरिघो भानुः सन्ध्यारागमयावृणोत् । वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः । ९८७५
बाणस्य जन्मनक्षत्रं भर्त्सयन्निव सर्व्वशः । अनेकशाखश्चैत्यश्च निपपात महीतले ।
अर्च्चितः सर्व्वकन्याभिर्द्दानवानां महात्मनां । एवं विविधरूपाणि निमित्तानि निशामयन् ।
बाणो मदबलोन्मत्तो निश्चयं नाध्यगच्छत । विचेतास्त्वभवत् प्राज्ञः कुम्भाण्डस्तत्त्वदर्शिवान् ।
बाणस्य सचिवस्तत्र चिन्तयन् बहुकिल्बिषं । उत्पाताश्चात्र दृश्यन्ते कथयन्तो न शोभनं ।
तव राज्यविनाशाय भविष्यन्ति न संशयः । वयञ्चान्ये च सचिवा भृत्या ये च तवानुगाः । ९८८०
क्षयं यास्यन्ति न चिरात् सर्व्वे पार्थिवदुर्णयात् । यथा शक्रध्वजनरोः स्वदर्पात् पतनं भवेत् ।
रणमाकाङ्क्षते मोहात् तथा बाणस्य नर्द्दतः । देवदेवप्रसादेन त्रैलोक्यविजयं गतं ।
उल्केकाहृश्यत नाशो युद्धाकाङ्क्षी ननर्द्द ह । बाणः प्रीतमनाश्चैव पपौ पानमनुत्तमं ।
दैत्यदानवनारीभिः सार्द्धमुत्तमविक्रम । कुम्भाण्डश्चिन्तयाविष्टो राजवेश्माभ्ययात्तदा ।
अचिन्तयच्च तत्त्वार्थं तैरुत्पातनिदर्शनैः । राजा प्रमादी दुर्ब्बुद्धिर्ज्जितकाशी मदोत्कटः । ९८८५
युद्धमेवाभिलषते न दोषान्मन्यते मदात् । महोत्पातभयञ्चैव न तन्मिथ्या भविष्यति ।
अपीदानीं भवेन्मिथ्या सर्व्वमुत्पातदर्शनं । इह त्वास्ते त्रिनयनः कार्त्तिकेयश्च वीर्य्यवान् ।
तेनोत्पन्नोऽपि दोषो नः कच्चिद्गच्छेत् पराभवं । उत्पन्नदोषप्रभवः क्षयोऽयं भविता महान् ।
दोषाणां न भवेन्नाश इति मे धीयते मतिः । नियतं दोष एवायं भविष्यति न संशयः ।
दौरात्म्यान्नृपतेरस्य दोषभूता हि दानवाः । देवदानवसंघानां यः कर्त्ता भुवनप्रभुः । ९८९०
स भवः कार्त्तिकेयश्च कृतवासो हि नः पुरे । प्राणैः प्रियतरो नित्यं भवस्य तु गुहः सदा ।
तद्विशिष्टश्च बाणोऽपि भवस्य सततं प्रियः । दर्पोत्सेकात्तु नाशाय वरं याचितवान् भवं ।
युद्धहेतोः स लब्धस्तु सर्व्वथा न भविष्यति । यदि विष्णुपुरोगाणामिन्द्रादीनां दिवौकसां ।
भविता ह्यभयप्राप्तिर्भवहस्तात् कृतं भवेत् । एतयोश्च हि को युद्धं कुमारभवयोरिह ।
शक्तो दातुं समागम्य बाणसाहाय्यकारिणोः । न च देववचो मिथ्या भविष्यति कथञ्चन । ९८९५
भविष्यति महद्युद्धं सर्व्वदैत्यविनाशनं । एवं स चिन्तयाविष्टः कुम्भाण्डस्तत्त्वदर्शिवान् ।

खलिप्रणिहितां बुद्धिं चकार सुमहासुरः । ये हि देवैर्विरुध्यन्ते पुण्यकर्मभिराहवे ।
यथा बलिर्नियमितस्तया ते यान्ति सङ्क्षयं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे कुम्भाण्डवाक्ये पञ्चसप्तत्यधिकशततोऽध्यायः ॥ १७५ ॥
॥ वैशम्पायन उवाच ॥ क्रीडाविहारोपगतः कदाचिदभवद्भवः । देव्या सह नदीतीरे रम्ये श्रीमति स प्रभुः ।
शतानि तत्राप्सरसां क्रीडन्ति स्म समन्ततः । सर्व्वर्त्तुकवने रम्ये गन्धर्व्वपतयस्तदा । ९९००
कुसुमैः पारिजातस्य पुष्पैः सन्तानकस्य च । गन्धोद्दाममिवाकाशं नदीतीरस्य सर्व्वशः ।
वेणुवीणामृदङ्गैश्च पणवैश्च सहस्रशः । वाद्यमानैः स शुश्राव गीतमप्सरसान्तया ।
सूतमागधकल्पैश्चाप्यस्तुवन्नप्सरोगणाः । देवदेवं सुवपुषं स्रग्विणं रक्तवाससं ।
हरं सहोमं वरदं रमयन्ति मनोरमाः । ततस्तु देव्या रूपेण चित्रलेखा वराऽप्सराः ।
भवं प्रसादयामास देवी च माहसत्तदा । प्रसादयन्तीमीशानं सहसन्यप्सरागणा. । ९९०५
भवस्य पार्षदा दिव्या नानारूपा महौजसः । देव्या अनुज्ञया सर्व्वे क्रीडन्ते तत्र तत्र वै ।
अथ ते पार्षदास्तत्र रहस्येषु विपश्चितः । महादेवस्य रूपेण तच्चिह्नं रूपमास्थिताः ।
ततो देव्यास्तु रूपेण लीलया वदनेन च । देवी प्रहासं मुमुचे ताश्चैवाप्सरसस्तदा ।
ततः किलकिलाशब्द. प्रादुर्भूतः समन्तत. । प्रहर्षमतुलञ्चापि लेभे प्रीतमना भवः ।
वाणस्य दुहिता कन्या तत्रोषा नाम भाविनी । देवं प्रक्रीडितं दृष्ट्वा देव्या सह नदीगतं । ९९१०
दीप्यमाने महात्मानं द्वादशादित्यवर्चसं । नानारूपं वपुः कृत्वा देव्याः प्रियचिकीर्षया ।
ऊषा मनोरथञ्चक्रे पार्व्वत्याः सन्निधौ तदा । धन्या हि भर्त्तसहिता रमन्त्येवं समागताः ।
मनसा तव संकल्पमुषया भावितं यथा । विज्ञाय तमभिप्रायमुषायाः पर्व्वतात्मजा ।
प्राह देवी ततो वाक्यमूर्षां हर्षयती शनै. । ऊषे शीघ्रं त्वमप्येवं भर्त्रा सह रमिष्यसि ।
यथा देवो मया सार्द्धं शङ्करः शत्रुतापनः । एवमुक्ते तदा देव्या वाक्ये चिन्ताविलक्षणा । ९९१५
ऊषा भावं तदा चक्रे भर्त्ता रंस्ये कदा सह । तदा हैमवती वाक्यं सम्प्रहस्येदमब्रवीत् ।
ऊषे शृणुष्व वाक्यं मे यदा संयोगमेष्यसि । वैशाखे मासि हर्म्यस्थां द्वादश्यां त्वां दिनक्षये ।
रमयिष्यति य. स्वप्ने स ते भर्त्ता भविष्यति । एवमुक्ता दैत्यसुता कन्यागणसमावृता ।
अपाक्रामत हर्षेण रममाणा यथासुखं । ततः सखीभिर्हसन्ती हर्षोत्फुल्ललोचना ।
तालिकासन्निपातैश्च अन्योन्यं समुदक्ष्वेलिताः । किन्नर्यो यक्षकन्याश्च नागदैतेयकन्यकाः । ९९२०
अप्सरोगणकन्याश्च ऊषायाः सखिताङ्गताः । उक्ता च तत्र ताभिः सा भर्त्ता तव वरानने ।
भविष्यत्यचिरेणैव देव्या वचनकल्पितः । न हि देव्या वचो मिथ्या भविष्यति कदाचन ।
रूपाभिजनसम्पन्न. पतिस्ते कल्पितस्तया । ऊषा सखीनां तद्वाक्यं प्रतिपूज्य यथाविधि ।
दत्तं मनोरथं देव्यां भावयन्ती व्यतिष्ठत । ततः क्रीड.विहारान्तमनुभूय सहोमया ।
गतेऽहनि ततः सर्व्वास्ता नार्य्यः परमाहृताः । ययुः स्वानालयान् सर्व्वा देवी चादर्शनं गता । ९९२५

काश्चिदश्वैस्तथा यानैर्गजैरन्यास्तथा रथै. । पुरं प्रविविशुर्हृष्टाः काश्चिदाकाशमास्थिता. ।
ततो हर्म्ये शयानां तु वैशाखे मासि भाविनीं । द्वादश्यां शुक्लपक्षस्य सखीगणवृतां तदा ।
यथोक्त पुरुषः स्वप्ने रमयामास तां तदा । विचेष्टमानां रुदतीं देव्या वचनचोदित. ।
सा स्वप्ने धर्षिता तेन स्त्रीभावश्चापि लम्भिता । शोणिताक्ता प्ररुदती सहसैवोत्थिता निशि ।
तां तथा रुदतीं दृष्ट्वा सखीभयसमन्वितां । चित्रलेखा वच स्निग्धमुवाच परमाद्भुतं ।
ऊषे मा भैः किमेवं त्वं रुदती परितप्यसे । बलेः सुतसुता हि त्वं प्रख्याता किं भयान्विता ।
न भयं विद्यते लोके तव सुभ्रु विशेषत । अभयन्तव वामोरु पिता देवान्तको रणे ।
उत्तिष्ठोत्तिष्ठ भद्रं ते विषादं मा कृथा. शुभे । नैवंविधेषु वासेषु भयमस्ति वरानने ।
असकृद्देवसहित. शचीभर्त्ता सुरेश्वरः । अप्राप्त एव नगरं पित्रा ते स्वर्दितो रणे ।
अयं देवसमूहेषु भयदस्ते पिता सखि । महासुरवर श्रीमान्बलेः पुत्रो महाबल ।
एवं साऽतिहिता सख्या बाणपुत्री यशस्विनी । स्वप्नरूपं यथा दृष्टं तथासर्वं न्यवेदयत् ।
॥ ऊषोवाच ॥ एवं संधर्षिता साध्वी कथं जीवितुमुत्सहे । पितरं किन्नु वक्ष्यामि देवशत्रुमरिन्दमं ।
एवं संदूषणकरी वंशस्यास्य महौजस । श्रेयो हि मरणं मह्यं न मे श्रेयोऽद्य जीवितं ।
दूषिता वा यथा कश्चित् पुरुषोऽधिगतो हि मे । निशायां जाग्रती वाहं नीता केन दशामिमां ।
कथमेवं कृता नाम कन्या जीवितुमुत्सहे । कुलोपक्रोशनकरी कुलाङ्गारी निराश्रया ।
जीवितं स्पृहयेन्नारी साध्वीनामग्रत स्थिता । इत्येवं बाष्पपूर्णाक्षी सखीगणवृता तदा ।
विललाप चिरं कालसूषा कमललोचना । अनाथवत्तां रुदतीं सख्य सर्व्वा विचेतस ।
ऊचुरश्रुपरीताक्ष्य ऊषां सर्व्वा समागता. । दुष्टेन मनसा देवि शुभं वा यदि वाऽशुभं ।
क्रियते न च ते सुभ्रु किञ्चिद्दुष्टं मन. शुभं । प्रसभं देवि संयोगाद्यदि भुक्ताऽसि भाविनि ।
स्वप्नयोगेन कल्याणि व्रतलोपो न विद्यते । व्यभिचारेण ते देवि नास्ति कश्चिद्व्यतिक्रम ।
न च स्वप्नकृतो दोषो मर्त्यलोकेऽस्ति सुन्दरि । एवं विप्रर्षभा देवि धर्म्मज्ञा कथयन्ति वै ।
मनसा चैव वाचा च कर्म्मणा च विशेषत । दुष्टा या त्रिभिरेतैस्तु पापा सा प्रोच्यते बुधै ।
न च ते दृश्यते भीरु मन प्रचलितं सदा । कथं त्वं दोषदुष्टा वै नियता ब्रह्मचारिणी ।
यदि सुप्ता सती साध्वी शुद्धभावा मनस्विनी । इमामवस्थां नीता त्वं नैव धर्म्मो विलुप्यते ।
यस्या दुष्टं मन पूर्व्वं कर्म्मणा चोपपादितं । तामाहुरसतीं नाम सती त्वमसि भाविनि ।
कुलजा रूपसम्पन्ना सर्व्वै समुदिता गुणै । इमामवस्थां नीताऽसि कालो हि दुरतिक्रम ।
इत्येवमुक्ता रुदतीं बाष्पेणाकुलितेक्षणां । कुम्भाण्डदुहिता वाक्यं परमन्त्विदमब्रवीत् ।
त्यज शोकं विशालाक्षि अपापा त्वं वरानने । स्मृतं मे यदिदं वाक्यं याथातथ्येन तच्छृणु ।
ऊषे यदुक्ता देव्याऽसि भर्त्तारं ध्यायती तदा । समीपे देवदेवस्य स्मर भाविनि तद्वच ।
द्वादश्यां शुक्लपक्षस्य वैशाखे मासि यो निशि । हर्म्ये शयानां रुदतीं स्त्रीभावमुपनेष्यति ।

भविता स हि ते भर्त्ता शूरः शत्रुनिवर्हणः। इत्युवाच वचो ह्यष्टा देवी तव मनोनुगं।
न हि तद्वचनं मिथ्या पार्व्वत्या यदुदाहृतं। तत्त्वं किमिदमत्यर्थं रोदिषीन्दुनिभानने।
एवमुक्ता तु वचनं सुत्वा देवीवचस्तु तत्। अभवन्नष्टशोका सा वाणपुत्री शुभेक्षणा।
॥ ऊषोवाच ॥ स्मरामि भाविनि वचो देव्याक्रीडगते भवे। यथोक्तं सर्व्वमखिलं मासे हर्म्यतले मया।
भर्त्ता तु मम यश्चैव लोकनाथस्य भार्य्यया। व्यादिष्टः स कथं ज्ञेयस्तत्र कार्य्यं विधीयतां। ६६६०
इत्येवमुक्ते वचने कुम्भाण्डदुहिता पुन। व्याजहार यथान्यायमर्थतत्त्वविशारदा।
न हि तस्य कुलं देवि न कीर्त्तिं नापि पौरुषं। कश्चिज्जानाति तत्त्वेन किमिदं त्वं विहन्यसे।
अदृष्टश्चाश्रुतश्चैव दृष्टः स्वप्ने त्वया शुभे। कथं ज्ञेयो भवेन्नीरु सोऽस्माभीरतितस्करः।
येन त्वमर्षितापाङ्गि मत्तकाशिनि विक्रमात्। रुदती प्रसभं भुक्ता प्रविश्यान्तःपुरं सखि।
न ह्यसौ प्राकृतः कश्चिद्यः प्रविष्टः प्रसह्य नः। नगरं लोकविख्यातमेकः शत्रुनिवर्हणः। ६६६६
आदित्या वसवो रुद्रा अश्विनौ च महौजसौ। न शक्ताः शोणितपुरं प्रवेष्टुं भीमविक्रमाः।
सोऽयमेतैः शतगुणैर्व्विशिष्टश्चारिसूदनः। प्रविष्टः शोणितपुरं वाणमाक्रम्य मूर्द्धनि।
यस्या नैवंविधो भर्त्ता भवेद्युद्धविशारदः। कलस्या जीवितेनार्थो भगिन्यो स्यात्कुभेक्षणे।
धन्यास्म्यनुगृहीतास्मि यस्यास्ते पतिरीदृशः। प्राप्तो देव्याः प्रसादेन कन्दर्पसमविग्रहः।
इदं तु यत् कार्य्यतमं शृणु त्वं यन्मयेरितं। विज्ञेयो यस्य पुत्रोऽसौ यन्नामा यत्कुलस्य सः। ६६७०
इत्येवमुक्ते वचने तदोषा काममोहिता। उवाच कुम्भाण्डसुतां कथं ज्ञास्याम्यहं सखि।
त्वमेव चिन्तय सखि नोत्तरं प्रतिभाति मे। स्वकार्य्ये मुह्यते सर्व्वो यथा जीवं लभाम्यहं।
ऊषाया वचनं श्रुत्वा रामा वाक्यमिदं पुन। उवाच रुदतीचैव कुम्भाण्डतनया सखीं।
कुशला ते विशालाक्षि सर्व्वथा सन्धिविग्रहे। अप्सरा चित्रलेखा वै क्षिप्रं विज्ञाप्यतां सखि।
अस्याः सर्व्वमशेषं वै त्रैलोक्यं विदितं सदा। एवमुक्ता तदेवोषा हर्षेणागतविस्मया। ६६७१
तामप्सरसमानाय्य चित्रलेखां सखीं प्रियां। कृताञ्जलिपुटा दीना ऊषा वचनमब्रवीत्।
चित्रलेखामप्सरसं प्रणयार्त्ता सखीमिदं। परमं शृणु मे वाक्यं यत्त्वां वक्ष्यामि भाविनि।
भर्त्तारं यदि मेऽद्य त्वं नानयिष्यसि मत्प्रियं। कान्तं पद्मपलाशाक्षं मत्तमातङ्गविक्रमं।
त्यक्ष्याम्यहं प्रियान् प्राणांस्तत: कमललोचने। चित्रलेखाऽब्रवीद्वाक्यमूषां हर्षयती शनै।
नैवोऽयं शक्यतेऽस्माभिर्वेत्तुं भाविनि सुव्रते। न कुलेन न वर्णेन नृशीलेन न रूपतः। ६६८०
न देशतश्च विज्ञात: स हि चौरो मया सखि। किन्तु शक्यं यथा कर्त्तुं बुद्धिपूर्व्वं मया सखि।
श्रणुष्व शृणु मे वाक्यं यथा काममवाप्स्यसि। देवदानवयक्षाणां गन्धर्व्वोरगरक्षसां।
ये विशिष्टाः प्रभावेण रूपेणाभिजनेन च। यथाप्रधानतः सर्व्वानालिखिष्याम्यहं सखि।
मनुष्यलोके ये चापि प्रवरा लोकविश्रुताः। सप्तरात्रेण ते भीरु दर्शयिष्यामि तानहं।
ततो विज्ञाय पद्मक्षि भर्त्तारं प्रतिलप्स्यसे। सा चित्रलेखया प्रोक्ता ऊषा हितचिकीर्षया। ६६८५

क्रियतामेवमित्याह चित्रलेखां सखीं प्रियां। ततः कुशलहस्तात्वादयालेख्यं समन्ततः।
इत्युक्ता सप्तरात्रेण कृत्वा लेख्यगतांस्तु तान्। चित्रपट्टगतान्मुख्यानानयामास शोभना।
ततः प्रसार्य्य पट्टं सा चित्रलेखा स्वयं कृतं। उषायै दर्शयामास सखीनाञ्च विशेषतः।
एते देवेषु ये मुख्यास्तथा दानववंशजाः। किन्नरोरगयक्षाणां राक्षसानां समन्ततः।
गन्धर्व्वासुरदैत्यानां ये चान्ये भोगिनः स्मृताः। मनुष्याणाञ्च सर्व्वेषां ये विशिष्टतमा नराः। ९९९८
तदेतान् पश्य सर्व्वांस्तु यथाऽभिलिखितान् मया। यस्ते भर्त्ता यथारूपो मयाऽभिलिखितः सखि,
तं त्वं प्रत्यभिजानीहि स्वप्ने यं दृष्टवत्यसि। ततः क्रमेण सर्व्वांस्तान् दृष्ट्वा सा मत्तकाशिनी।
देवदानवगन्धर्व्वान् विद्याधरगणानथ। अतीत्य च यदून् सर्व्वान्ददर्श यदुनन्दनं।
तत्रानिरुद्धं दृष्ट्वा सा विस्मयात्फुल्ललोचना। उवाच चित्रलेखां तामयं चौरः स ते सखि।
येनाहं दूषिता पूर्व्वं स्वप्ने हर्म्यगता सती। सोऽयं विज्ञातरूपो मे कुतोऽयं रतितस्करः। ९९९९
चित्रलेखे वदस्वैनं तत्त्वतो मम शोभने। गुणशीलाभिजनतो नाम किञ्चास्य भाविनि।
ततः पश्चाद्विधास्यामि कार्य्यस्यास्य विनिश्चयं।
॥ चित्रलेखोवाच ॥ अयं त्रैलोक्यनाथस्य नप्ता कृष्णस्य धीमतः। भर्त्ता तव विशालाक्षि प्रद्युम्निर्भीमविक्रमः।
न ह्यस्य त्रिषु लोकेषु सदृशोऽस्ति पराक्रमे। उत्पाट्य पर्व्वतानेष पर्व्वतैरेव शातयेत्।
धन्याऽस्यनुगृहीताऽसि यस्यास्ते यदुपुङ्गवः। त्वत्पत्या समादिष्टः सदृशः सज्जनः पतिः। १०००
॥ उषोवाच ॥ त्वमेवात्र विशालाक्षि योग्या मम वरानने। अशक्या हि गतिश्चान्या अगत्या मे गतिर्भव।
अन्तरीक्षचरी च त्वं योगिनी कामरूपिणी। उपायशिल्पकुशला विप्रमानय मे प्रियं।
उपायश्चिन्त्यतां भीरु अप्रतर्क्यं प्रिये सुखं। सिद्धार्था सन्निवर्त्तस्व येनोपायेन सुन्दरि।
भवेदापत्सु यन्मित्रं तन्मित्रं शस्यते बुधैः। कामार्त्ता चास्मि सुश्रोणि भव मे प्राणधारिणी।
यद्येनं मे विशालाक्षि भर्त्तारममरोपमं। अद्य नानयसि क्षिप्रं प्राणांस्त्यक्ष्याम्यहं ध्रुवं। १०००१
उषाया वचनं श्रुत्वा चित्रलेखाऽब्रवीदिदं। श्रोतुमर्हसि कल्याणि वचनं मे शुचिस्मिते।
॥ चित्रलेखोवाच ॥ यथा बाणस्य नगरं रक्ष्यते देवि सर्व्वतः। द्वारकाऽपि तथा भीरु दुराधर्षा विशेषतः।
अयस्मयप्रतिच्छन्ना गुप्तद्वारा च सा पुरी। गुप्ता वृष्णिकुमारैश्च तथा द्वारकवासिभिः।
प्रान्ते सलिलसंयुक्ता विहिता विश्वकर्म्मणा। रक्ष्यते पुरुषव्याघ्रैः पद्मनाभस्य शासनात्।
शैलप्राकारपरिखा दुर्गमार्गप्रवेशिनी। सप्तप्राकाररचिता पर्व्वतैर्द्वारमण्डितैः। १००१०
न च शक्यमविज्ञातैः प्रवेष्टुं द्वारकां पुरीं। आत्मानं माञ्च रक्षस्व पितरञ्च विशेषतः।
॥ उषोवाच ॥ तव योगप्रभावेण शक्यं तत्र प्रवेशनं। बहुना किं प्रलापेन प्रतिज्ञा श्रूयतां मम।
अनिरुद्धस्य वदनं पूर्णचन्द्रसमप्रभं। यद्यहं तत्र पश्यामि यास्यामि यमसादनं।
दूतमासाद्य कार्य्याणां सिद्धिर्भवति भाविनि। तस्मात्त्वमेव मे गच्छ जीवन्तीं मां यदीच्छसि।
यदि त्वं मे विजानासि सख्यं प्रेम्णा च भावितं। विप्रमानय मे कान्तं तवास्मि शरणं गता। १००११

जीवितस्य हि सन्देहं चयं वै स्वजनस्य च। कामार्त्ता हि न पश्यन्ति दूषणं वै कुलस्य च।
प्रयत्नो युज्यते कार्य्येष्विति शास्त्रनिदर्शनं। त्वञ्च शक्ता विशालाक्षी द्वारकायाः प्रवेशने।
संस्तुताऽसि मया भीरु कुरु मे प्रियदर्शनं।
॥ चित्रलेखोवाच ॥ सर्व्वतः संस्तुता तेऽहं वाक्यैरमृतकल्पितैः। कारिता च समुद्योगं प्रियैः कान्तैश्च भाषितैः।
एषा गच्छाम्यहं भीरु चिप्रं तां द्वारकापुरीं। भर्त्तारमानयाम्यद्य तव वृष्णिकुलोद्वहं। १००२०
अनिरुद्धं महाबाहुं प्रविश्य द्वारकां पुरीं। सा वचस्तथ्यमशिवं दानवानां भयावहं।
इत्युक्त्वाऽन्तर्हिता चिप्रं चित्रलेखा मनोजवा। सखीभिः सहिता ह्यूषा चिन्तयन्ती स्थिता तु सा।
तृतीये तु मुहूर्त्ते सा नष्टा वाणपुरात्तदा। सखी प्रियं चिकीर्षन्ती पूजयन्ती तपोधनान्।
क्षणेन समनुप्राप्ता द्वारकां कृष्णपालितां। कैलासशिखराकारैः प्रासादैरुपशोभितां।
ददर्श द्वारकाञ्चैव दिवि ताराभिव स्थितां। १००२५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे दूतीसंप्रेषणे षट्सप्तत्यधिकशततोऽध्यायः ॥ १७६ ॥
॥ वैशम्पायन उवाच ॥ अथ द्वारवतीम्प्राप्य स्थिता सा भवनान्तिके। प्रवृत्तिहरणार्थाय चित्रलेखा व्यचिन्तयत्।
अथ चिन्तयती सा तु बुद्धिं बुद्ध्यर्थनिश्चितां। अपश्यन्नारदं तत्र ध्यायन्तमुदके मुनिं।
तं दृष्ट्वा चित्रलेखा तु हर्षेणोत्फुल्ललोचना। उपसृत्याभिवाद्यैनमधोमुखमवस्थिता।
नारदस्त्वाशिषं दत्त्वा चित्रलेखामथाब्रवीत्। किमर्थमिह संप्राप्ता श्रोतुमिच्छामि तत्त्वतः।
देवर्षिमथ तं दिव्यं नारदं लोकपूजितं। कृताञ्जलिपुटा भूत्वा चित्रलेखाऽब्रवीदिदं। १००३०
भगवन् श्रूयतां वाक्यं दौत्येनाहमिहागता। अनिरुद्धं मुने नेतुं यदर्थञ्च शृणुष्व मे।
नगरे शोणितपुरे वाणो नाम महासुरः। तस्य कन्या वरारोहा नाम्नोषेति च विश्रुता।
भगवन् साऽनुरक्ता च प्राद्युम्निं पुरुषोत्तमं। देव्या वरनिसर्गेण तस्या भर्त्ता विनिर्म्मितः।
तञ्च नेतुमिहायाता तत्र सिद्धिं विधत्स्व मे। मया नीतेऽनिरुद्धे तु नगरं शोणिताह्वयं।
प्रवृत्तिः पुण्डरीकाक्षे त्वयाख्येया महामुने। अवश्यं भविता चैव कृष्णेन सह विग्रहः। १००३५
वाणस्य सुमहान् संख्ये दिव्यो हि स महासुरः। न च शक्तोऽनिरुद्धस्तं युद्धे जेतुं महासुरं।
सहस्रबाहुमायान्तं जयेत् कृष्णो महाभुजः। भगवन् सन्निकर्षन्ते यदर्थमहमागता।
कथं हि पुण्डरीकाक्षो ज्ञापितस्तदिदं भवेत्। त्वत्प्रसादाच्च भगवन्न मे कृष्णाद्भयं भवेत्।
स हि तत्त्वार्थवृत्तिस्तु अनिरुद्धः कथं ह्रियेत्। क्रुद्धो हि स महाबाहुस्त्रैलोक्यमपि निर्द्दहेत्।
पौत्त्रशोकाभिसन्तप्तः शापेन स दहेत मां। तत्रोपायञ्च भगवन् चिन्तितुं वै त्वमर्हसि। १००४०
यथा ह्यूषा लभेत् कान्तं मम चैवाभयं भवेत्। इत्येवमुक्तो भगवांश्चित्रलेखां स नारदः।
तामुवाच शुभं वाक्यं माभैस्त्वं समयं शृणु। त्वया नीतेऽनिरुद्धे तु कन्यावेश्म प्रवेशिते।
यदि युद्धं भवेत्तत्र स्मर्त्तव्योऽहं तदा त्वया। एष मे परमः कामो युद्धं द्रष्टुमिहानघे।
यद्दृष्ट्वा च भवेत् प्रीतिः प्रवृत्तिश्च दृढा भवेत्। गृहाणतां तामसी विद्या सर्व्वलोकप्रमोहनी।

कृतकृत्यश्च ते देवि एष विद्यां ददाम्यहं । एवमुक्ते तु वचने नारदेन महर्षिणा । १००४५
तथेति वचनं प्राह चित्रलेखा मनोजवा । अभिवाद्य महात्मानमृषीणां नारदं वरं ।
निरैक्षतानिरुद्धस्य गृहञ्चैवान्तरिक्षगा । ततो द्वारवतीमध्ये कामस्य भवनं शुभं ।
तत्समीपेऽनिरुद्धस्य भवनं सा स्म पश्यति । सौवर्णवेदिकाकुम्भं रुक्मवैदूर्य्यतोरणं ।
माल्यदामावसक्तञ्च पूर्णकुम्भोपशोभितं । वर्हिकण्ठनिभग्रीवं प्राग्वंशैरेकसश्रयैः ।
मणिप्रवालसंस्तीर्णं दिव्यगन्धर्व्वनादितं । ततो द्वारवतीमध्ये प्रसादैरुपशोभितं । १००५०
ददर्श भवनं यत्र प्राद्युम्निरवसत् सुखे । ततः प्रविश्य सहसा भवनन्तस्य तन्महत् ।
तत्रानिरुद्धं साऽपश्यच्चित्रलेखा वराप्सराः । मध्ये परमनारीणां तारापतिमिवोदितं ।
क्रीडाविहारे नारीभिः सेव्यमानमितस्ततः । पिवन्तं मधुमाध्वीकं श्रिया परमया युतं ।
वरासनगतं तत्र यथैवैलविलन्तथा । वाद्यते समतालञ्च गीयते मधुरं तथा ।
न च तस्य मनस्तच्च तमेवार्थमचिन्तयत् । स्त्रियः सर्व्वगुणोपेता नृत्यन्ति तत्र तत्र वै । १००५५
न चास्य मनसस्तुष्टिं चित्रलेखा प्रपश्यति । न चाभिरमते भोगैर्न चापि मधु सेवते ।
व्यक्तमस्य हि स स्वप्नो हृदि संपरिवर्त्तते । इति तत्रैव बुद्धा च निश्चिता गतसाध्वसा ।
सा दृष्ट्वा परमस्त्रीणां मध्ये शक्रध्वजोपमं । चिन्ताविष्टहृदया चित्रलेखा मनस्विनी ।
कथं कार्य्यमिदं कार्य्यं कथं स्वस्ति भवेदिति । साऽन्तर्हिता चिन्तयित्वा चित्रलेखा यशस्विनी ।
तामस्याच्छादयामास विद्यया शुभलोचना । हर्म्ये स्त्रीगणमध्यस्थं दृष्ट्वा चान्तर्हिता तदा । १००६०
ततोऽन्तरिक्षादेवाशु प्रासादोपरि विष्ठिता । प्राद्युम्निं वचनं प्राह श्लक्ष्णं मधुरया गिरा ।
चतुर्द्दत्वा च सा तस्मै कृत्वा चात्मनि दर्शनं । तामाश्चैवाश्रये देवे सा वाक्यमिदमब्रवीत्[1]
अपि ते कुशलं वीर सर्व्वत्र यदुनन्दन । अद्यस्तावत् प्रदोषे वा कच्चिद्गच्छति ते सुखं ।
शृणुष्व त्वं महावाहो विज्ञाप्यं मे रतीसुत । ऊषाया मम सख्यास्तु वाक्यं वक्ष्यामि तत्त्वतः ।
स्वप्ने तु या त्वया दृष्टा स्त्रीभावश्चापि लम्भिता । विभर्त्ति हृदये या त्वां तया संप्रेषिता ह्यहं । १००६५
रुदती जृम्भती चैव निश्वसन्ती मुहुर्मुहुः । त्वद्दर्शनपरा सौम्य कामिनी परितप्यते ।
यदि त्वं धारसे वीर धारयिष्यति जीवितं । अदर्शनेन मरणं तस्या नास्त्यत्र संशयः ।
यदि नारीसहस्रं ते गृहस्थं यदुनन्दन । स्त्रियाः कामयमानायाः कर्त्तव्या हस्तधारणा ।
लब्ध तस्या वरोत्सर्गे देव्या दत्तो मनोरथः । चित्रपट्टं मया दत्तं त्वच्चिह्नं वीक्ष्य जीवति ।
तदुत्सङ्गे समारोप्य जीवति दर्शनेप्सया । सानुक्रोशो यदुश्रेष्ठ भव तस्या मनोरथे । १००७०
ऊषा ते पतते मूर्द्ध्ना वयश्च यदुनन्दन । श्रूयताञ्चोद्वहस्तस्याः कुलं शीलञ्च यादृशं ।
संस्थानं प्रकृतिश्चास्याः पितरञ्च ब्रवीमि ते । वैरोचनिसुतो वीरो वाणो नाम महासुरः ।
स राजा शोणितपुरे तस्य त्वामिच्छते सुता । त्वद्भावगतचित्ता सा त्वामृते न हि जीवति ।
मनोरथकृतो भर्त्ता देव्या दत्तोऽस्त्यसंशयं । त्वत्सङ्गमाशा सुश्रोणी प्राणान्धारयते शुभा ।

चित्रलेखावचः श्रुत्वा सोऽनिरुद्धोऽब्रवीदिदं। दृष्टा स्वप्ने मया सा हि तत्सत्यं शृणु शोभने।
रूपं कान्तिं गतिञ्चैव संयोगं रुदितं तथा। एवं सर्व्वमहोरात्रं मुह्यामि परिचिन्तयन्।
यद्यहं समनुग्राह्यो यदि सख्यं त्वमिच्छसि। नयस्व चित्रलेखे मां द्रष्टुमिच्छाम्यहं प्रियां।
ईप्सितं तस्य विज्ञाय साऽनिरुद्धस्य भाविनी। चित्रलेखा ततस्तुष्टा तथेति च तमब्रवीत्।
हर्म्म्ये स्त्रीगणमध्यस्थे कृत्वा चान्तर्हितं तदा। उत्पपात गृहीत्वा सा प्राद्युम्निं युद्धदुर्म्मदं।
सा तमध्वानमागम्य सिद्धचारणसेवितं। सहसा शोणितपुरं प्रविवेश मनोजवा।
अदर्शनं तमानीय मायया कामरूपिणी। अनिरुद्धसमेता सा यत्रोषा तत्र गच्छती।
ऊषायादर्शयच्चैनं चित्राभरणभूषितं। चित्रायुधधरं वीरं कन्दर्पसमरूपिणं।
तत्रोषा विस्मिता दृष्ट्वा हर्म्म्यस्था सखिसन्निधौ। प्रवेशयामास च तं सा तदा स्वगृहं ततः।
प्रहर्षोत्फुल्लनयना प्रियं दृष्ट्वाऽर्थकोविदा। सा हर्म्म्यस्था तमर्घ्येण यादवं समपूजयत्।
चित्रलेखां परिष्वज्य प्रियाख्यानैर्नियुज्य च। त्वरितं कामिनी प्राह चित्रलेखां भयातुरा।
सखीदं वै कथं गुह्यं कार्य्यं कार्य्यविशारदे। गुह्ये कृते भवेत् स्वस्ति प्रकाशे जीवितक्षयः।
चित्रलेखाऽब्रवीद्वाक्यं शृणु त्वं निश्चयं सखि। कृतं पुरुषकारं हि दैवं नाशयते क्षणात्।
यदि देव्याः प्रसादस्ते अनुकूलो भविष्यति। अप्रमादात् कृतं गुह्यं न कश्चित् ज्ञास्यते नरः।
सख्या तथैवमुक्ता सा पर्य्यवस्थितचेतना। एवमेतदिति प्राह साऽनिरुद्धमिदन्तथ।
दिष्ट्या स्वप्नगतश्चोरो दृश्यते सुभगो जनः। यत्कृते तु वयं खिन्ना दुर्लभप्रियकाम्यया।
कच्चित्तव महाबाहो कुशलं सर्व्वतो गतं। हृदयं हि मृदु स्त्रीणामेवं पृच्छाम्यहं तव।
तस्यास्तद्वचनं श्रुत्वा ऊषाया प्रत्यभाषत। सोऽप्याह यदुशार्दूलः शुभाक्षरतरं वचः।
हर्षविप्लुतनेत्रायाः पाणिनाऽस्य प्रमृज्य च। प्रहस्य सस्मितं प्राह हृदयग्राहकं वचः।
कुशलं मे वरारोहे सर्व्वत्र मितभाषिणि। त्वत्प्रसादान्न सन्देहः प्रियमावेदयामि ते।
अदृष्टपूर्व्वश्च मया देशोऽयं शुभदर्शने। निशि स्वप्ने मया दृष्टं सततं कन्यापुरं महत्।
एवमेव त्वहं भीरु त्वत्प्रसादादिहागतः। न च तद्वद्रूपवत्या वै मिथ्या वाक्यं भविष्यति।
देव्याश्च शोणिताक्षाय सर्व्वथायेश भाविनि। अनुरागोऽस्ति चाद्यैव प्रमोदं शरणङ्गतः।
इत्युक्ता त्वरमाणा सा गुह्ये देशे स्वलङ्कृता। कान्तेन सह संयुक्ता स्थिता वै भीतभीतवत्।
ततश्चोद्वाहधर्म्मेण गान्धर्व्वेण समेत्य च। अन्योन्यं रेमतुस्तौ तु चक्रवाकौ यथा दिवा।
कान्तेन सह संयुक्ता दिव्यस्रगनुलेपना। रममाणाऽनिरुद्धेन अविज्ञाता तु सा तदा।
तस्मिन्नेवं गते काले यदुमाल्यप्रभो हि सः। दिव्यमाल्याम्बरधरो दिव्यस्रगनुलेपनः।
ऊषया सह संयुक्तो विज्ञातो वार्षचिभिः। ततस्तैर्द्वारपुरुषैर्बाणस्यावेदितं द्रुतं।
यथ दृष्टमशेषेण कन्यायामव्यतिक्रमं। ततः किङ्करसैन्यं ततः व्यादिष्टं भीमकर्म्मणा।
सहिपुत्रेण बाणेन वीरेणामित्रघातिना। गच्छध्वं सहिताः सर्व्वे हन्यतामेष दुर्म्मतिः।

येन नः कुलचारित्र्यं दूषितं दूषितात्मना । उषायां धर्षितायां हि कुलं नो धर्षितं महत् । ११००५
असम्प्रदत्तां योऽस्माभिः स्वयंग्राहमधर्षयत् । अहो वीर्य्यमहो धैर्य्यमहो धार्ष्ट्यश्च दुर्म्मतेः ।
यः पुरं भवनञ्चेदं प्रविष्टो नः सुबालिशः । एवमुक्त्वा पुनस्तान् स किङ्करानभ्यचोदयत् ।
ते तस्याज्ञामयो गृह्य सुसन्नद्धा विनिर्ययुः । यत्रानिरुद्धो ह्यभवत् तत्रागच्छन्महाबलाः ।
नानाशस्त्रायुधकरा नानारूपा भयङ्कराः । दानवाः समभिक्रुद्धाः प्राद्युम्निवधकाङ्क्षिणः ।
तस्य सैन्यस्य निनदं श्रुत्वाऽभ्यागच्छतस्ततः । सहसैवोत्थितः शूरः प्राद्युम्निः किमिति ब्रुवन् । ११०१०
अथापश्यत तत् सैन्यं नानाप्रहरणोद्यतं । स्थितं समन्ततस्तत्र परिवार्य्य गृहं महत् ।
रुदती तद्बलं दृष्ट्वा बाष्पेणावृतलोचना । प्राद्युम्निवधभीता सा वाणपुत्री यशस्विनी ।
ततस्तु रुदतीं दृष्ट्वा तामूषां मृगलोचनां । हा हा कान्तेति वेपन्तीमनिरुद्धोऽभ्यभाषत ।
अभयं तेऽस्तु सुश्रोणि मा भैस्त्वं हि मयि स्थिते । सम्प्राप्तो हर्षकालस्ते न तेऽस्ति भयकारणं ।
कृत्स्नोऽयं यदि वाणस्य भृत्यवर्गो यशस्विनि । आगच्छति न मे चिन्ता भीरु पश्याद्य विक्रमं । ११०१५
ततोऽभ्यगच्छत्त्वरितो यत्र तद्दिष्टितं बलं । क्रुद्धः स्वबलमास्थाय सन्दष्टदशनच्छदं ।
ततो युद्धं बलौघेन वाणेयानां निशम्य तु । सा चित्रलेखाऽस्मरत नारदं देवदर्शनं ।
ततो निमिषमात्रेण सम्प्राप्तो मुनिपुङ्गवः । स्नातोऽथ चित्रलेखाया पुरं शोणितमाश्रयं ।
अन्तरीक्षे स्थितश्चात्र सोऽनिरुद्धमथाब्रवीत् । मा भयं स्वस्ति ते वीर प्राप्तोऽस्म्यभिमतस्तव ।
ततस्तु नारदं दृष्ट्वा सोऽभिवाद्य महाबलः । प्रहृष्टः सुमना भूत्वा युद्धार्थमभ्यवर्त्तत । ११०२०
ततस्तेषां स्वनं श्रुत्वा सर्व्वेषामेव गर्ज्जतां । सहसैवोत्थितः शूरस्तोत्रार्द्दित इव द्विपः ।
तमापतन्तं दृष्ट्वैव सन्दष्टौष्ठं महाभुजं । प्रासादद्वावरोहन्त भयात्ते विप्रदुद्रुवुः ।
सोऽन्तःपुरद्वारगतं परिघं गृह्य चातुलं । वधाय तेषां स्थितवान् नानायुद्धविशारदः ।
ते सर्व्वे वाणवर्षैश्च गदाभिर्मुषलैस्तथा । असिभिः पट्टिशैः शूलैर्निजघ्नू रणगोचराः ।
स हन्यमानो नाराचैः परिघैश्च समन्ततः । दानवैः समभिक्रुद्धैः प्राद्युम्निः शस्त्रकोविदैः । ११०२५
नाक्षुभ्यत् सर्व्वभूतात्मा नदन्मेघ इवोष्णगे । आविध्य परिघं घोरं तेषां मध्ये व्यवस्थितः ।
सूर्य्यो दिवि चरन्मध्ये मेघानामिव सर्व्वतः । दण्डकाष्ठाजिनधरो नारदो हृष्टमानसः ।
साधु साध्विति वै तत्र सोऽनिरुद्धमभाषत । ते हन्यमाना रौद्रेण परिघेणामितौजसा ।
प्रद्रवन्त भयात् सर्व्वे मेघा वातेरिता इव । विद्राव्य दानवान् वीरः परिघेणोग्रविक्रमः ।
अनिरुद्धो रणे हृष्टः सिंहनादं मुमोच ह । घर्म्मान्ते तोयदो व्योम्नि नदन्निव महास्वनं । ११०३०
तिष्ठध्वमिति चुक्रोश दानवान् युद्धदुर्म्मदान् । प्राद्युम्निर्न्नेहनश्चापि सर्व्वान् शत्रुनिबर्हणः ।
तेन ते समरे सर्व्वे हन्यमाना महात्मना । यतो वाणस्ततो भीता ययुर्युद्धपराङ्मुखाः ।
ततो वाणसमीपस्था श्वसन्तो रुधिरोक्षिताः । न शर्म्म लेभिरे दैत्या भयविक्लवलोचनाः ।
मा भैष्ट मा भैष्ट इति राज्ञा ते साभिभाषिताः । त्यक्त्वासमुत्सृज्य चैकस्था युध्यध्वं दानवर्षभाः ।

तानुवाच पुनर्व्वाणो भयविस्तलोचनान्। किमिदं लोकविख्यातं यत्र उत्सृज्य दूरतः। ११०३५
भवन्तो यान्ति वैक्लव्यं क्लीवा इव विचेतसः। कोऽयं यस्य भयत्रस्ता भवन्तो यान्त्यनेकशः।
कुलापदेशिनः सर्व्वे नानायुद्धविशारदाः। भवद्भिर्न्न हि मे कार्य्यं युद्धे साहाय्यमद्य वै।
अब्रवीद्धर्मनेत्येवं मत्समीपाच्च नश्यत। अथ तान् वाग्भिरुग्राभिस्तासयन्बहुधा बली।
व्यादिदेश रणे शूरानन्यानयुतशः पुनः। प्रमाथगणभूयिष्ठं व्यादिष्टं तस्य निम्नहे।
अनीकं सुमहद्रौद्रं नानाप्रहरणायुधं। अयान्तगैरिव बहुधा सविद्युद्भिरिवाम्बुदैः। ११०४०
बाणानीकैः समभवद्व्याप्तं संदीप्तलोचनैः। केचित् क्षितिस्थाः प्राक्रोशन् गजा इव समन्ततः।
अन्येऽन्तरीक्षेऽप्यनदन् घर्म्मान्त इव तोयदाः। ततस्तत् सुमहत् सैन्यं समेतमभवत् पुनः।
तिष्ठ तिष्ठेति च तदा वाचोऽश्रूयन्त सर्व्वशः। अनिरुद्धो रणे वीरः स च तानभ्यवर्त्तत।
तदाश्चर्य्यं समभवद्धरिकेशि समागतः। अयुध्यत महावीर्य्यैर्द्दानवैः सह संयुगे।
तेषामेव च जग्राह परिघांस्तोमरानपि। तैरेव च तदा युद्धे तान् जघान महाबलः। ११०४५
पुनः परिघमुत्सृष्टं प्रगृह्य रणमूर्द्धनि। स दैत्यसंघान् समरे निजघान महाबलान्।
निस्त्रिंशं चर्म्म चोत्सृष्टं प्रगृह्य रणमूर्द्धनि। स तेन विचरन्मार्गानेकः शत्रुनिवर्हणः।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतं। इति प्रकारान् द्वात्रिंशद्विचरन्नभ्यदृश्यत।
एकं सहस्रशस्तत्र ददृशुः शूरणमूर्द्धनि। क्रीडन्तं बहुधा युद्धे व्यादितास्यमिवान्तकं।
ततस्तेनाभिसन्तप्ता रुधिरौघपरिप्लुताः। पुनर्भग्नाः प्राद्रवन्त यत्र बाणो व्यवस्थितः। ११०५०
गजवाजिरथौघैस्ते उह्यमानाः समन्ततः। छत्वा चार्त्तस्वरं घोरं दिशो जग्मुर्महौजसः।
एवं भयमभूत्तेषां दानवानां महारणे। एकैकस्योपरि तदा तेऽन्योन्यं भयपीडिताः।
वमन्तः शोणितं जग्मुर्व्विषादविमुखा रणे। न बभूव पुरा दैवैर्द्दुद्धतां तादृशं भयं।
यादृशं युध्यमानानामनिरुद्धेन संयुगे। केचिदमन्तो रुधिरं न्यपतन् वसुधातले।
दानवा गिरिशृङ्गाभा गदाशूलासिपाणयः। ते बाणमुत्सृज्य रणे जग्मुर्भयसमाकुलाः। ११०५५
विशालमाकाशतलं दानवा निर्ज्जितारणे। निःशेषभग्नां महतीं दृष्ट्वा तां वाहिनीन्तदा।
बाणः क्रोधात् प्रजज्वाल समिद्धोऽग्निरिवाध्वरे। अन्तरीक्षचरो भूत्वा साधुवादी समन्ततः।
नारदोऽनृत्यत प्रीत्या ह्यनिरुद्धस्य संयुगे। एतस्मिन्नन्तरे चैव बाणः परमकोपनः।
कुम्भाण्डसंस्तथोनं तु रथमास्थाय वीर्य्यवान्। यत्रौ यत्रानिरुद्धो वै उद्यतासोरणे स्थितः।
पट्टिशासिगदाशूलानुद्यम्य सशरन्धनुः। भ्रमौ बाहुसहस्रेण शक्रो ध्वजमतेरिव। ११०६०
बहुगोधाङ्गुलित्रैश्च बाहुभिः स महाभुजः। नानाप्रहरणोपेतैः शुशुभे दानवोत्तमः।
सिंहनादं नदन् क्रुद्धो विस्फारितमहाधनुः। अथ भोस्तिष्ठ तिष्ठेति क्रोधसंरक्तलोचनः।
बाणस्ताभ्यस्य संयुत्य प्राद्रविरपराजितः। बाणस्य वदतः सैन्ये तदैवं ततोऽद्रवत्।
किङ्किणीजालनिर्घोषं रत्नध्वजपताकिनं। ध्वजदण्डावसक्ताङ्गं दृश्यमानं महारथं।

तस्य वाजिसहस्रन्तु रथे युक्तं महात्मनः । पुरा देवासुरे युद्धे हिरण्यकशिपोरिव । ११०६५
तमापतन्तं ददृशे दानवं यदुनन्दनः । संप्रहृष्टस्ततो युद्धे तेजसा चाप्यपूर्य्यत ।
असिचर्म्मधरो वीरः स्वस्थः संग्रामलालसः । नरसिंहो यथा पूर्व्वमादिदैत्यवधोद्यतः ।
आपतन्तं ददर्शाथ खड्गचर्म्मधरं तदा । खड्गचर्म्मधरं तन्तु दृष्ट्वा बाणः पदातिनं ।
प्रहर्षमतुलं लेभे प्राद्युम्निवधकाङ्क्षया । तनुत्रेण विहीनस्य खड्गपाणेश्च मानुषः ।
अजेयमिति तं मत्वा युद्धायाभिमुखे स्थितः । अनिरुद्धं रणे बाणो जितकाशी महाबलः । ११०७०
वाचं प्रोवाच संक्रुद्धो हन्यतां हन्यतामिति । वाचश्च सुवतस्तस्य श्रुत्वा प्राद्युम्निराहवे ।
बाणस्य वदनं क्रोधाद्‌धमानोऽभ्युदैक्षत । ऊषा भयपरित्रस्ता रुदती तत्रभाविनी ।
अनिरुद्धः प्रहस्याथ समाश्वास्य च तां स्थितः । अथ बाणः शरौघाणि क्षुद्रकाणां समन्ततः ।
चिक्षेप समरे क्रुद्धो ह्यनिरुद्धवधेप्सया । अनिरुद्धस्तु चिच्छेद काङ्क्षंस्तस्य पराजयं ।
ववर्ष शरवर्षाणि क्षुद्रकाणां समन्ततः । बाणोऽनिरुद्धशिरसि काङ्क्षंस्तस्य रणे वधं । ११०७५
तानि बाणसहस्राणि चर्म्मणा व्यवधूय सः । बभौ प्रमुखतस्तस्य स्थितः सूर्य्य इवोदये ।
सोऽभिभूय रणे बाणमास्थितो यदुनन्दनः । सिंहः प्रमुखतो दृष्ट्वा गजमेकं यथा वने ।
ततो बाणसहस्रौघैर्म्मर्म्मभेदिभिराशुगैः । विव्याध निशितैस्तीक्ष्णैः प्राद्युम्निमपराजितं ।
समाहतस्ततो बाणैः खड्गचर्म्मधरोऽपतत् । तमापतन्तं निशितैरभ्यघ्नन् सायकैस्तदा ।
सोऽतिविद्धो महाबाहुर्व्वाणैः सन्नतपर्व्वभिः । क्रोधेनाति प्रजज्वाल चिकीर्षुः कर्म्म दुष्करं । ११०८०
रुधिरौघप्लुतैर्गात्रैर्व्वाणवेधैः समाहतः । अभिभूतः सुसंक्रुद्धो ययौ बाणरथम्प्रति ।
असिभिर्म्मुषलैः शूलैः पट्टिशैस्तोमरैस्तथा । सोऽतिविद्धः शरौघैस्तु प्राद्युम्निर्नाभ्यकम्पत ।
आप्लुत्य सहसा क्रुद्धो रथेषां तस्य सोऽच्छिनत् । जघानाश्वान् स खड्गेन बाणस्य रणमूर्द्धनि ।
तं पुनः शरवर्षेण तोमरैः पट्टिशैस्तथा । चकारान्तर्हितं बाणो युद्धमार्गविशारदः ।
हतोऽयमिति विज्ञाय प्राणदन्दानवा रणे । ततोऽवप्लुत्य सहसा रथपार्श्वे व्यवस्थितः । ११०८५
शक्तिं बाणस्ततः क्रुद्धो घोररूपां भयावहां । जग्राह ज्वलितां दीप्तां घण्टामालाकुलां रणे ।
ज्वलनादित्यसङ्काशां यमदण्डोपदर्शनां । प्राहिणोत्तामसङ्गेन महोल्कां ज्वलितामिव ।
तामापतन्तीं सम्प्रेक्ष्य जीवितान्तकरीन्तदा । सोऽभिप्लुत्य तदा शक्तिं जग्राह पुरुषोत्तमः ।
निर्ब्बिभेद तदा बाणं तया शक्त्या महाबलः । सा भित्त्वा तस्य देहं तु जगाम वसुधातलं ।
स गाढविद्धो व्यथितो ध्वजयष्टिं समाश्रितः । ततो मूर्च्छाभिभूतं तं कुम्भाण्डो वाक्यमब्रवीत् । ११०९०
उपेक्षसे दानवेन्द्र किमेवं शत्रुमुद्यतं । लब्धसंज्ञो ह्ययं वीरो निर्व्विकारोऽद्य दृश्यते ।
मायामाश्रित्य युध्यस्व नायं वध्योऽन्यथा भवेत् । आत्मानं मास्म रक्षस्व प्रमादात् किमुपेक्षसे ।
बध्यतामयमेवेह न न. सर्व्वान्विनाशयेत् । कुम्भाण्डवचनैरेवं दानवेन्द्रः प्रचोदितः ।
वाचं रूक्षामभिक्रुद्धः प्रोवाच वदताम्वरः । एषोऽहमस्य विदधे मृत्युं प्राणहरं रणे ।

आदास्याम्यहमेतं हि गरुत्मानिव पन्नगान्। इत्येवमुक्त्वा स रथः साश्वः सध्वजसारथिः। १००९५
गन्धर्व्वनगराकारस्तत्रैवान्तरधीयत। विज्ञायान्तर्हितं बाणं प्राद्युम्निरपराजितः।
पौरुषेण समायुक्तः संप्रैक्षत दिशो दश। आस्थाय तामसीं विद्यां ततः क्रुद्धो बलेः सुतः।
मुमोच निशितान् बाणांश्छन्नो मायाधरो बली। प्राद्युम्निर्विशिखैर्व्विद्धः सर्पभूतैः समन्ततः।
वेष्टितो बहुधा तस्य देहः पन्नगराशिभिः। स तु वेष्टितसर्व्वाङ्गो बद्धः प्राद्युम्निराहवे।
निष्प्रयत्नःकृतस्तस्थौ मैनाक इव पर्व्वतः। ज्वालावलीढवदनैः सर्पभोगैर्विचेष्टितः। १०१००
अभीतः पर्व्वताकारः प्राद्युम्निरभवद्रणे। निष्प्रयत्नगतिश्चापि सर्परूपमयैः शरैः।
न विव्यथे स भूतात्मा सर्व्वतः परिवेष्टितः। ततस्तं वाग्भिरुग्राभिः संरब्धः समतर्ज्जयत्।
बाणो ध्वजं समाश्रित्य प्रोवाचामर्षितो वचः। कुम्भाण्ड वध्यतां शीघ्रमयं वै कुलपांसनः।
चारित्रं येन नो लोके दूषितं दूषितात्मना। इत्येवमुक्ते वचने कुम्भाण्डो वाक्यमब्रवीत्।
राजन् वक्ष्याम्यहं किञ्चित् तन्मे शृणु यदीच्छसि। अयं विज्ञायतां कस्य कुतो वाऽयमिहागतः। १०१०५
केन वायमिहानीतः शक्रतुल्यपराक्रमः। मयाऽयं बहुशो युध्यन् दृष्टो राजन्महारणे।
क्रीडन्निव च युद्धेषु दृश्यते देवसूनुवत्। बलवान् सत्त्वसम्पन्नः सर्व्वशस्त्रविशारदः।
नायं वधकृतं दोषमर्हते दैत्यसत्तम। गान्धर्व्वेण विवाहेन कन्येयं तव सङ्गता।
अदेया ह्यप्रतिग्राह्या अतश्चिन्त्य वधं कुरु। विज्ञाय तु वधं वाऽस्य पूजां वाऽस्य करिष्यसि।
वधे ह्यस्य महान्दोषो रक्षणे सुमहान् गुणः। अयं हि पुरुषोत्कर्षः सर्व्वथा मानमर्हति। १०११०
सर्व्वतो वेष्टिततनुर्व्यथत्येष न भोगिभिः। कुलशौटीर्य्यवीर्य्यैश्च सत्त्वेन च समन्वितः।
पश्य राजन् यशोवीर्य्यैरन्वितं पुरुषोत्तमं। न नो गणयते सर्व्वान् वधं प्राप्तोऽप्ययं बली।
यदि मायाप्रभावेण नात्र बद्धो भवेदयं। सर्व्वासुरगणान् सद्यो योधयेन्नात्र संशयः।
सर्व्वयुद्धेषु मार्गज्ञो भवेद्वीर्य्याधिकस्तव। शोणिताघसुतैर्गात्रैर्नागभोगैश्च वेष्टितः।
त्रिशिखां भ्रुकुटीं कृत्वा न चिन्तयति नः स्थितान्। इमामवस्थां नीतोऽपि स्वबाहुबलमाश्रितः। १०११५
न चिन्तयति राजंस्त्वां वीर्य्यवान् कोऽप्ययं युवा। सहस्रबाहोः समरे दिवाकरप्रमुखे स्थितः।
न चिन्तयति ते वीर शौर्य्यवीर्य्यबलान्वितः। रक्षितं यदि ते राजन् श्रेयो वीर्य्यबलान्वितः।
कन्या चेयं न चान्यस्य निर्दोषानेन सङ्गता। यदि चेष्टतमः कश्चिदयं वंशे महात्मनां।
ततः पूजामयं सत्तः प्राप्स्यते वासुरोत्तम। रक्ष्यतामिति चोक्त्वा वै तयाऽस्त्विति च तन्यिवान्।
एवमुक्ते तु वचने कुम्भाण्डेन महात्मना। तथेत्याह तु कुम्भाण्डं बाणः शक्रनिवर्हणः। १०१२०
संरक्षिणस्ततो दत्त्वा ह्यनिरुद्धस्य धीमतः। ययौ स्वमेव भवनं बलेः पुत्रो महाबलः।
संयतं मायया दृष्ट्वा अनिरुद्धं महाबलं। ऋषीणां नारदः श्रेष्ठोऽप्रगद्द्वारवतीं प्रति।
ततो ह्याकाशमार्गेण मुनिर्द्वारवतीं गतः। यद्बं निवेदयामीति प्राद्युम्निं गरुडध्वजे।
गते ऋषीणां प्रवरे सोऽनिरुद्धो व्यचिन्तयत्। नष्टोऽयं दानवः क्रूरो युद्धं प्राप्य न संशयः।

स गत्वा नारदस्तत्र शङ्खचक्रगदाधरं। ज्ञापयिष्यति तत्त्वेन इममर्थं यथैव तत्। १०२२५
नागैर्व्विवेष्टितं दृष्ट्वा ऊषा प्राद्युम्निमातुरा। रुरोद वाष्परक्ताक्षी तामाह रुदती पुनः।
किमिदं रुद्यते भीरु मा भैस्त्वं शुभलोचने। पश्य सुश्रोणि सम्प्राप्तं मत्कृते मधुसूदनं।
यस्य शङ्खध्वनिं श्रुत्वा शार्ङ्गशब्दं बलस्य च। दानवा नाशमेष्यन्ति गर्भाश्चासुरयोषितां।
॥ वैशम्पायन उवाच ॥ एवमुक्ताऽनिरुद्धेन ऊषा विस्रम्भमागता। नृशंसं पितरञ्चैव शोचते सा सुमध्यमा।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे अनिरुद्धबन्धने सप्तसप्तत्यधिकशततोऽध्यायः॥ १७७ ॥
॥ वैशम्पायन उवाच ॥ यदा वाणपुरे वीरः सोऽनिरुद्धः सहोषया। सन्निरुद्धोऽसुरेन्द्रेण वाणेन बलिसूनुना। १०२३०
तदा देवीं स कौमारीं रक्षार्थं शरणं गतः। यद्गीतमनिरुद्धेन देव्याः स्तोत्रमिदं शृणु।
अनन्तमक्षयं दिव्यमादिदेवं सनातनं। नारायणं नमस्कृत्य प्रवरं प्रथमं विभुं।
चण्डीं कात्यायनीं देवीमार्य्यां लोकनमस्कृतां। वरदां कीर्त्तयिष्यामि नामभिर्दैत्यसंस्तुतैः।
ऋषिभिर्देवतैश्चैव वाक्पुष्पैरर्च्चितां शुभां। तां देवीं सर्व्वदेहस्थां सर्व्वलोकनमस्कृतां।
॥ अनिरुद्ध उवाच ॥ महेन्द्रविष्णुभगिनीं नमाम्यात्महिताय वै। मनसा भावशुद्धेन शुचिः स्तोष्ये कृताञ्जलिः। १०२३५
गौतमीं कंसभयदां यशोदानन्दिवर्द्धिनीं। मेधां गोकुलसम्भूतां नन्दगोपस्य नन्दिनीं।
प्राज्ञां दक्षां शिवां पुण्यां दनुपुत्त्रप्रमर्द्दिनीं। तां देवीं सर्व्वदेहस्थां सर्व्वभूतनमस्कृतां।
दर्शनीं पूरणीं मायां शशिवक्त्रां शशिप्रभां। शान्तिं सुवांश्च जननीं मोहनीं तापनीं तथा।
स्तव्यां देवैः सर्षिगणैः सर्व्वभूतनमस्कृतां। कालीं कात्यायनीं देवीं भयदां भयनाशिनीं।
कात्यायनीं कामगमां त्रिनेत्रां ब्रह्मचारिणीं। सौदामिनीं मेघरवां वेतालीं विपुलाननां। १०२४०
यूथस्थाने महाभागां शकुनीं रेवतीं तथा। तिथीनां पञ्चमीं षष्ठीं पौर्णमासीं चतुर्द्दशीं।
सप्तविंशति ऋक्षाणि नद्यः सर्व्वा दिशो दश। नगरोपवनोद्यानचत्वरालनवासिनीं।
ह्रीं श्रीं गार्गीञ्च गान्धर्व्वीं योगिनीं योगदां सदा। कीर्त्तिमाशां दिशं स्पर्शां नमस्यामि सरस्वतीं।
वेदानां मातरञ्चैव सावित्रीं भक्तवत्सलां। तपस्विनीं शान्तिकरीमेकानंशां सनातनीं।
कोटीथां मदिरां चण्डामिलां सत्यवासिनीं। भूतधात्रीं भयकरीं कुष्माण्डीं कुसुमप्रियां। १०२४५
दारुणीं मन्दरावासां विन्ध्यकैलासवासिनीं। वराङ्गनां सिंहरथां बहुरूपां वृषध्वजां।
दुर्लभां दुर्ज्जयां दुर्गां निशुम्भभयदर्शिनीं। सुराप्रियां सुरां देवीं वज्रबाणधनुःशिवां।
किरातीं चीरवसनां घोरसेनानमस्कृतां। आज्यपां सोमपां सौम्यां सर्व्वपर्व्वतवासिनीं।
निशुम्भशुम्भमथनीं गजकुम्भोपमस्तनीं। जननीं सिद्धसेनस्य सिद्धचारणसेवितां।
सतां कुमारप्रभवां पार्व्वतीं पर्व्वतात्मजां। पद्मासेद्देवकन्यानां पत्नी देवगणस्य च। १०२५०
कद्रुपुत्रमहस्तस्य पुत्त्रपौत्त्रस्तवस्त्रियः। माता पिता जगन्मान्या दिवि देवासुरोरगैः।
ऋषिपत्नीगणानाञ्च यक्षगन्धर्व्वसेविता। विद्याधराणां नारीषु साध्वीषु नगेशासु च।
एवमेतासु नारीषु सर्व्वभूताश्रया ह्यसि। मनस्तापाऽसि त्रैलोक्ये किमरोद्धोतसेविनि।

स गत्वा नारदस्तत्र शङ्खचक्रगदाधरं। ज्ञापयिष्यति तत्त्वेन इममर्थं यथैव तत्। १०२११
नागैर्विवेष्टितं दृष्ट्वा ऊषा प्राद्युम्निमातुरा। रुरोद वाष्पक्लाक्षी तामाह रुदती पुनः।
किमिदं रुद्यते भीरु मा भैस्त्व शुभलोचने। पश्य सुश्रोणि सम्प्राप्तं मत्कृते मधुसूदनं।
यस्य शङ्खध्वनिं श्रुत्वा शार्ङ्गशब्दं बलस्य च। दानवा नाशमेष्यन्ति गर्भाश्चासुरयोषितां।
॥ वैशम्पायन उवाच ॥ एवमुक्ताऽनिरुद्धेन ऊषा विस्रम्भमागता। नृशंसं पितरञ्चैव शोचते सा सुमध्यमा।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि बाणयुद्धे अनिरुद्धबन्धने सप्तसप्तत्यधिकशततोऽध्याय ॥ १

॥ वैशम्पायन उवाच ॥ यदा बाणपुरे वीर, सोऽनिरुद्धः महीपथा। सन्निरुद्धोऽसुरेन्द्रेण बाणेन बलिसूनुना।
तदा देवी स कौमारी रक्षार्थं शरणं गतः। यद्गीतमनिरुद्धेन देव्याः स्तोत्रमिदं शृणु।
अनन्तमक्षयं दिव्यमादिदेवं सनातन। नारायणं नमस्कृत्य प्रवरं प्रथमं विभुं।
चण्डीं कात्यायनी देवीमार्य्यां लोकनमस्कृतां। वरदां कीर्त्तयिष्यामि नामभिर्हरिसंस्तुते।
ऋषिभिर्दैवतैश्चैव वाकपुष्पैरर्चितां शुभा। ता देवीं सर्व्वदेहस्था सर्व्वलोकनमस्कृता।
॥ अनिरुद्ध उवाच ॥ महेन्द्रविष्णुभगिनी नमाम्यात्महिताय वै। मनसा भावशुद्धेन शुचि. स्तोष्ये
गौतमी कंसभयदां यशोदानन्दिवर्द्धिनीं। मेधां गोकुलसम्भूतां नन्दगोपस्य नन्दिनी।
प्राज्ञां दक्षां शिवां पुण्यां दनुपुत्त्रप्रमर्द्दिनीं। तां देवीं सर्व्वदेहस्थां सर्व्वभूतनमस्कृता
दर्शनो पूरणो मायां शशिवक्त्रां शशिप्रभां। शान्तिं भ्रुवाञ्च जननीं मोहनीं तोषण
लक्ष्मीं देवी. सर्पिणी सर्व्वभूतनमस्कृता। कालों कात्यायनी देवी भयदां भय
कात्यायनी कामगमां त्रिनेत्रां ब्रह्मचारिणी। सौदामिनीं मेघरवां वेताली जि
यूथस्थाम्बां महाभागां शकुनी रेवतीं तथा। तिथोना पञ्चमी षष्ठी पौर्णमास
सप्तविंशति ऋक्षाणि नद्य सर्व्वा दिशो दश। नगरोपवनोद्यानचय.ट्टालनवा
ह्रीं श्रीं गार्गीञ्च गान्धर्व्वी योगिनीं योगदां सदा। कीर्त्तिनाशां दिश स
वेदानां मातरञ्चैव सावित्रीं भक्तवत्सला। तपस्विनीं शान्तिकरीमेकानंशा स
कौटोर्थ्या मदिरा चण्ड मिला मलयवासिनीं। भूतधात्री भयकरी कुश
दारणीं मन्दरावासां विन्ध्यकैलासवासिनीं। वराङ्गना शिंहरथां बड़ह
दुर्लभा दुर्ज्जया दुर्गां निशुम्भवरदर्शिनी। सुराप्रियां सुरां देवी वज्ञव
किराती चीरवसनां चोरसेनानमस्कृतां। आर्य्यां सोमपां सौम्यां सर्व्वप
निशुम्भशुम्भमथनीं गजकुम्भोपमस्तनीं। जननीं सिद्धसेनस्य सिद्धचार
वरां कुमारभवां पार्व्वतीं पर्व्वतात्मजां। पद्माशेषेत्र कन्यानां पत्नी देवग
कद्रुपुत्त्रमदस्त्रस्य पुत्त्रपौत्त्रवरस्त्रियः। माता पिता जगन्मान्या दिवि देवा
ऋषिपत्नीगणानाञ्च यक्षगन्धर्व्ववनिता। विद्याधराणां नारीषु माध्वीषु न
एवमेतासु नारीषु सर्व्वभूतास्यया ह्यसि। ननद्यताऽपि त्रैलोक्ये किन रोद्राति

शृणुध्वं यादवाः सर्व्वे यथा चिन्तान्वितो ह्यहं । अनिरुद्धे हृते शूरे पृथिव्यां सर्व्वपार्थिवाः ।
अशक्ता इव मंस्यन्ते सर्व्वानस्मान् सबान्धवान् । आहुकश्चैव नो राजा हृतः शाल्वेन वै पुरा ।
प्रत्यानीतः स चास्माभिर्युद्धं कृत्वा सुदारुणं । प्रद्युम्नश्चापि नो बाल्ये शम्बरेण हृतो ह्यभूत् । १०११०
स तं निहत्य समरे प्राप्तो रुक्मिणिनन्दनः । इदन्तु सुमहत् कष्टं प्राप्नुमः क प्रवासितः ।
नैवंविधमहं दोषं स्मरामि मनुजर्षभाः । भस्मना गुण्ठितः पादो येन मे मूर्द्ध्नि पातितः ।
तस्याहं सानुबन्धस्य हरिष्ये जीवितं रणे । इत्येवमुक्ते कृष्णेन सात्यकिर्व्वाक्यमब्रवीत् ।
चराः कृष्ण प्रयुज्यन्तामनिरुद्धस्य मार्गणे । सपर्व्वतवनोद्देशां मार्गन्तु वसुधामिमां ।
आहुकं प्राह कृष्णस्तु स्मितं कृत्वा वचस्तदा । अन्वेषणेऽनिरुद्धस्य चरानादिश मा चिरं । १०११५
आभ्यन्तरांश्च बाह्यांश्च व्यादिश्यन्तां चरा नृप ।
॥ वैशम्पायन उवाच ॥ केशवस्य वचः श्रुत्वा आहुकस्त्वरितोऽभवत् । अन्वेषणेऽनिरुद्धस्य चरान् व्यादिष्टवांस्तदा ।
ततश्चराश्च व्यादिष्टाः पार्थिवेन यशस्विना । तथा रथाश्च व्यादिष्टाः पार्थिवेन महात्मना ।
अभ्यन्तरश्च मार्गध्वं बाह्यतश्च समन्ततः । वेणुमन्तं लतावेष्टं तथा रैवतकं गिरिं ।
ऋक्षवन्तं गिरिञ्चैव मार्गध्वं त्वरिता हयैः । एकैकं तत्र चोद्यानं मार्गितव्यं समन्ततः । १०१२०
यातव्यञ्चापि निःशङ्कमुद्यानेषु समन्ततः । हयानाञ्च सहस्राणि रथानाञ्चाप्यनेकशः ।
आरुह्य त्वरिताः सर्व्वे मार्गध्वं यदुनन्दनं । सेनापतिरनाधृष्टिरिदं वचनमब्रवीत् ।
कृष्णमक्लिष्टकर्म्माणमच्युतं भीतभीतवत् । शृणु कृष्ण वचो मह्यं यदि ते रोचते प्रभो ।
चिरात् प्रभृति मे वक्तुं भवन्तं जायते मतिः । अभिजाता पुत्रौना च निसुन्दनरकौ हतौ ।
भौमः शाम्बश्च निहतो मैन्दो द्विविद एव च । हयग्रीवश्च सुमहान् सानुबन्धस्त्वया हतः । १०१२५
तावुभौ विपुले वृत्ते देवद्वेषौ मुरारुणौ । सर्व्वाण्येतानि कर्म्माणि निःशेषाणि रणे रणे ।
कृतवानसि गोविन्द पार्ष्णिग्राहश्च नास्ति ते । इदं कर्म्म त्वया कृष्ण सानुबन्धं कृतं रणे ।
पारिजातस्य हरणे यत् कृतं कर्म्म दुष्करं । तत्र शक्रस्त्वया कृष्ण ऐरावतशिरोगतः ।
निर्ज्जितो बाहुवीर्य्येण स्वयं युद्धविशारदः । तेन वैरं त्वया सार्द्धं कर्त्तव्यं नात्र संशयः ।
वैरानुबन्धश्च महांस्तेन कार्य्यस्त्वया सह । तवानिरुद्धहरणे कृतं मघवता स्वयं । १०१३०
न ह्यन्यश्च भवच्छक्तिर्भैरनिर्यातनम्मति । इत्येवमुक्ते वचने कृष्णो नाग इव श्वसन् ।
उवाच वचनं धीमानमनाधृष्टिं नयेत्यर्थं । सेनानीर्नात मा मैवं न देवाः क्षुद्रकर्म्मिणः ।
नाकृतघ्ना न च क्रोधा नार्वृजिना न चालिताः । देवानांश्च मे यशो महान्दानवसंक्षये ।
तेषां प्रियार्थश्च हवे हन्मि दुरात्मदानवान् । न परत्वकृतार्थाश्च तद्भक्तवत्परायणः ।
कथं पापं करिष्यन्ति विजानन्तोऽविधिं हि मा । ऋजुत्वाः सत्यरतास्ते नित्यं भक्तानुकम्पिनः । १०१३५
न तेभ्यो विद्यते पापं शालिशतात् प्रभाधवे । कदाचिदिह चैत्यवरादनिरुद्धो हृतो भवेत् ।
देवेषु सवर्वेऽन्येषु नैतत् कर्म विधीयते ।

॥ वैशम्पायन उवाच ॥ आर्य्यास्तवमिदं पुण्यं यः पठेत् सुसमाहितः। सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति। १०१८०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे अनिरुद्धकृतार्य्यास्तवे अष्टसप्तत्यधिकशततोऽध्यायः॥ १७८॥
॥ वैशम्पायन उवाच॥ ततोऽनिरुद्धस्य गृहे रुरुदुः सर्व्वयोषितः। प्रियं नाथमपश्यन्त्यः कुरर्य्य इव संघशः।
अहो धिक् किमिदं नाथ नाथे कृष्णे व्यवस्थिते। अनाथा इव संत्रस्ता रुदिमो भयपीडिताः।
यस्येन्द्रप्रमुखा देवाः सादित्याः समरुद्गणाः। बाहुच्छायां समाश्रित्य वसन्ति दिवि निर्वृताः।
तस्योत्पन्नमिदं लोके भयदस्य महद्भयं। यस्यानिरुद्धः पौत्रः स वीरः केनापि नो हृतः।
अहो नास्ति भयं नूनं तस्य लोके सुदुर्म्मतेः। वासुदेवस्य यः क्रोधं प्रज्वालयति दुःसहं। १०१८५
ध्यादितास्यस्य यो मृत्योर्द्दंशाग्रे परिवर्त्तते। स वासुदेवं समरे मोहन् प्रत्युदियाद्रिपुः।
इदमेवंविधं कृत्वा विप्रियं यदुपुङ्गवे। कथं जीवन् विमुच्येत साक्षादपि शचीपतिः।
हतनाथाः स्म शोच्याः स्म वयमद्य विनाकृताः। विप्रयोगेण नाथस्य कृतान्तवशगाः कृताः।
इत्येवं ता रुदन्त्यश्च वदन्त्यश्च पुनः पुनः। नेत्रजं वारि मुमुचुरशिवं परमाङ्गनाः।
तासां वाष्पाम्बुपूर्णाणि नयनानि चकाशिरे। सलिलेनाप्लुतानीव पङ्कजानि जलागमे। १०१९०
तासामरालपक्ष्माणि राजिमन्ति शुभानि च। रुधिरेणाप्लुतानीव नयनानि चकाशिरे।
तासां हर्म्यतलस्थानां लक्ष्मीमासीन्महास्वनः। कुररीणामिवाकाशे रुदतीनां सहस्रशः।
तं श्रुत्वा निनदं घोरमपूर्व्वं भयमागतं। उत्पेतुः सहसा क्षिप्रा गृहेभ्यः पुरुषर्षभाः।
कस्मादेषोऽनिरुद्धस्य श्रूयते रुदितस्वनः। गृहे कृष्णाभिगुप्तानां कुतो नो भयमागतं।
इत्येवमूचुस्तेऽन्योन्यं स्नेहविक्लवगद्गदाः। आधर्षिता यथा सिंहा गुहाभ्य इव निःसृताः। १०१९५
सन्नाहभेरी कृष्णस्य सभायामाहता तदा। तस्याः शब्देन ते सर्व्वे सभामागम्य धिष्ठिताः।
किमेतदिति तेऽन्योन्यं समपृच्छन्त यादवाः। अन्योन्यस्य हि ते सर्व्वे यथान्यायमवेदयन्।
ततस्ते वाष्पपूर्णाक्षाः क्रोधसंरक्तलोचनाः। निःश्वसन्तो व्यतिष्ठन्त यादवा युद्धदुर्म्मदाः।
तूष्णीम्भूतेषु सर्व्वेषु विपृथुर्व्वाक्यमब्रवीत्। कृष्णं प्रहरतां श्रेष्ठं निःश्वसन्तं मुहुर्मुहुः।
किमेवं चिन्तयाविष्टः पुरुषेन्द्र भवानिह। तव बाहुबलप्राणमाश्रिताः सर्व्वयादवाः। १०२००
भवन्तमाश्रिताः कृष्ण संविभज्याद्य सर्व्वशः। तथैव भगवान् शक्रस्त्वय्यावेश्य जयाजयौ।
सुखं स्वपिति निश्चिन्तः कथं त्वं चिन्तयाऽन्वितः। शोकसागरमक्षोभ्यं सर्व्वे ते ज्ञातयो गताः।
तान्मज्जमानानेकस्त्वं समुद्धर महाभुज। किमेवं चिन्तयाविष्टो न किञ्चिदभिभाषसे।
चिन्तां कर्त्तुं त्वया देव न त्वमर्हसि माधव। इत्येवमुक्तः कृष्णस्तु निःश्वस्य सुचिरं बहु।
प्राह वाक्यं स वाक्यज्ञो बृहस्पतिरिव स्वयं। १०२०५
॥ कृष्ण उवाच ॥ विपृथो चिन्तयाविष्ट एतत् कार्य्यमचिन्तयं। विचिन्तयंस्त्वहन्नास्य कार्य्यस्य न लभे गतिं।
तदाऽहं भवताऽप्युक्तो नोत्तरं विदधे क्वचित्। शृणु सर्व्वमशेषेण वदाम्यर्थवतीं गिरं।

॥ वैशम्पायन उवाच ॥ एवं चिन्तयमानस्य कृष्णस्याद्भुतकर्म्मण. । कृष्णस्य वचनं श्रुत्वा तदाऽक्रूरोऽब्रवीद्वचः ।
मधुरं श्लक्ष्णया वाचा सोऽथ वाक्यविशारदः । यच्छक्रस्य प्रभो कार्य्यं तदस्माकं विनिश्चितं ।
अस्माकस्यापि यत्कार्य्यं तद्धि कार्य्यं शचीपतेः । संरब्धाश्च वयं देवैरस्माभिरपि देवताः । १०२४०
देवार्थे भवांश्चापि मानुषत्वमुपागतः । विष्णुर्मधुनिहा वीरो देवदेवः सनातन. ।
एवमक्रूरवचनैश्चोदितो मधुसूदन' । स्निग्धगम्भीरया वाचा पुनः कृष्णोऽभ्यभाषत ।
नायं देवैर्न गन्धर्व्वैर्न यचैर्नापि राचसैः । प्रद्युम्नपुत्त्रोऽपहृतः पुंश्चल्या तु हृतः स्त्रिया ।
मायाविदग्धाः पुंश्चल्यो दैत्यदानवयोषितः । ताभिर्हृतो न सन्देहो नान्यतो विद्यते भयं ।
॥ वैशम्पायन उवाच ॥ इत्येवमुक्ते वचने कृष्णेन तु महात्मना । अथावगम्य तत्त्वेन यद्वृत्तं यदुमण्डले । १०२४५
उदतिष्ठन्महानादस्तदा कृष्णं प्रशंसयन् । चिन्तयन् स तु सर्व्वेषां सूतमागधवन्दिनां ।
मधुर' शुश्रुवे शब्दो माधवस्य निवेशने । ते चरा. सर्व्वतः सर्व्वे सभाद्वारमुपागताः ।
शनैर्गद्गदया वाचा इदं वचनमब्रुवन् । उद्यानानि सभाः शैला गुहा नद्यः सरांसि च ।
एकैकं शतशो राजन् मार्गितं न च दृश्यते । अथ कृष्णचरा राजन्नुपागम्य तदाऽब्रुवन् ।
सर्व्वे संविदिता देशाः प्राद्युम्निर्न च दृश्यते । यदन्यत् संविधातव्यं विधानं यदुनन्दन । १०२५०
तदाज्ञापय नः चिप्रमनिरुद्धस्य मार्गणे । ततस्ते दीनमनस. सर्व्वे वाष्पाकुलेक्षणाः ।
अन्योन्यमभ्यभाषन्त किमत. कार्य्यमुत्तरं । सन्दष्टौष्ठपुटाः केचित् केचिद्वाष्पाकुलेक्षणाः ।
केचिद्भ्रुकुटिमास्थाय चिन्तयन्त्यर्थसिद्धये । एवं चिन्तयतां तेषां वक्रार्थमभिभाषतां ।
अनिरुद्धः कुतश्चेति सम्भ्रम., सुमहानभूत । अन्योन्यमभिवीक्षन्ते यादवा जातमन्यव. ।
तां निशां विमनस्कास्ते गमयेयुः कथञ्चन । अनिरुद्धो हृतश्चेति पुन. पुनररिन्दम । १०२५५
एवञ्च ब्रुवतां तेषां प्रभाता रजनी तदा । ततस्तूर्य्यनिनादैश्च शङ्खानाञ्च महास्वनै. ।
प्रबोधनं महावाद्यैः कृष्णस्याक्रियतालये । ततः प्रभाते विमले प्रादुर्भूते दिवाकरे ।
प्रविवेश सभामेको नारदः प्रहसन्निव । दृष्ट्वा तु यादवान् सर्व्वान् कृष्णेन सह सङ्गतान् ।
तत. स जयशब्देन माधव प्रत्यपूजयत् । उग्रसेनादयस्ते च तमृषिं प्रत्यपूजयन् ।
अथाभ्युत्थाय विमनाः कृष्णः समितिदुर्ज्जय, । मधुपर्कञ्च गाञ्चैव नारदाय ददौ प्रभु. । १०२६०
सोपविश्यासने शुभ्रे स्पर्द्ध्यास्तरणसंवृते । सुखासीनो यथान्यायमुवाचेदं वचोऽर्थवत् ।
॥ नारद उवाच ॥ किमेवं चिन्तयाविष्टा नि सञ्ज्ञा गतमानसा. । उत्साहहीनाः सर्व्वे वै क्लीवा इव समासते ।
एवमुक्ते तु वचने नारदेन महात्मना । वासुदेवोऽब्रवीद्वाक्यं श्रूयतां भगवन्निदं ।
अनिरुद्धो हृतो ब्रह्मन् केनापि निशि सुव्रत । तस्यार्थे सर्व्व एव स्म चिन्तयाविष्टचेतसः ।
एष ते यदि वृत्तान्त श्रुतो दृष्टोऽपि वा मुने । भगवन् कथ्यतां साधु प्रियमेतन्ममानघ । १०२६५
इत्येवमुक्ते वचने केशवेन महात्मना । प्रहस्य नारद' प्राह श्रूयतां मधुसूदन ।
निर्वृत्तं सुमहद्युद्धं देवासुरसमं महत् । अनिरुद्धस्य चैकस्य वाणस्य च महामृधे ।

यस्याष्टगुणमैश्वर्य्यं ददौ प्रीतः प्रजापतिः। प्रजापतीनां साध्यानां त्रिदशानाञ्च शाश्वतः।
स्तूयमानः स्तवैः शुभ्रैः सूतमागधवन्दिभिः। ऋषिभिश्च महाभागैर्वेदवेदाङ्गपारगैः।
संविधानमथाज्ञाप्य द्वारकायां महाभुजः। गमनाय मतिञ्चक्रे वासुदेवः प्रतापवान्। १०४३०
आस्थितो गरुडं देवस्तस्य चानु हलायुधः। पृष्ठतोऽपि बलस्याथ प्रद्युम्नः शत्रुकर्षणः।
जय बाणं महाबाहो ये चास्यानुचरा रणे। न हि ते प्रमुखे स्थातुं कश्चिच्छक्तो महामृधे।
प्रसादात्ते ध्रुवा लक्ष्मीर्विजयश्च पराक्रमे। विजेष्यसे रणे शत्रून् दैत्येन्द्रं सहसैनिकं।
सिद्धचारणसंघानां महर्षीणाञ्च सर्व्वशः। शृण्वन् वाचोऽन्तरीक्षस्थाः प्रययौ केशवो रणे।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि ऊनाशीत्यधिकशततमोऽध्यायः॥ १७९॥
॥ वैशम्पायन उवाच ॥ ततस्तूर्य्यनिनादैश्च शङ्खानाञ्च महास्वनैः। वन्दिमागधसूतानां स्तवैश्चापि सहस्रशः। १०४३५
शत्रुमुखैर्जयाशीर्भिः स्तूयमानोऽथ मानवैः। बभार रूपं सोमार्कशक्राणां सदृशं तदा।
अतीव शुशुभे रूपं व्योम तस्योत्पतिष्यतः। वैनतेयस्य भद्रं ते बृंहितं हरितेजसा।
अथाष्टबाहुः कृष्णस्तु पर्व्वताकारसन्निभः। विबभौ पुण्डरीकाक्षो विकाङ्क्षन् बाणसंचयं।
असिचक्रगदाबाणा दक्षिणं पार्श्वमास्थिताः। चर्म्म शार्ङ्गं तथा वज्रं शङ्खश्चैवास्य वामतः।
शीर्षाणान्तु सहस्रञ्च विहितं शार्ङ्गधन्वना। सहस्रञ्चापि कायानां वहन् सङ्कर्षणस्तदा। १०४४०
श्वेतप्रहरणोऽध्यक्षः कैलास इव शृङ्गवान्। आस्थितो गरुडं राम उद्यन्निव निशाकरः।
सनत्कुमारस्य वपुः प्रादुरासीन्महात्मनः। प्रद्युम्नस्य महाबाहोः संग्रामे विक्रमिष्यतः।
स पक्षबलविक्षेपैर्व्विधुन्वन् पर्व्वतान् बहून्। जगाम मार्गं बलवान् वातस्य प्रतिषेधयन्।
अथ वायोरतिगतिमास्थाय गरुडस्तदा। सिद्धचारणसंघानां सुखं मार्गमवातरत्।
अथ रामोऽब्रवीद्वाक्यं कृष्णमप्रतिमं रणे। स्वाभिः प्रभाभिर्हीनाः स्म कृष्ण कस्मादपूर्व्ववत्। १०४४५
सर्व्वे कनकवर्णाभाः संवृत्ताः स्म न संशयः। किमिदं ब्रूहि नस्तत्त्वं किं मेरोः पार्श्वगा वयं।
॥ भगवानुवाच ॥ मन्ये बाणस्य नगरमभ्यासस्थमरिन्दम। रक्षार्थं तस्य निर्यातो वह्निरेष स्थितो ज्वलन्।
अग्नेराहवनीयस्य प्रभया स्मः समाहताः। तेन नो वर्णवैरूप्यमिदं जातं हलायुध।
॥ राम उवाच ॥ यदि स्मः सन्निकर्षस्था यदि निष्प्रभतां गताः। तद्विधत्स्व स्वयं बुद्ध्या यदत्रानन्तरं हितं।
॥ कृष्ण उवाच ॥ कुरुष्व वैनतेय त्वं यन्नः कार्य्यमनन्तरं। त्वया विधाने विहिते करिष्याम्यहमुत्तरं। १०४५०
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु गरुडो वासुदेवस्य भाषितं। चक्रे मुखसहस्रं हि कामरूपी महाबलः।
गङ्गामुपागमत्तूर्णं वैनतेयस्ततो बली। आप्लुत्याकाशगङ्गायामापीय सलिलं बहु।
प्रववर्षोपरि गतो वैनतेयः प्रतापवान्। तेनाग्निं शमयामास बुद्धिमान् विनतात्मजः।
अग्निराहवनीयस्तु ततः शान्तिमुपागमत्। तं दृष्ट्वाहवनीयन्तु शान्तमाकाशगङ्गया।
परमं विस्मयं गत्वा सुपर्णो वाक्यमब्रवीत्। अहो वीर्य्यमयाग्नेस्तु योऽदहत्पुरसंचये। १०४५५
तदेव वर्णवैरूप्यं चक्रे कृष्णस्य धीमतः। त्रयस्त्रयाणां लोकानां पर्य्याप्ता इति मे मतिः।

गच्छ मे ह्यगमान् देशान् विजयस्व तवाश्रयात्। गुरुत्वाद्भिरितुल्यस्त्वं लघुत्वात् पवनोपमः।
भूते भव्ये भविष्ये च न ते तुल्योऽस्ति विक्रमे। सत्यसन्ध महाभाग वैनतेय महाद्युते।
क्षणमद्यानुरुद्ध्यर्थं साहाय्यमुपकल्पतां। १०४००
॥ गरुड उवाच ॥ अत्यद्भुतमिदं वाक्यं तव कृष्ण महाभुज। त्वत्प्रसादात्तु विजयः सर्व्वत्र मम केशव।
धन्योऽस्म्यनुस्मृतोऽस्मि संस्तवान्मधुसूदन। श्रोतव्यस्त्वं मया कृष्ण स्तोष्ये त्वां त्वं महाभुज।
वेदाध्यक्ष सुराध्यक्ष सर्व्वकामप्रदो भवान्। अमोघदर्शनस्त्वं हि वरार्थिषु वरप्रदः।
चतुर्भुजश्चतुर्मूर्त्तिश्चातुर्होत्रप्रवर्त्तकः। चातुराश्रम्यवेत्ता च चतुर्होता महाकविः।
धनुर्धरश्चक्रधरो भवान् शङ्खधरो महान्। भवान् पूर्व्वेषु देवेषु ख्यातो भूमिधरः प्रभो। १०४०५
लाङ्गली मुषली चक्री देवकीतनयो भवान्। गोवर्द्धनधरश्चैव गोप्रियः कंसहा भवान्।
चानूरमथनश्चैव मल्लादिर्मल्लभावनः। मल्लप्रियो महामल्लो महापुरुष इत्यपि।
विप्रप्रियो विप्रहितो विप्रज्ञो विप्रभावनः। ब्रह्मण्यश्च वरेण्यश्च महान्दामोदरः स्मृतः।
प्रलम्बमथनश्चैव केशिहा दानवान्तकः। अरिष्टोक्षस्य हन्ता वै तथा रावणनाशनः।
विभीषणस्य भगवान्राज्यदो वालिनाशनः। सुग्रीवराज्यदाता च बलिराज्यापहारकः। १०४१०
रत्नहर्त्ता महारत्नः समुद्रोदरसम्भवः। वरुणश्च भवान् ख्यातो भवांश्च सरिदुद्भवः।
भवान् खड्गधरो धन्वी धनुर्द्धरवरो महान्। दाशार्ह इति विख्यातो महाधन्वा धनुःप्रियः।
गोविन्द इति विख्यातो जलधिस्त्वञ्च सुव्रत। आकाशश्च त्वमेवैव समुद्रमथनो महान्।
भवान् स्वर्गो बहुफलो भवान् स्वर्गधरो मही। त्वमेव च महामेघो वीजनिष्पत्तिरेव च।
त्रैलोक्यमथनश्चैव क्रोधलोभमनोरथः। भवान् कामप्रदश्चैव कामः सर्व्वधनुर्द्धरः। १०४१५
स्रष्टा वर्त्तनश्चैव प्रलयो निलयो महान्। हिरण्यगर्भो भूगर्भो रूपवान् पुरुषोत्तमः।
ईशस्त्वं च महादेवस्त्वमसङ्ख्यगुणान्वितः। स्तोतुमिच्छसि मां देवस्तोतव्यस्त्वं सनातन।
चक्षुषा ये त्वया घोराः प्राणिनश्च निरीक्षिताः। हतास्ते यमदण्डेन तिर्य्यङ् निरयगामिनः
ये त्वया परमप्रीत्या प्राणिनो वै निरीक्षिताः। इह च प्रेत्य ते सर्व्वे सर्व्वथा स्वर्गगामिनः।
एष तेऽहं महाबाहो वशग शासने स्थितः। जयशब्दं ततः कृत्वा गरुडः प्राह केशवं। १०४२०
अयमस्मि स्थितो वीर आरुहस्व महाबल। स कृष्णपार्श्वमागम्य हर्षादेव स्थितोऽभवत्।
प्राह कण्ठे परिष्वज्य माधवो गरुडं ततः। सखे शत्रुविनाशाय अर्घोऽयं प्रतिगृह्यतां।
दत्वार्घं परया प्रीत्या शङ्खचक्रगदासिभृत्। आरुरोह महाबाहुः सुपर्णं पुरुषोत्तमः।
कृष्णकेशश्च बलवान् जिष्णुः कृष्णस्य वल्लभः। चतुर्दंष्ट्रश्चतुर्बाहुश्चतुर्वेदः षडङ्गवित्।
श्रीवत्साङ्कोऽरविन्दाक्ष ऊर्द्धरोमा मृदुत्वचः। समाङ्गुलिः समनखो रक्ताङ्गुलिनखान्तरः। १०४२५
स्निग्धगम्भीरनिर्घोषो वृत्तबाहुर्महाभुजः। आजानुबाहुस्ताम्रास्यः सिंहविस्पष्टविक्रमः।
सहस्रमिव सूर्य्याणां दीप्यमानः प्रकाशते। स प्रभुर्भाति भूतात्मा भूतानां भावनः प्रभुः।

तदसङ्ख्येयमेकस्थ महाभ्रघनसन्निभं । नीलाञ्जनचयप्रख्यमप्रमेयमयावयं ।
ते प्रदीप्तप्रहरणा दैत्यदानवराक्षसाः । प्रमाथगणमुख्याश्च प्रायुध्यन कृष्णमव्ययं ।
सर्व्वतस्ते प्रदीप्तास्यै रोचिष्मद्भिरिवाग्निभि । अभ्युपेत्य तदा तूर्णं यक्षराक्षसदानवैः ।
पीयते रुधिरं तेषां चतुर्णामपि संयुगे । तद्बलन्तु समासाद्य बलभद्रो महाबलः ।
प्रोवाच वचनं तत्र परस्य बलनाशन । कृष्ण कृष्ण महाबाहो विधत्स्वैषा महाभयं । ११८०
इति सञ्चोदितः कृष्णो बलभद्रेण धीमता । तेषां बधार्थमाग्नेयं जग्राह पुरुषोत्तम ।
अस्त्रमस्त्रविदां श्रेष्ठो यमान्तकसमप्रभः । प्रविधूयासुरगणान् क्रव्यादास्त्रेण तेजसा ।
प्रययौ त्वरया युक्तो यत्रादृश्यत तद्बल । शूलपट्टिशशक्त्यृष्टिपिनाकपरिघायुधं ।
प्रमाथगणभूयिष्ठं बलन्तदभवत् चितौ । शैलमेघप्रतीकाशैर्नानारूपैर्भयावहैः ।
वाहनै सघश सर्व्वे योधास्तत्रावतस्थिरे । वातोद्धूतैरिव घनैर्व्विप्रकीर्णैरिवाचलै । ११८५
शुशुभे तत्र बहुलैरनेकैर्व्वज्रधन्विभि । कुलिशै पट्टिशै शूलैर्गदाभिर्मुसलैस्तथा ।
आधावत्तदसङ्ख्येयं शुशुभे सर्व्वतो बलं । वैनतेयगतो रामस्तान्दृष्ट्वा कृष्णमब्रवीत् ।
कृष्ण कृष्ण महाबाहो यदेतद्दृश्यते बलं । एतै सह रणे योद्धुमिच्छामि पुरुषोत्तम ।
॥ कृष्ण उवाच ॥ ममाप्येषैव सञ्जाता बुद्धिरित्यब्रवीत् स तं । एभि सह रणे योद्धुमिच्छेय योधसत्तमे ।
युध्यतः प्राङ्मुखस्यास्तु सुपर्णो वै नमाधत । सव्ये पार्श्वे च प्रद्युम्नस्तथा मे दक्षिणे भवान् । ११९०
रक्षितव्यमथान्योन्यमस्मिन् घोरे महामृधे ।
॥ वैशम्पायन उवाच ॥ एवं ब्रुवन्तस्ते न्योऽन्यमविरूढा खगोत्तमं । गिरिशृङ्गनिभैर्युद्धे गदामुसलशूलैः ।
युध्यतो रौहिणेयस्य रौद्रं रूपमभूत्तदा । युगान्ते सर्व्वभूतानि कालस्येव दिधक्षत ।
आकृष्य लाङ्गलाग्रेण मुषलेनावपोथयत् । चरत्यतिबलो रामो युद्धमार्गविशारद ।
प्रद्युम्न शरजालैस्तान् समन्तात् पर्य्यवारयत् । दानवान् पुरुषव्याघ्रो युध्यमानान्महाबल । ११९५
स्निग्धाञ्जनचयप्रख्य शङ्खचक्रगदाधर । प्रध्माप्य बहुश शङ्खमयुध्यत जनार्द्दन ।
पक्षप्रहाराभिहतान् तुण्डाग्रनखविक्षता । नीता वैवस्वतमुखं वैनतेयेन धीमता ।
तैर्हन्यमानं दैत्यानामनीकं भीमविक्रम । अभज्यत तदा सङ्ख्ये बाणवंशसमाहृतं ।
भज्यमानेष्वनीकेषु त्रातुकाम समभ्ययात् । ज्वरस्त्रिपादस्त्रिशिरा षड्भुजो नवलोचन ।
भस्मप्रहरणो रौद्रः कालान्तकयमोपम । नदन्मेघसहस्रस्य तुल्यो निर्घातनिस्वनः । १२००
निश्वसन् जृम्भमाणश्च निद्रान्विततनुर्भृश । नेत्राभ्यामाकुलं वक्त्रं मुहु कुर्व्वन् भ्रमन्मुहु ।
संहृष्टरोमा ग्लानाक्ष चिन्नचित्त इव श्वसन् । हलायुधमभिक्रुद्ध साक्षेपमिदमब्रवीत् ।
किमेवं बलमत्तोऽसि न मां पश्यसि संयुगे । तिष्ठ तिष्ठ न मे जीवन् मोक्ष्यसे रणमूर्द्धनि ।
इत्येवमुक्त्वा प्रहसन् हलायुधमुपाद्रवत् । युगान्ताग्निनिभैर्घोरैर्मुष्टिभिर्जनयन् भयं ।
चरतस्तत्र सङ्ग्रामे मण्डलानि सहस्रश । रौहिणेयस्य शीघ्रेण न च स्थानमदृश्यत । १२०५

कृष्णः सङ्कर्षणश्चैव प्रद्युम्नश्च महाबलः। ततः प्रशान्ते दहने संप्रतस्थे स पक्षिराट्।
स पक्षबलविक्षेपैः कुर्व्वन् घोरं महास्वनं। तान्दृष्ट्वा चिन्तयंस्तत्र रुद्रस्यानुचराग्नयः।
आस्थिता गरुडं ह्येते नानारूपा भयावहाः। किमर्थमिह सम्प्राप्ताः केवापीमे नराख्ययः।
निश्चयं नाध्यगच्छन्त ते गिरिव्रजमुद्भवः। प्रावर्त्तयंश्च संग्रामं तैस्त्रिभिः सह यादवैः। १०४६०
तेषां युद्धे प्रसक्तानां सन्नादः सुमहानभूत्। तञ्च श्रुत्वा महानादं सिंहानामिव गर्ज्जतां।
अथाङ्गिराः स्वपुत्रं प्रेषयामास बुद्धिमान्। यत्र तद्वर्त्तते युद्धं तत्र गच्छस्व माचिरं।
अथाग्निस्तु वाणेन पुरुषोऽतिमनोजवः। दृष्ट्वा तत् सर्व्वमागच्छ इत्युक्तः प्रस्थितस्त्वरन्।
तथेत्युक्त्वा स तद्युद्धं वर्त्तमानमुदैक्षत। अग्नीनां वासुदेवेन संसक्तानां महाहवे।
ते जातवेदसः सर्व्वे कल्मापः कुसुमस्तथा। दहनः शोषणश्चैव तपनश्च महाबलः। १०४६५
स्वाहाकारस्य विषये प्रख्याताः पञ्च वह्नयः। अथापरे महाभागाः स्वैरनीकैर्व्यवस्थिताः।
पिठरः पतगः स्वर्णस्त्वगाधो भ्राज एव च। स्वधाकाराश्रयः पञ्च प्रायुद्ध्यन्तेऽपि चाग्नयः।
ज्योतिष्टोमविभागौ च वषट्काराश्रयौ पुनः। द्वावग्नी समयुध्येते महात्मानौ महाद्युती।
आग्नेयं रथमास्थाय शूलमुद्यम्य भास्वरं। तयोर्मध्येऽङ्गिराश्चैव महर्षिर्व्विबभौ रणे।
स्थितमङ्गिरसं दृष्ट्वा विमुञ्चन्तं शिताञ्छरान्। कृष्णः प्रोवाच संक्रुद्धः स्मयन्निव पुनः पुनः। १०४७०
तिष्ठध्वमग्नयः सर्व्वे एष वो विदधे भयं। ममास्त्रतेजसा दग्धा दिशो यास्यथ विद्रुताः।
अथाङ्गिरास्त्रिशूलेन दीप्तेन समधावत। आददान इव क्रोधात् कृष्णप्राणान्महामृधे।
त्रिशूलं तस्य तद्दीप्तं चिच्छेद परमेषुभिः। अर्द्धचन्द्रेस्तथा तीक्ष्णैर्यमात्तदहनप्रभैः।
स्थूणाकर्णेन वाणेन दीप्तेन स महायशाः। हियधान्तकतुल्येन वक्षस्यङ्गिरसन्ततः।
रुधिरौघपरीताङ्गो ह्यङ्गिरा विह्वलन्निव। विष्टब्धगात्रः सहसा पपात धरणीतले। १०४७५
शेषाग्नयस्तत सर्व्वे चत्वारो ब्रह्मणः सुताः। अवाद्रवंस्तत शीघ्रं वाणस्य पुरमन्तिकात्।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अग्निजये अशीत्यधिकशततोऽध्याय ॥ १८० ॥
॥ वैशम्पायन उवाच ॥ अथ वाणपुरं दृष्ट्वा कृष्णं प्रोवाच नारदः। एतत्तच्छोणितपुरं कृष्ण पश्य महाभुज।
अत्र रुद्रो महातेजा रुद्राण्या सहितोऽवसत्। गुहश्च वाणगुप्त्यर्थं सततं क्षेमकारणात्।
नारदस्य वचः श्रुत्वा कृष्णस्त्विदमथाब्रवीत्। क्षेमं नश्चिन्त्यतामत्र श्रूयताञ्च महामुने।
यदि चावतरेद्रुद्रो वाणसंरक्षणम्प्रति। शक्तितो वयमप्यत्र सह योत्स्यामि तेन वै। १०४८०
एवं विवदतोस्तत्र कृष्णनारदयोस्तदा। प्राप्ता निमेषमात्रेण शोणिताद्रूरुतम्य ते।
ततः शङ्खं समाधाय वदने पुष्करेक्षण। वातवेगेन तं दध्मौ भेघयन्निव कर्णिकान्।
ततः प्रध्माय तं शङ्खं भयमुत्पाद्य वीर्य्यवान्। प्रविवेश पुरं कृष्णो वाणस्याद्भुतकर्म्मणः।
ततः शङ्खस्वनं श्रुत्वा भेरीणाञ्च महास्वनैः। वाणानीकानि सहसा समनह्यन्त सर्व्वशः।
ततः किङ्करसैन्यं तद्वारिष्टं समरेऽभ्ययात्। कोटिशश्चापि बहुशो दीप्तप्रहरणोद्यतं। १०४८५

तदसङ्ख्येयमेकस्थं महाभ्रघनसन्निभं। नीलाञ्जनचयप्रख्यमप्रमेयमयावध।
ते प्रदीप्तप्रहरणा दैत्यदानवराक्षसाः। प्रमाथगणमुख्याश्च प्रायुध्यन्त कृष्णमव्यय।
सर्व्वतस्ते प्रदीप्ताक्षै रोचिष्मद्भिरिवाग्निभिः। अभ्युपेत्य तदा तूर्णं यक्षराक्षसदानवै।
पीयते रुधिरं तेषां चतुर्णामपि संयुगे। तद्दृष्ट्वा तु समासाद्य बलभद्रो महाबलः।
प्रोवाच वचनं तत्र परस्य बलनाशनं। कृष्ण कृष्ण महाबाहो विधत्स्वैषां महाभयं। १०८०
इति सञ्चोदितः कृष्णो बलभद्रेण धीमता। तेषां बधार्थमाग्नेयं जग्राह पुरुषोत्तमः।
अस्त्रमस्त्रविदां श्रेष्ठो यमान्तकसमप्रभः। प्रविधूयासुरगणान् क्रव्यादास्त्रेण तेजसा।
प्रययौ त्वरया युक्तो यत्रादृश्यत तद्बलं। शूलपट्टिशशक्त्यृष्टिपिनाकपरिघायुधं।
प्रमाथगणभूयिष्ठं बलमद्भुतवत् चितौ। शैलमेघप्रतीकाशैर्नानारूपैर्भयावहैः।
वाहनैः सध्वजैः सर्व्वे योधास्तत्रावतस्थिरे। वातोद्धूतैरिव घनैर्व्विप्रकीर्णैरिवाचलै। १०८५
शुशुभे तत्र बहुलैरनीकैर्व्वहुधध्वजैः। कुलिशैः पट्टिशैः शूलैर्गदाभिर्भुषलैस्तथा।
आधावत्तदसङ्ख्येयं शुशुभे सर्व्वतो बलं। वैनतेयगतो रामस्तान्दृष्ट्वा कृष्णमब्रवीत्।
कृष्ण कृष्ण महाबाहो यदेतद्दृश्यते बलं। एतैः सह रणे योद्धुमिच्छामि पुरुषोत्तम।
॥ कृष्ण उवाच ॥ ममाप्येषैव सञ्जाता बुद्धिरित्यब्रवीत् स तं। एभिः सह रणे योद्धुमिच्छेयं योधसत्तमैः।
युध्यतः प्राङ्मुखस्यास्तु सुपर्णो वै नमाग्रतः। सव्ये पार्श्वे च प्रद्युम्नस्तथा मे दक्षिणे भवान्। १०९०
रक्षितव्यमथान्योन्यमस्मिन् घोरे महामृधे।
॥ वैशम्पायन उवाच ॥ एवं युक्तास्ते न्योऽन्यमभिरूढाः खगोत्तमं। गिरिशृङ्गनिभैर्युद्धे गदामुषलशूलैः।
युध्यतो रौहिणेयस्य रौद्रं रूपमभूत्तदा। युगान्ते सर्व्वभूतानि कालस्येव दिधक्षतः।
आकृष्य लाङ्गलाग्रेण मुषलेनावपोथयत्। चरत्यतिबलो रामो युद्धमार्गविशारदः।
प्रद्युम्नः शरजालैस्तान् समन्तात् पर्व्यवारयत्। दानवान् पुरुषव्याघ्रो युध्यमानान्महाबलः। १०९५
स्निग्धाञ्जनचयप्रख्यः शङ्खचक्रगदाधरः। प्रध्माप्य बहुशः शङ्खमयुध्यत जनार्द्दनः।
पक्षप्रहाराभिहतान् तुण्डाग्रनखविक्षतान्। नीता वैवस्वतमुखं वैनतेयेन धीमता।
तैर्हन्यमानं दैत्यानामनीकं भीमविक्रमं। अभज्यत तदा सङ्ख्ये बाणवर्षसमाहतं।
भज्यमानेष्वनीकेषु चातुकामः समभ्ययात्। ज्वरस्त्रिपादस्त्रिशिरा षड्भुजो नवलोचनः।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः। नदन्मेघसहस्रस्य तुल्यो निर्घातनिस्वनः। ११००
निश्वसन् जृम्भमाणश्च निद्रान्विततनुर्भृशं। नेत्राभ्यामाकुलं वक्त्रं मुहुः कुर्व्वन् भ्रमन्मुहुः।
संहृष्टरोमा ग्लानाक्ष चिन्नचित्त इव श्वसन्। हलायुधमभिक्रुद्धः साक्षेपमिदमब्रवीत्।
किमेवं बलमत्तोऽसि न मां पश्यसि संयुगे। तिष्ठ तिष्ठ न मे जीवन् मोक्ष्यसे रणमूर्द्धनि।
इत्येवमुक्त्वा प्रहसन् हलायुधमुपाद्रवत्। युगान्ताग्निनिभैर्घोरैर्मुष्टिभिर्जनयन् भयं।
चरतस्तत्र सङ्ग्रामे मण्डलानि सहस्रशः। रौहिणेयस्य शीघ्रेण न च स्थानमदृश्यत। ११०५

तस्य भस्म तदाचिप्तं ज्वरेणाप्रतिमौजसा । ग्रैव्याद्दचोनिपतितं शरीरे पर्व्वतोपमे।
तद्भस्म वचसस्तस्य मेरोः शिखरमागमत् । प्रदीप्तं पतितं तत्र गिरिशृङ्गं व्यदारयत् ।
शेषेण चापि जज्वाल भस्मना कृष्णपूर्व्वजः । निश्वसन् जृम्भमाणश्च निद्राग्लिततनुर्भृशं ।
नेत्रयोराकुलश्च मुहुः कुर्व्वन् भ्रमंस्तया । संहृष्टरोमा म्लानाचः छिन्नचित्त इव श्वसन् ।
ततो हलायुधो मग्नः कृष्णमाह विचेतनः । कृष्ण कृष्ण महाबाहो प्रदीप्तोऽस्म्यभयङ्कर । १०११०
दह्यामि सर्व्वशस्तात कथं शान्तिर्भवेन्मम । इत्येवमुक्ते वचने बलेनामिततेजसा ।
प्रहस्य वचनं प्राह कृष्णः प्रहरतांवरः । न भेतव्यमितीत्युक्त्वा परिष्वक्तो हलायुधः ।
कृष्णेन परमस्नेहात्ततो दाहाद्व्यमुच्यत । मोचयित्वा बलं तत्र दाहात्तु मधुसूदनः ।
प्रोवाच परमक्रुद्धो वासुदेवो ज्वरं ततः ।
॥ भगवानुवाच ॥ एह्येहि ज्वर युध्यस्व या ते शक्तिर्महाम्मृधे । यच्च ते पौरुषं सर्व्वं तद्दर्शय यतस्व च । १०१११
सव्येतराभ्यां पाणिभ्यामित्युक्तो ज्वरस्तदा । चिचेपैवं महद्भस्म ज्वालागर्भं महाबलः ।
ततः प्रदीप्तगात्रस्तु मुहूर्त्तमभवत् प्रभुः । कृष्णः प्रहरतां श्रेष्ठः शमञ्चाग्निर्गतस्तदा ।
ततस्त्रिभुजगाकारैर्बाहुभिः प्रोच्छ्रितैस्तदा । जघान कृष्णं ग्रीवायां मुष्टिनैकेन चोरसि ।
स संप्रहारस्तुमुलस्तयोः पुरुषसिंहयोः । ज्वरस्यतु महायुद्धे कृष्णस्य च महौजसः ।
पर्व्वतेषु पतन्तीनामशनीनामिव स्वनः । कृष्णज्वरभुजाघातैर्युद्धे तस्मिन् सुदारुणे। १०११०
नैवमेवं प्रहर्त्तव्यमिति तत्र महात्मनः । मुहूर्त्तमभवद्युद्धमन्योऽन्यं सुमहात्मनोः ।
ततो ज्वरं कनकविचित्रभूषणं न्यपीडयद्भुजयुगलेन संयुगे । जगत्त्रयं सुमुपनयन् जगत्पतिः शरीरधृग्गगनचरो महाम्मृधे ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि विष्णुज्वरयुद्धे एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥
॥ वैशम्पायन उवाच ॥ स्वेत इत्यभिविज्ञाय ज्वरं शत्रुनिसूदनः । कृष्णो भुजबलात्तन्तु चिचेपाशु महीतले ।
भुजमात्रस्तु बाहुभ्यां कृष्णदेहं विवेश सः । अमुक्तो विशद्गात्रस्य कृष्णस्याप्रतिमौजसः ।
सद्य विष्टस्तदा तेन ज्वरेणाप्रतिमौजसा । कृष्णः स्खलन्निव मुहुः चितौ गाढं व्यवर्त्तत । १०१११
जृम्भते श्वसते चैव स्खलते च पुनः पुनः । रोमाञ्चोत्थितगात्रस्तु निद्रया चाभिभूयते ।
ततः स्थैर्य्यं समालम्ब्य कृष्णः परपुरञ्जयः । विकुर्व्वते महायोगी जृम्भमाणः पुनः पुनः ।
ज्वराभिभूतमात्मानं विज्ञाय पुरुषोत्तम । सोऽसृजज्ज्वरमन्यं तु पूर्व्वज्वरविनाशनं ।
घोरं वैष्णवमत्युग्रं सर्व्वप्राणिभयङ्करं । स सृष्टवांस्तु तेजस्वी बलवान् भीमविक्रमः ।
कृष्णज्वरो ज्वरं पूर्व्वं गृहीत्वा स्वेन तेजसा । कृष्णाय हृष्टः प्रायच्छत्तं जग्राह ततो हरिः । १०११०
ततस्तं परमक्रुद्धो वासुदेवो महाबलः । स्वगात्रात् स्वज्वरेणैव निष्कामयत वीर्य्यवान् ।
आविध्य भूतले चैनं शतधा कर्त्तुमुद्यतः । व्याघोषयज्ज्वरस्तत्र भोः परित्रातुमर्हसि ।
आविध्यमाने तस्मिंस्तु कृष्णेनामिततेजसा । अशरीरा ततो वाणी तमुवाचान्तरीचगा ।
कृष्ण कृष्ण महाबाहो यदूनां नन्दिवर्द्धन । मावधीर्ज्वरमेतं तु रचणीयस्त्वयाऽनघ ।

इत्येवमुक्ते वचने तं मुमोच हरिः स्वयं । भूतभव्यभविष्यस्य जगतः परमो गुरु ।
कृष्णस्य पादयोर्मूर्द्ध्ना शरणं स गतो ज्वरः । प्रणम्य च हृषीकेशं ज्वरो वाक्यमथाब्रवीत् ।
शृणुष्व मम गोविन्द विज्ञाप्यं यदुनन्दन । यो मे मनोरथो देव तं त्वं कुरु महाभुज ।
अहमेको ज्वरस्तात नान्यो लोके ज्वरो भवेत् । त्वत्प्रसादाद्धि देवेश वरमेतं वृणोम्यहं ।
॥ देव उवाच ॥ एवमस्तु भद्रं ते यथा त्वं ज्वर काङ्क्षसे । वरार्थिनां वरो देयो भवांश्च शरणागत ।
एक एव ज्वरो लोके भवानस्तु यथा पुरा । योऽयं मया ज्वरः सृष्टो मय्येवैष प्रलीयतां ।
॥ वैशम्पायन उवाच ॥ एवमुक्ते तु वचने ज्वरं प्रति महायशाः । कृष्णः प्रहरतां श्रेष्ठः पुनर्व्वाक्यमुवाच ह ।
॥ कृष्ण उवाच ॥ शृणुष्व ज्वर सन्देशं यथा लोके चरिष्यसि । सर्व्वजातिषु विन्यस्तस्तथा स्थावरजङ्गमे ।
त्रिधा विभज्य चात्मानं मत्प्रियं यदि काङ्क्षसे । चतुष्पदान् भजैकेन द्वितीयेन च स्थावरान् ।
तृतीयो यश्च ते भागो मानुषेषूपपत्स्यते । त्रिधा भूतं वपुः कृत्वा पक्षिषु त्वं भव ज्वर ।
चतुर्थो यस्तृतीयस्य भविष्यति च ते ध्रुवं । एकान्ततश्चतुर्भाग खोरकश्च चतुर्थकः ।
मानुषेष्वेकपादेन वस त्वं प्रविभज्य वै । जातिष्वथावशेषासु निवसं त्वं शृणुष्व मे ।
वृक्षेषु कीटरूपेण तथा सङ्कोचपत्रक । पाण्डुपत्रश्च विख्यातः फलेष्वाहूर्य्यमेव च ।
पद्मिनीषु हिमो भूत्वा पृथिव्यामपि चोषर । अपान्तु नीलिका विद्यात् शिखोद्भेदश्च बर्हिणां ।
गैरिकः पर्व्वतेष्वेव मत्प्रसादाद्भविष्यसि । गोष्वपस्मारको भूत्वा खोरकश्च भविष्यसि ।
एवं विविधरूपेण भविष्यसि महीतले । दर्शनात् स्पर्शनाच्चैव प्राणिनां बधमेष्यसि ।
ऋते देवमनुष्यांश्च नान्यस्त्वां विषहिष्यति ।
॥ वैशम्पायन उवाच ॥ कृष्णस्य वचनं श्रुत्वा ज्वरो हृष्टमना ह्यभूत् । प्रोवाच किञ्चिद्वचनं प्रणतात्मा कृताञ्जलिः ।
॥ ज्वर उवाच ॥ सर्व्वजातिप्रभुत्वेन कृतो धन्योऽस्मि माधव । भूयश्च ते वच कर्त्तुमिच्छामि पुरुषर्षभ ।
तदाज्ञापय गोविन्द किं करोमि महाभुज ।
अहमसुरकुलप्रमाथिना त्रिपुरहरेण हरेण निर्म्मित । रणशिरसि विनिर्ज्जितस्त्वया प्रभुरसि मेऽद्य तवास्मि किङ्कर. ।
॥ वैशम्पायन उवाच ॥ ज्वरस्य वचनं श्रुत्वा वासुदेवोऽब्रवीद्वचः । अभिसन्धिं शृणुष्वाद्य यत्त्वां वक्ष्यामि निश्चयात् ।
॥ ज्वर उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यत्त्वया मत्प्रियं कृतं । आज्ञापय प्रिय किन्ते चक्रायुध करोम्यहं ।
॥ कृष्ण उवाच ॥ महामृधे तव मम च द्वयोरिमं पराक्रमं भुजबलकेवलास्त्रयोः । प्रणम्य मामेकमनाः पठेत्तु यः स वै भवे
ज्ज्वर विगतज्वरो नरः ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु कृष्णेन ज्वरः सायम्महाबलः । प्रोवाच यदुशार्दूलमेवमेतद्भविष्यति ।
वरं लब्ध्वा ज्वरो हृष्टः कृष्णाच्च समयं पुनः । प्रणम्य शिरसा कृष्णमपक्रान्तस्ततो रणात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि बाणयुद्धे ज्वरापक्रमे द्व्यशीत्यधिकशतोऽध्याय ॥ १८२ ॥
॥ वैशम्पायन उवाच ॥ ततस्ते नरिताः सर्व्वे त्रयस्त्रयं इवाग्नय । वैनतेयमथारुह्य युध्यन्ते रणमूर्द्धनि ।
ततः सर्व्वाण्यनीकानि बाणवर्षैरवाकिरन् । अर्द्धयन्तो महात्मानो मदन्तोऽतिबला रणे ।

१ चक्रलाङ्गलपातैश्च वाणवर्षैश्च पीडितं । चचुक्रोप महानीकं दानवानां महात्मनां ।
कक्षेऽग्निरिव संदृद्धः शुष्केन्धनसमीरित. । कृष्णवाणाग्निरुद्धूतो विवृद्धिं परमां गत. ।
दानवानां सहस्राणि तस्मिन् समरमूर्द्धनि । युगान्ताग्निरिवार्च्चिष्मान्दहमानो व्यराजत ।
तां दीर्यमानां महती नानाप्रहरनान्वितां । सेनां वाणः समासाद्य वारयन् वाक्यमब्रवीत् ।
लाघवं समुपागम्य किमेवं भयविक्लवा. । दैत्यवंशे समुत्पन्नाः पलायध्वं महाहवात् ।
कवचासिगदाप्रासखड्गचर्म्मपरश्वधान् । उत्सृज्योत्सृज्य गच्छन्ति भवन्तोऽन्तरीक्षगाः ।
स्वजातिञ्चैव भावञ्च हरसंसर्गमेव च । मानयद्भिर्न गन्तव्यमेषो ह्याहमवस्थितः ।
एवमुच्चारितां वाचं शृण्वन्तस्तामचिन्तयन् । अपक्रामन्त ते सर्व्वे दानवा भयमोहिताः ।
प्रमाथगणशेषं तु तदनीकमतिष्ठत । भग्नावशेषं युद्धाय पुनश्चक्रे मनस्तदा ।
कुम्भाण्डो नाम वाणस्य सखाऽमात्यस्य वीर्य्यवान् । भग्नं बलं समालोक्य वचश्चेदमथाब्रवीत ।
एष वाण. स्थितो युद्धे शङ्करोऽयं गुहस्तथा । किमर्थं बलमुत्सृज्य भवन्तो यान्ति मोहिताः ।
प्राणांस्त्यक्त्वा च युध्यध्वं सर्व्वे दानवपुङ्गवाः । एवं कुम्भाण्डवाक्यानि शृण्वन्तो भयमोहिता. ।
चक्राग्निभयसंविग्नाः सर्व्वे यान्ति दिशो दश । भग्नं बलं ततो दृष्ट्वा कृष्णेनामिततेजसा ।
संरक्तनयनः स्थाणुर्युद्धाय पर्य्यवर्त्तत । वाणसंरक्षणं कर्त्तुं रथमास्थाय सुप्रभं ।
देव. कुमारस्य तदा रथेनाग्निनिभेन वै । नन्दीश्वरसमायुक्तं रथमास्थाय वीर्य्यवान् ।
सन्दष्टौष्ठपुटो रुद्र. प्राधावत यतो हरिः । पिबन्निव तदाकाशं सिंहयुक्तो महास्वनः ।
रथो भाति घनोन्मुक्त. पौर्णमास्यां यथा शशी । ततो गणसहस्रैस्तु नानारूपैर्महावृतैः ।
नदद्भिर्विविधान्नादान्वयौ देवस्य सोऽभ्ययात् । केचित् सिंहमुखास्तत्र तथा व्याघ्रमुखाश्च ह ।
न गाश्चोष्ट्रमुखास्तत्र प्रावेपन्नभिपीडिताः । व्यालयज्ञोपवीताश्च केचित्तत्र महाबलाः ।
खरोष्ट्रगजवक्त्राश्च अश्वग्रीवाश्च संस्थिता. । छागगोमायुमार्ज्जारमेषवक्त्रास्तथापरे ।
चीरिण. शिखिनश्चान्ये जटालोर्द्धशिरोरुहाः । नग्ना. परिपतन्ति स्म शङ्खदुन्दुभिनिस्वनैः ।
केचित् सौम्यमुखास्तत्र दिव्यैरस्त्रैरलङ्कृता. । नानापुष्पकृतापीडा नानाप्रहरणायुधाः ।
वामना विकटाश्चैव सिंहव्याघ्रपरिच्छदा । रुधिरार्द्रमहादंष्ट्रा महामांसबलिप्रिया. ।
देवं संपरिवार्य्याथ महाशत्रुप्रमर्द्दनं । लीलायमानास्तिष्ठन्ति संग्रामाभिमुखोन्मुखा. ।
ततो दिव्यरथं दृष्ट्वा रुद्रस्याक्लिष्टकर्म्मण. । कृष्णो गरुडमास्थाय ययौ रुद्राय संयुगे ।
वैनतेयसमत्यन्तमायान्तं चापपाणिर्हरः । हरिं विव्याध कुपितो नाराचानां शतेन च ।
स शरैर्र्दितस्तेन हरेणामित्रकर्षिणा । हरिर्जग्राह कुपितो ह्यस्त्रं पार्ज्जन्यमुत्तमं ।
प्रचचाल ततो भूमिर्विष्णुरुद्रप्रपीडिता । नागाश्चोर्द्धमुखास्तत्र विचेलुरभिपीडिताः ।
पर्व्वताः प्रस्रुतास्तत्र जलधाराभिराप्लुता. । केचिन्मुमुचिरे तत्र शिखराणि समन्तत. ।
दिशश्च विदिशश्चैव भूमिराकाशमेव च । प्रदीप्तानीव दृश्यन्ते स्थाणुकृष्णसमागमे ।

समन्ततश्च निर्घाता. पतन्ति धरणीतले । शिवाश्चैवाशिवानादान्नदन्ते भीमदर्शनाः ।
वासवश्चानदद्धोरं रुधिरञ्चाभ्यवर्षत । उल्का च बाणसैन्यस्य मुखान्याहत्य तिष्ठति । १०१०५
न ववौ मारुतश्चापि ज्योतींष्याकुलतामियु. । प्रभाहीनास्तथौषध्यो न चरन्त्यन्तरीक्षगाः ।
एतस्मिन्नन्तरे ब्रह्मा सर्व्वैर्देवगणैर्वृत. । त्रिपुरान्तकमुद्यन्तं ज्ञात्वा रुद्रमथागमत् ।
गन्धर्व्वाप्सरसश्चैव यक्षविद्याधरास्तथा । सिद्धचारणसंघाश्च पश्यन्तोऽथ दिवि स्थिताः ।
तत. पार्ज्जन्यमस्त्रं तु क्षिप्तं रुद्राय विष्णुना । ययौ ज्वलदथ तदा यतो रुद्रो रथे स्थितः ।
तत. शतसहस्राणि शराणां नतपर्व्वणा । निपेतु. सर्व्वतो दिग्भ्यो यतो हररथः स्थितः । १०११०
अथाग्नेयं महारौद्रमस्त्रमस्त्रविदाम्बरः । मुमोच रुषितो रुद्रस्तदद्भुतमिवाभवत् ।
ततो विस्तीर्णदेहास्ते चत्वारोऽपि समन्ततः । नादृश्यन्त शरैरुद्धा दह्यमानाः शराग्निना ।
सिंहनादं ततश्चक्रु सर्व्वे एवासुरोत्तमाः । हतोऽयमिति विज्ञाय ह्याग्नेयास्त्रेण ते तदा ।
ततस्तत्तु विपश्चाजावस्त्रमस्त्रविदाम्बरः । जग्राह वारुणं सोऽस्त्रं वासुदेवः प्रतापवान् ।
मुक्ते तु वासुदेवेन वारुणास्त्रे महात्मना । आग्नेयं प्रशमं यातं वारुणास्त्रस्य तेजसा । १०११५
तस्मिन् प्रतिहते ह्यस्त्रे वासुदेवेन संयुगे । पैशाच राक्षसं रौद्रं तथैवाङ्गिरसं भव. ।
मुमोचास्त्राणि चत्वारि युगान्ताग्निनिभानि वै । वायव्यमथ सावित्रं वासवं मोहनन्तथा ।
अस्त्राणा वारणार्थाय वासुदेवो मुमोच ह । अस्त्रैश्चतुर्भिश्चत्वारि वारयित्वा महाबल. ।
जग्राह वैष्णवं सोऽस्त्रं व्यादितास्यान्तकोपमं । वैष्णवास्त्रे प्रमुक्ते तु सर्व्वं एवासुरोत्तमा ।
भूतयक्षगणा. सर्व्वे बाणानीकस्य सर्व्वश. । दिशः प्रदुद्रुवुः सर्व्वे भयनोद्दितलोचनाः । १०१२०
प्रमाथगणभूयिष्ठे सैन्ये दीर्णे महासुर. । निर्जगाम ततो बाणो युद्धायाभिमुखस्त्वरन् ।
भीमप्रहरणैर्घोरैर्दैत्येन्द्र सुमहाबले. । वृतो महारथैर्वीरैर्वज्रीव सुरसत्तमे ।

॥ वैशम्पायन उवाच ॥ जप्यैश्च मन्त्रैश्च महौषधीभिर्महात्मनः स्वस्त्ययनं प्रचक्रु. । स तत्र वस्त्राणि शुभाश्च गा वै फलानि पुष्पाणि तथैव निष्कान् ।
दैत्याधिपो ब्राह्मणसत्तमेभ्यो ददौ धनान्याशु यथा धनेशः । सहस्रसूर्य्यो शतकिङ्किणीकः पराह्र्यजाम्बूनदहेमचित्रः ।
सहस्रचन्द्रोऽद्भुततारकश्च रथो महानग्निरिव प्रभाति । तमास्थितो दानवसंप्रहृष्टो महाभुजः कार्मुकधृक् स बाणः । १०१२५
उदर्त्तयिष्यन्यदुपुङ्गवानामतीव रौद्रं स बिभर्त्ति रूपं । स वेगवान् वीररथौघसङ्कुलो विनिर्ययौ तान् प्रति दैत्यसागरः ।
वातप्रविध्वस्ततरङ्गसङ्कुलो यथार्णवो लोकविनाशनाय । भीमानि संत्रासकरैर्व्वपुर्भिस्तान्यपतो भान्ति बलानि तस्य ।
महारथान्युच्छ्रितकार्मुकाणि सपर्व्वतानीव वनानि राजन् ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि बाणयुद्धे त्र्यशीत्यधिकशतोऽध्याय. ॥ १८३ ॥

॥ वैशम्पायन उवाच ॥ अन्धकारीकृते लोके प्रदीप्तव्यन्तके तदा । न नन्दी नापि च रथो न रुद्रः प्रत्यदृश्यत ।
द्विगुण दीप्तदेहस्तु रोषेण च बलेन च । त्रिपुरान्तकर बाण जग्राह स चतुर्मुखं । १०१३०
संदधे च मुंक्ते चैव त्रिपुरध्नमरिन्दमः । विज्ञातो वासुदेवेन चित्तज्ञेन महात्मना ।

जृम्भणं नाम सोऽप्यस्त्रं जग्राह पुरुषोत्तमः । हरं स जृम्भयामास क्षिप्रकारी महाबलः ।
स्मरः सधनुश्चैव हरस्तेनाशु जृम्भितः । संज्ञां स भेजे भगवान् विजितासुरराक्षसां ।
बलोन्मत्तोऽथ बाणोऽसौ शर्व्वश्चोद्यतोऽसकृत् । स्तम्भिमन्यां सृजस्वेति तदा दर्पविवृद्धये ।
शक्तिमन्यां सृजन्नेव तदा दर्पविवृद्धये । स्मरं सधनुष्कञ्च दृष्ट्वात्मानं विजृम्भितं । १०६३५
ततो नदन् स भूतात्मा स्निग्धगम्भीरनिस्वनः । प्रध्मापयामास तदा कृष्णः शङ्खं महाबलः ।
पाञ्चजन्यस्य घोषेण शार्ङ्गविस्फूर्ज्जितेन च । देवं विजृम्भितं दृष्ट्वा सर्व्वभूतानि तत्रसुः ।
एतस्मिन्नन्तरे तत्र रुद्रपारिषदा रणे । मायायुद्धं समाश्रित्य प्रद्युम्नं पर्य्यवारयन् ।
सर्व्वांस्तु निद्रावशगान् कृत्वा मकरकेतुमान् । दानवान्नाशयंस्तत्र शरजालेन वीर्य्यवान् ।
प्रमाथगणभूयिष्ठं तत्र तत्र महाबलः । ततस्तु जृम्भमाणस्य देवस्याक्लिष्टकर्मणः । १०६४०
ज्वाला प्रादुरभूद्वक्त्राद्दहन्तीव दिशो दश । ततस्तु धरणी देवी पीड्यमाना महात्मभिः ।
ब्रह्माणं परमोदारं वेपमानाभ्युपागमत् ।
॥ पृथिव्युवाच ॥ देवदेव महाबाहो पीडिम परमौजसा । कृष्णरुद्रभराक्रान्ता भविष्येकार्णवा पुनः ।
अविषह्यमिमं भारं चिन्तयस्व पितामह । लघ्वीभूता यथा देव धारयेयं चराचरं ।
ततस्तु काश्यपीं देवीं प्रत्युवाच पितामहः । मुहूर्त्तं धारयात्मानमाशु लघ्वी भविष्यसि । १०६४५
॥ वैशम्पायन उवाच ॥ दृष्ट्वा तु भगवान् ब्रह्मा रुद्रं वचनमब्रवीत् । हृष्टो महासुरवधः किं भूयः परिरक्ष्यते ।
न च युद्धं महाबाहो तव कृष्णेन युज्यते । न च बुध्यसि कृष्णं त्वमात्मानं हि द्विधाकृतं ।
ततः शरीरयोगाद्धि भगवानव्ययः प्रभुः । प्रविश्य पश्यते कृत्स्नांस्त्रीँल्लोकान् सचराचरान् ।
स्मरं सधनुष्कञ्च दृष्ट्वात्मानं विजृम्भितं । प्रविश्य योगं योगात्मा वरांस्ताननुचिन्तयन् ।
द्वारवत्यां यदुक्तं तु तदनुस्मृत्य सर्व्वशः । जगाद नोत्तरं किञ्चिन्निवृत्तो ह्यभवत्तदा । १०६५०
आत्मानं कृष्णदेहस्थं पश्यति लोकयोनिजं । ततो निःसृत्य कृष्णस्य न्यस्तवादोऽभवन्मृधे ।
ब्रह्माणञ्चाब्रवीद्रुद्रो न योत्स्ये भगवन्निति । कृष्णेन सह संग्रामे लघ्वी भवतु मेदिनी ।
ततः कृष्णोऽथ रुद्रञ्च परिष्वज्य परस्परं । हरं श्रीतिमुपागम्य संग्रामादपजग्मतुः ।
न च तौ पश्यते कश्चिद्योगिनौ योगमागतौ । एको ब्रह्मा तथा ह्यपश्यल्लोकपितामहः ।
दृष्ट्वा तदद्भुतं ब्रह्मा मार्कण्डेयं महामुनिं । पार्श्वस्थं परिपप्रच्छ ज्ञात्वा वै दीर्घदर्शिनं । १०६५५
॥ पितामह उवाच ॥ मन्दरस्य गिरेः पार्श्वे नलिन्यां भवकेशवौ । रात्रौ स्वप्नान्तरे ब्रह्मन् मया दृष्टौ हराच्युतौ ।
हरिश्च हररूपेण हरश्च हरिरूपिणं । शङ्खचक्रगदापाणिं पीताम्बरधरं हरं ।
त्रिशूलपट्टिशधरं व्याघ्रचर्मधरं हरिं । गरुडध्वजस्तु हरं हरिश्च वृषभध्वजं ।
विस्मयो मे महान् ब्रह्मन् दृष्ट्वा तत् परमाद्भुतं । एतदाचक्ष्व भगवन् यथातत्त्वेन सुव्रत ।
॥ मार्कण्डेय उवाच ॥ शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे । अथान्तरं न पश्यामि तेन ते दिशतः शिवं । १०६६०
अनादिमध्यनिधनमेतदक्षरमव्ययं । तदेव ते प्रवक्ष्यामि रूपं हरिहरात्मकं ।

यो वै विष्णुः स वै रुद्रो यो रुद्रः स पितामहः । एका मूर्त्तिस्त्रयो देवा रुद्रविष्णुपितामहाः ।
वरदा लोककर्त्तारो लोकनाथाः स्वयम्भुवः । अर्द्धनारीश्वरास्ते तु व्रतं तीव्रं समाश्रिताः ।
यथा जले जलं क्षिप्तं जलमेव तु तद्भवेत् । रुद्रं विष्णुः प्रविष्टस्तु तथा रुद्रमयो भवेत् ।
अग्निमग्निः प्रविष्टस्तु अग्निरेव यथा भवेत् । तथा विष्णुं प्रविष्टस्तु रुद्रो विष्णुमयो भवेत् । १०९६५
रुद्रमग्निमयं विद्याद्विष्णुः सोमात्मकः स्मृतः । अग्नीषोमात्मकञ्चैव जगत् स्थावरजङ्गमं ।
कर्त्तारौ चापहर्त्तारौ स्थावरस्य चरस्य च । जगतः शुभकर्त्तारौ प्रभू विष्णुमहेश्वरौ ।
कर्त्तृकारणकर्त्तारौ कर्त्तृकारणकारकौ । भूतभव्यभवौ देवौ नारायणमहेश्वरौ ।
एतौ तौ च प्रवक्तारावेतौ तौ च प्रभामयौ । जगतः पालकावेतावेतौ सृष्टिकरौ स्मृतौ ।
एते चैव प्रवर्षन्ति भान्ति वान्ति सृजन्ति च । एतत् परतरं गुह्यं कथितं ते पितामह । १०९७०
यश्चैनं पठते नित्यं यश्चैनं शृणुयान्नरः । प्राप्नोति परमं स्थानं रुद्रविष्णुप्रसादजं ।
देवौ हरिहरौ स्तोष्ये ब्रह्मणा सह सङ्गतौ । एतौ च परमौ देवौ जगतः प्रभवाप्ययौ ।
रुद्रस्य परमो विष्णुर्विष्णोश्च परमः शिवः । एक एव द्विधाभूतो लोके चरति नित्यशः ।
न विना शङ्करं विष्णुर्न विना केशवं शिवः । तस्मादेकत्वमायातौ रुद्रोपेन्द्रौ तु तौ पुरा ।
ओं नमो रुद्राय कृष्णाय नमः संहतचारिणे । नमः षडर्द्धनेत्राय द्विनेत्राय वै नमः । १०९७५
नमः पिङ्गलनेत्राय पद्मनेत्राय वै नमः । नमः कुमारगुरवे प्रद्युम्नगुरवे नमः ।
नमो धरणीधराय गङ्गाधराय वै नमः । नमो मयूरपिच्छाय नमः केयूरधारिणे ।
नमः कपालमालाय वनमालाय वै नमः । नमस्त्रिशूलहस्ताय चक्रहस्ताय वै नमः ।
नमः कनकदण्डाय नमस्ते मतदण्डिने । नमश्चर्मनिवासाय नमस्ते पीतवाससे ।
नमोऽस्तु लक्ष्मीपतये उमायाः पतये नमः । नमः खट्वाङ्गधाराय नमो मुषलधारिणे । १०९८०
नमो भस्माङ्गरागाय नमः कृष्णाङ्गधारिणे । नमः श्मशानवासाय नमोऽस्त्वाश्रमवासिने ।
नमो वृषभवाहाय नमो गरुडवाहिने । नमोऽस्त्वनेकरूपाय बहुरूपाय वै नमः ।
नमः प्रलयकर्त्रे च नमः सागरशायिने । नमोऽस्तु वहुरूपाय नमो भैरवरूपिणे ।
विरूपाक्षाय देवाय नमः सौम्येक्षणाय च । दक्षयज्ञविनाशाय बलेर्नियमनाय च ।
नमः पर्वतवासाय नमः सागरशायिने । नमः सुररिपुघ्नाय त्रिपुरघ्नाय वै नमः । १०९८५
नमोऽस्तु नरकघ्नाय नमः कामाङ्गनाशिने । नमोऽस्त्वन्धकनाशाय नमः कैटभघातिने ।
नमः सहस्रहस्ताय नमोऽसंख्येयबाहवे । नमः सहस्रशीर्षाय पञ्चशीर्षाय वै नमः ।
दामोदराय देवाय मुञ्जमेखलिने नमः । नमस्ते भगवन् विष्णो नमस्ते भगवन् शिव ।
नमस्ते भगवन्देव नमस्ते देवपूजित । नमस्ते सामनिर्गीत नमस्ते यजुभिः सह ।
नमस्ते सुरशत्रुघ्न नमस्ते सुरपूजित । नमस्ते कर्म्मिणां कर्म्म नमोऽमितपराक्रम । १०९९०
हृषीकेश नमस्तेऽस्तु स्वर्णकेश नमोऽस्तु ते । य इदं पठते स्तवं रुद्रस्य विष्णोश्चैव महात्मनः ।

समेत्य ऋषिभिः सर्व्वैः स्तुतौ स्तौति महात्मभिः। व्यासेन वेदविदुषा नारदेन च धीमता।
भारद्वाजेन गर्गेन वशिष्ठेन महात्मना। विश्वामित्रेण वात्स्येन तथा चैव सुमन्तुना।
अगस्त्येन पुलस्त्येन धौम्येन च महात्मना। यश्चेदं पठते नित्यं स्तोत्रं हरिहरात्मकं।
अरोगी बलवांश्चैव जायते नात्र संशयः। श्रियञ्च लभते नित्यं न च स्वर्गान्निवर्त्तते। ९९९९
अपुत्रो लभते पुत्रं कन्या विन्दति सत्पतिं। गुर्व्विणी शृणुते या तु वरं पुत्रं प्रसूयते।
राक्षसाश्च पिशाचाश्च भूतानि च विनायकाः। भयं तत्र न कुर्व्वन्ति यत्रायं पठते स्तवः।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे हरिहरात्मकस्तवे चतुरशीत्यधिकशततोऽध्यायः॥१८४॥
॥ वैशम्पायन उवाच॥ अपयाते ततो देवे कृष्णे चैव महात्मनि। पुनश्चावर्त्तत मृधं परेषां लोमहर्षणं।
कुम्भाण्डसंग्रहीताश्वे रथे तिष्ठन् गुहस्तदा। अभिदुद्राव कृष्णञ्च बलं प्रद्युम्नमेव च।
ततः शरशतैस्तीक्ष्णैस्तान् विव्याध रणे गुहः। अमर्षरोषसंक्रुद्धः कुमारः प्रवरो नदन्। १००००
शरसंकृतगात्रास्ते त्रयस्त्रय इवाग्नयः। शोणितौघस्रुतैर्गात्रैः प्रायुध्यन्त गुहन्ततः।
ततस्ते युद्धमार्गज्ञास्त्रयस्त्रिभिरनुत्तमैः। वायव्याग्नेयपार्ज्जन्यैर्विभिदुर्दीप्ततेजसः।
तानस्त्रान् त्रिभिरेवास्त्रैर्विनिवार्य्य स पावकिः। शैलवारुणसावित्रैस्तान् स विव्याध सायकैः।
तस्य दीप्तशरौघस्य दीप्तचापधरस्य वै। शरौघानस्त्रमायाभिर्ग्रसन्ति स्म महात्मनः।
यदा तदा गुहः क्रुद्धः प्रज्वलन्निव तेजसा। अस्त्रं ब्रह्मशिरो नाम कालकल्पं दुरासदं। १०००५
संदष्टौष्ठपुटः संख्ये जग्राह पावकिः प्रभुः। प्रमुक्ते ब्रह्मशिरसि सहस्रांशुसमप्रभे।
उग्रे परमदुर्द्धर्षे लोकक्षयकरे तथा। हाहाभूतेषु सर्व्वेषु प्रधावत्सु समन्ततः।
अस्त्रतेजःप्रमूढे तु विपक्षे जगति प्रभुः। केशवः केशिमथनश्चक्रं जग्राह वीर्य्यवान्।
सर्व्वेषामस्त्रवीर्य्याणां वारणं घातनं तथा। चक्रमप्रतिचक्रस्य लोके ख्यातं महात्मनः।
अस्त्रं ब्रह्मशिरस्तेन निष्प्रभं कृतमोजसा। घनौघेनातपापाये सवितुर्मण्डलं यथा। १००१०
ततो निष्प्रभतां याते नष्टवीर्य्ये हतौजसि। तस्मिन् ब्रह्मशिरस्यस्त्रे क्रोधसंरक्तलोचनः।
गुहः प्रजज्वाल रणे हविषेवाग्निरुल्बणः। जग्राह काञ्चनीं शक्तिं शत्रुघ्नीं ज्वलितां तथा।
अमोघां दयितां घोरां सर्व्वलोकभयावहां। महोल्कामिव तान्दीप्तां युगान्ताग्निसमप्रभां।
घण्टामालाकुलां दिव्यां चिक्षेप रुषितो गुहः। ननाद बलवच्चापि नादान् शत्रुभयङ्करान्।
सा तु क्षिप्ता तदा शक्तिर्ब्रह्मण्येन महात्मना। जृम्भमानेव गगने सम्प्रदीप्तमुखी तदा। १००१५
अधावत महाशक्तिः कृष्णस्य वधकाङ्क्षिणी। स्वयं विषसः शक्रोऽपि सर्व्वामरगणैर्वृतः।
शक्तिं प्रज्वलितां दृष्ट्वा दग्धः कृष्णेत्यथाब्रवीत्। अभ्याससमागतां ताञ्च महाशक्तिं महाबलः।
हुङ्कारेणैव निर्भर्त्स्य पातयामास भूतले। पातितायां महाशक्त्यां साधुसाध्विति सर्व्वशः।
सिंहनादं ततश्चक्रुः सर्व्वे देवाः सवासवाः। ततो देवेषु नर्द्दत्सु वासुदेवः प्रतापवान्।
पुनश्चक्रं स जग्राह दैत्यान्तकरणं रणे। व्याविध्यमाने चक्रे तु कृष्णेनामिततेजसा। १००२०

कुमाररक्षणार्थाय बिभ्रती सुतनुं तदा। दिग्वासा देववचनात् प्रातिष्ठद्य कोट्टवी।
लम्बा नाम महाभागा भागो देव्यास्तथाष्टमः। चित्रा कनकशक्तिस्तु सा च लग्ना स्थितान्तरे।
अथान्तरा कुमारस्य देवीं दृष्ट्वा महाभुजः। पराङ्मुखास्थितो वाक्यमुवाच मधुसूदनः।
॥ भगवानुवाच ॥ अपगच्छापगच्छ त्वं धिक्त्वामिति च सोऽब्रवीत्। किमेवं कुरुषे विघ्नं निश्चितस्य वधम्प्रति।
॥ वैशम्पायन उवाच ॥ श्रुत्वैव वचनं तस्य कोट्टवी तु तदा विभोः। नैव वासः समाधत्ते कुमारपरिरक्षणात्। १०७६२
॥ भगवानुवाच ॥ अथोवाह गुहं शीघ्रमपयाहि रणाजिरात्। स्वस्ति ह्येवं भवेदद्य योत्स्यते योत्स्यता मया।
तांश्च दृष्ट्वा स्थितो देवो हरिः संग्राममूर्द्धनि। संजहार ततश्चक्रं भगवान् वासवानुजः।
एवमुक्ते तु वचने देवदेवेन धीमता। अपवाह्य गुहं देवी हरपार्श्वमथागता।
एतस्मिन्नन्तरे चैव वर्त्तमाने महाहवे। कुमारे रक्षिते देव्या वाणस्तं देशमाययौ।
अपयातं गुहं दृष्ट्वा मुक्तं कृष्णेन संयुगात्। वाणश्चिन्तयते तत्र स्वयं योत्स्यामि माधवं। १०७६०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे गुहापयाने पञ्चाशीत्यधिकशततमोऽध्यायः॥ १८५॥
॥ वैशम्पायन उवाच ॥ ततस्तूर्य्यनिनादैश्च भेरीणाञ्च महास्वनैः। सिंहनादैश्च शूराणां वाणः कृष्णमयाद्रवत्।
दृष्ट्वा वाणन्तु निर्यातं युद्धायैव व्यवस्थितं। आरुह्य गरुडं कृष्णो वाणायाभिमुखो ययौ।
आयान्तमथ दृष्ट्वैव यदूनां वृषभं रणे। वैनतेयं समारूढं कृष्णमप्रतिमौजसं।
अथ वाणस्तु तं दृष्ट्वा प्रमुखे प्रत्युपस्थितं। उवाच वचनं क्रुद्धो वासुदेवं तरस्विनं।
॥ वाण उवाच ॥ तिष्ठ तिष्ठ न मेऽद्य त्वं जीवन् प्रतिगमिष्यसि। द्वारकां द्वारकास्थांश्च सुहृदो द्रक्ष्यसे न च। १०७६२
सुवर्णवर्णान् वृक्षाग्रांश्च द्रक्ष्यसि माधव। मयाभिभूतः समरे मुमूर्षुः कालचोदितः।
त्वमद्याष्टभुजः संख्ये कथं वाहुसहस्रिणा। मया सह समागम्य योत्स्यसे गरुडध्वज।
अद्य त्वं वै मया युद्धे निर्ज्जितः सह वान्धवैः। द्वारकां शोणितपुरे निहतः संस्मरिष्यसि।
नानाप्रहरणोपेतं नानाङ्गदविभूषितं। अद्य वाहुसहस्रं मे कोटिभूतं निशामय।
गर्ज्जतस्तस्य वाक्यौघाः समुद्रादिव सिन्धवः। निश्चरन्ति महाघोरा वातोद्धूता इवोर्म्मयः। १०७७०
रोषपर्य्याकुले चैव नेत्रे तस्य बभूवतुः। जगद्दिधक्षतस्तस्य वह्निसूर्य्याविवोदितौ।
तच्छ्रुत्वा नारदस्तस्य वाणस्यात्यूर्ज्जितं वचः। जहास सुमहद्धासं भिन्दन्निव नभःस्थलं।
योगपट्टमपाश्रित्य तस्थौ युद्धदिदृक्षया। कौतूहलोत्फुल्लदृशः कुर्व्वन् पर्यटते मुनिः।
॥ वासुदेव उवाच ॥ वाण किं गर्ज्जसे मोहाच्छूराणां नास्ति गर्ज्जितं। एह्येहि युध्यस्व रणे त्वया किं गर्ज्जितेन ते।
यदि युद्धानि वचनैः सिद्ध्येयुर्दितिनन्दन। भवानेव जयेन्नित्यं वहुबद्धं प्रजल्पसि। १०७७८
एह्येहि जय मां वाण जितो वा वसुधातले। चिराय वाङ्मुखो दीनः पतितः शेष्यतेऽसुर।
इत्येवमुक्त्वा वाणन्तु मर्म्मभेदिभिराशुगैः। निर्व्विभेद तदा कृष्णस्तमसौ धर्म्मदायरैः।
विनिर्भिन्नस्तु कृष्णेन मार्गणैर्मर्म्मभेदिभिः। स्वयं वाणस्ततः कृष्णं शरवर्षैरवाकिरत्।
ज्वलद्भिरिव संयुक्तस्तस्मिन् युद्धे सुदारुणे। ततः परिघनिस्त्रिंशैर्गदातोमरशक्तिभिः।

सुपर्णैः पट्टिशैश्चैव छादयामास केशवं। स तु बाणसहस्रेण गर्व्वितो बहुधा रणे। १००५०
योधयामास समरे द्विबाहुमथ लीलया। सहस्रबाहुना सार्द्धमष्टबाहुरयुध्यत।
बाणेन सह संग्रामे शङ्खचक्रगदाधरः। लाघवं वीक्ष्य कृष्णस्य दानवेन्द्रो रुषान्वितः।
यदस्त्रमभवत् पूर्व्वं हिरण्यकशिपोः परं। तदस्त्रं परमं दिव्यं तपसा निर्म्मितं महत्।
यथाप्रतिहतं युद्धे सर्व्वामित्रविनाशनं। ब्रह्मणा विहितं पूर्व्वं तन्मुमोच बलेः सुतः।
तस्मिन्मुक्ते दिशः सर्व्वास्तमःपिहितमण्डलाः। प्रादुरासन् सहस्राणि सुघोराणि च सर्व्वशः। १००५५
तमसा संवृते लोके न प्राज्ञायत किञ्चन। साधु साध्विति बाणन्तु पूजयन्ति स्म दानवाः।
हाहाधिगिति देवानां चरते वागुदीरिता। ततोऽस्त्रबलवेगेन खर्चिशल्यः सुदारुणाः।
घोररूपा महावेगा निष्पेतुर्वाणवृष्टयः। नैव वाताः प्रवायन्ते न मेघाः सञ्चरन्ति च।
अस्त्रे विसृष्टे बाणेन दह्यमाने च केशवे। ततोऽस्त्रं सुमहावेगं जग्राह मधुसूदनः।
पार्ज्जन्यं नाम भगवान् यमान्तकनिभं रणे। ततो वितिमिरे लोके स चाग्निः प्रशमङ्गतः। १००६०
दानवा मोघसङ्कल्पाः सर्व्वेऽभूवंस्तदा भृशं। दानवास्त्रं प्रशान्तं तत् पार्ज्जन्यास्त्रेऽभिमन्त्रिते।
ततो देवगणाः सर्व्वे प्रणेदुर्जहसुस्तदा। हते तस्मिन् महाराज दैतेयः क्रोधमूर्च्छितः।
भूयः सञ्चोदयामास केशवं गरुडे स्थितं। सुपर्णैः पट्टिशैश्चैव छादयामास केशवं।
तस्य तां तरसा सर्व्वां बाणवृष्टिं समुद्यतां। सहसन् वारयामास केशवः शत्रुसूदनः।
केशवस्य तु बाणेन वर्त्तमाने महारणे। तस्य शार्ङ्गविनिर्मुक्तैः शरैरग्निसन्निभैः। १००६५
तिलशस्तद्रथं चक्रे साश्वध्वजपताकिनं। चिच्छेद कवचं कायान्मुकुटञ्च महाप्रभं।
कार्म्मुकञ्च महातेजा हस्तावापञ्च केशवः। विव्याध चैनमुरसि नाराचेन स्मयन्निव।
स मर्म्मभिहतः संख्ये प्रमुमोहाल्पचेतनः। तं दृष्ट्वा मूर्च्छितं बाणं प्रहारपरिपीडितं।
प्रासादवरशृङ्गस्थो नारदो मुनिपुङ्गवः। उत्थाय पश्यत तदा कक्षास्फोटनतत्परः।
वादयानो नखांश्चैव दिष्ट्या दिष्ट्येति चाब्रवीत्। अहो मे सफलं जन्म जीवितञ्च सुजीवितं। १००७०
दृष्टं मे यदिदञ्चित्रं दामोदरपराक्रमं। जय बाणं महाबाहो दैतेयं देवपूजित।
यदर्थमवतीर्णोऽसि तत् कर्म्म सफलं कुरु। एवं स्तुत्वा तदा देवं बाणे खद्योतयन् स्थितः।
इतस्ततः संपतद्भिर्नारदो व्यचरद्रणे। केशवस्य तु बाणेन वर्त्तमाने महाभये।
प्रायुध्येतां ध्वजौ तत्र तावन्योऽन्यमभिद्रुतौ। युद्धमभूद्वाहनयोरुभयोर्द्देवदैत्ययोः।
गरुडस्य च संग्रामे मयूरस्य च युध्यतः। पक्षतुण्डप्रहारैस्तौ चरणाग्रनखैस्तथा। १००७५
अन्योऽन्यं जघ्नतुः क्रुद्धौ मयूरगरुडावुभौ। वैनतेयस्ततः क्रुद्धो मयूरं दीप्ततेजसं।
जग्राह शिरसि क्षिप्रं तुण्डेनाभिपतंस्तदा। दक्षिणेन च पक्षेण निजघान महाबलः।
पक्षाघाताभिघातांश्च छलाघातामनेकशः। आक्रम्य चैनं तरसा विक्रम्य च महाबलः।
विसंज्ञं पातयामास गगनादिव भास्करं। मयूरे पतिते तस्मिन् पपातातिबलो भुवि।

वाणः परमसंविग्नश्चिन्तयन् कार्य्यमात्मनः। मयाऽतिबलमत्तेन न कृतं सुहृदां वचः। १०७८०
पश्यतां देवदैत्यानां प्राप्तोऽस्म्यापदमुत्तमां। तं दीनमनसं ज्ञात्वा रणे वाणं सुविक्लवं।
चिन्तयन् भगवान् रुद्रो वाणरक्षणमातुरः। ततः स नन्दिनं देवः प्राह गम्भीरया गिरा।
नन्दिकेश्वर संयाहि यतो वाणो रणे स्थितः। रथेनानेन दिव्येन सिंहयुक्तेन भास्वता।
वाणं संयोजयाशु त्वमलं युद्धाय चानघ। प्रमाथगणमध्येऽहं स्थास्यामि न हि मे मनः।
योद्धुं प्रभवते ह्यद्य वाणं संरक्ष गम्यतां। तथेत्युक्त्वा गतो नन्दी रथेन रथिनाम्वरः। १०७८५
यतो वाणस्ततो गत्वा वाणमाह शनैरिदं। दैत्येन्द्र रथमातिष्ठ शीघ्रमेहि महाबल।
मया सारथिना वीर एहि युध्यस्व माचिरं। आरुरोह रथं वाणो महादेवस्य धीमतः।
आरूढः स तु वाणस्तं रथं ब्रह्मविनिर्म्मितं। तं स्यन्दनमधिष्ठाय भवस्यामिततेजसः।
प्रादुश्चक्रे तदा रौद्रमस्त्रं सर्व्वास्त्रघातनं। दीप्तं ब्रह्मशिरो नाम वाणः क्रुद्धोऽतिवीर्य्यवान्।
प्रदीप्ते ब्रह्मशिरसि लोकाः क्षोभमुपागमन्। लोकसंरक्षणार्थं हि तत्सृष्टं पद्मयोनिना। १०७९०
तच्चक्रेण निहत्यास्त्रं प्राह कृष्णस्ततस्त्विमं। लोके प्रख्यातयशसं वाणमप्रतिमं रणे।
कत्थितानि क्व तेऽतानि वाण किं न विकत्थसे। अयमस्मि स्थितो युद्धे युध्यस्व पुरुषो भव।
कार्त्तवीर्य्यार्ज्जुनो नाम पूर्व्वमासीन्महाबलः। सहस्रबाहू रामेण द्विबाहुः समरे कृतः।
तथा तवापि दर्पोऽयं बाहूनां वीर्य्यसम्भवः। एष ते दर्पशमनं करोमि रणमूर्द्धनि।
यावत्ते दर्पजननान् शातयाम्यद्य वै भुजान्। तिष्ठ तिष्ठ न मेऽद्य त्वं मोक्ष्यसे रणमूर्द्धनि। १०७९५
अथ तद्दुर्लभं दृष्ट्वा युद्धं परमदारुणं। ततो देवासुरसमं हर्षान्नृत्यति नारदः।
निर्ज्जिताश्च गणाः सर्व्वे प्रद्युम्नेन महात्मना। निश्चिन्त्य वा ह्यद्रुद्दस्य देवदेवं गताः पुनः।
ततश्चक्रं सहस्रारं नरश्रेष्ठ दुरासदं। जग्राह पुरुषव्याघ्रो वाणबाहुप्रशान्तये।
तेजो यज्ज्योतिषाञ्चैव तेजो वज्राग्निजं तथा। सुरेशस्य च यत्तेजस्तच्चक्रे पर्य्यवस्थितं।
वेतार्चिषेव यत्तेजो यच्चाग्निहोत्रधारिणां। ऋषीणाञ्च तपोध्यानं तच्चक्रे पर्य्यवस्थितं। १०८००
पतिव्रतानां यत्तेजः प्राणस्य प्रणयस्य च। दक्ष यज्ञधरस्यापि तच्चक्रे पर्य्यवस्थितं।
नागराक्षसयक्षाणां गन्धर्व्वाप्सरसामपि। त्रैलोक्यस्य च यत् प्राणं सर्व्वं चक्रे प्रतिष्ठितं।
तेजसा तेन संयुक्तं भास्वता प्रभ्यलच्छुभं। वपुषा तेन चादत्ते वाणस्य प्रमुखे स्थितं।
चक्रोद्यतकरं दृष्ट्वा भगवन्तं रणाजिरे। ज्ञात्वाऽतितेजसं चक्रं कृष्णेनाभ्युद्यतं रणे।
अनमेयमनार्य्यं च रुद्राणीमथ रौद्रिवः। अमेयमितमेवोच्चं चक्रं कृष्णेन धार्य्यते। १०८०५
यन्न वारयते देवि त्वं वाणचक्रं न मुञ्चति। ततस्त्वरवरः कृत्वा देवो लम्बामथाब्रवीत्।
त्वं गच्छ त्वमेव शीघ्रं वै वाणसंरक्षणम्प्रति। ततो योगं समाधाय चक्रया विमलाकृता।
कृष्णदेवस्य तद्रूपं दर्शयन्तु पार्श्वमागता। अन्तर्द्धानमुपागम्य सुक्त्वा वा वाससो पुनः।
परित्राणाय वाणस्य विजयाधिष्ठिता ततः। प्रमुखे वासुदेवस्य दिग्वासा कोटवी स्थिता।

तां दृष्ट्वाऽथ पुनः प्राप्तां देवीं रुद्रस्य सम्मतां । लम्बां द्वितीयां तिष्ठन्तीं कृष्णो वचनमब्रवीत् । १०८१०
भूयस्त्वमसितापाङ्गि विवस्त्राऽवस्थिता रणे । वाणसंरक्षणपरा हन्मि वाणं न संशय ।
एवमुक्ता तु कृष्णेन वाणसंरक्षणार्थिनी । गिरा मधुरया देवी वाक्यञ्चेदमुवाच ह ।
जाने त्वां सर्व्वलोकानां स्रष्टारं पुरुषोत्तमं । महाभागं महादेवमनन्तं नीलमव्ययं ।
पद्मनाभं हृषीकेशं लोकानामादिसम्भवं । नार्हसे देव हन्तुं वै वाणमप्रतिमं रणे ।
प्रयच्छस्वाभयं वाणे जीवपुत्त्रीत्वमेव च । मया दत्तवरो ह्येष भूयश्च परिरक्ष्यते । १०८१५
न मे मिथ्या समुद्योगं कर्त्तुमर्हसि माधव । एवमुक्ते तु वचने देव्या परपुरञ्जय. ।
क्रुद्धः प्रभाषते वाक्यं शृणु सत्यं तु भाविनि । वाणो बाहुसहस्रेण नर्द्दते दर्पमास्थित. ।
एतेषां छेदनं तस्य कर्त्तव्य नात्र संशय । द्विबाहुना च वाणेन जीवपुत्री भविष्यसि ।
आसुरं दर्पमाश्रित्य न च मां संश्रयिष्यति । एवमुक्ते तु वचने कृष्णेनाक्लिष्टकर्म्मणा ।
प्रोवाच देवी वाणोऽयं देवदेव भवेदिति । अथ तां कार्त्तिकेयस्य मातरं सोऽभिभाष्य वै । १०८२०
तत क्रुद्धो महाबाहुः कृष्णः प्रहरताम्वरः । प्रोवाच वाणं समरे वदतां प्रवरः प्रभुः ।
युध्यतां युध्यतां संख्ये भवतां कीदृशी स्थिता । अशक्तानामिव रणे धिग्वाण तव पौरुषं ।
एवमुक्त्वा तत. कृष्णस्तच्चक्रं परमात्मवान् । निमीलिताक्षो व्यसृजद्वाणं प्रति रणे स्थित. ।
क्षेपणाद्यस्य मुह्यन्ति लोकाः सस्थाणुजङ्गमाः । क्रव्यादानि च भूतानि तृप्तिं यान्ति महाम्रधे ।
तमप्रतिमकर्म्माणं समानं सूर्य्यवर्च्चसा । चक्रमुद्यम्य समरे कोपदीप्तो गदाधरः । १०८२५
स मुष्णन्दानवं, तेजः समरे स्वेन तेजसा । चिच्छेद बाहुचक्रेण श्रीधरः परमौजसा ।
अलातचक्रवत्तूर्णं भ्रममाणं रणाजिरे । वाणस्य रथमार्गे च द्वितीय इव भास्कर ।
विष्णुचक्रं भ्रमत्याशु शैघ्र्याद्रूपं न दृश्यते । तस्य बाहुसहस्रस्य पर्य्यायेण पुन पुन. ।
वाणस्य च्छेदनं चक्रे तच्चक्रं रणमूर्द्धनि । कृत्वा द्विबाहुं तं वाणं छिन्नशाखमिव द्रुमं ।
पुन करागे कृष्णस्य प्राप्तश्चक्रं सुदर्शनं । १०८३०
॥ वैशम्पायन उवाच ॥ कृतकार्य्ये तु संप्राप्ते चक्रे दैत्यनिपातने । शरीरेण प्रस्रवता रुधिरौघपरिप्लुतः ।
सोऽभवत्पर्व्वताकारश्छिन्नबाहुर्म्महाबल । असृङ्मूत्रश्च विविधान्नादान्मुञ्चन् यथा घन. ।
तस्य नादेन महता केशवो रिपुसूदनः । चक्रं भूय. क्षेप्तुकामो वाणनाशार्थमच्युत ।
तमुपेत्य महादेव कुमारसहितोऽब्रवीत् ।
॥ महेश्वर उवाच ॥ कृष्ण कृष्ण महाबाहो जाने त्वां पुरुषोत्तम । मधुकैटभहन्तारं देवदेवं सनातनं । १०८३५
लोकाना त्वं गतिर्द्देव त्वत्त. सृतमिदं जगत् । अजेयस्त्वं त्रिभिर्लोकै सदेवासुरमानुषै. ।
तस्मात् संहर दिव्य त्वमिदं चक्रं समुद्यतं । अनिवार्य्यमसंहार्य्यं रणे शत्रुभयङ्करं ।
वाणस्यास्याभयं दत्तं मया केशिनिसूदन । तन्मे न स्यान्मृषावाक्यमतस्त्वां क्षमयाम्यहं ।
॥ कृष्ण उवाच ॥ जीवता देव वाणोऽयमेतच्चक्र निवर्त्तितं । मान्यस्त्वं देवदेवानामसुराणाञ्च सर्व्वश. ।

नमस्तेऽस्तु गमिष्येऽहं यत् कार्य्यं तन्महेश्वर। न तावत् क्रियते तस्मान्मामनुज्ञातुमर्हसि। १०८०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे वाणभुजच्छेदे षडशीत्यधिकशततमोऽध्यायः॥ ॥ १८६ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्का महादेवं कृष्णस्तूर्णं गरुत्मता। जगाम तत्र यत्रास्ते माधुरिः संयतः शरैः।
गते कृष्णे ततो नन्दी वाणमाह शुभं वचः। गच्छ वाण त्वनेनैव देवदेवस्य चाग्रतः।
तच्छ्रुत्वा नन्दिवाक्यन्तु वाणोऽगच्छत शीघ्रगः। छिन्नबाहुं ततो वाणं दृष्ट्वा नन्दी प्रतापवान्।
अपवाह्य रथेनैव यतो देवस्ततो ययौ। ततो नन्दी पुनर्व्वाणं प्रोक्तवानुत्तरं वचः।
वाण वाण प्रनृत्यस्व श्रेयस्तव भविष्यति। एष देवो महादेवः प्रसादसुमुखस्तव। १०८५
शोणितौघप्लुतैर्गात्रैर्नन्दिवाक्यप्रचोदितः। जीवितार्थी ततो वाणः प्रमुखे शङ्करस्य वै।
प्रानृत्यद्भयसंविग्नो दानवः स विचेतनः। अवस्थां करुणां प्राप्तो भयविक्लवलोचनः।
तं दृष्ट्वा च प्रनृत्यन्तं भयोद्विग्नं पुनः पुनः। नन्दिवाक्यप्रवर्त्तितं भक्तानुग्रहकृद्भवः।
कारुण्यवशमापन्नो महादेवोऽब्रवीद्वचः। वरं वृणीष्व वाण त्वं यत्ते मनसि वर्त्तते।
प्रसादसुमुखोऽहन्ते प्रेक्ष्य कालोऽयमागतः। १०९०
॥ वाण उवाच॥ अजरश्चामरश्चैव भवेयं सततं विभो। एष मे प्रथमो देव वरस्तु यदि मन्यसे।
॥ हर उवाच ॥ तुल्योऽसि दैवतैर्वाण न मृत्युस्तव विद्यते। अन्यं वरं वृणीष्व त्वमनुग्राह्योऽसि मे सदा।
॥ वाण उवाच ॥ यथाऽहं शोणिताद्दिग्धो भृशार्त्तो भयपीडितः। भक्तानां नृत्यतामेवं पुत्रजन्म भवेद्भव।
॥ हर उवाच॥ निराहाराः क्षमायुक्ताः सत्यार्ज्जवपरायणाः। मद्भक्ता येऽपि नृत्यन्ति तेषामेवं भविष्यति।
॥ भव उवाच ॥ तृतीयं त्वमतो वाण वरं वरय यद्गतं। तद्विधास्यामि ते पुत्र सफलोऽस्तु भवानिह। १०९५
॥ वाण उवाच ॥ चक्रपाटनजा घोरा रुजस्तोत्रा हि या मम। वरेण नास्तृतीयेन शान्तिं गच्छन्तु मे भव।
॥ हर उवाच ॥ चक्रपाटनजा घोरा रुजस्तेऽसुरसत्तम। न भविष्यन्ति गात्रेषु वलवांश्च भविष्यसि।
॥ देव उवाच ॥ चतुर्थं ते वरं दद्मि वृणीष्वासुर काङ्क्षितं। न तेऽहं विमुखस्तात प्रसादसुमुखो ह्यहं।
॥ वाण उवाच॥ प्रमथगणवंशस्य प्रथमः स्यामहं विभो। महाकाल इति ख्यातिं गच्छेयं शाश्वतीः समाः।
॥ वैशम्पायन उवाच ॥ एवं भविष्यतीत्याह देवो वाणं महाद्युतिः। दिव्यस्त्रोऽव्रतैर्गात्रैर्निर्व्रणश्च समाश्रयात्। ११००
समातिसर्गोद्वाण त्वं भव चैवाकुतोभयः। भूयोऽपि ते वरं दद्मि प्रख्यातवलपौरुष।
तत्त्वं शृणुष्व भद्रं ते मत्तो यदभिकाङ्क्षितं।
॥ वाण उवाच ॥ वैरूप्यमङ्गजं किञ्चिन्माभून्मे देवसत्तम। द्विवाहुत्वेऽपि मे देवो न विरूपो भवेद्भव।
॥ हर उवाच ॥ भविता सर्व्वमेतत्ते यथेच्छसि महासुर। भक्तस्त्वं मे न चादेयं भक्तानां विद्यतेऽनघ।
॥ वैशम्पायन उवाच ॥ ततोऽब्रवीन्महादेवो वाणं स्मितमयानिकं। एवं ते भविता वाण यत्त्वया समुदाहृतं। ११०५
एतावद्भगवानुक्त्वा त्रिनेत्रो गणसंवृतः। पश्यतां सर्व्वभूतानां तत्रैवान्तरधीयत।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणवरलाभे सप्ताशीत्यधिकशततमोऽध्यायः॥ १८७॥
॥ वैशम्पायन उवाच ॥ एवं वरान् बहून् लब्ध्वा वाणः प्रीतमनाभवत्। जगाम सह रुद्रेण महाकालत्वमागतः।

वासुदेवोऽपि बहुधा नारदं पर्यपृच्छत । क्वानिरुद्धस्तु भगवन् संयतो नागबन्धनैः ।
श्रोतुमिच्छामि तत्त्वेन खेदक्लिन्नं हि मे मनः । अनिरुद्धे हृते वीरे क्षुभिता द्वारका पुरी ।
शीघ्रं तं मोचयिष्यामि यदर्थं वयमागताः । अद्य तं नष्टशत्रुं वै द्रष्टुमिच्छामहे वयं । १०८७०
स तु देशो हि भगवन् विदितस्तव सुव्रत । एवमुक्तस्तु कृष्णेन नारदः प्रत्यभाषत ।
कन्यापुरे कुमारोऽसौ बद्धो नागैस्तु माधव । एतस्मिन्नन्तरे शीघ्रं चित्रलेखा ह्युपस्थिता ।
बाणस्योत्तमवर्त्तस्य दैत्येन्द्रस्य महात्मनः । इदमन्तः पुरं देव प्रविश त्वं यथासुखं ।
ततः प्रविष्टास्ते सर्व्वे अनिरुद्धस्य मोक्षणे । बलः सुपर्णः कृष्णश्च प्रद्युम्नो नारदस्तथा ।
ततो दृष्ट्वैव गरुडं येऽनिरुद्धशरीरगाः । शररूपा महासर्पा वेष्टयित्वा तनुं स्थिताः । १०८७५
सर्व्वे ते सहसा देहात्तस्य निःसृत्य भोगिनः । क्षितिं समवगाहन्त सञ्चत्यावस्थिताः शराः ।
दृष्टः स्पृष्टश्च कृष्णेन सोऽनिरुद्धो महात्मना । स्थितः प्रीतमना भूत्वा प्राञ्जलिर्व्वाक्यमब्रवीत् ।
॥ अनिरुद्ध उवाच ॥ देवदेव सदा युद्धे जेता त्वमसि केशव । शक्तो वै प्रमुखे स्थातुं साक्षादपि शचीपतिः ।
॥ भगवानुवाच ॥ आरोह गरुडं तूर्णं गच्छाम द्वारकां पुरीं । एवमुक्तोऽनिरुद्धस्तु उषया सह कन्यया ।
स्थितः प्रीतमना भूत्वा ज्ञात्वा बाणं जितं रणे । ततो महाबलं देवं बलभद्रं यशस्विनं । १०८८०
अभिवादयते हृष्टः सोऽनिरुद्धः प्रतापवान् । माधवञ्च महात्मानमभिवाद्य कृताञ्जलिः ।
खगोत्तमं महावीर्य्यं सुपर्णञ्चाभ्यवादयत् । ततो मकरकेतुञ्च चित्रबाणधरं प्रभुं ।
पितरं सोऽभ्युपागम्य प्रद्युम्नमभ्यवादयत् । सखीगणवृता चैव सा स्नुषा कुलनन्दिनी ।
बलञ्चातिबलञ्चैव वासुदेवं चतुर्भुजं । असंख्यातगतिञ्चैव सुपर्णमभिवाद्य च ।
पुष्पबाणधरञ्चैव लज्जमानाभ्यवादयत् । ततः शक्रस्य वचनान्नारदः परमद्युतिः । १०८८५
वासुदेवसमीपस्थः प्रहसन् पुनरागतः । वर्द्धापयति तं देवं गोविन्दं शत्रुसूदनं ।
दिष्ट्या वर्द्धसि गोविन्द अनिरुद्धसमागमात् । ततोऽनिरुद्धसहिता नारदं प्रणतास्तदा ।
आशीर्भिर्व्वर्द्धयित्वा च देवर्षिः कृष्णमब्रवीत् । अनिरुद्धस्य वीर्य्याढ्यो विवाहः क्रियतां विभो ।
जम्बूलमालिकां द्रष्टुं श्रद्धा हि मम जायते । ततः प्रहसिताः सर्व्वे नारदस्य वचः श्रवात् ।
कृष्णः प्रोवाच भगवन् क्रियतामाशु माचिरं । एतस्मिन्नन्तरे तत्र कुम्भाण्डः समुपस्थितः । १०८९०
वैवाहिकांस्तु संभारान् गृह्य कृष्णं नमस्य च ।
॥ कुम्भाण्ड उवाच ॥ कृष्ण कृष्ण महाबाहो भव त्वमभयप्रदः । शरणागतोऽस्मि ते देव प्रसीदेशोऽञ्जलिस्तव ।
नारदस्य वचः श्रुत्वा प्रागेव मधुसूदनः । अभयं यच्छते तस्मै कुम्भाण्डाय महात्मने ।
कुम्भाण्ड मन्त्रिणां श्रेष्ठ प्रीतोऽस्मि तव सुव्रत । भुक्तं ते विजानामि राष्ट्रिकोऽस्तु भवानिह ।
सन्त्यातिपत्रः सुसुखी निर्वृतोऽस्तु भवानिह । राज्यञ्च ते मया दत्तं चिरं जीव ममाश्रयात् । १०८९५
एतद्दत्त्वाऽभयं तस्मै कुम्भाण्डाय महात्मने । विवाहमकरोत्तत्र सोऽनिरुद्धस्य वीर्य्यवान् ।
ततस्तु भगवान् वह्निः स्वयं तत्र उपस्थितः । विवाहे चानिरुद्धस्य नक्षत्रञ्च शुभं भवेत् ।

ततोऽप्सरोगणास्तत्र कौतुकं कर्त्तुमागताः। स्नातः स्वलङ्कृतः सोऽप्यनिरुद्धो भार्य्यया सह।
ततः स्त्रियः शुभैर्व्वाक्यैर्गन्धर्व्वाश्च अगुस्तदा। विद्याधरगणैश्चैव विवाहमुपशोभयन्।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अनिरुद्धविवाहे अष्टाशीत्यधिकशततोऽध्यायः॥ १८८॥
१०९०० ॥ वैशम्पायन उवाच॥ ततो निर्व्वर्त्तयित्वा तु विवाहं मधुसूदन। अनिरुद्धस्य सुप्रज्ञः सर्व्वदेवगणैर्वृतः।
आमन्त्र्य वरदं रुद्रं देवोश्चैव गुहस्य तं। चकार गमने बुद्धिं कृष्णः परपुरञ्जयः।
द्वारकाभिमुखं कृष्णं ज्ञात्वा मनुजिवर्षभं। प्रीत्यर्थं वासुदेवस्य कुम्भाण्डो वाक्यमब्रवीत्।
शृणु मे पुण्डरीकाक्ष विज्ञाप्यं मधुसूदन। बाणस्य गावस्तिष्ठन्ति ह्रदे तु वरुणस्य वै।
यासाममृतकल्पं हि क्षीरं क्षरति माधव। यत् पीत्वातिबलश्चैव नरो भवति दुर्ज्जयः।
१०९०५ कुम्भाण्डेनैवमाख्याते हरिः प्रीतमनास्तदा। गमनाय मतिञ्चक्रे गन्तव्यमिति निश्चितं।
ततस्तु भगवान् ब्रह्मा बङ्काय स तु केशवं। जगाम ब्रह्मलोकं स वृतः स्वभवनालयैः।
इन्द्रो महद्रूपैश्चैव द्वारकाभिमुखो ययौ। यतः कृष्णस्ततः सर्व्वे गच्छन्ति प्रियकाङ्क्षिणः।
शांह्लेन मयूरेण सखीभिः परिवारिता। द्वारकाभिमुखी स्नुषा देव्या प्रस्थापिता ययौ।
ततो बलश्च कृष्णश्च प्रद्युम्नश्च महाबलः। आरूढवन्तो गरुडमनिरुद्धश्च वीर्य्यवान्।
१०९१० प्रस्थितश्च स तेजस्वी गरुडः पक्षिणां वरः। उन्मूलयंस्तरुगणान् कम्पयंश्चापि मेदिनीं।
आनुशाच दिशः सर्व्वा रेणुध्वस्तमिवाम्बरं। गरुडे संप्रयाते तु मन्दरश्मिश्च भास्करः।
ततस्ते दीर्घमध्वानं प्रययुः पुरुषर्षभाः। आरुह्य गरुडं सर्व्वे जित्वा बाणं महौजसं।
ततोऽम्बरतलस्थास्ते वारुणी दिशमास्थिताः। अपश्यन्त महात्मानो गास्तु दिव्यपयःप्रदाः।
येऽत्रावनविचारिण्यो बाणगाव उपस्थिताः। स विज्ञाय ततो रूपं कुम्भाण्डवचनश्रवात्।
१०९१५ कृष्णः प्रहरतां श्रेष्ठस्तत्त्वतोऽर्थविशारदः। निशम्य बाणगावस्तास्तु चक्रे मनस्तदा।
आस्थितो गरुडं प्राह सर्व्वलोकादिरव्ययः।
॥ भगवानुवाच॥ गरुड त्वं याहि तत्र यत्र बाणस्य गोधनं। आह मां सत्यभामा च बाणगा वै समानय।
यासां पीत्वा किल क्षीरं न जीर्य्यन्ति महासुराः। विज्वरा जरया त्यक्ता भवन्ति किल अमराः।
तास्त्वमानय भद्रं ते यदि कार्य्यं न लुप्यते। अथवा कार्य्यलोपो वै नैव तासु मनः कृथाः।
१०९२० इति मामवदत् सत्या तास्चैव विदिता मम।
॥ गरुड उवाच॥ दृश्यन्ते गावस्तास्ता दृष्ट्वा मां वरुणालये। विशन्ति सहसा देव कार्य्यमत्र विधीयतां।
तथेत्युक्ता तु गरुडः पक्षवातेन चामर। महता क्षोभयित्वा च विवेश वरुणालयं।
दृष्ट्वा क्षेम गरुडं प्राप्तं वै वरुणालयं। वारुणाश्च गणाः सर्व्वे संभ्रान्ताः प्रचक्रमुः।
ततस्तु वारुणं सैन्यमभियातं सुदुर्ज्जयं। प्रमुखे वासुदेवस्य नानाप्रहरणोद्यतं।
१०९२५ ततस्तु तस्य प्रमुखे वासुदेवस्य धीमतः। तद्युद्धमभवद्घोरं वारुणैः पक्षगारिणा।
तेषामापततां संख्ये वारुणानां सहस्रशः। अर्धं बलसमायुक्तं केशवेन महात्मना।

ततस्ते प्रहृता यान्ति तमेव वरुणालयं । षष्टीरथसहस्राणि षष्टीरथशतानि च ।
वारुणानि प्रयुक्तानि दीप्तशस्त्राणि संयुगे । तद्बलं कृष्णबाणौघैर्दह्यमानं समन्ततः ।
भग्नं तद्वारुणं सैन्यं नैव त्राणमविन्दत । ततस्तु बलिभिः शूरैर्बलदेवजनार्दनैः ।
सप्रद्युम्नानिरुद्धैश्च गरुडेन च सर्व्वशः । शरौघैर्विविधैस्तीक्ष्णैर्बध्यमानं सहस्रशः । १९८१
ततो भग्नं बलं दृष्ट्वा कृष्णेनाक्लिष्टकर्म्मणा । वरुणस्तत्र संभ्रान्तो निर्ययौ यत्र केशवः ।
ऋषिभिर्द्देवगन्धर्व्वैस्तथैवाप्सरसां गणैः । संस्तूयमानो बहुधा वरुणः प्रत्यदृश्यत ।
छत्रेण ध्रियमाणेन पाण्डरेण वपुष्मता । सलिलस्राविणा श्रेष्ठं चापमुद्यम्य विष्ठितः ।
अपाम्पतिरतिक्रुद्धः पुत्रपौत्रबलान्वितः । आह्वयामास युद्धाय विस्फारितमहाधनुः ।
स तु प्रध्मापयन् शङ्खं वरुणः समधावत । हरिं हर इव क्रोधाद्वाणजालैः समावृणोत् । १९८११
ततः प्रध्माप्य जलजं पाञ्चजन्यं जनार्द्दनः । बाणवर्षाकुलाः सर्व्वा दिशश्चक्रे जनार्द्दनः ।
ततः शरौघैर्व्विमलैर्व्वरुणः पीडितो रणे । स्मयन्निव तदा कृष्णं वरुणः प्रत्ययोधयत् ।
ततोऽस्त्रं वैष्णवं घोरमभिमन्त्र्याहवे स्थितः । वासुदेवोऽब्रवीद्वाक्यं प्रमुखे तस्य धीमतः ।
इदमस्त्रं महारौद्रं वैष्णवं शत्रुमर्द्दनं । मयोद्यतं वधार्थन्ते तिष्ठेदानीं स्थिरो भव ।
ततस्तं वरुणो देवो वैष्णवं शस्त्रमुत्तमं । वारुणास्त्रेण संयोज्य विननाद महाबलः । १९८१५
तस्मात्प्रवितता ह्यापो वरुणस्य विनिःसृताः । वैष्णवास्त्रस्य शमने वर्त्तन्ते समितिञ्जय ।
आपस्तु वारुणास्त्रेण सिक्ता ज्वलत वैष्णवं । दह्यन्ते वारुणास्त्रे ततोऽस्त्रे ज्वलिते पुनः ।
वैष्णवे तु महावीर्य्ये दिशो भीताः प्रदुद्रुवुः । अस्त्रं प्रज्वलितं दृष्ट्वा वरुणः कृष्णमब्रवीत् ।
स्मर तां प्रकृतिं पूर्व्वामव्यक्तां व्यक्तलक्षणां । तमो जहि महाभाग तमसा मुह्यसे कथं ।
सत्त्वस्थो नित्यमाग्नेस्त्वं योगेश्वर महामते । पञ्चभूताश्रयान्दोषानहङ्कारञ्च संत्यज । १९८२५
येयं ते वैष्णवी मूर्त्तिस्तस्या ज्येष्ठोऽस्म्यहं विभो । ज्येष्ठभावेन मान्यस्ते किं मां दग्धुमिहेच्छसि ।
नाग्निर्विक्रमते ह्यग्नौ त्यज कोपं युधाम्बर । त्वयि न प्रभविष्यन्ति जगतः प्रभवो ह्यसि ।
पूर्व्वं हि या त्वया सृष्टा प्रकृतिर्विकृतात्मिका । धर्म्मिणी बीजभावेन पूर्व्वधर्म्मस्य संश्रिता ।
आग्नेयञ्चैव सौम्यञ्च प्रकृत्यैवेदमादितः । त्वया सृष्टं जगत् सर्व्वं स कथं मुह्यसे मयि ।
अजेय शाश्वतो देवः स्वयम्भूर्भूतभावनः । अक्षयश्चाव्ययश्चैव भावाभावौ महाद्युते । १९८३०
रक्ष मां रक्षणीयोऽहं त्वयाऽनघ नमोऽस्तु ते । आदिकर्त्तासि लोकानां त्वयैतद्दकलीकृतं ।
किं क्रीडसि महादेव बाल क्रीडनकैरिव । न ह्यहं प्रकृतिद्वेषी नाहं प्रकृतिदूषकः ।
प्रकृतिर्या विकारेषु वर्त्तते पुरुषर्षभ । तस्या विकारशमने वर्त्तसे त्वं यथाविधि ।
विकारो वा विकाराणां विकाराय न तेऽनघ । तानधर्म्मविदो मन्दान् भवान् विकुरुते सदा ।
इयं हि प्रकृतिर्द्दोषैस्तमसा युज्यते यदा । रजसा चापि संसृष्टा तदा मोहः प्रवर्त्तते । १९८३५
परावरज्ञ सर्व्वज्ञ ऐश्वर्य्यविधिमाश्रितः । किं मोहयसि नः सर्व्वान् प्रजापतिरिव स्वयं ।

वरुणेनैवमुक्तस्तु कृष्णो लोकपरायणः । भावज्ञः सर्व्वविद्धीरस्तत. प्रीतमना ह्यभूत् ।
इत्येवमुक्त. प्रहसन् कृष्णो वचनमब्रवीत् । गास्त्वं प्रयच्छ मे देव बाणार्थं भीमविक्रम ।
इत्येवमुक्त. कृष्णेन वाक्यं वाक्यविशारदः । वरुणो ह्यब्रवीद्भूय. शृणु मे मधुसूदन ।
॥ वरुण उवाच ॥ बाणेन सार्द्धं समयो मया देव पुरा कृत. । कथञ्च समयं कृत्वा कुर्य्यां वितथमन्यथा ।		१०९६०
त्वमेव वेद सर्व्वस्य यथासमयभेदत । चारित्र्य दुष्यते तात न च सद्भि. प्रशस्यते ।
धर्म्मभागैर्नरो नित्यं वर्ज्यते मधुसूदन । न च लोकानवाप्नोति पाप. समयभेदत. ।
प्रसीद धर्म्मलोपस्त माभून्मे मधुसूदन । न मां समयभेदेन योक्तुमर्हसि माधव ।
जीवन्नाहं प्रदास्यामि गा एता वृषभेक्षण । हत्वा नयस्व मां गास्तु एष मे समयः पुरा ।
एष मे तव चाख्यात समयो मधुसूदन । सत्यमेव महावादो न मिथ्या च सुरेश्वर ।		१०९६५
यदि तेऽहमनुग्राह्यो रक्ष मां मधुसूदन । अथ वा गोषु निर्व्वन्धो हत्वा नय महाभुज ।
॥ वैशम्पायन उवाच ॥ वरुणेनैवमुक्तस्तु यदूनां वंशवर्द्धन. । अभेद्यं समयं मत्वा न्यस्तवादो गवां प्रति ।
स प्रहस्य ततो वाक्यं व्याजहारार्थकोविद । तस्मान्मुक्तोऽसि यद्येवं बाणेन समय. कृतः ।
प्रश्रितैर्मधुरैर्व्वाक्यैस्तत्त्वार्थमनुभाषिते. । कथं पापं करिष्यामि वरुण त्वय्यहं विभो ।
गच्छ मुक्तोऽसि वरुण सत्यसन्धस्तु नो भवान् । त्वत्प्रियार्थं मया मुक्ता बाणगावो न संशयः ।		१०९७०
ततस्तूर्य्यनिनादैश्च भेरीणाञ्च महास्वनै । अर्घमादाय वरुण. केशवं प्रत्यपूजयत् ।
केशवोऽर्घं तदा गृह्य वरुणाद्यदुनन्दन. । बलं पूजयते देव कुशली च समाहित. ।
वरुणायाभयं दत्त्वा वासुदेव प्रतापवान् । द्वारकां प्रस्थित. शौरि शचीपतिसहायवान् ।
तत्र देवाः समरुत ससाध्याः सिद्धचारणा. । गन्धर्व्वाप्सरसश्चैव किन्नराश्चान्तरिक्षगा. ।
अनुगच्छन्ति भूतेशं सर्व्वभूतादिमव्ययं । आदित्या वसवो रुद्रा अश्विनौ प्रवरास्तथा ।		१०९७५
विद्याधरगणाश्चैव ये चान्ये सिद्धचारणाः । गच्छन्तमनुगच्छन्ति यशसा विजयेन च ।
नारदश्च महाभाग. प्रस्थितो द्वारकां प्रति । तुष्टो बाणजयं दृष्ट्वा वरुणस्य कृतप्रियं ।
कैलासशिखरप्रख्ये प्रासादे. कन्दरेषु ते । दूरादेव च तां दृष्ट्वा द्वारकां द्वारमालिनीं ।
पाञ्चजन्यस्य निर्घोषं चक्रे चक्रगदाधरः । संज्ञां प्रयच्छते देवो द्वारकापुरवासिनां ।
देवानुयात्रानिर्घोषं पाञ्चजन्यस्य निस्वनं । श्रुत्वा द्वारवती सर्व्वा प्रहर्षमतुलं गता ।		१०९८०
पूर्णकुम्भैश्च लाजैश्च पुष्पैश्च बहुविस्तरैः । द्वारोपशोभितां सर्व्वां कृत्वा द्वारवतीं पुरीं ।
सम्मृष्टरथ्यां सश्रीकां बहुरत्नोपशोभितां । विप्राश्चार्घं समादाय तथैव कुलनैगमाः ।
जयशब्दैश्च विविधै पूजयन्ति स्म माधवं । वैनतेयसमारूढं नीलाञ्जनचयोपमं ।
ववन्दिरे तदा कृष्णं श्रिया परमया युतं । वयोऽनुपूर्व्व्या वर्णाश्च पूजयन्ति महाबलं ।
अर्चन्ति केचिद्धन्तारं श्रेष्ठिपूर्व्वाश्च श्रेणयः । ऋषिभिर्देवगन्धर्व्वैश्चारणैश्च समन्तत ।		१०९८५
स्तूयते पुण्डरीकाक्षो द्वारकोपवने स्थितः । तदाश्चर्य्यमपश्यन्त दाशार्हगणसत्तमाः ।

निवृत्ते नारदप्रश्ने यन्मयोक्तं समासतः। श्रुतास्ते विस्तराः सर्व्वे ये पूर्व्वं जनमेजय।
विष्णोस्तु माथुरे कल्पे यत्र ते संशयो महान्। वासुदेवगतिश्चैव सा मया समुदाहृता।
आश्चर्य्यश्चैव नान्योऽस्ति आश्चर्य्यं विद्धि केशवं। सर्व्वेष्वाश्चर्य्यकल्पेषु नास्त्याश्चर्य्यमवैष्णव।
स एष धन्यो धन्यानां धन्यकृद्धन्यभावनः। देवेष्वपि सदैत्येषु नास्ति धन्यतरोऽच्युतात्।
आदित्या वसवो रुद्रा अश्विनौ मरुतस्तथा। गगनं भूर्द्दिशश्चैव सलिलं ज्योतिरेव च। ११०५०
एष धाता विधाता च संहर्त्ता काल एव च। सत्यं धर्म्मस्तपश्चैव ब्रह्मा चैव सनातनः।
अनन्तश्चैव नागानां रुद्राणां शङ्करः स्मृतः। जङ्गमाजङ्गमश्चैव जगन्नारायणोद्भवं।
एतस्माच जगत् सर्व्वं प्रसूयेत जनार्द्दनात्। जगच सर्व्वं देवेशस्तं नमस्कुरु भारत।
पूज्यश्च सततं सर्व्वैर्देवैरेष सनातनः। इत्युक्तं बाणयुद्धं ते माहात्म्यं केशवस्य च
वंशप्रतिष्ठामतुलां श्रवणादेव लप्स्यसे। ये चेदं धारयिष्यन्ति बाणयुद्धमनुत्तमं। ११०५५
केशवस्य च माहात्म्यं नाधर्मस्तान् भजिष्यति। एषा ते वैष्णवी चर्य्या मया कार्त्स्न्येन कीर्त्तिता।
पृच्छतस्तात यज्ञे ऽस्मिन्निवृत्ते जनमेजय। आश्चर्य्यपर्व्वमखिलं यो चेदं धारयेन्नरः।
सर्व्वपापविनिर्मुक्तो विष्णुलोकञ्च गच्छति। कल्यमुत्थाय यो नित्यं कीर्त्तयेत्सुसमाहितः।
न तस्य दुरितं किञ्चिदिह लोके परत्र च। ब्राह्मणः सर्व्ववेदी स्यात् क्षत्रियो विजयी भवेत्।
वैश्यो धनसमृद्धः स्याच्छूद्रो गच्छेच सद्गतिं। नाशुभं प्राप्नुयात्किञ्चिद्दीर्घमायुरवाप्नुयात्। ११०६०
॥ सौतिरुवाच ॥ इति पारिक्षितो राजा वैशम्पायनभाषितं। श्रुत्वा प्रीतमना जातो हरिवंशं द्विजर्षभाः।
एवं शौनक संक्षेपाद्विस्तरेण तथैव च। प्रोक्ता वै सर्व्ववंशास्ते किम्भूयः श्रोतुमिच्छसि।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नवत्यधिकशतोऽध्यायः॥ १९०॥ समाप्तञ्चेदं विष्णुपर्व्व॥

## ॥ अथ भविष्यपर्व्व ॥

॥ शौनक उवाच ॥ जनमेजयस्य के पुत्राः पयन्ते लोमहर्षणे। कस्मिन् प्रतिष्ठितो वंशः पाण्डवानां महात्मनां।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे। त्वत्तः श्रुतवतां श्रेष्ठ सर्व्वविद्यासि मे मतः।
॥ सौतिरुवाच ॥ पारिक्षितस्य काश्यायां द्वौ पुत्रौ सम्बभूवतुः। चन्द्रापीडश्च नृपतिः सूर्य्यापीडश्च मोक्षवित्। ११०६३
चन्द्रापीडस्य पुत्राणां शतमुत्तमधन्विनां। जानमेजय इत्येवं चात्तं भुवि परिश्रुतं।
तेषां ज्येष्ठस्तु राजासीत् पुरे वारणसाह्वये। सत्यकर्णो महाबाहुर्यज्वा विपुलदक्षिणः।
सत्यकर्णस्य दायादः श्वेतकर्णः प्रतापवान्। अपुत्रः स तु धर्म्मात्मा प्रविवेश तपोवनं।
तस्माद्वनगताद्गर्भं यादवी प्रत्यपद्यत। सुचारोर्दुहिता सुभ्रूर्मालिनी ग्राहमालिनी।
स तु जन्मनि गर्भस्य श्वेतकर्णः प्रजेश्वरः। अन्वगच्छद्धतं पूर्व्वैर्महाप्रस्थानमच्युत। ११०७०
सा दृष्ट्वा संप्रयातं तं मालिनी पृष्ठतोऽन्वगात्। पथि सा सुषुवे सुभ्रूर्नवे राजीवलोचनं।
कुमारं तं परित्यज्य भर्त्तारं साम्वगच्छत। पतिव्रता महाभागा द्रौपदीव पुरा पतीन्।

सुकुमारः कुमारोऽसौ गिरिकुञ्जे रुरोद ह । पुण्यर्थं तस्य मेघास्तु प्रादुरासन्महात्मन. ।
प्रविष्टायाश्च पुत्रौ द्वैपैप्यन्नादिस कौशिकः । दृष्ट्वा कृपान्वितौ गृह्य तौ प्रक्षालयतां जले ।
निघृष्टौ तस्य तौ पार्श्वौ शिलायां रुधिरस्रुतौ । अजश्यामौ तु पार्श्वौ तावुभावपि समाहितौ । ११०७५
तथैव च समारूढावजपार्श्वस्ततोऽभवत् । ततोऽजपार्श्व इति तौ चक्राते नाम तस्य ह ।
स तु वेमकशालायां द्विजाभ्यां परिवर्द्धितः । वेमकस्य तु भार्य्या तमुदवहत् पुत्रकारणात् ।
वेमक्याः स तु पुत्रोऽभूद्ब्राह्मणौ सचिवौ तु तौ । तेषां पुत्राश्च पौत्राश्च युगपत्तुल्यजीविन. ।
स एष पौरवो वंशः पाण्डवानां प्रतिष्ठित. । श्लोकोऽपि चात्र गीतोऽयं नाहुषेण ययातिना ।
जरासंक्रमणे पूर्व्वं भृशं प्रीतेन धीमता । आचन्द्रार्कग्रहा भूमिर्भवेदपि न संशयः । ११०८०
अपौरवा न तु मही भविष्यति कदाचन ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि एकनवत्यधिकशतोऽध्याय. ॥ १९१ ॥
॥ शौनक उवाच ॥ उक्तोऽयं हरिवंशस्ते पर्व्वाणि निखिलानि च । यथा पुरोक्तानि तथा व्यासशिष्येण धीमता ।
तत् कथ्यमानममितमितिहाससमन्वितं । प्रीणात्यस्मानमृतवत्सर्व्वपापप्रणाशनं ।
सुखश्रव्यतया वीर मनो ह्लादयतीव नः । जनमेजयस्तु नृपतिःश्रुत्वा चाख्यानमुत्तमं ।
सौते किमकरोत् पश्चात्सर्पसत्रादनन्तरं । ११०८५
॥ सौतिरुवाच ॥ जनमेजयस्तु स नृपः श्रुत्वाख्यानमनुत्तमं । यदारभत्तदाख्यास्ये सर्पसत्रादनन्तरं ।
तस्मिन् सत्रे समाप्ते तु राजा पारिक्षितस्तदा । संयष्टुं वाजिमेधेन सम्भारानुपचक्रमे ।
ऋत्विक् पुरोहिताचार्य्यानाहूयेदमुवाच ह । यक्ष्येऽहं वाजिमेधेन हय उत्सृज्यतामिति ।
ततोऽस्य विज्ञाय चिकीर्षितं तदा कृष्णो महात्मा सहसा जगाम । पारिक्षितं द्रष्टुमदीनसत्त्वं द्वैपायन. सर्व्वपरावरज्ञः ।
पारिक्षितस्तु नृपतिर्दृष्ट्वा तमृषिमागतं । अर्घ्यपाद्यासनं दत्त्वा पूजयामास शास्त्रत. । ११०९०
तौ चोपविष्टावभितः सदस्यास्तस्य शौनक । कथा बहुविधाश्चित्राश्चक्रुर्वेदार्थसंहिताः ।
ततः कथान्ते नृपतिश्चोदयामास तं मुनिं । पितामहं पाण्डवानामात्मनः प्रपितामहं ।
महाभारतमाख्यानं बह्वर्थं श्रुतिविस्तरं । निमेषमात्रमपि मे सुखश्रव्यतयागतं ।
विभूतिविस्तरकरं सर्व्वेषां वै यशस्करं । त्वया सुविहितं ब्रह्मन् शङ्के चीर्णमिवाहितं ।
अमृतेन न तृप्तिः स्याद्यथा स्वर्गसुखेन वा । तथा तृप्तिं न गच्छामि श्रुत्वेमां भारतीं कथां । ११०९५
अनुमान्य तु सर्व्वज्ञं पृच्छामि भगवन्नहं । हेतुः कुरूणां नाशस्य राजसूयो मतो मम ।
दु सहानां यथा ध्वंसो राजन्यानामुपप्लव. । राजसूय तथा मन्ये युद्धार्थमुपकल्पितं ।
राजसूयैस्तु सोमेन श्रूयते पूर्व्वमाहृत. । तस्यान्ते सुमहद्युद्धमभवत्तारकामयं ।
आहृतो वरुणेनाथ तस्यान्ते सुमहाक्रतौ । देवासुरमहायुद्धं सर्व्वभूतवधावहं ।
हरिश्चन्द्रश्च राजर्षिः क्रतुमेतमुपाहरत् । तत्राप्याडीवकं युद्धमभूत् क्षत्त्रियनाशनं । १११००
ततोऽनन्तरमार्य्येण पाण्डवेनातिदुस्तरः । महाभारतसम्भारः संवृतोऽग्निरिव क्रतुः ।

प्रहर्षमतुलं प्राप्ता दृष्ट्वा कृष्णं महाबलं । वाणं जित्वा महादेवमायान्तं पुरुषोत्तमं ।
द्वारकावासिनो वाचश्चरन्ति बहुधा तदा । प्राप्ते कृष्णे महाभागे सात्वतानां महारथे ।
गत्वा च दूरमध्वानं सुपर्णेनागते द्रुतं । धन्याः स्मोऽनुगृहीताः स्मो येषां नो जगतीपतिः ।
रक्षिता चैव गोप्ता च दीर्घबाहुर्महाबलः । वैनतेयं समारुह्य जित्वा वाणं सुदुर्ज्जयं । १०९९०
प्राप्तोऽयं पुण्डरीकाक्षो मनांस्याह्लादयन्निव । एवं कथयतामेव द्वारकावासिनां तदा ।
वासुदेवगृहं देवा विविशुस्ते महारथाः । अवतीर्य्य सुपर्णात्तु वासुदेवो बलस्तथा ।
प्रद्युम्नश्चानिरुद्धश्च गृहान् प्रविविशुस्तदा । ततो देवविमानानि दिवि सञ्चरतां तदा ।
स्थितान्येव व्यदृश्यन्त नानारूपाणि सर्व्वशः । हंसर्षभमृगैर्नागैर्वाजिमारसवर्हिणैः ।
भास्वन्ति तान्यदृश्यन्त विमानानि सहस्रशः । अथ कृष्णोऽब्रवीद्वाक्यं कुमारांस्तान् सहस्रशः । १०९९५
प्रद्युम्नादीन् समस्तांश्च श्लक्ष्णं मधुरया गिरा । एते रुद्रास्तथा दित्या वसवोऽथाश्विनावपि ।
साध्या देवास्तथाचान्ये वन्दध्वञ्च यथाक्रमं । सहस्राक्षं महाभागं दानवानां भयङ्करं ।
वन्दध्वं सहिताः शक्रं सगणं नागवाहनं । सप्तर्षयो महाभागा भगवन्तं समाश्रिताः ।
ऋषयश्च महात्मानो वन्दध्वञ्च यथाक्रमं । एते चक्रधराश्चैव एतान् वन्दत सर्व्वशः ।
सागराश्च ह्रदाश्चैव मत्प्रियार्थमिहागताः । दिशश्च विदिशश्चैव वन्दध्वञ्च यथाक्रमं । ११०००
वासुकिप्रमुखाश्चैव नागा वै सुमहाबलाः । गावश्च मत्प्रियार्थं वै वन्दध्वञ्च यथाक्रमं ।
ज्योतींषि सह नक्षत्रैर्गन्धर्व्वाप्सरकिन्नरैः । आगता मत्प्रियार्थं वै वन्दध्वञ्च यथाक्रमं ।
वासुदेववचः श्रुत्वा कुमाराः प्रणताः स्थिताः । यथाक्रमेण सर्व्वेषां देवतानां महात्मनां ।
सर्व्वान्दिवौकसो दृष्ट्वा पौरा विस्मयमागताः । पूजार्थमथ सम्भारान् प्रगृह्य द्रुतमागताः ।
अहो सुमहदाश्चर्य्यं वासुदेवस्य संश्रयात् । प्राप्यते यद्दिवौकोभिरिति वाचश्चरन्त्युत । ११००५
ततश्चन्दनचूर्णैश्च पुष्पगन्धैश्च सर्व्वशः । किरन्ति पौराः सर्व्वांस्तान् पूजयन्तो दिवौकसः ।
लाजैः प्रणामैर्धूपैश्च साम्बुद्भिर्नियमैस्तथा । द्वारकावासिनः सर्व्वे पूजयन्ति दिवौकसः ।
आहुकं वसुदेवञ्च साम्बञ्च यदुनन्दनं । सात्यकिं चोल्मुकं चैव विपृथुञ्च महाबलं ।
अक्रूरञ्च महाभागं तथा निषठमेव च । एतान्परिष्वज्य तदा मूर्द्ध्नि चाघ्राय वीर्य्यवान् ।
अन्धकश्च सभामध्ये तदोवाच शुभं वचः । वासवः सात्वतान् सर्व्वानेष वो यदुनन्दनः । ११०१०
योजयित्वा क्षणेनैव यशसा पौरुषेण च । महादेवस्य मिषतो गुहस्य च महात्मनः ।
एष वाणं रणे जित्वा द्वारकां पुनरागतः । सहस्रबाहोर्ब्बाहूनां कृत्वा व्ययमनुत्तमं ।
स्थापयित्वा द्विबाहुत्वे प्राप्तोऽयं स्वपुरो हरिः । यदर्थं जन्म कृष्णस्य मानुषेषु महात्मनः ।
तदप्यवसितं कृत्स्नं नष्टशोका वयं कृताः । पिवन्तो मधु माध्वीकं रमध्वं प्रीतिपूर्व्वकं ।
कालोयास्यत्यविरतं विषयेष्वेव सज्जतां । बाहूनां संश्रयात्पूर्व्वं वयमस्य महात्मनः । ११०१५
प्रणष्टशोका रंस्याम सर्व्वे एवामरासुखं । एवं श्रुत्वा सहस्राक्ष केशवं दानवान्तकं ।

तदस्य मूलं युद्धस्य लोकक्षयकरस्य च । राजसूयो महायज्ञः किमर्थं न निवारितः ।
राजसूये ह्यसंहार्य्ये यज्ञाङ्गस्य दुरन्वये: । मिथ्याप्रणीते यज्ञाङ्गे प्रजानां संक्षयो भुवः ।
भवानपि च सर्व्वेषां पूर्व्वेषां नः पितामहः । अतीतानागतज्ञश्च नाथश्चादिकरश्च नः ।
ते कथं भवता नेत्रा बुद्धिमन्तश्च्युता नयात् । अनाथा ह्यपराध्यन्ति कुनेतारश्च पार्थिवाः । ११ ०५
॥ व्यास उवाच ॥ कालेन विपरीतास्ते तव पूर्व्वपितामहाः । न मां भविष्यं पृच्छन्ति न चापृष्टो ब्रवीम्यहं ।
सामर्थ्यञ्च न पश्यामि भविष्यस्य निवर्त्तने । परिहर्त्तुं न शक्या हि कालेन विहिता गतिः ।
त्वया त्विदमहं पृष्टो वक्ष्याम्यागन्तुभावि यत् । अतश्च बलवान् कालः श्रुत्वाऽपि न करिष्यसि ।
न संरम्भान्नचारम्भान्न वै स्थास्यति पौरुषे । लेखा हि काललिखिता सर्व्वथा दुरतिक्रमा ।
अश्वमेधः क्रतुश्रेष्ठः क्षत्त्रियाणां परिश्रुतः । तेन भावेन ते यज्ञं वासवो धर्षयिष्यति । ११११०
यदि तच्छक्यते राजन् परिहर्त्तुं कथञ्चन । दैवं पुरुषकारेण मायजेथास्तं क्रतुं ।
नचापराधः शक्रस्य नोपाध्यायगणस्य ते । न च वा यजमानस्य कालो हि दुरतिक्रमः ।
तस्य संस्थाकृतमिदं कालस्य परमेष्ठिनः । यथा दृष्टं प्रजासर्गं गमिष्यति युगक्षये ।
तथा यज्ञफलानाञ्च विक्रेतारो द्विजातयः । तन्निबोधं निबोध त्वं त्रैलोक्यं सचराचरं ।
॥ जनमेजय उवाच ॥ निवृत्तावश्वमेधस्य किं निमित्तं भविष्यति । श्रुत्वा परिहरिष्यामि भगवन् यदि मन्यसे । ११११५
॥ व्यास उवाच ॥ निमित्तं भविता तत्र ब्रह्मकोपकृतं प्रभो । यतेथाः परिहर्त्तुं त्वमित्येतद्भद्रमस्तु ते ।
त्वया वृत्तं क्रतुश्चैव वाजिमेधं परन्तप । क्षत्त्रिया नाहरिष्यन्ति यावद्भूमिर्द्धरिष्यति ।
॥ जनमेजय उवाच ॥ निवृत्तावश्वमेधस्य ब्रह्मशापाग्नितेजसा । अहं निमित्तमिति मे भयं व्रीडा च जायते ।
कथं ह्यकीर्त्या संयुक्तः सुकृती मद्विधो जनः । लोकानुत्सहते गन्तुं खं सपाश इव द्विजः ।
यथा ह्यनागतमिदं दृष्टमत्र प्रणाशनं । यद्यस्ति पुनरावृत्तिर्यज्ञस्याश्वासयस्व मां । १११२०
॥ व्यास उवाच ॥ उपात्तयज्ञो देवेषु ब्राह्मणेषूपपत्स्यते । तेजसाऽभ्याहृतं तेजस्तेज एवावतिष्ठते ।
औद्भिज्जो भविता कश्चित् सेनानीः काश्यपोऽद्विजः । सोऽश्वमेधं कलियुगे पुनः प्रत्याहरिष्यति ।
तदन्ते तत्कुलीनश्च राजसूयमपि क्रतुं । आहरिष्यति राजेन्द्र श्वेतं ग्रहमिवान्तकः ।
यथा बलं मनुष्याणां कर्तॄणां दास्यते फलं । युगान्तद्वारमृषिभिः संवृतं विचरिष्यति ।
तदाप्रभृति हास्यन्ति नृणां प्राणाः पुराकृतीः । न निवर्त्तिष्यते लोका वृत्तान्तावर्त्तनेष्विह । १११२५
तदा सूक्ष्मो महोदर्को दुस्तरो दानमूलवान् । चातुराश्रम्यशिथिलो धर्म्मः प्रविचलिष्यति ।
तदा ह्यल्पेन तपसा सिद्धिं यास्यन्ति मानवाः । धन्या धर्म्मं चरिष्यन्ति युगान्ते जनमेजय ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि द्विनवत्यधिकशतोऽध्यायः ॥ १९२ ॥
॥ जनमेजय उवाच ॥ आसन्नं विप्रकृष्टं वा यदि कालं न विद्महे । तदा द्वापरपर्य्यन्तं युगान्ते स्पृहयाम्यहं ।
प्राप्ता वयं तु तत्कालमनया धर्म्मतृष्णया । आदास्याम. परं धर्म्मं सुखमल्पेन कर्म्मणा ।
॥ शौनक उवाच ॥ प्रजासमुद्वेगकरं युगान्तं समुपस्थितं । प्रनष्टधर्म्मं धर्म्मज्ञ निमित्तैर्वक्तुमर्हसि । १११३०

॥ शौनिरुवाच ॥ दृष्ट एवं भविष्यस्य गतिं तत्त्वेन चिन्तयन् । युगान्ते सर्व्वभूतानां भगवानब्रवीत्तदा ।
॥ व्यास उवाच ॥ अरक्षितारो हर्त्तारो बलिभागस्य पार्थिवा । युगान्ते प्रभविष्यन्ति स्वरक्षणपरायणाः ।
क्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः । शूद्राश्च ब्राह्मणाचारा भविष्यन्ति युगक्षये ।
काण्डस्पृष्टा श्रोत्रियास्तु निष्क्रियाणि हवींषि च । एकपंक्त्यामशिष्यन्ति युगान्ते जनमेजय ।
शिल्पवन्तोऽनृतपरा नरा मद्यामिषप्रियाः । मित्रभार्य्याभजिष्यन्ति युगान्ते जनमेजय । १११२५
राजवृत्ते स्थिताश्चौरा राजानश्चौरशीलिनः । भृत्या अनिर्द्दिष्टभुजो भविष्यन्ति युगक्षये ।
धनानि श्लाघनीयानि सतां वृत्तमपूजितं । अकुत्सना च पतिते भविष्यति युगक्षये ।
प्रनष्टचेष्टाः पुरुषा मुक्तकेशा विचूलिनः । ऊनषोडशवर्षाश्च प्रजास्यन्ति तदा नराः ।
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः । प्रमदाः केशशूलाश्च भविष्यन्ति युगक्षये ।
सर्व्वे ब्रह्म वदिष्यन्ति सर्व्वे वाजसनेयिनः । शूद्रा भोवादिनश्चैव भविष्यन्ति युगक्षये । १११३०
तपोयज्ञफलानाञ्च विक्रेतारो द्विजातयः । ऋतवश्च भविष्यन्ति विपरीता युगक्षये ।
शुक्लदन्ताञ्जिताक्षाश्च मुण्डाः काषायवाससः । शूद्रा धर्म्मं चरिष्यन्ति शाक्यबुद्धोपजीविनः ।
श्वापदप्रचुरत्वञ्च गवाञ्चैव परिक्षयः । स्वादूनां विनिवृत्तिश्च ज्ञातव्या तु गते युगे ।
अन्त्या मध्ये निवत्स्यन्ति मध्याश्चान्तनिवासिनः । यथानिष्टं प्रजाः सर्व्वा गमिष्यन्ति युगक्षये ।
तथा द्विहायना दम्यास्तथा पल्वलकर्षकाः । चित्रवर्षी च पर्ज्जन्यो युगे क्षीणे भविष्यति । १११३५
सर्व्वे चौरकुले जाताश्चरिष्यन्तः परस्परं । स्वल्पेनाढ्या भविष्यन्ति यत्किञ्चित् प्राप्य दुर्गताः ।
न च धर्म्मञ्चरिष्यन्ति मानवा निर्गते युगे । ऊषरा बहुला भूमिः पन्थानस्तस्कराहृताः ।
सर्व्वे वाणिजकाश्चैव भविष्यन्ति कलौ युगे । पितृदत्तानि देयानि विभजन्ते सुतास्तदा ।
हरणाय प्रपत्स्यन्ते लोभादनृतवादिनः । सौकुमार्य्ये तथा रूपे रत्ने चोपक्षयङ्गते ।
भविष्यन्ति युगान्ते च नार्य्यः केशैरलङ्कृताः । निर्व्विहारस्य भीतस्य गृहस्थस्य भविष्यति । १११४०
युगान्ते समनुप्राप्ते नान्या भार्य्यासमा गतिः । कुशीलानार्य्यभूयिष्ठं वृथारूपसमावृतं ।
पुरुषाल्पं बहुस्त्रीकं तद्युगान्तस्य लक्षणं । बहुयाचनको लोको न दास्यन्ति परस्परं ।
अविचार्य्य ग्रहीष्यन्ति दानं वर्णान्तरात्तथा । राजचौराग्निदण्डार्त्तो जनः क्षयमुपैष्यति ।
शस्यनिष्पत्तिरफला तरुणा वृद्धशीलिनः । ईहया सुखिनो लोका भविष्यन्ति युगक्षये ।
वर्षासु वाताः परुषा नीचैः शर्करवर्षिणः । सन्दिग्धः परलोकश्च भविष्यति युगक्षये । १११४५
वैश्या इव च राजन्या धनधान्योपजीविनः । युगापक्रमणे पूर्व्वं भविष्यन्ति द्विजातयः ।
अप्रवृत्ताः प्रपत्स्यन्ते समयाः शपथास्तथा । ऋणं सविनयभ्रंशं युगे क्षीणे भविष्यति ।
भविष्यत्यफलो हर्षः क्रोधश्च सफलो नृणां । अजाश्चैवोपरोत्स्यन्ते पयसोऽर्थे युगक्षये ।
अशास्त्रविदुषां पुंसामेवमेव स्वभावतः । शास्त्रोक्तस्य प्रवक्तारो भविष्यन्ति युगक्षये ।
सर्व्वं सर्व्वे विजानाति वृद्धाननुपसेव्य वै । न कश्चिदकविर्नाम युगान्ते समुपस्थिते । १११५०

न चत्राणि नियोच्यन्ति विकर्मस्था द्विजातयः । चौरप्रियाश्च राजानो युगान्ते समुपस्थिते ।
कुण्डोदृषा नैकृतिकाः सुरापा: ब्रह्मवादिनः । अश्वमेधेन यक्ष्यन्ति युगान्ते जनमेजय ।
याजयिष्यन्त्ययाज्यांश्च तथा चाभक्ष्यभक्षिणः । ब्राह्मणा धनतृष्णार्त्ता युगान्ते समुपस्थिते ।
भोःशब्दमभिधास्यन्ति न च कश्चित् पठिष्यति । एकशङ्खास्तथा नार्य्यो गवेधुकपिनद्धिकाः ।
नचत्राणि विवर्णानि विपरीता दिशस्तथा । सन्ध्यारागोऽथ दिग्दाहो भविष्यत्यधरे युगे । ११६६
पितृन् पुत्रा नियोच्यन्ति वध्वः श्वश्रूश्च कर्मसु । वाक्शरैस्तर्जयिष्यन्ति गुरून् शिष्यास्तथैव च ।
वियोनिषु च वत्स्यन्ति प्रमदासु नरास्तथा । मुखेषु च प्रयोच्यन्ति प्रमत्ताश्च नरास्तदा ।
अकृतार्थाणि भोच्यन्ति नराश्चैवाग्निहोत्रिणः । भिक्षां बलिमदत्त्वा च भोच्यन्ति पुरुषाः स्वयं ।
पतीन् सुप्तान् वञ्चयित्वा गमिष्यन्ति स्त्रियोऽन्यत. । पुरुषाश्च प्रसुप्तासु भार्य्यासु च परस्त्रियं ।
नाव्याधितो नाप्यरुजः सर्व्वं एवाभ्यसूयकः । न कृते प्रतिकर्त्ता च युगे चोणे भविष्यति । ११७०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १८३ ॥

॥ जनमेजय उवाच ॥ एवं विलुलिते लोके मनुष्याः केन पालिताः । निवत्स्यन्ति किमाचाराः किमाहारविहारिणः ।
किङ्कर्म्माणः किमीहन्तः किंप्रमाणाः किमायुषः । कांश्च काष्ठां समासाद्य प्रपत्स्यन्ते कृतं युगं ।
॥ व्यास उवाच ॥ अत ऊर्द्धं च्युते धर्म्मे गुणहीनाः प्रजास्ततः । शीलव्यसनमासाद्य प्राप्स्यन्ते ह्रासमायुषः ।
आयुर्हान्या बलग्लानिर्ब्बलग्लान्या विवर्णता । वैवर्ण्याद्व्याधिसंपीडा निर्व्वेदो व्याधिपीडनात् ।
निर्व्वेदादात्मसंबोधः सम्बोधाद्धर्म्मशीलता । एवं गत्वा परां काष्ठां प्रपत्स्यन्ते कृतं युगं । ११७५
उद्देशतो धर्म्मशीलाः केचिन्मध्यस्थतां गताः । विमर्षशीलाः केचित्तु हेतुवादकुतूहलाः ।
प्रत्यक्षमनुमानञ्च प्रमाणमिति निश्चिताः । प्रमाणैक्यं करिष्यन्ति नेति पण्डितमानिनः ।
अप्रमाणं करिष्यन्ति वेदोक्तमपरे जना. । तदा सुखभगाश्चैव भविष्यन्ति स्त्रियोऽपराः ।
नास्तिक्यपरमाश्चापि केचिद्धर्म्मविलोपकाः । भविष्यन्ति नरा मन्दा मूढाः पण्डितमानिनः ।
तदात्वमात्रश्रद्धेयाः शास्त्रज्ञानवहिष्कृता. । दाम्भिकास्ते भविष्यन्ति वादशीलकुतूहलाः । ११८०
तथा विलुलिते धर्म्मे जना. शेषपुरस्कृताः । शुभान्येवाचरिष्यन्ति दानसत्यसमन्विताः ।
सर्व्वभक्ष. स्वयंगुप्तो निर्घृणो निरपत्रप. । भविष्यति तदा लोकस्तत् कषायस्य लक्षणं ।
विप्राणां शाश्वती वृत्तिं यदा वर्णावरो जनः । अभिपत्स्यति वृत्त्यर्थं तत्कषायस्य लक्षणं ।
कषायोपप्लवे काले ज्ञानविद्याप्रणाशने । सिद्धिमल्पेन कालेन यास्यन्ति निरुपस्कृताः ।
महायुद्धं महावातं महावर्षं महाभयं । भविष्यति युगे चीणे तत्कषायस्य लक्षणं । ११८५
विप्ररूपाणि रक्षांसि राजानः कर्म्मवेदिनः । पृथिवीमुपभोच्यन्ति युगान्ते समुपस्थिते ।
नि:स्वाध्यायवषट्कारा अनेयाश्चाभिमानिन. । क्रव्यादा ब्रह्मरूपेण सर्व्वभक्षा वृथाव्रताः ।
मूर्खाः स्वार्थपरा लुब्धा क्षुद्राः क्षुद्रपरिच्छदा. । व्यवहारोपवृत्ताश्च च्युता धर्म्माच्च शाश्वतात् ।
हर्त्तारः पररत्नानां परदारप्रधर्षकाः । कामात्मानो दुरात्मानः सोपधा. प्रियसाहसाः ।

तेषु प्रभवमाणेषु तुच्छशीलेषु सर्व्वश.। अभाविनो भविष्यन्ति मुनयो बहुरूपिणः। ११६९०
उत्पन्ना ये कृतयुगे प्रधानपुरुषाश्रया.। कथायोगेन तान् सर्व्वान् पूजयिष्यन्ति मानवाः।
शस्यचौरा भविष्यन्ति तथा चैलापहारिण.। भक्ष्यभोज्यहराश्चैव करण्डानाञ्च हारिणः।
चौराश्चौरस्य हर्त्तारो हर्त्ता हर्त्तुर्भविष्यति। चौरैश्चौरक्षये चापि कृते क्षेमं भविष्यति।
नि.सारे क्षुभिते लोके निष्क्रिये ह्यन्तरे स्थिते। नराः श्रयिष्यन्ति वनं करभारप्रपीडिता.।
पितृनाज्ञापयिष्यन्ति पुत्त्रा. कर्म्मणि सर्व्वश.। स्नुषाः श्वश्रूस्तथा चैव युगान्ते पर्य्युपस्थिते। ११६९५
वाक्शरैस्तर्ज्जयिष्यन्ति गुरून् स्त्रियाः समन्तत.। यज्ञकर्म्मण्युपरते रक्षांसि श्वापदानि च।
कीटमूषिकसर्पाश्च धर्षयिष्यन्ति मानवान्। क्षेमं सुभिक्षमारोग्यं सामग्र्यञ्चापि बन्धुषु।
उद्देशतो नरश्रेष्ठ भविष्यति युगक्षये। स्वयं पाला. स्वयं चौरा युगसम्भारसम्भृता.।
मण्डले प्रचरिष्यन्ति देशे देशे पृथक पृथक्। स्वदेशेभ्य परिभ्रष्टा नि.सारा. सह बन्धुभिः।
नराः सर्व्वे भविष्यन्ति तदा कालपरिक्षयात्। ततः स्कन्धे. समादाय कुमारान् विद्रुता भयात्। ११७००
कौशिकीं प्रतरिष्यन्ति नरा. क्षुद्भयपीडिताः। अङ्गान् वङ्गान् कलिङ्गांश्च काश्मीरानथ मेकलान्।
ऋषिकान्तगिरिद्रोणी संश्रयिष्यन्ति मानवाः।,कृत्स्नञ्च हिमवत्पार्श्वं कूलञ्च लवणाम्भसः।
अरण्येषु निवत्स्यन्ति नरा म्लेच्छगणै सह। नैव शून्या न चाशून्या भविष्यति वसुन्धरा।
गोप्तारश्चाप्यगोप्तार प्रभविष्यन्ति शस्त्रिण.। मृगैर्मत्स्यैर्विहङ्गैश्च श्वापदैः सर्पकीटकै.।
मधुशाकफलैर्मूलैर्व्वर्त्तयिष्यन्ति मानवाः। चीरं पर्णञ्च विविधं वल्कलान्यजिनानि च। ११७०५
स्वयंकृतानि वत्स्यन्ति यथा मुनिजनास्तथा।।बीजानामाकृति निम्नेष्वीहन्तः काष्ठशङ्कुभिः।
अजैडकं खरोष्ट्रञ्च पालयिष्यन्ति यत्नत.। नदीस्रोतांसि रोत्स्यन्ति तोयार्थं कूलमाश्रिताः।
पक्वान्नव्यवहारेण विपणन्तः परस्परं। तनूरुहैर्यथा जाते. समूलान्तरसंवृते.।
बह्वपत्या.प्रजाहीना. कुललक्षणवर्ज्जिताः। एवं भविष्यन्ति तदा मनुष्या कालकारिताः।
हीनाद्धीनं तथा धर्म्मं प्रजा समनुपत्स्यति। आयुस्तत्र च मर्त्यानां परं विंशद्भविष्यति। ११७१०
दुर्व्बला विषयग्लाना रजसा समभिप्लुताः। भविष्यन्ति तदा तेषां रोगैरिन्द्रियसंक्षयः।
आयुःप्रक्षयसंरोधाद्धिंसा च न भविष्यति। शुश्रूषवो भविष्यन्ति साधूनां दर्शने रताः।
सत्यञ्च प्रतिपत्स्यन्ति व्यवहारोपसंक्षयात्। भविष्यन्ति हि कामानामलाभाद्धर्म्मशीलिन।
करिष्यन्ति च सङ्क्षेपं स्वपक्षक्षयपीडिता.। एवं शुश्रूषवो दाने सत्ये प्राणाभिरक्षणे।
चतुष्पादः प्रवृत्तश्च धर्म्म. श्रेयोऽभिपत्स्यते। तेषां लब्धानुमानानां गुणेषु परिवर्त्ततां। ११७१५
स्वादु किमिति विज्ञाय धर्म्म एव वदिष्यति। यथा हानि. क्रमप्राप्ता तथा वृद्धि. क्रमागता।
प्रगृहीते ततो धर्म्मे प्रपत्स्यति कृतं युगं। साधुवृत्ति. कृतयुगे कषाये हानिरुच्यते।
एक एव तु काल स हीनवर्णो यथा शशी। छन्नो हि तमसा सोमो यथा कलियुगे तथा।
पूर्णश्च तमसा हीनो यथा कृतयुगे तथा। अर्थवादः परं ब्रह्म वेदार्थं इति तं विदु।

अनिर्णीतक्रमविज्ञातं दायाद्यमिव धार्य्यते । दृष्टवादस्तपो नाम तपो हि स्थावरं कृतं । ११२२०
गुणैः कर्म्माभिनिर्वृत्तिर्गुणस्तथ्येन कर्म्मणा । आशीस्तु सुफलं दृष्टा देशकालानुवर्त्तिनी ।
युगे युगे यथाकालमृषिभिः समुदाहृता । इह धर्म्मार्थकामानां वेदानाञ्च प्रतिक्रिया ।
आशिषश्च शुभाः पुण्यास्तथा चायुर्युगे युगे ।
तथा युगानां परिवर्त्तनानि चिरप्रवृत्तानि विधिस्वभावात् । क्षणं न संतिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्त्तमानः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि चतुर्नवत्यधिकशततोऽध्यायः ॥ १९४ ॥
॥ सौतिरुवाच ॥ इत्येवमाश्वासयता राजानं जनमेजयं । अतीतानागतं वाक्यमृषेः परिषदा श्रुतं । ११२२५
अमृतस्येव संवादः प्रभा चन्द्रमसो यथा । अतर्पयत तच्छ्रोत्रं महर्षेर्व्वाङ्मयो रसः ।
धर्म्मकामार्थसंयुक्तं करुणं वीरहर्षणं । रमणीयं तदाख्यानं कृत्स्नं परिषदा श्रुतं ।
केचिदश्रूणि मुमुचुः श्रुत्वा दध्युस्तथा परे । इतिहासं तमृषिणा पाराशर्य्येण दर्शितं ।
सदस्यान् सोऽभ्यनुज्ञाय कृत्वा चापि प्रदक्षिणं । पुनर्द्रक्ष्याम इत्युक्त्वा जगाम भगवानृषिः ।
अनुजग्मुस्ततः सर्व्वे व्रजन्तमृषिसत्तमं । लोके प्रवदतां श्रेष्ठं ये विशिष्टास्तपोधनाः । ११२३०
याते भगवति व्यासे विप्राः सह महर्षिभिः । ऋत्विजः पार्थिवाश्चैव प्रतिजग्मुर्य्यथागतं ।
पन्नगानां सुघोराणां कृत्वा ता वैरयातनां । जगाम रोषमुत्सृज्य राजा विषमिवोरगः ।
होत्राग्निदीप्तशिरसं परित्राय च तक्षकं । आस्तीकोऽप्याश्रमपदं जगाम सहसा मुनिः ।
राजाऽपि हास्तिनपुरं विवेश स्वजनावृतः । अन्वशासच्च मुदितस्तदा प्रमुदिताः प्रजाः ।
कस्यचित्त्वथ कालस्य स राजा जनमेजयः । दीक्षितो वाजिमेधाय विधिवद्भूरिदक्षिणः । ११२३५
संज्ञप्तमश्वं तत्राथ देवी काश्या वपुष्टमा । संविवेशोपसंगम्य विधिदृष्टेन कर्म्मणा ।
तां तु सर्व्वानवद्याङ्गीं चकमे वासवस्तदा । संज्ञप्तमश्वमाविश्य तया मिश्रीबभूव सः ।
तस्मिन् विकारे जनिते विदित्वा तत्त्वतस्तु तत् । असंज्ञप्तोऽयमश्वोऽत्र ध्वंसेत्यध्वर्य्युमब्रवीत् ।
अध्वर्य्युर्ज्ञानसम्पन्नस्तदिन्द्रस्य विचेष्टितं । कथयामास राजर्षेः शशाप स पुरन्दरं ।
॥ जनमेजय उवाच ॥ अद्यप्रभृति मे यज्ञफलं तावो वा रक्षतः प्रजाः । फलेन तेन सर्व्वेण ब्रवीमि सूनृतामिदं । ११२४०
अद्यप्रभृति देवेन्द्रमजितेन्द्रियमस्थिरं । क्षत्रिया वाजिमेधेन न यक्ष्यन्तीति शौनक ।
ऋत्विजश्चाब्रवीत् क्रुद्धः स राजा जनमेजयः । दौर्ब्बल्यं भवतामेतद्यदयं धर्षितः क्रतुः ।
विषये मे न वस्तव्यं गच्छत्वं सह बान्धवैः । इत्युक्तास्त्वृत्विजस्तेन तं नृपं जातमन्यवः ।
अमर्षादन्वशासच्च पत्नीशालागताः स्त्रियः । राजा परमधर्म्मज्ञस्तामसौ जनमेजयः ।
असतीं वपुष्टमाद्यैव निर्यातयत मे गृहात् । यया मे चरणौ मूर्ध्नि पातितौ रेणुगुण्ठितौ । ११२४५
शौटीर्य्यं मे यया भग्नं यशो मानश्च दूषितः । नैतां द्रष्टुमपीच्छामि परिक्लिष्टामिव स्रजं ।
न स्वादु सोऽश्नाति नरः सुखं स्वपिति वा रहः । अन्यासेव्यः प्रियां भार्य्यां पश्येत् मृदितामिह ।
एवमुक्तः प्रभापन्नां क्रुद्धं पारिक्षितं नृपं । गन्धर्व्वराजः प्रोवाच विश्वावसुरिदं वचः ।

त्रियज्ञशतयज्वानं वासवस्त्वां न मृष्यति । अप्सराङ्गेन पत्नी ते विहितेयं वपुष्टमा ।
रम्भा नामाप्सरा देवी काशिराजसुता सती । सैषा योषिद्वरा राजंस्त्वत्प्रभूताऽनुभूयताम् । ११११०
यज्ञे विघ्नमासाद्य विघ्नमिन्द्रेण ते कृतं । यस्त्वा ह्यसि कुरुश्रेष्ठ सम्बुद्धा वासवोपमः ।
बिभेत्यभिभवात्त्वत्तस्तव क्रतुफलैर्नृप । तस्मादावर्त्तितश्चैव क्रतुरिन्द्रेण ते प्रभो ।
मायैषा वासवेनेह प्रयुक्ता विघ्नमिच्छता । यज्ञे विवरमासाद्य यज्ञतं त्रियज्ञाजिनं ।
कृतमिन्द्रेण रम्भायां मन्यसे यां वपुष्टमां । अप ते गुरवः शप्तास्त्रियज्ञशतयाजिनः ।
भंशितस्त्वञ्च विप्राश्च फलादिन्द्रसमादिह । त्वत्तो यथैव दुर्द्धर्षास्त्रियज्ञशतयाजिनः । १११९५
बिभेत्यभिभवात्तद्वद्ब्राह्मणेभ्योऽपि वासवः । एकेन तदुभयं तीर्थं प्रकृतेन मायया ।
स एष सुमहातेजा विजिगीषुः पुरन्दरः । कथमन्यैरनाचीर्णं नमुदारानतिक्रमेत् ।
यथैव हि परा बुद्धिः परो धर्म्मः परो दमः । यथैव परमैश्वर्य्यं कीर्त्तिश्च हरिवाहने ।
तथैव त्वयि दुर्द्धर्षे त्रियज्ञशतयाजिनि । मा वासवं मा च गुरुं मात्मानं मा वपुष्टमां ।
गच्छ दोषेण राजेन्द्र कालो हि दुरतिक्रमः । ऐश्वर्य्येणाश्रमाविश्य देवेन्द्रेणापि रोषितः । १११९०
आनुकूल्येन देवस्य वर्त्तितव्यं सुखार्थिना । दुस्तरं प्रतिकूलं हि प्रतिस्रोत इवाम्भसः ।
स्त्रीरत्नमुपभुंक्ष्वेमामपापं विगतज्वरः । अपापास्त्यज्यमाना वै भवेयुरपि योषितः ।
अदुष्टास्तु स्त्रियो राजन्नित्यास्तु सविशेषतः । भानोः प्रभा शिखा वह्नेर्वेदी देवि तथाऽर्ध्रिः ।
परान्नष्टाऽप्यसंरक्षा नोपदुष्यन्ति योषितः । याश्चा लालयितव्याश्च पूज्याश्च सततं बुधैः । ६
शीलवत्यो नमस्कार्य्याः पूज्या श्रिय इव स्त्रियः । १११९९

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि विश्वावसुवाक्ये पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

॥ सौतिरुवाच ॥ एवं हि विश्वावसुनाऽनुनीतः प्रसादमागम्य वपुष्टमायाः । चकार मिथ्याव्यतिशङ्कितायाः शान्तिं परां मान वधर्म्मजुष्टां ।

शममभिविनिवर्त्त्य मानसं सः समभिलषन् जनमेजयो यशः स्वं । विषयमनुशशास धर्म्मबुद्धिर्मुदितमना रमयन् वपुष्टमान्तां ।
न स विरमति विप्रपूजनाच्च विनिवर्त्तते शीलयज्ञदानात् । न विषयपरिरक्षणाच्च्युतोऽसौ न च परिगर्हति तां वपुष्टमाञ्च ।
विधिविहितमशक्यमन्यथा हि कर्त्तुं यदृषिरचिन्त्यतपाः पुराऽब्रवीत् सः । इति नरपतिरात्मजां खदाऽसौ तदनुचिन्त्य बभूव वीतमन्युः ।

इदं महाकाव्यमृषेर्महात्मनः पठन्नृणां पूज्यतमो भवेन्नरः । शतष्टमायुः समवाप्य दुर्लभं लभेत मर्त्त्यः फलस्य केवलं । १११०००
शतक्रतोः कल्मषविप्रमोक्षणं पठन्निदं मुच्यति किल्विषान्नरः । तथैव कामान् विविधान् समश्नुते समाप्तकामश्च चिराय नन्दति ।

यथा हि पुष्पप्रभवं फलं द्रुमात्ततः प्रजायन्ति पुनश्च पादपाः । तथा महर्षिप्रभवा इमा गिरः प्रवर्द्धयन्ते तनयविप्रशंसिताः ।
पुत्रानपुत्रो लभते सुशंसयुतः पुनर्विन्दति चात्मनः स्थितिं । व्याधिं न चाप्नोति चिरञ्च मन्यनं स्त्रियाश्च पुत्रा लभते गुणान्विताः ।

पतिमपि लभते च सत्सु कन्या श्रवणमुपेत्य शुभा मुनेस्तु वाचः । जनयति च सुतं गुणैरुपेतं स्वजनहितं द्विषतां प्रमर्द्दनञ्च ।
विजयति वसुधाञ्च राजवृत्तिर्द्धनमतुलं लभते द्विषज्जयञ्च । विपुलमपि धनं लभेत वैश्यः सुगतिमियात् श्रवणाच्च शूद्रजातिः । ११२७५
पुराणमेतच्चरितं महात्मनामधीत्य बुद्धिं लभते च नैष्ठिकीम् । विहाय दुःखानि विमुक्तसंशयः संवीतरागो विचरेद्वसुन्धराम् ।
इत्येतदाख्यानमुदाहृतं मया प्रतिस्मरन्तो द्विजमण्डलेषु । स्थैर्य्येण धैर्य्येण पुनः स्मरन्तः सुखं भवन्तो विचरन्तु लोके ।
इति चरितमिदं महात्मनाम्प्यपि कृतमद्भुतवीर्य्यकर्म्मणाम् । कथितमिदं हि समासविस्तरैः किमपरमिच्छसि किं ब्रवीमि ते ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पण्णवत्यधिकशततोऽध्यायः ॥ १९६ ॥

॥ जनमेजय उवाच ॥ प्रभावं पद्मनाभस्य स्वपतः सागराम्भसि । पुष्करे वै यथोद्भूताः देवाः सर्षिगणाः पुरा ।
एतदाख्याहि निखिलं योगं योगविदाम्पते । शृण्वतस्तस्य मे कीर्त्तिं न तृप्तिरुपजायते ॥ ११२८०
कियता चैव कालेन शेते स पुरुषोत्तमः । कियन्तञ्चैव शयिते कालं कालस्य सम्भवः ।
कियता चैव कालेन सोत्तिष्ठति सुरारिहा । कथञ्चोत्थाय भगवानसृजन्निखिलं जगत् ।
के प्रजापतयस्तत्र पूर्व्वमासन्महामुने । कथं निर्म्मितवांश्चैव चित्रं लोकं सनातनः ।
कथमेकार्णवे घोरे नष्टे स्थावरजङ्गमे । नष्टे देवासुरगणे प्रनष्टोरगराक्षसे ।
नष्टानलानिले लोके नष्टाकाशमहीतले । केवलं गह्वरीभूते महाभूतविपर्य्यये । ११२८५
२ प्रभुर्म्महाभूतपतिर्म्महातेजा महाकृतिः । आस्ते सुरगुरुश्रेष्ठो विधिमादाय कं मुने ।
तन्मे समुपपन्नाय ब्रह्मन्नेतदसंशयम् । वक्तुमर्हसि धर्म्मिष्ठ यशो नारायणात्मकम् ।
प्रादुर्भावं पुरस्कृत्य भूतं भव्यं महात्मनः । श्रद्धानामुपविष्टानां भगवन् वक्तुमर्हसि ।
॥ वैशम्पायन उवाच ॥ नारायणस्य योगाख्ये या भवेद्भवतः स्पृहा । तदंशानप्रभूतस्य कार्त्स्न्यं कुरुकुलर्षभ ।
शृणुष्वादिपुराणेभ्यो देवतेभ्यो यथा श्रुतम् । ब्राह्मणानाञ्च वदतां श्रुतोऽस्माभिर्म्महात्मनाम् । ११२९०
यथा च तपसा दृष्ट्वा बृहस्पतिसमद्युतिः । पराशरसुतः श्रीमान् कृष्णद्वैपायनोऽब्रवीत् ।
तत्तेऽहं सम्प्रवक्ष्यामि यथाशक्ति यथाश्रुति । म विज्ञातुं मया शक्यस्त्वविमाचेय भारत ।
यः स सृजति शान्तं परं नारायणात्मकम् । विधायनोऽयं ब्रह्मापि न वेदयति तत्त्वतः ।
श्रुतं मे विबुधदेवानां यद्गुह्यं महर्षिणाम् । यदिज्यं सर्व्वयज्ञानां तत्त्वतस्तत्त्ववेदिना ।
यदध्यात्मविदां चिन्त्यं कारणञ्चापि कर्म्मिणाम् । अधिदैवञ्च यद्दैवं तद्देवमिति संज्ञितम् । ११२९५
यद्भूतमधिभूतञ्च यत्परञ्च महर्षिणाम् । यत् यज्ञं वेददृष्टञ्च यत्तत्त्वं यतयो विदुः ।
यः कर्त्ता कारको बुद्धिर्म्मनः क्षेत्रज्ञ एव च । प्रधानं पुरुषः शास्ता य एकश्चिदभिधीयते ।
कालः कालं क्षपयति द्रष्टा स्वाधीन एव च । प्राणः पञ्चविधश्चैव ध्रुवमक्षरमेव च ।
उच्यते विविधैर्भावैर्नामधेयानेक तत्परैः । स एव भगवान् सर्व्वं करोति विकरोति च ।
योऽध्यात्मं कारयते कर्म तेन स्म व्याकुलीकृताः । यजामहे तमीशं तमीशमाशाम निर्वृतिम् । ११३००

यो वक्ता यश्च वक्तव्यो यश्चाहं प्रब्रवीमि वः । इदं शृणुत यच्छ्रेयो यच्चान्यत् परिजल्पथ ।
याः कथाश्चैव वर्त्तन्ते श्रुतयो वाऽथ शङ्करे । विश्वं विश्वपतिं देवाः सर्व्वं नारायणात्मकं ।
यत् सत्यं यदमृतमादिमक्षरं वै यद्भूतं भवदमितञ्च यच्च विश्वं । यत्किञ्चिच्चरमचराद्यथं त्रिलोके तत् सर्व्वं पुरुषवरः प्रभुर्व्वरिष्ठः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करप्रादुर्भावे सप्तनवत्यधिकशततोऽध्यायः ॥ १९७ ॥

॥ वैशम्पायन उवाच ॥ चत्वार्य्याहुः सहस्राणि वर्षाणां तत् कृतं युगं । तस्य तावच्छती सन्ध्या द्विगुणा जनमेजय ।
तत्र धर्म्मश्चतुष्पादो ह्यधर्म्मः पादविग्रहः । स्वधर्म्मनिरताः सन्तो यजन्ते चैव मानवाः ।
विप्राः स्थिता धर्म्मपरा राजवृत्ते स्थिता नृपाः । कृष्यामभिरता वैश्याः शूद्राः शुश्रूषणे रताः ।
सदा सत्यं तपश्चैव धर्म्मश्चैव विवर्द्धते । सद्भिराचरितं कर्म्म क्रियते ख्यायते च वै ।
एतत् कृतयुगे वृत्तं सर्व्वेषामेव भारत । प्राणिनां धर्म्मबुद्धीनामपि चेन्नीचयोनिनां ।
त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते । तस्य तावच्छती सन्ध्या द्विगुणा परिकीर्त्तिता ।
द्वाभ्यामधर्म्मः पादाभ्यां त्रिभिर्द्धर्म्मो व्यवस्थितः । तत्र सत्यञ्च सत्वञ्च कृते सर्व्वं विधीयते ।
त्रेतायां विकृतिं यान्ति धर्म्मलोभेन संयुताः । चातुर्व्वर्ण्यस्य वैकृत्याद्यान्ति दौर्ब्बल्यमाश्रिताः ।
एष त्रेतायुगविधिर्व्विहितो देवनिर्म्मितः । द्वापरस्यापि या चेष्टा तामपि श्रोतुमर्हसि ।
द्वापरं द्वे सहस्रे तु वर्षाणां कुरुसत्तम । तस्य तावच्छती सन्ध्या द्विगुणा परिकीर्त्तिता ।
तत्र ह्यर्थपरा विप्रा ज्ञानिनो रजसावृताः । शठा नैकृतिकाः क्षुद्रा जायन्ते कुरुपुङ्गव ।
द्वाभ्यां धर्म्मः स्थितः पद्भ्यामधर्म्मस्त्रिभिरुच्छ्रितः । विपर्य्ययं यान्ति शनैः कृते ये धर्म्महेतवः ।
ब्राह्मण्यभावा नश्यन्ति तथास्तिक्यं विशीर्य्यते । व्रतोपवासास्त्यज्यन्ते द्वापरे युगपर्य्यये ।
तथा वर्षसहस्रञ्च वर्षाणां द्वे शते तथा । सन्ध्यया सह संख्यातं क्रूरं कलियुगं स्मृतं ।
तत्राधर्म्मश्चतुष्पादः स्याद्धर्म्मः पादविग्रहः । कामिनस्तमसाच्छन्ना जायन्ते तत्र मानवाः ।
नैवोपवासकृत् कश्चिन्न साधुर्न च सत्यवाक् । नास्तिको ब्रह्मवक्ता वा नरो भवति वै तदा ।
अहङ्कारगृहीताश्च प्रक्षीणस्नेहबन्धनाः । विप्राः शूद्रसमाचाराः शूद्राश्चाचारलक्षणाः ।
दूषकाश्चाश्रमाणाञ्च वर्णानाञ्चैव सङ्कराः । अगम्येष्वभिरंस्यन्ति वर्त्तन्त्येवं कलौ युगे ।
त्रय्यान्तश्चैव सन्देहो युगान्ते जनमेजय । दिव्यं द्वादशसाहस्रं यदेतद्युगमुच्यते ।
तदेकसप्ततिगुणं मन्वन्तरमिहोच्यते । एतच्चतुर्दशगुणमहर्ब्राह्ममिहोच्यते ।
ततोऽहनि गते तस्मिन् सर्व्वेषामेव देहिनां । शरीरनिर्वृतिङ्गके रुद्रः संहारबुद्धिमान् ।
देवतानाञ्च सर्व्वेषां ब्राह्मणानां महीपते । दैत्यानां दानवानाञ्च यक्षकिन्नररक्षसां ।
देवर्षीणां महर्षीणां तथा राजर्षीणामपि । गन्धर्व्वाणामप्सरसां भुजगानां तथैव च ।
पर्व्वतानां नदीनाञ्च पशूनाञ्चैव भारत । तिर्य्यग्योनिगतानाञ्च सत्वानां क्रिमिणां तथा
महाभूतपतिर्द्देवः पञ्चभूतानि भूतकृत् । जगत्संहरणार्थाय कुरुते वैशसं महत् ।

भूत्वा सूर्य्यस्तपुषी चाददानो भूत्वा वायुः संहरन् प्राणिजालं। भूत्वा वह्निर्निर्दहन् सर्व्वलोकान् मेघो भूत्वा भूय एवाभ्यवर्षत्।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करप्रादुर्भावे अष्टनवत्यधिकशततोऽध्यायः॥ १९८॥

॥ वैशम्पायन उवाच ॥ भूत्वा नारायणो योगी सप्तमूर्त्तिर्विभावसुः । गभस्तिभिः प्रदीप्ताभिः सशोषयति सागरान् । ११११०
पीत्वाऽर्णवांश्च सर्व्वान् स नदीः कूपांश्च सर्व्वशः । पर्व्वतानाञ्च सलिलं सर्व्वमादाय रश्मिभिः ।
भित्त्वा सहस्रशश्चैव महीं गत्वा रसातलं । रसातलगतं कृत्स्नं पिबते रसमुत्तमं ।
अपः सृजन् क्लेदमन्यद्ददाति प्राणिनां ध्रुवं । तत् सर्व्वमरविन्दाक्ष आदत्ते पुरुषोत्तमः ।
वायुश्च बलवान् भूत्वा स विधूयाखिलं जगत् । प्राणोदयं सुराणाञ्च वायुना कुरुते हरिः ।
ततो देवगणानाञ्च सर्व्वेषामेव देहिनां । ये चेन्द्रियगणाः सर्व्वे ये चान्ये च यतोद्भवाः । ११११५
पूयं घ्राणं शरीरञ्च पृथिवीमाश्रिता गुणाः । जिह्वा रसश्च स्नेहश्च संश्रिताः सलिलं गुणाः ।
रूपं चक्षुर्विपाकश्च ज्योतिरेवाश्रिता गुणाः । स्पर्शः प्राणश्च चेष्टा च पवनं संश्रिता गुणाः ।
परमेष्ठिनमेते वै ह्यपोकेशं समाश्रिताः । ततो भगवता तत्र रश्मिभिः परिवारिताः ।
वायुना क्षिप्यमाणाश्च रूपान्योन्यसमाश्रयात् । तेषां संघर्षजोद्भूतः पावकः शतधा ज्वलन् ।
अदहन्निखिलान् लोकानुग्रः संवर्त्तकोऽनलः । स पर्व्वतान् द्रुमान् गुल्मान् लतावल्लीस्तृणानि च । १११२०
विमानानि च दिव्यानि पुराणि विविधानि च । आश्रमांश्च तथा पुण्यान् दिव्यान्यायतनानि च ।
यानि चाश्रयणीयानि तानि सर्व्वाणि चादहत् । भस्मीभूतांस्ततः सर्व्वान् लोकान् लोकगुरुर्हरिः ।
भूयो निर्व्वापयामास जलयुक्तेन कर्म्मणा । सहस्रदृङ्महातेजा भूत्वा कृष्णो महाघनः ।
दिव्यतोयेन हविषा तर्पयामास मेदिनीं । ततः क्षीरनिकाशेन स्वादुना परमाम्भसा ।
शिवेन पुण्येन मही निर्व्वाणमगमत् परं । तेन सा जलसञ्छन्ना पयसा सर्व्वतो धरा । १११२५
एकार्णवजला भूत्वा सर्व्वसत्त्वविवर्ज्जिता । महाभूतान्यपि च तं प्रविष्टान्यमितौजसं ।
नष्टार्कपवनाकाशे सूक्ष्मे जनविवर्ज्जिते । संशोषयित्वा पीत्वा च कल्पयित्वा च देहिनं ।
दग्ध्वा सन्तापयित्वा च स्वपित्येकः सनातनः । पौराणं रूपमास्थाय किमप्यमितबुद्धिमान् ।
एकार्णवजलावासी योगी योगमुपासते । अयुतानां सहस्राणि शतान्येकार्णवाम्भसि ।
न चैनं कश्चिदव्यक्तं व्यक्तं वेदितुमर्हति । १११३०

॥ जनमेजय उवाच ॥ एकार्णवविधिः कोऽयं य एष परिकीर्त्तितः । क एष पुरुषो नाम किं योगः कश्च योगवान् ।

॥ वैशम्पायन उवाच ॥ एतावन्तमसौ कालमेकार्णवविधिं प्रति । करिष्यतीमं भगवानिति कश्चिन्न बुध्यते ।
न द्रष्टा नैव गमिता न ज्ञाता नैव पार्श्वतः । न स्म विज्ञायते किञ्चिद्ऋते तं देवमुत्तमं ।
नभः क्षितिं पवनमपः प्रकाशयन् प्रजापतिं भुवनपतिं सुरेश्वरं । पितामहं श्रुतिनिलयं महामुनिं महोदधौ शयनमरोचयत् प्रभुः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करप्रादुर्भावे नवनवत्यधिकशततोऽध्यायः । १९९ ॥

॥ वैशम्पायन उवाच ॥ एवमेकार्णवे भूते शेते लोके महाद्युतिः । प्रच्छाद्य सलिलं सर्व्वं हरिर्नारायणः प्रभुः । १११३६

महतो रजसो मध्ये महार्णवसमस्य वै। विरजस्को महाबाहुरक्षरं ब्राह्मणा विदुः ।
आत्मरूपप्रकाशेन तपसा संवृतः प्रभुः । त्रिकमाच्छाद्य कालन्तु ततः सुष्वाप सत्तदा ।
पुरुषो यज्ञ इत्येवं यत् परं परिकीर्त्तितं। यच्चान्यत् पुरुषाख्यन्तु तत् सर्व्वं पुरुषोत्तमः।
ये च यज्ञपरा विप्रा ऋत्विजा इति संज्ञिताः। आत्मदेहात्पुरा भूता यज्ञेभ्यः श्रूयतां तदा।
ब्रह्माणं परमं वक्त्रादुद्गातारञ्च सामगं। होतारमथ चाध्वर्युं बाहुभ्यामसृजत् प्रभुः। १११६०
ब्रह्मणो ब्राह्मणत्वाच्च प्रस्तारञ्च सर्व्वशः। तन्मित्रावरुणं सृष्ट्वा प्रतिष्ठातारमेव च।
उदरात् प्रतिहर्त्तारं होतारञ्चैव भारत। अच्छावाकमथोरुभ्यां नेष्टारञ्चैव भारत।
पाणिभ्यामथ चाग्नीध्रं ब्रह्मण्यञ्चैव यज्ञियं। ग्रावाणमथ बाहुभ्यां उन्नेतारञ्च याज्ञिकं।
एवमेवैष भगवान् षोडशैतान् जगत्पतिः। प्रवक्तॄन् सर्व्वयज्ञानामृत्विजोऽसृजदुत्तमान्।
तदेष वै यज्ञमयः पुरुषो वेदसंज्ञितः। वेदाश्च तन्मयाः सर्व्वे साङ्गोपनिषदक्रियाः। १११६५
स्वपत्येकार्णवे चैव यदाश्चर्य्यमभूत् पुरा। श्रूयते तद्यथावृत्तं मार्कण्डेयोऽनुभूतवान्।
जीर्णो भगवतस्तस्य कुक्षावेव महामुनिः। बहुवर्षसहस्रायुस्तस्यैव वरतेजसा।
इति तीर्थप्रसङ्गेन पृथिवीतीर्थगोचरः। आश्रमानपि सर्व्वांश्च तीर्थान्यायतनानि च।
देशान्राष्ट्राणि चित्राणि पुराणि विविधानि च। जपहोमरतः शान्तस्तपो घोरमुपाश्रितः।
मार्कण्डेयस्ततस्तस्य शनैर्व्वक्त्राद्विनिःसृतः। निष्क्रामन्तं न चात्मानं जानीते देवमायया। १११७०
निष्क्रान्तस्तस्य वदनादेकार्णवमयो गतः। सर्व्वतस्तमसा च्छन्नं मार्कण्डेयो निरीक्षते।
तस्योत्पन्नं भयं तीव्रं संशयश्चात्मजीविते। देवदर्शनसंहृष्टो विस्मयश्चागमत् परं।
स चिन्तयति मध्यस्थो मार्कण्डेयोऽभिशङ्कितः। किंस्विद्भवेदियं चिन्ता मोहः स्वप्नोऽनुभूयते।
व्यक्तमन्यतमो भाव एतेषां भविता मम। न हीदृशमसंक्लिष्टमयुक्तं सत्यमर्हति।
नष्टचन्द्रार्कपवनम्बच्छपर्व्वतभूतलः। कतमः स्यादयं लोक इति चिन्ताव्यवस्थितः। १११७५
अपश्यच्चापि पुरुषं शयानं पर्व्वतोपमं। तोयार्द्धमिव जीमूतं मध्ये मग्नं महार्णवे।
*तपन्तमिव तेजोभिर्भास्वन्तमिव वर्च्चसा। जाग्रन्तमिव गाम्भीर्य्याच्छ्वसन्तमिव पन्नगं।*
स देवं द्रष्टुमायाति को भवानिति विस्मयात्। तथैव च शनैर्भूयो मुनिः कुक्षिं प्रवेशितः।
स प्रविष्टः पुनः कुक्षौ मार्कण्डेयः सुनिश्चितः। तथैव मन्यते भूयोऽविजानन् स्वप्नदर्शनं।
स तथैव यथा पूर्व्वं पृथिवीमटते पुनः। तीर्थस्थानानि पुण्यानि वीक्षन्नायतनानि च। १११८०
क्रतुभिर्यजमानांश्च समाप्तवरदक्षिणैः। पश्यते देवकुक्षिस्थान् याजकान् द्विजोत्तमान्।
सद्वृत्तमाश्रिताः सर्व्वे वर्णा ब्राह्मणपूर्व्वकाः। चत्वारश्चाश्रमाः सम्यग्यथोद्दिष्टपदानुगाः।
सर्व्वासु ततमाहत्य मार्कण्डेयो महामुनिः। विचरन् पृथिवीं कृत्स्नां न च कुक्ष्यन्तमेव च।
ततः कदाचिदथ वै पुनर्व्वक्त्राद्विनिःसृतः। सुप्तं न्यग्रोधशाखायां बालमेकं निरीक्षते।
यथैवैकार्णवमये नीहारेणावृताम्बरे। अव्यक्तमीश्वरे लोके सर्व्वभूतविवर्ज्जिते। १११८५

स भूयो विस्मयाविष्टः कौतूहलसमन्वितः । बालमादित्यसङ्काशं न शक्नोत्युपसर्पितुं ।
सोऽचिन्तयदथैकान्ते स्थित्वा सलिलसन्निधौ । पूर्व्वदृष्टमिदं नेति शङ्कितो देवमायया ।
अगाधे सलिले तस्मिं मार्कण्डेयः प्लवन्मुनिः । न शान्तिं लभते तत्र श्रमात् सन्त्रस्तविक्लवः ।
तथैव भगवान् हंसो गतो योगेन बालतां । बभाषे मेघतुल्येन स्वरेण पुरुषोत्तमः ।
॥ भगवानुवाच ॥ माभैर्व्वत्स न भेतव्यं सम्प्रत्येहि ममान्तिकं । मार्कण्डेय मुने वीर बालस्त्वं श्रमपीडितः । १११९०
॥ मार्कण्डेय उवाच ॥ को मां नाम्ना कीर्त्तयति तपः परिभवन्मम । बहुवर्षसहस्राख्यं धर्षयन्निव मे वयः ।
न ह्येष समुदाचारो देवेष्वपि समाहितः । मां ब्रह्माऽपि स विश्वेशो दीर्घायुरिति भाषते ।
कस्तपोघोरशिरसं मामद्य त्यक्तजीवितः । मार्कण्डेयेति मां प्रोक्ता मृत्युमीक्षितुमिच्छति ।
॥ वैशम्पायन उवाच ॥ एवमाभाषते मोहान्मार्कण्डेयो महामुनिः । अथैनं भगवान् भूयो बभाषे तत्परायणं ।
॥ भगवानुवाच ॥ अहं ते जनको वत्स हृषीकेशः पिता गुरुः । आयुःप्रदाता पौराणः किमर्थं नोपसर्पसि । १११९५
मां पुत्त्रकामः प्रथमं पिता ते ह्यङ्गिरा मुनिः । पूर्व्वमाराधयामास तपस्तीव्रमुपाश्रितः ।
ततस्त्वां घोरतपसं दहनोपमतेजसं । दत्तवानहमात्मेष्टं महर्षिममितायुषं ।
तच नोत्सहते चान्यो येन भूयो ममात्मकं । द्रष्टुमेकार्णवगतं क्रीडन्तं योगधर्म्मिणं ।
॥ वैशम्पायन उवाच ॥ ततः प्रहृष्टवदनो विस्मयोत्फुल्ललोचनः । मूर्द्ध्नि बद्धाञ्जलिपुटो मार्कण्डेयो महातपाः ।
गोत्रनामादिकं श्रुत्वा दीर्घायुर्लोकपूजितः । अथाकरोन्नमस्कारं प्रणतः शिरसा प्रभुं । ११२००
॥ मार्कण्डेय उवाच ॥ इच्छेऽहं तत्त्वतो मायामिमां ज्ञातुं तवानघ । यदेकार्णवमध्यस्थः शेषे त्वं बालरूपवान् ।
किंसंज्ञः कथ भगवन् लोके विज्ञायसे प्रभो । तर्कये त्वां महद्भूतं न भूतमिह तिष्ठति ।
॥ भगवानुवाच ॥ अहं नारायणो ब्रह्मा सम्भवः सर्व्वदेहिनां । सर्व्वभूतोद्भवकरः सर्व्वभूतविनाशनः ।
अहमैन्द्रे पदे शक्रः ऋतूनामपि वत्सरः । अहं युगे युगाख्यश्च युगस्यावर्त्त एव च ।
अहं सर्व्वाणि सत्त्वानि दैवतान्यखिलानि च । भुजगानामहं शेषस्तार्क्ष्योऽहं सर्व्वपक्षिणां । ११२०५
अहं सहस्रशीर्षाख्यः पादैरभिसंवृतः । आदित्यो यज्ञपुरुषो देवयज्ञमयो मखः ।
अहमग्निर्हव्यवाहो यादसां पतिरव्ययः । यत् पृथिव्यां द्विजेन्द्राणां तपसा भावितात्मनां ।
बहुजन्मनिरुद्धानां ब्रह्मणोऽप्यतिरिच्यते । ज्ञानवान् दृष्टविश्वात्मा योगिनां योगवित्तमः ।
कृतान्तः सर्व्वभूतानां त्रिविधः कालसंज्ञितः । अहं कर्म्मक्रिया जीवः सर्व्वेषां धर्म्मसाधनं ।
निष्क्रियः सर्व्वभूतानामात्मज्ञातिः सनातनः । प्रधानं पुरुषो देवस्तन्मात्रस्तथैवाव्ययः । ११२१०
अहं धर्म्मस्तपश्चाहं सर्व्वाश्रमनिवासिनां । अहं हयशिरा देवः क्षीरोदधिमहार्णवे ।
ऋतं सत्यञ्च परममहमेकः प्रजापतिः । अहं साङ्ख्यमहं योगः पदं तत्परमं तथा ।
अहमिज्या भरद्वाजोऽहं विद्याधिपः स्मृतः । अहं ज्योतिरहं वायुरहं भूमिरहं नभः ।
अहमापः समुद्राश्च नक्षत्राणि दिशो दश । अहं वर्षमहं सोमः पर्ज्जन्योऽहमहं रविः ।
क्षीरोदः सागरश्चाहं समुद्रो वडवामुखः । वह्निः संवर्त्तको भूत्वा पिबंस्तोयमयं हविः । ११२१५

अहं पुराणं परमं तथैवाहं परायणं। अहं भूतस्य भव्यस्य वर्त्तमानस्य सम्भवः।
यत्किञ्चित् पश्यसे चैव यच्छृणोषि च किञ्चन। यच्चानुभवसे लोके तत् सर्व्वं मामकं स्मृतं।
विश्वं सृष्टं मया पूर्व्वं सृजेयञ्चाद्य पश्य मां। युगे युगे च स्रक्ष्यामि मार्कण्डेयाखिलं जगत्।
तदेतदखिलं सर्व्वं मार्कण्डेयावधारय। शुश्रूषुर्मम धर्म्मांश्च कुक्षौ चर सुखी भव।
मम ब्रह्मा शरीरस्थो देवैश्च ऋषिभिः सह। व्यक्तमव्यक्तयोगं मामवगच्छापराजितं। ११२१०
अहमेकाक्षरो मन्त्रस्त्र्यक्षरश्चैव सर्व्वशः। त्रिपदश्चैव परमस्त्रिवर्गार्थनिदर्शनः।
॥ वैशम्पायन उवाच ॥ एवमेतत् पुराणेषु वेदान्तेषु महामुनिः। वक्तुमाहनवानाशु मार्कण्डेयं महामुनिं।
प्रवेशयामास ततो जठरं विश्वरूपधृक्। ततो भगवतः कुक्षिं प्रविष्टो मुनिसत्तम।
रराम सुखमासाद्य शुश्रूषन् हंसमव्ययं।
तदचरं विविधमपाश्रितो वपुर्महार्णवे व्यपगतचन्द्रभास्करे। शनैश्चरन् प्रभुरथ हंससंज्ञितः सृजन् जगद्विचरति काल पर्य्यये। ११२१२
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे मार्कण्डेयदर्शने द्विशततमोऽध्यायः॥ २०० ॥
॥ वैशम्पायन उवाच ॥ आपव स विभुर्भूत्वा कारयामास वै तपः। छादयित्वात्मनो देहमात्मना कुम्भसम्भवः।
ततो महात्माऽतिबलो मतिं लोकस्य सर्ज्जने। महतां पञ्चभूतानां विश्वभूतो व्यचिन्तयत्।
तस्य चिन्तयतस्तत्र तपसा भावितात्मनः। निराकाशे तोयमये सूक्ष्मे जगति गह्वरे।
ईषत् सङ्क्षोभयामास सोऽर्णवं सलिले स्थितः। अनन्तरोर्म्मिणा सूक्ष्ममथ च्छिद्रमभूत्तदा।
तच्च शब्दमयोऽभूत् स मारुतश्छिद्रसम्भव। स लब्ध्वाऽन्तरमक्षोभ्यो व्यवर्द्धत समीरणः। ११२२०
विवर्द्धता बलवता तेन सङ्क्षोभितोऽर्णवः। अन्योन्यवेगाभिहता ममन्थुर्य्योर्म्मयः कुशं।
महार्णवस्य क्षुब्धस्य तस्मिन्नम्भसि मथ्यति। कृष्णवर्त्मा समभवत् प्रभुर्वैश्वानरोऽर्चिमान्।
ततः संशोषयामास पावकः सलिलं बहु। क्षयाज्जलनिधेश्छिद्रमसृजद्दिव्यजित्तदा।
आत्मतेजोभवाः पुण्या आपोऽमृतरसोपमाः। आकाशं छिद्रसम्भूतं वायुराकाशसम्भव।
आज्यं सङ्घर्षणोद्भूतं पावकस्याव्ययसम्भवं। दृष्ट्वा प्रीतमना देवो महात्मा भूतसम्भव। ११२२५
दृष्ट्वा भूतानि भगवान् लोकसृष्ट्यर्थमव्ययः। ब्रह्मणो जन्मसहितं बहुरूपो विचिन्तति।
चतुर्युगादिसंख्याते सहस्रयुगपर्य्यये। यत् पृथिव्यां द्विजेन्द्राणां तपसा भावितात्मनां।
बहुजन्मविशुद्धात्मा ब्राह्मणो यतिसत्तमः। ज्ञानशब्दप्रवियात्मा योगिनां योगवित्तमः।
समात्मतत्त्वं विज्ञेयं सम्पूर्णैश्वर्य्यविक्रमं। देवो ब्रह्माणि विश्वेशो नियोजयति योगवित्।
ततस्तस्मिन्महातोये हृदिदो हरिरच्युतः। स्मरन् क्रीडंश्च विविधं मोदते वै च पार्थिव। ११२३०
पद्मं नाभ्युद्भवं चैकं समुत्पादितवांस्ततः। सहस्रपर्णं विरजो भास्कराभं हिरण्मयं।
हुताशनज्वलितशिखोज्ज्वलप्रभं सुगन्धिनं शरदमलार्कतेजसं। विराजते कमलमुदारवर्चसं महात्मनस्तनुरुहचारुदर्शनं।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे महापद्मोत्पत्तौ एकाधिकद्विशततमोऽध्यायः॥ २०१ ॥

॥ वैशम्पायन उवाच ॥ अथ योगविदां श्रेष्ठं सर्व्वभूतमनोमयं । स्रष्टारं सर्व्वभूतानां ब्रह्माणं सर्व्वतोमुखं ।
तस्मिन् हिरण्मये पद्मे बहुयोजनविस्तृते । सर्व्वतेजोगुणमये पार्थिवैर्लक्षणैर्युते ।
तच्च पद्मं पुराणज्ञाः पृथिवीरूपमुत्तमं । नारायणात् समुत्पन्नं प्रवदन्ति महर्षयः । ११७७५
या तु पद्मासना देवी तां पृथ्वीं परिचक्षते । ये तु गर्भाङ्कुरास्तस्या दिव्यान् पर्व्वतान् विदुः ।
हिमवन्तञ्च मेरुञ्च नीलं निषधमेव च । कैलासं क्रौञ्चवन्तञ्च तथाऽद्रिं गन्धमादनं ।
पुण्यं त्रिशिखरं चैव कान्तं मन्दरमेव च । उदयञ्च गिरिश्रेष्ठं विन्ध्यमस्तञ्च पर्व्वतं ।
एते देवगणानाञ्च सिद्धानाञ्च महात्मनां । आश्रयाः सर्व्वभूतानां पुण्याः कामयुजोऽद्रयः ।
एतेषामन्तरो देशो जम्बूद्वीप इति स्मृतः । जम्बूद्वीपस्य संस्थानं याज्ञिका यत्र कुर्व्वते । ११७८०
गर्भाद्यत् स्रवते तोयं देवामृतरसोपमं । दिव्यतीर्थशतापाज्ञास्ता दिव्याः सरितः स्मृताः ।
यान्येतानि तु पद्मस्य केशराणि समन्ततः । असंख्याताः पृथिव्यास्तु सर्व्वे ते धातुपर्व्वताः ।
यानि पद्मस्य पत्राणि भूरीण्यूर्द्ध्वे नराधिप । ते दुर्गमाः शैलचिता म्लेच्छदेशा विकल्पिताः ।
यान्यधः पद्मपत्राणि निवासार्थं विभागशः । दैत्यानामुरगाणाञ्च पातालं तन्महात्मनां ।
तेषामधोगतं यत्तदुदकेत्यभिसंज्ञितं । महापातककर्म्माणो मज्जन्ति यत्र मानवाः । ११७८५
पद्मस्यान्ते कुरुं यत्तदेकार्णवजलं महत् । प्रोक्ताश्चे दिक्षु संघातास्चत्वारो जलसागराः ।
एष नारायणस्याद्यो महापुष्करसम्भवः । प्रादुर्भावोऽव्ययस्तस्मान्नाम्ना पुष्करसंज्ञितः ।
एतस्मात् कारणात्तज्ज्ञैः पुराणैः परमर्षिभिः । याज्ञिकैर्वेददृष्टार्थैर्यज्ञे पद्मविधिः स्मृतः ।
एवं भगवता पद्मविधया परया विधिः । पर्व्वतानां नदीनाञ्च देशानाञ्च विनिर्म्मितः ।
विभुस्तथा चाप्रतिमप्रभावः प्रभाकरो योगिवरोऽमितद्युतिः । स्वयं स्वयम्भूः शयनेऽस्वपत्तदा जगन्मयं पद्मनिधिं महार्णवे । ११७९०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सर्व्वभूतोत्पत्तौ द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥
॥ वैशम्पायन उवाच ॥ चतुर्युगादिसम्भूतो महत्सु युगपर्य्यये । विप्रस्तमसि संभूतो मधुर्नाम महासुरः ।
तस्यैव तु सहायोऽन्यो भूतो रजसि कैटभः । तौ रजस्तमसाविष्टौ सम्भूतौ कामरूपिणौ ।
एकार्णवजलं सर्व्वं क्षोभयन्तौ महाबलौ । कृष्णाम्बरधरौ श्वेतदीप्ताग्रदंष्ट्रिणौ ।
किरीटमुकुटोदग्रौ केयूरवलयोज्ज्वलौ । महाद्भुतताम्राक्षौ पीनोरस्कौ महाभुजौ ।
महच्छिरःसंहननौ जङ्गमाविव पर्व्वतौ । नीलमेघाभ्रसङ्काशावादित्यप्रतिमाननौ । ११७९५
विद्युदभ्रोदताग्राभ्यां कराभ्यामतिभीषणौ । पादसञ्चारवेगाभ्यामुत्क्षिपन्ताविवार्णवं ।
कम्पयन्ताविव हरिं शयानमरिसूदनं । तौ तत्र विचरन्तौ स्म पुष्करे विश्वतोमुखं ।
पश्यतां दीप्तवपुषं योगिनां श्रेष्ठमव्ययं । नारायणसमाज्ञप्तं सृजन्तमखिलाः प्रजाः ।
दैवतानि च विश्वानि मानसांश्च सुतानृषीन् । ततस्तावूचतुस्तत्र ब्रह्माणमसुरोत्तमौ ।
दृष्टौ युयुत्सया क्रूरौ क्रोधसंरक्तलोचनौ । कस्त्वं पुष्करमध्यस्थः सितोष्णीषश्चतुर्मुखः । ११८००
आवां न गणयन्मोहादास्से त्वं विगतज्वरः । एह्यावयोर्म्माहयुद्धं प्रयच्छ कमलोद्भव ।

पुत्रं भूयस्तकश्चैव समुत्पादितवान्नृप । ततो गतागतस्तत्र ब्रह्मा मानसमव्ययं । ११५००
सोत्पन्नस्त्वपि ब्रह्माणमुवाच मानसः सुतः । करोमि किमहं साहाय्यं ब्रवीतु भगवानिति ।
॥ ब्रह्मोवाच ॥ य एष कपिलो नाम ब्रह्मा नारायणस्तथा । वदते त्वां स यत्तत्र तत् कुरुष्व महामते ।
॥ वैशम्पायन उवाच ॥ ब्रह्मणोक्तस्तदा सोऽथ भूयस्तावुपस्थितः । शुश्रूषुरस्मि युवयोः किं कुर्मीति कृताञ्जलिः ।
॥ परमेश्वरावूचतुः ॥ यत् सत्यमक्षरं ब्रह्म ह्यष्टादशविधं स्मृतं । यत्सत्यमनृतञ्चैव परमात् समनुस्मर ।
॥ वैशम्पायन उवाच ॥ एतद्वचो निशम्याथ स ययौ दिशमुत्तरां । गत्वा च तत्र ब्रह्मत्वमगमज्ज्ञानचक्षुषा । ११५०५
ततो ब्रह्मा भुवर्नाम द्वितीयमसृजत् प्रभुः । सङ्कल्पयित्वा च पुनर्मनसैव महामनाः ।
सत. सोऽप्यब्रवीद्वाक्यं किं कुर्मीति पितामहं । पितामहवचसाद्यासौ ब्रह्माणं समुपस्थितः ।
ब्रह्मभ्यां सहितः सोऽपि भूयो भागवतीं गतः । प्राप्तश्च परमं स्थानं स तयोः पार्श्वमागतः ।
तस्मिन्नपि गते पुत्रे तृतीयमसृजत् प्रभुः । भौवोपपत्तिसम्पन्नं भूर्भुवं नाम तं विदुः ।
आसाद्य सोऽपि तं धर्मं तयोरेवागमद्गतिं । एवं पुत्रास्त्रयोऽप्येते प्रोक्ताः ब्रह्मणो महात्मनः । ११५१०
तान् गृहीत्वा सुतांस्तस्य प्रयातो स्वार्जितां गतिं । नारायणश्च भगवान् कपिलश्च यतीश्वरः ।
यं कालं तौ गतौ मुक्तिं ब्रह्मा तं कालमेव तु । तपो घोरतरं भूयः स तेपे संशितव्रतः ।
न रराम ततो ब्रह्मा प्रभुरेकस्तपश्चरन् । शरीरार्द्धात्ततो भार्यां समुत्पादितवान् शुभां ।
तपसा तेजसा चैव वर्चसा नियमेन च । सदृशीमात्मनो देवीं समर्थां लोकसर्जने ।
स तया सहितस्तत्र रेमे ब्रह्मा महातपाः । सृजन् प्रजापतीन् सर्वान् जगच्चानेकलक्षणं । ११५१५
ततोऽसृजद्वै त्रिपदां गायत्रीं वेदमातरं । अकरोच्चैव चतुरो वेदान् गायत्रिसम्भवान् ।
आत्मार्थे चासृजत् पुत्रान् लोककर्तॄन् पितामहः । विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः ।
विश्वेशं प्रथमं नाम महातपसमात्मजं । सर्वाश्रमपदं पुण्यं नाम्ना धर्मं स सृष्टवान् ।
दक्षं मरीचिमत्रिञ्च पुलस्त्यं पुलहं क्रतुं । वशिष्ठं गौतमञ्चैव भृगुमङ्गिरसं मनुं ।
अथर्व्वभूता इत्येते ख्याताश्चैव महर्षयः । त्रयोदश सुता येषां वंशा वै संप्रतिष्ठिताः । ११५२०
अदितिर्दितिर्दनुः काला अनायुः सिंहिका खसा । प्राधा क्रोधा च सुरसा विनता कद्रुरेव च ।
दक्षस्यैता दुहितरः कन्या द्वादश भारत । नक्षत्राणि च भद्रं ते सप्ताविंशतिरूर्जिताः ।
मरीचेः काश्यपः पुत्रस्तपसा निर्मितः किल । तस्मै कन्या द्वादशेमा दक्षस्ता अन्वमन्यत ।
नक्षत्राख्याश्च सोमाय वशे दत्तवान्नृप । रोहिण्यादीनि पुण्यानि सर्वाणि जनमेजय ।
लक्ष्मीः कीर्त्तिस्तथा साध्या विश्वा कामानुगा शुभा । देवी सरस्वती चैव ब्रह्मणा निर्म्मिता पुरा । ११५२५
एताः पञ्च वरिष्ठा वै सुरश्रेष्ठाय भारत । दत्ता धर्माय भद्रन्ते ब्रह्मणा दृष्टधर्मणा ।
या रूपार्द्धमयी पत्नी ब्रह्मणः कामरूपिणी । सुरभिः सा तु गौर्भूत्वा ब्रह्माणं समुपस्थिता ।
ततस्तामगमद्ब्रह्मा मैथुने लोकपूजितः । लोकसर्जनहेतुज्ञो गवामर्थाय भारत ।
जज्ञे चैकादश सुतान् विपुलान् धर्मसंहितान् । रक्तसन्ध्याभ्रसङ्काशान् दृप्तस्तोत्रतेजसा ।

ते रुदन्तो द्रवन्तश्च भगवन्तं पितामहं। रोदनाद्द्रवणाच्चैव ततो रुद्रा इति स्मृताः।
निर्ऋतिश्चैव सर्पश्च तृतीयो ह्यज एकपात्। मृगव्याधः पिनाकी च दहनोऽथेश्वरश्च वै।
अहिर्बुध्न्यश्च भगवान् कपाली चापराजितः। सेनानीश्च महातेजा रुद्रा एकादश स्मृताः।
तस्य मेव सुराभ्यान्तु जज्ञे गोवृषभस्तथा। अकृष्टाश्च तथा माषाः सिकताः पृश्नयोऽव्रताः।
अजाश्चैवैकवंशाश्च तथैवामृतमुत्तमं। ओषध्यः प्रवरा याश्च सुरभ्यां ता समुत्थिताः।
धर्म्मात्स्मृद्भवः कामः साध्या साध्यान् व्यजायत। प्रभवं च्यवनञ्चैव ईशानं सुरभिं तथा।
अरण्यं मरुतञ्चैव विश्वावसुबलध्रुवौ। महिषश्च तनूजश्च विधानमनघं तथा।
वत्सरञ्च विभूतिञ्च सर्व्वासुरनिसूदनं। सुपर्व्वतं वृषं नागं साध्या लोकनमस्कृता।
वासवानुमता देवी जनयामास वै सुतान्। मरुञ्च प्रथमं देवं द्वितीयं ध्रुवमव्ययं।
विवस्वन्तं तृतीयञ्च चतुर्थं सोममव्ययं। पञ्चमं पर्व्वतञ्चैव योगेन्द्रं तदनन्तरं।
सप्तमञ्च ततो वायुमष्टमं निर्ऋतिं वसुं। धर्म्मस्यापत्यमित्येवं साध्यायां वै व्यजायत।
विश्वेदेवाश्च विश्वायां धर्म्माज्जाता इति श्रुतिः। सुधर्म्मा च महाबाहुः शङ्खपाच्च महाबलः।
ऊकयश्चैव महाबाहुर्व्वपुष्मांश्च तथैव च। चाक्षुषस्य मनोरेते तथाऽनन्तमहोरणौ।
विश्वावसुसुपर्व्वाणौ विष्कुम्भश्च महायशाः। रुरुश्च सुविपुलो वै भास्करप्रतिमद्युतिः।
विश्वेदेवान् देवमाता विश्वेशान् जनयत् सुतान्। मरुत्वती मरुत्वन्तो देवानजनयत् सुतान्।
अग्निश्चक्षुर्हविर्ज्योतिः सावित्रं मित्रमेव च। अमरं शरवृष्टिञ्च सङ्कर्षञ्च महाभुजं।
विराजञ्चैव शुक्रञ्च विश्वावसुविभावसू। अग्न्यन्तश्चित्ररश्मिञ्च तथा निष्कुषितं नृपं।
नहुषञ्चाकृतिञ्चैव चारित्रं मल्लपन्नगं। वृहन्तञ्च वृहद्रूपं तथैव परतापनं।
मरुत्वती तदा यज्ञे एतं वै मरुतां गणं। अदित्यां जज्ञिरे राजन्नादित्याः काश्यपादथ।
इन्द्रो विष्णुर्भगस्त्वष्टा वरुणो ह्यंशोऽर्य्यमा रविः। पूषा मित्रश्च वरदो मनुः पर्ज्जन्य एव च।
इत्येते द्वादशादित्या वरिष्ठास्त्रिदिवौकसः। आदित्यस्य सरस्वत्यां जज्ञे पुत्रद्वयं शुभं।
रूपश्रेष्ठं वलश्रेष्ठं त्रिदिवे रूपिणां वरं। अदित्यां जज्ञिरे देवा दितिर्दैत्यानजायत।
दानवांश्च दनोः पुत्राः सुरसायां सरीसृपाः। काला तु कालकेयांश्च खसा वै राक्षसांस्तथा।
सिंहिका ग्रहमाता सा गन्धर्व्वजननी मुनिः। अनायुषायास्तनया व्याधयश्चैतयस्तथा।
प्राधा चाप्सरसां माता अप्सरास्वप्यजीजनत्। क्रोधायाः सर्व्वभूतानि पिशाचाश्चैव भारत।
तथा पक्षिगणाश्चैव गुह्यकाश्च विशाम्पते। चतुष्पदानि सर्व्वाणि श्वेते गावश्च सौरभाः।
अरुणो गरुडश्चैव विनतायामजायत। सर्व्वान्महीधरान्नागान् देवी कद्रुर्व्यजायत।
एवन्तु वृद्धिमगमन् त्रिषु लोकाः परस्परं। तदा पौष्करके राजन् प्रादुर्भावे महात्मनः।
पुराणे पुष्करस्यापि मया द्वैपायनाच्छ्रुतः। कथितस्त्वनुपूर्व्वेण संस्तुतः परमर्षिभिः।

एष पौष्करको नाम प्रादुर्भावो महात्मनः । सम्यक् ते कीर्त्तितो राजन् यथा द्वैपायनेरितः ।
यथा तथानुपूर्व्व्येण संस्तुतः परमर्षिभिः । ११६६०
यश्चेदमग्र्यं प्रवरं पुराणं सदाऽप्रमत्तः शृणुयाद्यथोक्तं । अवाप्य कामानिह वीतशोकः परत्र स स्वर्गफलानि भुङ्क्ते ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सर्व्वभूतोत्पत्तौ चतुरधिकद्विशततोऽध्यायः ॥ २०४ ॥

॥ जनमेजय उवाच ॥ श्रुतं नः परमं ब्रह्मन् स्वयंभुचरितं महत् । दिव्यमन्योन्यसंभूतमर्चितं बहुभिर्गुणैः ।
छन्दोभिर्वृत्तसङ्घातैः समासैश्च सविस्तरैः । लघुभिर्मधुराभाषैर्ग्रथितं पदविग्रहैः ।
त्रिवर्गेणाभिसम्पन्नं धर्मेणार्थेन योजितं । कामेन बहुरूपेण शरीरान्तर्गतेन च ।
ब्राह्मणानां प्रभावैश्च योधानाञ्च पराक्रमैः । वैरनिर्यातनैश्चैव प्रतिज्ञानाञ्च पारगैः । ११६६५
रिपुस्वर्वधि संपक्षैर्मानुबन्धः प्रचोदितः । वंशयोगविनाशाय नृपेण सह विग्रहात् ।
ये च तस्मिन्महारौद्रे संग्रामे निहता नृपाः । तेषां सर्व्वाणि राष्ट्राणि पुत्राः सर्व्वे प्रपेदिरे ।
कौरवः प्रथितो राजा भगवद्व्यासमानुगः । धर्माश्च बहुधा प्रोक्तास्तथाणां, वर्णसम्पदा ।
शूराणामपि विख्यातः स्वर्गहेतुर्द्विजर्षभ । अनुग्रहार्थं भूतानां लोकस्यार्थाय कथ्यते ।
चतुर्णां वर्णसंज्ञानां पृथक् पृथगनेकधा । भवार्थे पतन्तश्च भूतानां संप्रबोधिताः । ११६७०
पृच्छतां देवसत्कारे चीर्णे चीर्णे च कर्म्मणि । दाने यस्यापि संयोगः स चापि बहुधा श्रुतः ।
द्वाभ्यां संयोगविहिता मधुवाक्यवचनयोः । नैतच्छक्यं समाख्यातुं भारताध्ययनं महत् ।
एकाह्नेन महाब्रह्मन्नपि दिव्येन चक्षुषा । ब्रह्मणोऽङ्गस्य विस्तारं संक्षेपञ्च सुसंग्रहं ।
श्रोतुमिच्छामि भगवन् परं कौतूहलं हि मे ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे जनमेजयवाक्ये पञ्चाधिकद्विशततोऽध्यायः ॥ २०५ ॥

॥ वैशम्पायन उवाच ॥ शृणुष्वैकमना राजन् पञ्चेन्द्रियसमाहितः । कथां कथयतो राजन्निर्विकारेण चेतसा । ११६७५
ब्रह्मसम्बन्धसम्बद्धमवद्धं कर्म्मभिर्नृप । पुरस्ताद्ब्रह्म सम्पन्नं ब्रह्मणो यददर्शितं ।
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकं । निष्कलः पुरुषस्तस्मात् संबभूवात्मयोनिजः ।
दिव्यो दिव्येन वपुषा सर्व्वभूतपतिर्विभुः । अचिन्त्यश्चाव्ययश्चैव युगानां प्रभवोऽव्ययः ।
अभूतश्चाप्यजातश्च सर्व्वत्र समताङ्गतः । अव्यक्तात्परतरं यत्तत्पुराणविदो विदुः ।
सर्व्वतः पाणिपादान्तं सर्व्वतोऽक्षिशिरोमुखं । सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति । ११६८०
असतश्च सतश्चैव विज्ञेयं यत् कारणं । अव्यक्तो व्यक्तिरूपश्च चरन्नपि न दृश्यते ।
विकारपुरुषोऽव्यक्तो ह्यरूपी रूपमाश्रितः । चरत्यचिन्त्यः सर्व्वेषु गूढोऽग्निरिव दारुषु ।
भूतभव्योद्भवो नाथः परमेष्ठी प्रजापतिः । प्रभुः सर्व्वस्य लोकस्य नाम चास्येति तत्त्वतः ।
अपदान्तु पदो जातस्तस्मान्नारायणोऽभवत् । अव्यक्तो व्यक्तिमापन्नो ब्रह्मयोगेन कामतः ।
ब्रह्मभावे च तं विद्धि स सर्व्वं लब्धवान् प्रभुः । प्रभुः सर्व्वस्य लोकस्य स्थावरस्येतरस्य च । ११६८५

अहन्त्विति स होवाच प्रजाः स्रक्ष्यामि भारत। प्रभवः सर्व्वभूतानां यस्य तन्मुरिमाः प्रजाः।
स्वभावाज्जायते सर्व्वं स्वभावाच्च तथाऽभवत्। अहङ्कार स्वभावाच्च स च सर्व्वमिदं जगत्।
सर्व्वव्यापी निरालम्बो ह्ययं योऽय जयी ध्रुवः। एष ब्रह्ममयो ज्योतिर्ब्रह्मशब्देन शब्दितः।
अव्यक्तो व्यक्तिमापन्नः पञ्चभिः क्रतुलक्षणैः। धारयन् ब्रह्मणा व्यक्तं विविधं विततश्चरन्।
अथ मूर्त्तिं समाधाय स्वभावाद्ब्रह्मचोदितः। ससर्ज्ज सलिलं ब्रह्मा येन सर्व्वमिदं ततं। ११५८०
वायुं पूर्व्वमथो सृष्ट्वा यो धातुर्धावयत्तमः। धारणाद्धातुशब्दञ्च लभते लोकसंश्रितं।
तदेतत् वायुसम्भूतं हि एष जगद्भूत् पुरा। एतद्दैवैरतिक्रान्तं पूर्व्वमेव सरस्वति।
पृथक्त्वं गमितं तोयं पृथिवीशब्दमिच्छता। घनत्वाच्च द्रवत्वाच्च निखिलेनोपलक्ष्यते।
फलत्वात् सीदमानाच्च सलिले सलिलोद्भवः। व्याजहार शुभां वाणीं सनन्दात् पुरयन्निव।
ऊर्द्ध्वं वै स्थातुमिच्छामि संमोदाच्चुद्धरस्व मां। गम्भीरतोयविवरमूर्त्तिविशोभितान्तरं। ११५८१
तेजोमूर्त्तिधरा देवी सर्व्वभूतशरीरिणी। यथायोगेन सम्भूता सर्व्वत्र विषयैषिणी।
श्रुत्वा तु गदितां तस्य गिरं तां सुप्रभाषितां। वाराहं रूपमास्थाय निपपात महार्णवे।
उद्धृत्य सोऽवनिं तोयात् कृत्वा कर्म्म सुदुष्करं। समाधौ प्रलयं गत्वा प्रलीनो न च दृश्यते।
यत्तद्ब्रह्ममयं ज्योतिराकाशमिति संज्ञितं। तत्र ब्रह्मा समुद्भूतः सर्व्वभूतपितामह।
अद्यापि मनसा धात्रा धार्य्यते ब्रह्मयोनिना। ज्ञानयोगेन सूत्रेण भूतानां हितकाम्यया। ११६००
भित्त्वा तु पृथिवीं मध्यमुपयाति समुद्भवं। तपनस्तूर्द्ध्वमातिष्ठन् रश्मिभिः प्रदहन्निव।
तस्य मण्डलमध्यात्तु निःसृतं प्रतिमण्डलं। स सनातनजो ब्रह्मा सौम्यं शीतलमन्वगात्।
सोममण्डलपर्य्यन्तात् पवनः समजायत। तदक्षरमयं ज्योतिस्तेजसोऽग्नेर्विवर्द्धनं।
स तु योगमयाज्ज्ञानात् स्वभावाज्ज्योतिरुद्गतात्। सृजते पुरुषं दिव्यं ब्रह्मयोनिं सनातनं।
द्रवं यत् सलिलं तस्य घनं यत् पृथिवी भवत्। छिद्रं तत्र तदाकाशं ज्योतिर्यच्चक्षुरेव तत्। ११६०५
वायुना स्पन्दते चैव संघाताज्ज्योतिरुद्भवः। पुरुषात् पौरुषो भावः पञ्चभूतमयो महान्।
भूतात्मा वै सर्म्मे तस्मिंस्तस्मिन्देहे सनातनः। गुहायां निहितं ज्ञाने योगात्मा सनातनः।
तपनश्चैव तद्रूपं योऽग्निश्चैव वसति देहिनां। शरीरे नियमो युक्तो धातुभिः सह सङ्गतः।
स्वभावात् क्षयमायाति स्वभावाच्चयमेति च। स्वभावादिन्दते शान्तिं स्वभावाच्च न विन्दति।
इन्द्रियैर्य्यतिमूढात्मा मोहितो ब्रह्मणः पदे। सम्भवं निधनञ्चैव कर्म्मभिः प्रतिपद्यते। ११६१०
यावत्तद्ब्रह्मविषयं नोपजानाति तत्त्वतः। तावत् संसारमाप्नोति सम्भवाय पुनः पुनः।
इन्द्रियैर्यतिरिक्तो वै यदा भवति योगवित्। तदा ब्रह्मत्वमापन्नः प्रलये प्रतितिष्ठति।
प्रतिबुद्धमसुं लोकं ब्रह्मवांश्च भवत्युत। न च रागव्यपैत्येति न च सज्जति कर्हिचित्।
आगतिञ्च गतिञ्चैव निधनं सम्भवं तथा। भूतेभ्यो वेत्ति सर्व्वज्ञः परां सिद्धिमुपागतः।
आत्मनो गतपदैव तथा विषयगोचरं। पुरस्तात् कर्म्मभिर्हन्ते परे ब्रह्म प्रतिष्ठितं। ११६१५

चित्तदन्योन्य मनसा त्यक्त्वा पूर्व्वाश्च यातनाः । भिद्यमानाः प्रशोभेन वायुभिश्च इवार्णवः ।
पश्यते हृदयं नीलं परेभ्यो ज्ञानचक्षुषा । महाप्रोक्तनिशात्मा वै विमुक्तो देहबन्धनात् ।
सृजेदपि परं लोकं संहरेदपि विद्यया । तेजोमूर्त्तिरियाविद्धमिह लोकत्रयं संसृजेत् ।
तिर्य्यग्योनौ गतानाञ्च कर्म्मभिर्निरयोपमैः । तानपि प्रतिमुच्येत महायुक्तेन चेतसा ।
अपरश्च परैर्देवै योगं कर्म्मभिर्विन्दति । न परं विद्यते तत्र यद्गत्वा कर्म्मभिर्ध्रुवं । ११११०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे षडधिकद्विशततोऽध्यायः ॥ २०६ ॥
वैशम्पायन उवाच ॥ पृथिव्यां यत् कृतं छिद्रं तपनेन विवर्द्धता । तस्मिन् न्यस्तोऽय मैनाकः स्वभावविहितोऽचलः ।
पर्व्वभिः पर्व्वतस्तस्य लभते नाम संज्ञितं । अचलनाद्चलत्वञ्च स्वभावान्मेरुरेव सः ।
तस्य पृष्ठे सुविस्तीर्णे नगस्य सुमहर्द्धिमान् । तस्मिंस्तु पुरुषो ह्यसौ वसति ज्योतिमप्रभः ।
विहितश्च स्वभावेन तेनैव परमात्मना । यत्तद्ब्रह्ममयं तेजो निहितं शिरसोऽन्तरे ।
तस्य ज्योतिर्म्मयं रूपं दीप्तं पुरुषविग्रहं । वदनादभिनिष्क्रान्तं ज्वलन्तमिव तेजसा । १११९५
चतुर्भिर्व्वदनैर्युक्तं चतुर्भिश्च भुजोत्तमैः । वर्णं ब्रह्मसमुद्भूतं ब्रह्मा ब्राह्मणपुङ्गवः ।
तदेवं महाभूतं पुनर्भावत्वमागतं । उद्धृता पृथिवी देवी पुरस्तात् सलिलाशयात् ।
ब्रह्मत्वं ब्रह्मणः स्थानाद्लोको लोककृतः । पद्मन्यो ब्रह्मलोकं शृङ्गं मेरोस्तदाऽभवत् ।
उच्छ्रितं योजनशतं सहस्रशतमेव च । एवमेव च विस्तारं चतुर्भिर्गुणितं गुणैः ।
अथवा नैव संख्यातुं शक्यं भूतेन केनचित् । समानहस्तैर्व्वक्त्रभिरपि दिव्येन तेजसा । १११२०
चतुर्भिः पार्श्वविस्तारैः शिलाभिरभिसंवृतैः । नगस्य तस्य राजेन्द्र विस्तारैः शतयोजनैः ।
कोटिकोटीशतगुणैर्गुणितं ब्रह्मवादिभिः । योगयुक्तैः सदा सिद्धैर्नित्यं ब्रह्मपरायणैः ।
मरुद्भिः सह देवेन्द्रैरुद्रैर्व्वसुभिरेव च । आदित्यैर्व्विश्वसहितैररय वसुधाधिपान् ।
रत्न एयिवोश्चैव भगवान् विष्णुना सह । विवस्वद्वरुणाभ्याञ्च संघातं गमितं नृप ।
तेन ब्राह्मेण वपुषा ब्रह्मप्राप्तेन भारत । यत्तद्विष्णुमयं तेजः सर्व्वत्र समतां गतं । १११२५
यत्तद्ब्रह्मेति च प्रोक्तं ब्राह्मणैर्व्वेदपारगैः । नियमैर्व्वहुभिः प्राप्तैः सत्यव्रतपरायणैः ।
एवमेते त्रयो लोका ब्राह्मेऽहनि प्रतिष्ठिताः । अहनि ब्रह्म चाव्यक्तं व्यक्तं प्राप्तं प्रतिष्ठितं ।
ब्रह्मणो नियतं कर्म्म प्रभावेण प्रचोदितं । प्रवर्त्तमानं भावेन शश्वद्ब्रह्मवादिनां ।
एतद्धितमिति प्रोक्तं ब्राह्मणैर्व्वेदपारगैः । यदेकं ब्रह्मणः पादं विश्वत्वं गमितं परं ।
बहुत्वाद्धि प्रभावाणां विश्वशब्दः प्रयुज्यते । ब्राह्मणैर्ब्रह्मभूतात्मा सत्यव्रतपरायणैः । १११३०
विश्वरूप मनोरूपं बुद्धिरूपत्वमानयत । एवं द्वन्द्वं स भगवान् प्रथमं मिथुनेऽसृजत् ।
स एव भगवान् विश्वं देव्या सह सनातनः । विधाय विपुलान् भोगान् ब्रह्मा चरति सानुगः ।
स एव भगवान् ब्रह्मा नित्यं ब्रह्मविदाम्वरः । निर्व्वाणपथगन्तॄणामकिञ्चनपथैषिणां ।
सोमात् सोमः समुत्पन्नो धारासलिलविग्रहात् । यथाऽभिषिक्तो भूतानां सैनापत्ये महेश्वरः ।

अभिषिच्य च भूतेशं कृत्वा कर्म्म स्वभावतः । नदति स्म तदा नादं तेन सा ह्युच्यते नदी । ११९७८
सा ब्रह्मलोकं सम्प्राप्यमभिभूय सहस्रशः । गङ्गता गगनाद्देवी सप्तधा प्रससार ह ।
सहस्रधा वा राजेन्द्र बहुधा च पुनः पुनः । इमं लोकममुञ्चैव भावयन् चरमश्चरं ।
ततो भूतानि रोहन्ति महाभूतफलानि च । ततः सर्व्वे क्रियारम्भाः प्रावर्त्तन्त मनीषिणां ।
चतुर्भिर्व्वेदैस्तस्य मुखपद्मादिनिःसृता । तदाऽक्षरमयी सिद्धिर्दिशत्वं समुपागता ।
तस्य ज्ञानमयं पुण्यं चतुष्पादं सनातनं । पतित्वेनाभवद्देवो ब्रह्मा चापि पितामहः । ११९८०
पादा धर्म्मस्य चत्वारो यैरिदं धार्य्यते जगत् । ब्रह्मचर्य्येण व्यक्तेन गार्हस्थेन च पावने ।
गुरुभावेन वाक्येन गुह्यगामिनगामिना । इत्येते धर्म्मपादाः स्युः स्वर्गहेतोः प्रचोदिताः ।
न्यायाङ्गेण गुह्येन योमो वर्द्धति मण्डले । ब्राह्मणे ब्रह्मचरणादेदा वर्त्तन्ति शाश्वताः ।
गृहस्थानभिवाक्येन तृप्यन्ति पितरस्तथा । ऋषयोऽपि च धर्म्मेण नगस्य सिरसि स्थिताः ।
नगस्य तस्य संस्पृश्य मेरोः शिखरमुत्तमं । पद्मां संपीड्य वृषणौ ऋषिभिस्तैर्विचार्य्यते । ११९८५
ग्रीवां निस्तब्ध्य पृष्ठञ्च विनाम्य प्रहसन्निव । नाभिदेशे करौ न्यस्य सर्व्वशोऽङ्गानि सङ्क्षिपन् ।
मूर्द्ध्नि ब्रह्म समुत्क्षिप्य मनसा स पितामहः । अहजन्मनसा विष्णुं योगाद्योगेश्वरस्य च ।
व्यतिरिक्तेन्द्रियो विष्णुर्बिम्बाद्बिम्बमिवोत्थित. । तेजोमूर्त्तिधरो देवो नभसीन्दुरिवोत्थितः ।
रराज ब्रह्मयोगात् स सहस्रांशुरिवापरः । विराजन्नमसो मध्ये प्रभाभिरतुलं प्रभुः ।
नोपलभ्यति मूढात्मा प्रत्यचं ब्रह्म शाश्वतं । ललाटमध्ये तिष्ठन्तं द्विधाभूतं क्रियां प्रति । ११९९०
ज्योतिस्त्वपि सम्बद्धं बिम्बं भास्करसोमयोः । बुद्ध्या पूर्व्वन्तु पश्यन्ति अध्यात्मविषये रताः ।
ब्राह्मणा वेदविद्वांसः सत्यव्रतपरायणाः । नेतरे यातु पश्यन्ति अध्यात्मं नावबुध्यते ।
हिंसायोगैरयोगात्मा सर्व्वप्राणिचरैर्नृप । भूतयो भुवि भूतेशो मोक्षप्राप्तेन चेतसा ।
कर्म्मभिः कुत्सितैरन्यैः सर्व्वप्राणिवधैषिणा । नराणां योगमास्थाय खेषु गात्रेषु भारत ।
समाहितमना ब्रह्मा मोक्षप्राप्तेन हेतुना । चन्द्रमण्डलसंस्थानाज्ज्योतिस्तेजो महत्तदा । ११९९५
प्रविश्य हृदये चिप्रं गायत्र्या नयनान्तरे । गर्भस्य सम्भवो यत्र चतुर्द्धा पुरुषात्मक. ।
ब्रह्मतेजोमयोऽव्यक्त. शाश्वतोऽथ ध्रुवोऽव्ययः । न चेन्द्रियगुणैर्युक्तो युक्तस्तेजोगुणेन च ।
चन्द्रांशुविमलप्रख्यो भ्राजिष्णुर्व्वर्णसंस्थितः । नेत्राभ्यां जनयद्देवो ऋग्वेदं यजुषा सह ।
सामवेदञ्च जिह्वाग्रादथर्व्वाणञ्च मूर्द्धतः । जातमात्रास्तु ते वेदाः चेत्र विन्दन्ति तत्त्वतः ।
तेन वेदत्वमापन्ना यस्माद्विन्दन्ति तत्पदं । ते सृजन्ति तदा वेदा ब्रह्मपूर्व्वं सनातनं । १२०००
पुरुषं दिव्यरूपाभं स्वैः स्वैर्भावैर्मनोभवं । अथर्व्वणस्तु यो भागः शीर्षे यज्ञस्य तत् स्मृतं ।
ग्रीवा चाङ्कान्तरे चैव ऋग्भाग. सम्भ्रितः । हृदयञ्चैव पार्श्वञ्च सामभागस्तु निर्म्मितः ।
वस्तिशीर्षकटीदेशजङ्घोरुचरणैः सह । एवमेव यजुर्भाग. संघातो यज्ञकल्पित. ।
पुरुषो दिव्यरूपाभः सम्भूतो ह्यपरात् पदात् । स हि वेदमयो यज्ञः सर्व्वसत्त्वसुखावहः ।

उभयोर्लोकयोस्तात हिंसावर्ज्य. सनातन.। योगारम्भं कर्मसाध्यं ब्रह्मचर्य्यं सनातनं । ११९७५
प्रभवं सर्व्वभूतानां यो विन्दति स वेदवित् स सिद्ध. प्रोच्यते लोके सिद्धिरेव न संशय.।
निर्मुक्तैः सर्व्वकर्म्मभ्यो मुनिभिर्व्वेदपारगै.। वेद्यत्वं यज्ञमित्येवं ब्रुवते वेदपारगा.।
ब्राह्मणा नियमश्रान्ताः सत्योपनिषदे पदे ।
॥ जनमेजय उवाच ॥ चेतसस्तूपलम्भो हि मनोयाह्यस्य कामत । कारणं श्रोतुमिच्छामि यथातत्त्वं महामुने ।
॥ वैशम्पायन उवाच ॥ न ह्यस्य कारणं किञ्चिदाद्यं भवति भारत। अन्तर्गतं कारणन्तु शारीरं मानसं नृप । ११९८०
येन वेद्यं विदुर्मर्त्या ब्राह्मणा. संशितव्रता.। अवेद्यनपि वेद्यश्च शक्यं वेत्तुं न कर्म्मणा ।
ब्राह्मणेन विनीतेन सदा ब्रह्मनिषेविणा । सदा विदिततत्त्वेन सिद्धिहेतोर्म्महीपते ।
सदा चैव शुचिर्भूत्वा नियतो ब्रह्मकर्म्मणा । उपतिष्ठेच्च स गुरुं बद्धाञ्जलिपुटो द्विज.।
सायम्प्रातश्च तत्त्वज्ञो मोक्षकर्म्माणि कारयेत् । विनीतो ब्रह्मभावेन समाहितमतिर्मुनि ।
सम्प्रपद्येत मनसा वैष्णवं पदमुत्तमं। ध्यायन्नेव प्रमोदेत समाहितमतिर्द्विज.। ११९८५
गच्छेत परमं ब्रह्म निर्व्विकारेण चेतसा । अपुनर्भावतत्त्वज्ञो निर्म्ममो भावबन्धनात् ।
तदेवाचरमित्याहुर्यत्तद्ब्रह्म सनातनं। न हि तत् कर्म्मयोगेन विद्यायोगेन दर्शितं ।
ब्राह्मणानां विनीतानां वैष्णवे पदसञ्चये। सर्व्वत्र व्यतिरिक्तानां कालयोगविगर्हिणां ।
अपुनर्भाविनो लोकाः कर्म्मयोगे प्रतिष्ठिता.। अनादानेन मनसा राजन् कर्म्माणि कर्म्मणि ।
आदानाद्बध्यते जन्तुरनादानात् प्रमुच्यते । ब्राह्मणेभ्य. क्रियाप्राप्तिर्जन्तोः पूर्व्वाज्जनाधिप। ११९९०
मुक्तश्चेन्द्रियबन्धेन प्राप्तश्च परमं पदं। न भूय. पुनरायाति मानुषं देहविग्रहं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सप्ताधिकद्विशततमोऽध्याय ॥ २०७ ॥
॥ जनमेजय उवाच ॥ उपसर्गश्च योगस्य ध्यातव्यञ्चैव यत् पदं। सिद्धिं सिद्धिगुणांश्चैव श्रोतुमिच्छामि तत्त्वतः।
॥ वैशम्पायन उवाच ॥ शृणु विस्तरत. सर्व्वं यथा पृच्छसि मेधया। उपपन्नेन मनसा ब्रह्मादीनामनेकधा।
पञ्चेन्द्रियगुणांस्त्यक्त्वा पश्यतो ब्रह्मणो नृप। योगयुक्तेन मनसा पञ्चेन्द्रियनिवासिन ।
ब्रह्मणश्चिन्तयानस्य ब्रह्मयज्ञ सनातन, बहुरूपमनैश्वर्य्यात् प्रवक्ष्यामि निबोध तत् । ११९९५
पञ्चेन्द्रियस्य ग्रामस्य नवद्वारस्य भारत। कामक्रोधस्य मोहस्य संनिरुद्धस्य मेधया ।
तेजसा मूर्ध्नि चाधाय धूमो दोधूयते महान्। नीललोहितवर्णाभै. पीतै. श्वेतैश्च धातुभिः।
मञ्जिष्ठारागवर्णाभैः कपोतसदृशैस्तथा । शुद्धवैदूर्य्यवर्णाभै. पद्मरागसमप्रभैः ।
स्फाटिकैर्म्मणिवर्णाभैर्नागेन्द्रसदृशैस्तथा। इन्द्रगोपकवर्णाभैश्चन्द्रांशुसलिलप्रभैः।
बहुवर्णै, स धूमौघैरिन्द्रायुधसमप्रभै.। सम्पतद्भिश्च युगपन्मेघैरिव समागमे। १२०००
निरुध्यत इवाकाशं पतवद्भिरिवाद्रिभि.। ते धूमवर्णाः संघाता घना. सलिलधारिणः।
निर्म्मुचैव तोयौघान् विविशुर्व्वसुधातलं। मूर्ध्नि चैव महानग्निर्मनसो धूयते प्रभु.।
युक्त. परमयोगेण सर्ग्गोऽर्चिर्भिराटतः। तस्याग्नेर्विस्फुलिङ्गानां सहस्राणि शतानि च ।

विसस्तु सर्व्वगात्रेभ्यो ज्वलन्तीव युगक्षये । धावन्ति वंशधाराराश्चावर्त्तोऽर्थोऽमलस्य च ।
प्रमेयुर्व्वारिधाराभिर्विपुले वसुधातले । वर्षाभ्यां युज्यतःमस्य वायुर्द्धाधूयते महान् । ११०७५
दिव्यसिद्धगुणोद्भूतः सूक्ष्मः प्राणविवर्द्धन. । वेगवान् भीमनिर्घोषो बलवान् प्र.णगोचरः ।
तेरेव चाग्निसंघातैर्धातुभिः सह सङ्गतः । सहस्रशोऽस्य प्रतयो मूर्त्तिं कृत्वा पृथग्विधां ।
अग्निर्व्वायुर्जलं भूमिर्द्धातवो ब्रह्मचोदिताः । समवायसमापन्ना बोजभूता महीतले ।
संघातं ह्यस्य वेगेन धातवो गमिता नृप । यद्ब्रह्म चतुरोंऽश्ये स सूक्ष्म.पुरुषो विराट् ।
तयोरन्यान् बहून् सृष्टवानसृजत् पुरुषोत्तमः । स एव भगवान् विष्णुर्व्यक्तोऽव्यक्तः प्रजापतिः । ११०८०
आधारः सर्व्वभूतानां प्रलये प्रलयान्तकृत् । तं मूर्त्ति धातुभिर्व्वद्धं विशन्ति ब्रह्मचोदिताः ।
तेऽन्तरा पुरुषाः सर्व्वे ज्ञातारः सुखदुःखयोः । अथ चेष्टितुमारब्धा मूर्त्तयो ब्रह्मनिर्मिताः ।
भित्वा च धरणीं देवीं प्रापद्यन्त दिशो दश । इत्येते पार्थिवाः सर्व्वे स्थावरा ब्रह्मनिर्मिताः ।
तत्रैव प्रलयं याता भूमित्वमुपयान्ति च । कर्म्मत्रयादिमुच्यन्ते धातुभिः कर्म्मबन्धनैः ।
कर्म्मत्रयादिमुक्त्वादिन्द्रियाणाञ्च बन्धनात् । तानेव प्रकृतिं यान्ति अज्ञाता कर्म्मगोचरैः । ११०८५
धराज्जातं चरञ्चैव अग्निगर्भास्तपोनघाः । येन तन्तुरिवाच्छिन्नो भावाभावः प्रवर्त्तते ।
धूमादभ्रन्तु संभूतमभ्रात्तोयं सुनिर्म्मलं । जगती जलसम्भूता जगत्येव च दृश्यते ।
फलाद्रसश्च संजज्ञे रसात् प्राणश्च देहिनां । रसस्तु तन्मयो जज्ञे यत्तद्ब्रह्म सनातनं ।
महोदिष्टं प्रधानन्तु बहुभिः कारणान्तरैः । ब्राह्मचैत्तपसि श्रान्तैः सत्यव्रतपरायणैः ।
अव्यक्तं व्यक्तमापन्नं स्वेन भावेन भारत । अन्तःस्थं सर्व्वभूतेषु चरन्तं विद्यया सह । ११०९०
कर्म्म कुर्व्वन्ति राजेन्द्र विषयस्थमनेकधा । नोपलभ्येत चक्षुर्भ्यां तपसा दग्धकिल्बिषैः ।
उपलभ्येत चक्षुर्भ्यां यतिभिर्ब्रह्मवादिभिः । निःसृतस्तु भुवोर्मध्ये मेघमुक्त इवांशुमान् ।
चरद्भिः पवित्रलोके निर्द्वन्द्वैर्निष्परिग्रहैः । योगधर्म्मेण कौरव्य प्रत्नमासाद्यते फलं ।
प्रादुर्भावं नयश्चैव भूतस्य निधनं तथा । विधत्ते प्रतयो ब्रह्मा संक्षये च भवे तथा ।
कर्म्मणः कर्म्मयोगज्ञो भूतेभ्यो नात्र संशयः । अविनाशाय लोकस्य धर्म्मसाव्यायनेन वै । ११०९५
युगं द्वादशसाहस्रं सहस्रयुगसंज्ञितं । एतद्ब्रह्मयुगं नाम युगानां प्रथमं युगं ।
एवं युगसहस्रान्ते संहारः प्रलयोऽन्तकृत् । सूक्ष्मं भवति लोकानां निर्व्विकारमचेतनं ।
तथा प्रलयमापन्नं जगत् सर्व्वं सनातनं । ब्रह्म सम्पद्यते सूक्ष्मं निश्चितं कारणैर्गुणैः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥
॥ जनमेजय उवाच ॥ पार्थिवं श्रोतुमिच्छामि विस्तरेण महामुने । आद्ययोर्युगयोर्ब्रह्मन् ब्रह्मप्राप्तस्य सर्व्वशः ।
॥ वैशम्पायन उवाच ॥ शृणु विस्तरतः सर्व्वं यन्मां पृच्छसि मेधया । उपपन्नेन मनसा दैवप्रत्ययसाधिना । १११०१
षड्भिस्प्राप्तस्तु भगवान् योगात्मा ब्रह्मसम्भवः । भूतानां बहुलत्वञ्च चकारेश्वरः प्रभुः ।
स्थितो ब्रह्मासने ब्रह्मा विचित्रः सदसा प्रभुः । अचलेनैव भावेन स्थाणुभूतेन भारत ।

एतश्च मोचविषये सर्व्वज्ञानमये पदे । यस्मात् पदसहस्राणि प्रभवन्त्युद्भवन्ति च ।
ब्रह्मयज्ञन्तु यजतो योगात् वेदात्मकं सदा । ब्रह्मणो विपुलं ज्ञानमैश्वर्य्यञ्च प्रवर्त्तते ।
ततः प्रथममैश्वर्य्यं युञ्जानेन प्रवर्त्तितं । ब्रह्मणा ब्रह्मभूतेन भूतानां हितमिच्छता । ११०६५
तदा त्वाकाशमैश्वर्य्यं युञ्जानस्य प्रवर्त्तते । ब्रह्मणो ब्रह्मभूतस्य निर्व्विकारेण कर्म्मणा ।
तदाऽन्तरीचं संप्राप्तं ब्रह्म निर्म्मलमव्ययं । संहारः सर्व्वभूतानां नराणां ब्रह्मवादिनां ।
भुवमैश्वर्य्ययोगाणां प्रतिपद्यन्ति देहिनः । आकाशैश्वर्य्यभूतेन संयोगे ब्रह्मवादिनां ।
प्रवर्त्तमानमैश्वर्य्यं वायुभूतं करोति च । विकारैर्व्वहुभिः प्राप्तैः सम्पतद्भिर्म्महाबलैः ।
एतैर्व्विकारैः संवृत्तैर्निरुद्धैश्चैव सर्व्वशः । भुवमैश्वर्य्यमापन्नः सिद्धो भवति ब्राह्मणः । ११०७०
शरीरादभिनिष्क्रम्य आकाशेन प्रधावति । निरालम्बो निरालम्बानालम्ब्य मनसा ततः ।
ऐश्वर्य्यभूतो भूतात्मा चरन् दिवि न दृश्यते । चक्षुर्भिर्व्वहुभिर्लोकैः पुरन्दरसमैरपि ।
ओङ्कारं ये त्वधीयन्ते मनसा ब्रह्मसत्तमाः । विमुक्ताः सर्व्वकर्म्मभ्यस्ते तं पश्यन्ति साधवः ।
एतद्धि परमं ब्रह्म ब्राह्मणानां मनीषिणां । अन्तश्चरति भूतानां विद्धि चेतनया सह ।
एष शब्दो महानादः पुराणो ब्रह्मसम्भवः । वायुभूतोऽक्षरं प्राप्तो वदन्त्येवं द्विजातयः । ११०७५
अरूपी रूपसम्पन्नो धातुभिः सह सङ्गतः । अन्तश्चरति भूतेषु कामकारकरो वशी ।
ततः परमनुध्याय मनसा पूरयन्निव । वेदात्मकं तदा यज्ञं चिन्तयन्तो मनीषिणः ।
ब्राह्मणाः शुचयो दान्ता यशोऽयुञ्जंस्तदव्ययात् । ब्रह्मलोकं काङ्क्षमाणा वैष्णवं पदमुत्तमं ।
पदस्थेतोः क्रियाः सर्व्वाः कुर्व्वन्ति विगतज्वराः । न चैते प्रसवादाप्ने भवमिच्छन्ति भारत ।
त्रिभिर्व्वाक्योपहारैश्च प्रतिभान्ति ये द्विजाः । यजन्ति परमात्मानं विष्णुं सत्यपराक्रमं । ११०८०
यजन विक्रमश्चैव ब्रह्माद्याः संप्रचक्रिरे । ब्रह्मा च वैष्णवं तेजो वेदोक्तैर्व्वचनैर्नृप ।
ब्राह्मणैर्ब्रह्मविद्भिश्च ब्रह्मभिर्ब्रह्मवादिभिः । शुचिभिः कर्म्मनिर्मुक्तैः सत्यव्रतपरायणैः ।
धातुभिर्व्योमकाले च महात्मा सम्प्रदृश्यते । तदेव परमं ब्रह्म वैष्णवं परमाहुतं ।
एतात्मकं तदैश्वर्य्यं विकाराश्चैव दृश्यते । घोररूपा विकारास्ते व्यथयन्ति महात्मनः ।

तेजसो रूपमैश्वर्य्यं विकारैः सह वर्द्धते । आत्मनो विघ्नजननं स्वस्थो ब्राह्मणकारणे ।
उग्ररूपैर्व्विकारैश्च हन्यते दण्डपाणिभिः । घोररूपैः सुगम्भीरैः पिङ्गलैर्न्नरविग्रहैः ।
नेत्रं समुद्धरन्तीमं जिह्वाग्रश्चास्य विन्दति । नदन्ति युगपन्नादं जृम्भमाणाः पुनः पुनः । ११०९५
पुनरेव तदा भूत्वा बहुरूपास्तदाऽभवन् । नृत्यमाना प्रगायन्ति तर्पयन्तो विशेषतः ।
स्त्रीभूताश्च ततः सर्व्वे युञ्जानाश्चावलम्बिरे । कण्ठेषु बहुरूपत्वात् विशेषेण प्रलोभयन् ।
मधुरैरभिधानैश्च व्याहरन्ति नभीतवत् । पतन्ति युगपत् सर्व्वे पादयोर्मूर्द्धभिर्नताः ।
प्रसादं काङ्क्षमाणाश्च योगस्यान्तरविघ्नतः । बहुप्रकारं कथयन् नृत्यन्ति च रमन्ति च ।
एभिर्व्विकारैर्व्वहुभिर्निरुद्धैश्चैव सर्व्वशः । ध्रुवमैश्वर्य्यमासाद्य सिद्धो भवति ब्राह्मणः । १११००
तदर्च्चिष इवाग्नेया आदित्यस्येव रश्मयः । तेजोरूपकमैश्वर्य्यं जातास्ते जलविन्दवः ।
ज्योतींषि चैव संवृत्ता आकाशे गुणसंवृताः । चरन्ति सततं लोके सूर्य्याचन्द्रमसोर्गतिं ।
चन्द्रसूर्य्यात्मकं दिव्यं ज्योतिश्चक्रमनुत्तमं । एतद्विराजते लोके कालचक्रं ध्रुवञ्चरत् ।
अर्द्धमासाश्च मासाश्च ऋतुः संवत्सराश्च ये । क्षणा लवा मुहूर्त्ताश्च कलाः काष्ठास्तथैव च ।
अहोरात्रप्रमाणञ्च निमेषोन्मेषणं तथा । ताराणां गतयश्चैव ग्रहाणाञ्च विशेषतः । १११०५
अथ पार्थिवमैश्वर्य्यं विकारधूहसम्भवं । योगयुक्तास्त्वभियुक्ताः पात्यन्ते स्वचलासनात् ।
अलोभाच्छिद्यते लोके वेपमानोऽनुकीर्त्त्यते । सीदते वसुधामध्ये भिद्यमानः पुनः पुनः ।
भूतानां बहुरूपैश्च अन्यैश्च तलवासिभिः । विषयैर्युज्यते चित्रं संक्षेपात् संप्ररुध्यते ।
ततः पार्थिवमैश्वर्य्यं सेवमानश्च सर्व्वतः । मूर्त्तिमद्भिश्च बहुधा धातुभिः स च हन्यते ।
शक्तितोमरनिस्त्रिंशैर्गदाभिश्चाप्यनेकधा । असिभिः पात्यते चैव क्षुरधारैः सहस्रशः । ११११०
भिद्यते चैव बाणाग्रैः सुतीक्ष्णैर्म्मर्म्मभेदिभिः । एभिर्व्विकारैर्निवृत्तैर्निरुद्धैश्चैव सर्व्वशः ।
ध्रुवमैश्वर्य्यमापन्नः सिद्धो भवति ब्राह्मणः । ततः पार्थिवमैश्वर्य्यं निर्मुक्तस्य विकारतः ।
प्रादुर्भवति युञ्जाने समाधौ प्रलयङ्गते । दिव्यं तद्गन्धमाघ्राय दिव्यार्थांस्तान् शृणोति च ।
दिव्यरूपैश्च विविधैश्छिद्यते न च भिद्यते । गच्छन् प्रकृतिना चान्तः प्रधानात्मा चरन्निव ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे नवाधिकद्विशततोऽध्यायः ॥ २०९ ॥

॥ वैशम्पायन उवाच ॥ ततोऽन्यां धारणां गत्वा मनसा स पितामहः । ब्रह्मकर्म्मसमारम्भनियुक्तेनान्तरात्मना । ११११५
सर्व्वाङ्गधारणां कृत्वा मनसा प्रहसन्निव । ब्रह्मयोगेण योगज्ञः सृजते मनसा प्रजाः ।
चक्षुषो रूपसम्पन्ना ह्यप्सराः सृजते प्रभुः । नासिकायाश्च गन्धर्व्वान् सुचित्राम्बरवाससः ।
तुम्बुरुप्रमुखान् सर्व्वान् शतशोऽथ सहस्रशः । नृत्यवादित्रकुशलान् कुशलान् सामगीतिषु ।
ब्रह्मयोगेण योगज्ञः स्वयम्भूर्भगवान् प्रभुः । चारुनेत्रां सुकेशान्तां सुभ्रूश्चारुनिभाननां ।
पद्मेन शतपत्रेण चारुणा च विराजितां । धर्म्यां शुचिगिरं सेव्यां ब्राह्मीं मूर्त्तिमतीं श्रियं । १११२०
असृजन्मनसा ब्रह्मा सम्यक् प्रीतेन चेतसा । भावयोगेन भूतात्मा सर्व्वमाणस्ततां ततः ।

चक्षुषो रूपसम्पन्नाः सृजन् सोऽप्सरसः प्रभुः। नासिकायाश्च गन्धर्व्वान् सुवाचः सुप्रवादितान्।
गानप्रभावं संचक्रे गन्धर्व्वाणां विशेषतः। अन्येषाञ्चैव विप्राणां गानं ब्रह्मप्रकाशितं।
पद्भ्यां सृजति भूतानि गतिमन्ति ध्रुवाणि च। नरकिन्नरयक्षांश्च पिशाचोरगराक्षसान्।
गजान् सिंहांश्च व्याघ्रांश्च मृगांश्चैव सहस्रशः। तृणशालींश्च बहुधा भावहेतोश्चतुष्पदान्। ११७९५
ये तु हस्तान्निखादन्ति कर्म्मप्राप्तेन हेतुना। हस्ताभ्यां कर्म्म सस्रजे मन्तव्यं मनसा तथा।
पायुना च विसर्गञ्च भूतानां सुखमिच्छतां। उपस्थानि तथानन्दं पञ्चेन्द्रियसमाधिना।
हृदयादसृजद्वा वै बाहुभ्यां पक्षिणस्तथा। अङ्गानि चैव सत्त्वानि वेशैस्तैस्तैः पृथग्विधैः।
ऋषिं त्वङ्गिरसञ्चैव मुनिं ज्वलिततेजसं। ब्रह्मवंशकरं दिव्यं व्यतिरिक्तषडिन्द्रियं।
भ्रुवोऽन्तरे जनयते योगाद्योगेश्वरः प्रभुः। ब्रह्मवंशकरं दिव्यं भृगुं परमधार्म्मिकं। ११८००
ललाटमध्यादसृजन्नारदं प्रियविग्रहं। सनत्कुमारं मूर्द्ध्नश्च महायोगी पितामहः।
अभिषिच्य तु सोमञ्च यौवराज्ये पितामहः। ब्राह्मणानाञ्च राजानं शाश्वतं रजनीचरं।
तपसा महता युक्तो यदैः सह निशाकरः। चचार नभसो मध्ये प्रभाभिर्भासयन् जगत्।
स गात्रैर्भगवान् योगात् मनसा सिद्धिमागतः। सृष्टवान् सर्व्वभूतानि स्थावराणि चराणि च।
तत्र स्थानानि भूतानां योगांश्चैव पृथग्विधान्। व्यधत्त शतशो ब्रह्मा सर्व्वभूतपितामहः। ११८०५
एष ब्रह्ममयो यज्ञो योगः सांख्यञ्च तत्त्वतः। विज्ञानञ्च स्वभावञ्च क्षेत्रं क्षेत्रज्ञ एव च।
एकत्वञ्च पृथक्त्वञ्च सम्भवं निधनं तथा। कालः कालचयश्चैव ज्ञेयो विज्ञानमेव च।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे दशाधिकद्विशततोऽध्यायः॥ २१०॥
॥ जनमेजय उवाच ॥ श्रुतं ब्रह्मयुगं ब्रह्मन् युगानां प्रथमं युगं। क्षत्रस्यापि युगं ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः।
ससंक्षेपं सविस्तारं नियमैर्ब्बहुभिश्चितं। उपायज्ञैश्च कथितं क्रतुभिश्चोपशोभितं।
॥ वैशम्पायन उवाच ॥ एतत्ते कथयिष्यामि यज्ञकर्म्मभिरर्च्चितं। दानधर्म्मैश्च विविधैः प्रजाभिरुपशोभितं। ११८१०
तेऽङ्गुष्ठमात्रा मुनय आदत्ताः सूर्य्यरश्मिभिः। मोक्षप्राप्तेन विधिना निराबाधेन कर्म्मणा।
प्रवृत्ते चाप्रवृत्ते च नित्यं ब्रह्मपरायणाः। परायणस्य धर्म्मस्य ब्रह्मणस्तु महीपते।
शौचवृत्ताः पावनाश्चैव ब्राह्मणाश्च महीपते। चारितब्रह्मचर्य्याश्च ब्रह्मज्ञानेन बोधिताः।
पूर्णे युगसहस्रान्ते प्रभावे प्रलयं गताः। ब्राह्मणा वृत्तसम्पन्ना ज्ञानसिद्धाः समाहिताः।
व्यतिरिक्तेन्द्रियो विष्णुर्योगात्मा ब्रह्मसम्भवः। दक्षः प्रजापतिर्भूत्वा सृजते विपुलाः प्रजाः। ११८१५
अक्षराद्ब्राह्मणाः सौम्याः क्षरात् क्षत्रियबान्धवाः। वैश्या विकारतश्चैव शूद्रा धूमविकारतः।
श्वेतलोहितकैर्वर्णैः पीतैर्नीलैश्च ब्राह्मणाः। अभिनिर्व्वर्त्तिता वर्णाश्चिन्तयानेन विष्णुना।
ततो वर्णत्वमापन्नाः प्रजा लोके चतुर्व्विधाः। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महीपते।
एकलिङ्गाः पृथग्धर्म्मा द्विपादाः परमाद्भुताः। यातनयाऽभिसम्पन्ना गतिज्ञाः सर्व्वकर्म्मसु।
त्रयाणां वर्णजातानां वेदप्रोक्ताः क्रियाः स्मृताः। तेन ब्राह्मणयोगेन वैष्णवेन महीपते। ११८२०

प्रज्ञया तेजसा योगात्तस्मात् प्राचेतसः प्रभुः । विष्णुरेव महायोगी कर्म्मणामन्तरं गतः ।
ततो निर्म्माणसंभूताः शूद्राः कर्म्मविवर्ज्जिताः । तस्मान्नार्हन्ति सत्कारं न ह्यत्र ब्रह्म विद्यते ।
यथाऽग्नौ धूमसंघातो ह्यरण्या मथ्यमानया । प्रादुर्भूतो विसर्पन् वै नोपयुज्यति कर्म्मणि ।
एवं शूद्रा विसर्पन्तो भुवि कार्त्स्न्येन जन्मना । नासंस्कृतेन धर्म्मेण वेदप्रोक्तेन कर्म्मणा ।
ततोऽन्ये दक्षपुत्रास्तु सम्भूता ब्रह्मयोनयः । बलवन्तो महोत्साहा महावीर्य्या महौजसः ।
पित्रा प्रोक्ता महात्मानो दक्षेणायशकर्म्मणा । अन्तमिच्छाम्यहं श्रोतुं धात्र्याः पुत्राऽवन्तो ह्यहं ।
ततो विधास्ये तत्त्वज्ञः प्रजानां विपुलं बलं । चेत्राणां विपुलत्वाद्धि ममापि विपुलाः प्रजाः ।
न तेषां दर्शयद्देवी चक्षुषा रूपमात्मनः । प्रजापतिसुतानां वै विपुला मानमिच्छतां ।
आत्मनो भावनिर्वृत्ते भाव्ये कृतयुगे तदा । जनित्री सर्व्वभूतानामण्डजानुद्भिज्जांस्तथा ।
संस्वेदजनमी धात्री चेति मात्रा प्रचोदिता । अनृतां तनुताञ्चैव जन्तूनां कर्म्मभोगिनां ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥
॥ जनमेजय उवाच ॥ साध्वहं श्रोतुमिच्छामि चेत्रायां ब्राह्मणोत्तम । यं ज्ञात्वा सर्व्वविद्यानां परं पश्येयमव्यय ।
॥ वैशम्पायन उवाच ॥ दक्षस्तु पुरानलस्य स्त्रीभावं पुरुषोत्तमः । योगाद्योगेश्वरात्मानं निषण्णो गिरिमूर्द्धनि ।
सुजानुः पीनजघना सुभ्रूः पद्मनिभानना । रक्तान्तनयना कान्ता सर्व्वभूतमनोरमा ।
दक्षः प्राचेतसस्तस्यां कन्यायां जनयत् प्रभुः । देहाद्धि योगविधिना कन्याः पद्मनिभाननाः ।
दक्ष पुरुषरूपेण स्त्रीरूपमपहाय च । दर्शने सर्व्वभूतानां कान्त कान्ततरोऽभवत् ।
ताः कन्याः प्रददौ दक्ष स्वयं प्राचेतसः प्रभुः । ब्रह्मदेयेन विधिना ब्रह्मप्राशेन भारत ।
प्रददौ दश धर्म्माय कश्यपाय त्रयोदश । सप्तविंशति सोमाय पत्नीहेतोः समाहितः ।
दक्षो दत्त्वाऽथ ताः कन्याः ब्रह्मचत्त्र प्रपद्य च । ब्रह्मणाऽध्युषितं पुण्य समाहितमना मुनिः ।
तप्यमानो मृगैः सार्द्धं चचार वसुधां नृप । तृणमूलफलैर्वृद्धो वृद्धश्च तपसा सह त् ।
मृगास्तु तस्य चरितं फलं मोदन्ति ब्राह्मणाः । दीक्षिताः पुण्यकर्म्माणस्तपसा दग्धकिल्बिषाः ।
संग्रामकाले कालज्ञ अग्निनाद्रियते मुनिः । कर्म्म यज्ञकृतां तात सिद्धिं पश्यति सत्वरां ।
दानमानप्रवीराश्च निरुद्वेगा निरामिषाः । मृगैः सह जरां यान्ति सपत्नीकाः सपुत्रिणः ।
ब्राह्मणास्तोत्रसंसिद्धा जनित्रे प्रथमे पदे । ब्राह्मणाऽध्युषितत्वाच्च ब्रह्म चैवमिहोच्यते ।
यतिभिः कर्म्मभिर्युक्तैर्ज्जितक्रोधैर्ज्जितेन्द्रियैः । चरद्भिर्व्वसुधा विप्रैरकिञ्चनपर्य्येषिभिः ।
या प्रजा पूर्व्वमारूढा मानसी ब्रह्मचारिणी । सैवैषा व्यक्तमापन्ना स्वभावदुरतिक्रमा ।
अव्यक्ता व्यक्तमापन्ना स्वभावदुरतिक्रमा । व्यक्ताव्यक्तं गमित्वैषा कालधर्म्मान्महीपते ।
स्थावरा जङ्गमाश्चैव स्थूलाः सूक्ष्माश्च भारत । कालयोगेन कालज्ञा भवन्ति न भवन्ति च ।
एताश्चैताः प्रजाः सर्व्वा दक्षकन्यासु जज्ञिरे । कश्यपेनाव्ययेनेह संयुक्ताः कालधर्म्मणा ।

बहुभिर्व्यालरूपैश्च चोद्यमानो गुहाश्रयैः । प्रतिगृह्य च तद्वाक्यं शैलेन्द्रस्य सुभाषितं ।
तूष्णीम्बभूवुस्ते सर्व्वे तदा ब्राह्मणसत्तमाः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे त्रयोदशाधिकद्विशततोऽध्यायः ॥ २१३ ॥

॥ वैशम्पायन उवाच ॥ बलिहोमाश्च वर्द्धन्ते ग्रहन्यहनि भारत । द्विजानां तपसाढ्यानां गृहधर्म्मेषु तिष्ठतां ।
देवताद्याश्च पूज्यन्ते तदाप्रभृति भारत । तेषां ब्रह्मविदां राजन् पृथिव्यां ब्रह्मवादिभिः । ११८१०
तत्रैव ब्रह्मसदने समे निस्तृणकण्टके । प्राज्येन्धनतृणे देशे पुण्ये पर्व्वतरोधसि ।
वासं यत्र प्रकुर्व्वन्ति दृष्ट्वा भगवतः क्रियां । तपोऽर्थिनो महाभागा ब्रह्मचर्य्यव्रते स्थिताः ।
गृहस्थधर्म्मे निरता दानप्राप्तेन चेतसा । मुनयश्चापि काङ्क्षन्ति धर्म्मेण हविकाङ्क्षिणः ।
अन्ये कर्म्मफले चैव रता ब्राह्मणपुङ्गवाः । अग्निहोत्रव्रतस्नाता जितक्रोधाः समाहिताः ।
दैवयुक्तेन चायुक्ताः कर्म्मणा ब्रह्मसत्तमाः । चीरवल्कलसंवीता नियता नियतेन्द्रियाः । ११८१५
चरन्तो ब्रह्मचर्य्यञ्च यत्नमास्थाय दारुणं । अनेन विधिना राजन् क्रमप्राप्तेन सर्व्वशः ।
क्रमाद्यो वेदसंस्कारं पुण्यं प्राप्ताः सनातनं । पूर्व्वैराचरितं राजन् मुनिभिर्ब्रह्मवादिभिः ।
अवेदविद्यो नागच्छेन्नापि रौद्रं व्रतञ्चरेत् । न च त्यागेन गच्छेत गृहधर्म्मञ्च न त्यजेत् ।
एतन्न गच्छेदध्यानमप्राप्तो वेदसञ्चयं । ऋचश्च सञ्चयः सर्व्वाः सामगानञ्च भारत ।
ये चापि पुत्त्रिणो न स्युः कुलाऽप्यप्राप्नुयुः फलं । ब्राह्मणास्तु तपःश्रान्ता परिचर्य्यागता गुरोः । ११८२०
यस्य नैवं श्रुतं ब्रह्म न गृहीतं विशाम्पते । कामं तं धार्म्मिको राजा दासकर्म्माणि कारयेत् ।
अथवा नैव विद्येत यो ब्रह्म नाद्रियेद्द्विजः । श्रोत्रादीनामविषये मनः पूर्व्वं समाहरेत् ।
एवं सर्व्वेन्द्रियारम्भं वेदपूर्व्वं समाचरेत् । ब्राह्मणो भूतिसम्पन्नो य इच्छेद्भूतिमात्मनः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे चतुर्द्दशाधिकद्विशततोऽध्यायः ॥ २१४ ॥

॥ वैशम्पायन उवाच ॥ ते तु गोब्राह्मणानाञ्च चन्द्रादित्यपुरस्कृताः । ब्राह्मणान् पूजयन्राजन् वसुभिर्ब्रह्मसम्भवैः ।
नारदप्रमुखाश्चैव गन्धर्व्वा ऋषयो नृप । कुर्व्वन्ति सततं यज्ञैः क्रमप्राप्तं पितामहं । ११८२५
वचोभिर्म्मधुराभाषैः पञ्चेन्द्रियनिवासिभिः । सर्व्वभूतप्रियकरैः सर्व्वभूतहितैषिभिः ।
स्तूयमानस्य यज्ञान्ते पञ्चेन्द्रियसमाहितैः । प्रोवाच भगवान् ब्रह्मा दिष्ट्या दिष्ट्येति भारत ।
ततः कश्यपमाभाष्य प्रोवाच भगवान् प्रभुः । भवानपि सुतैः सार्द्धं यक्ष्यते वसुधातले ।
क्रतुभिः परमप्राप्तैः संपूर्णवरदक्षिणैः । यथासुरास्ते सर्व्वे यथाप्रतिगुणैः प्रभो ।
वयं यक्ष्यामहे सर्व्वे पूर्व्वं यक्ष्यामहे वयं । एवमन्योन्यसंरम्भात् क्लिश्यन्ते बलदर्पिताः । ११८३०
दैतेयाश्चाप्यदेवेयाः परस्परजयैषिणः । युद्धायैव प्रतिष्ठन्ति प्रगृह्य विपुलौ भुजौ ।
निवार्य्यमाणा ऋषिभिस्तपसा दग्धकिल्विषैः । अन्यैश्च बहुभिर्व्विप्रैर्व्वेदवेदाङ्गपारगैः ।
निवार्य्यमाणा युध्यन्ते वृषभा इव गोकुले । प्रयुद्धारम्भसंक्रान्ताः सर्व्वप्राणैर्जयैषिणः ।
पश्यतां सर्व्वभूतानां स्वतोऽभ्विषयमागताः । ततः शब्देन महता परं कृत्वा महायशाः ।

हन्यन्ति बाहुभिः क्रुद्धाः सपक्षा इव पक्षिण । चचाल वसुधा चैव पदाक्रान्ता च रोपिभिः । ११८७५
तोयं या पुरुषाक्रान्ता निषीदति महाजले । पर्व्वताश्च विशीर्य्यन्ते नर्द्दमाना इवा इव ।
चुक्षुभुश्च महाम्बस्ताडिता मातरिश्वना । ततः समभवद्युद्धं मधोर्विष्णोश्च भारत ।
युगान्तकरणं घोरं सर्व्वासाध्विभयङ्करं । प्रममाथ बलं विष्णु, समग्रबलपौरुषं ।
अर्कैरिव बलं दीप्तं प्रमथत्यमुना यथा । तथा प्रशमितं तेन भगवत्यपकारिणा ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे पञ्चदशाधिकद्विशततोऽध्याय ॥ २१५ ॥
॥ वैशम्पायन उवाच ॥ बलवान् स तु दैतेयो मधुर्भीमपराक्रमः । बबन्ध पाशैर्व्विमितैर्महेन्द्रं पर्व्वतान्तरे । ११८८०
तं वै प्रह्लादवचनात्सचणश्च भारत । ऐश्वर्य्यमैन्द्रमाकाङ्क्षन् भविष्यं बुद्धिसंचयात् ।
बद्धेन्द्रं सहसा मध्ये पाशैर्धर्म्मविवर्ज्जितैः । आयसैर्व्वज्रभिश्चित्रैर्व्वलवद्भिर्दारुणैः ।
विष्णुमेवाप्यपौरुषमाह्वयन् युद्धकोविदः । मध्ये गणानां सर्व्वेषां कालस्य वशमागतः ।
द्वैधीभूताः काश्यपेया मधोर्व्वशमुपागताः । युद्धार्थमभ्यधावन्त प्रगृह्य विपुला गदाः ।
गन्धर्व्वाः किन्नराश्चैव वाद्ये गीते च कोविदाः । प्रनृत्यन्ति प्रगायन्ति प्रहसन्ति च सर्व्वशः । ११८८५
तन्त्रीभिः सुप्रयुक्ताभिर्म्मधुराभिः स्वभावत । मनो मधोर्व्विधुन्वन्ति युध्यमानस्य रागिणः ।
मधोर्व्वलिलमधुना नियोगात् पद्मयोनिनः । एतान् विकारान् कुर्व्वन्ति गन्धर्व्वाः सत्यवादिनः ।
तत्र शक्ता हि गान्धर्व्वे तस्मिन् शब्दे दधुर्मनः । दानवाश्च सुराश्चैव प्रत्यचं यान्ति प्राणदन् ।
मधोश्च मन आचिय पश्यन् योगेन चक्षुषा । मन्दरं प्रापतद्विष्णुर्गूढोऽग्निरिव दारुषु ।
ऋषयो दीप्तमनसः किञ्चिद्व्यथितमानसाः । पितामहं पुरस्कृत्य चक्षुनाम्बरधीयत । ११८९०
विष्णुं सोऽभ्यहनत् क्रुद्धो मधुर्मधुनिभेक्षणः । भुजेन प्रकुर्द्देयान्ते न चकम्पे पदात् पदं ।
विष्णुश्चाभ्यहनद्दैत्यं कराग्रेण स्तनान्तरे । स पपात महीं तूर्णं जानुभ्यां रुधिरं वमन् ।
न चैनं पतितं हन्ति विष्णुर्युद्धविशारदः । बाहुयुद्धे हि समयं मत्वाऽचिन्त्यपराक्रमः ।
इन्द्रध्वज इवोत्तिष्ठज्जानुभ्यां स महीतलात् । मधूरोषपरीतात्मा निर्द्दहन्निव चक्षुषा ।
परुषाभिस्ततो वाग्भिरन्योन्यमभिगर्ज्जतः । समीयतुर्व्वाहुयुद्धे परस्परजयैषिणौ । ११८९५
उभौ तौ बाहुबलिनावुभौ युद्धविशारदौ । उभौ च तपसा श्रान्तावुभौ सत्यपराक्रमौ ।
दृढप्रहारिणौ वीरावन्योन्यं तौ चकर्षतुः । शैलशृङ्गाविव युध्यन्तौ पचैः पाषाणसन्निभैः ।
विकर्षन्तौ च मत्तौ च अन्योन्यं वसुधातले । गजाविव विषाणाग्रैर्नखाग्रैश्च विचेरतुः ।
ततो मधुमुखेभ्येव सुस्राव रुधिरं बहु । धौतानि धातुबहुलं शैलेभ्य इव काञ्चनं ।
चर्चितौ रुधिरौघेन स्वरक्तैः समरञ्जितौ । अशोभेतां महायेश तौ व्यदारयतां महीं । ११९००
अभिद्रुत्य तु तौ वीरौ परस्परमनेकधा । पतङ्गाविव युध्येतां पचाभ्यां भासवद्विनौ ।
प्रकुर्व्वन्तावरीचैच्च सर्व्वभूतानि पुष्करे । सिद्धानां वदनाम्भुजाः परया वर्चवसहा ।
सूतयो विष्णुधट्टका सद्याः सत्यपराक्रमे । शरीरे धातुसंयुक्ते भजुक चेतसेन च ।

तद्ब्रह्म इन्द्रियैर्युक्तं तेजोभूतं सनातनं । भुवं तिष्ठन्ति भूतास्ते सूक्ष्मे प्रलयतां गते ।
पुनश्चोद्भवते सूक्ष्मं बहुरूपमनेकधा । प्रबोध्य भावं भूतानां त्रिषु लोकेषु कामदः । ११९६५
सुरूपो बहुरूपस्त्वं लोकान् सञ्चरते वशी । मानसोऽननुभास्याय बहुभि. कारणान्तरै. ।
योगात्मा धारयन्नुर्वीं नागात्मा नन्दिवर्द्धन, । ब्रह्मभूतं परञ्चैव सूक्ष्मेनात्मानमीश्वरः ।
ब्राह्मेण विप्रान् वसति युद्धेनैव च क्षत्रियान् । प्रदानकर्म्मणा वैश्यान् शूद्रान् परिचरेण च ।
गावः क्षीरप्रदानेन अश्वान् यज्ञेषु मोचणे. । पितरश्चाश्रणेनेह हविर्भागेण देवता. ।
चतुर्भिर्व्यतिरिक्ताङ्गैस्त्रिभिरन्यैश्च धातुभि. । सप्तभि. पितृभिर्नित्यैस्त्रीँल्लोकान् परिरक्षति । ११९७०
चन्द्रसूर्य्यात्मकं नित्यं तद्रूपं निश्चितात्मकं । प्रकाशे चाप्रकाशे च निगूढं स्वेन तेजसा ।
त्रयस्तु पितरो नित्यं वर्द्धयन्ति दिवाकरं । चतुर्भि. पितृभिश्चैव चन्द्रो वर्द्धति मण्डले ।
त्रय. पितृगणा नित्यं पिण्डान् चश्चाददन्ति ते । चत्वारोऽन्ये पितृगणा. सिद्धा.पञ्च च श्राद्दे ।
त्वमेव पञ्च तान् धर्म्मांस्त्वमेवापश्चतान्विभो । सनातनमयो दिव्य. शाश्वतो ब्रह्मसम्भव ।
तस्मात्ते तेज आदत्ते अग्निर्व्वायुश्च सर्व्वश. । अतस्त्वं कर्म्मणा तेन आदित्य, समपद्यथाः । ११९७५
यदश्नासि जगत् सर्व्वं रश्मिभि प्रदहन्निव । युगान्तकाले सम्प्राप्ते परां सिद्धिमुपागत. ।
पर्व्वसन्धावमावास्यां लोकश्चरसि मानुषं । ऋषिभिः सह गूढात्मा सूर्य्येन्दुवसुसप्रभै. ।
सफलं कर्म्म कुर्व्वाणो यजतां पुष्टिवर्द्धनं । हेतूनामधिकाराय माभूत् कर्म्मविपर्य्यय. ।
वानस्पत्यौषधीश्चैव युगपत् प्रतिपद्यसे । बालभावाय वसुधा पक्षे पक्षे जनिस्तव ।
भूतानां भुवि भूतेश भावार्थं वसुधातले । वसु यद्भुवि किञ्चिच्च तत् सर्व्वं त्वन्मयं विभो । ११९८०
त्वमेव द्विविधं धर्म्मं शाश्वतं वसुधातले । देवयज्ञं मन्त्रवाक्यमात्मयज्ञं समानुषं ।
द्विविध. स्वर्गमार्गश्च सूर्य्यश्चन्द्रश्च निर्म्मल । चन्द्रमा. पितृयानश्च देवयानश्च भास्कर. ।
त्वमेव वसुधायुक्तो विश्वञ्चरसि मायया । एकीकृत्य गुणान् सर्व्वान् सविद्यामुत्र सम्भव ।
एकस्त्वमसि संभूत. पुराण पुरुषो विराट् । अव्ययश्चाप्रमेयश्च कारणाकारकरो वशी ।
मूर्त्तस्तेजसि संभूतो वायु. पर्य्येति,खेचर, । सप्तभीरूपसंस्थानैर्नित्यमावृत्य तिष्ठसि । ११९८५
साधने ह्यभिनिर्व्वाणे संहारे प्रलये तथा । धाता धारणकाले च दिवश्चक्षुषि धारिणि ।
सेव्यमानो मुनिगणैर्नित्य विगतकल्मषै. । कर्म्मभि सत्यमापन्नै समरागैर्जितेन्द्रियै ।
स्तूयमानश्च विविधै सिद्धैर्मुनिवरैस्तथा । सस्मार विपुलं देहं हरिर्हयशिरो महान् ।
कृत्वा वेदमयं रूपं सर्व्वदेवमयं वपु. । शिरोमध्ये महादेवो ब्रह्मा तु हृदयस्थित: ।
आदित्या रश्मयो बालाश्चक्षुषी शशिभास्करौ । जङ्घे तु वसव ,साध्या. सर्व्वसन्धिषु देवता. । ११९९०
जिह्वा वैश्वानरो देवः सत्या देवी सरस्वती । मरुतो वरुणश्चैव जानुदेशे व्यवस्थितः ।
एवं कृत्वा तथा रूपं सुराणामद्भुतं महत् । असुरं पीडयामास क्रोधरक्तान्तलोचन. ।
मधुमेदोऽवपूर्णा च पृथिवी समदृश्यत । प्रसुदेव घनान्ते च रक्ताम्बुकनिवासिनी ।

मेदिनीत्येव शब्दस्य लक्ष: पृथ्व्या नरोत्तम। नामानुरूपरूपेण धरण्याः संप्रतिष्ठितं।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे षोडशाधिकद्विशततोऽध्यायः॥ २१६॥

॥ वैशम्पायन उवाच॥ मधोर्निपतनं दृष्ट्वा सर्व्वभूतानि पौष्करे। प्रहृष्टानि प्रगायन्ति प्रनृत्यन्ति च सर्व्वशः। ११९९८

सुपार्श्वो गिरिमुख्यश्च काञ्चनैः शिखरोत्तमैः। बहुधातुविचित्रैश्च खं लिखन्निव चाबभौ।

गिरयश्चाभिशोभन्ते धातुभिः समलङ्कृताः। प्रांशुभिः शिखराग्रैश्च सविद्युत इवाम्बुदाः।

पवनोद्धूतो रेणुपूर्णः सांजनवालुकः। छादयन् पर्व्वताग्राणि महामेघ इवाबभौ।

मेघसंश्लिष्टशिखराः पत्रविचित्रपादपाः। काञ्चनोद्भेदवक्षसः खे तिष्ठन्तीव पर्व्वताः।

पत्रवन्तः शिखरा हेमधातुभिरङ्किताः। पवनेन समुद्धूतास्त्रासयन्ति विहङ्गमान्। १२०००

काञ्चनाः पर्व्वताः सर्व्वे स्फाटिकैर्मणिभिश्चिताः। सूर्य्यकान्तैश्च बहुभिश्चन्द्रकान्तैश्च निर्म्मलैः।

हिमवांश्च महाशैलः श्वेतैर्धातुभिराचितः। काञ्चनैः शिखराग्रैश्च सूर्य्यपादप्रकाशितैः।

मणिभिश्च प्रकाशद्भिः पत्रान्तरविनिःसृतैः। ताम्रपुष्पैश्च शिखरैर्दीप्यमानः स्वतेजसा।

मन्दरश्चोपशिखरः स्फाटिकैर्मणिभिश्चितः। वज्रगर्भैर्निरालम्बैः स्वर्गोपम इवाबभौ।

सह शृङ्गैश्च कैलासः शिलाधातुविभूषितः। तोरणैश्चैव निविडैः प्रांशुभिश्चैव पादपैः। १२००५

प्रवादयद्भिर्गन्धर्व्वैः किन्नरैश्च प्रगायिभिः। देवकन्याङ्गनाभिश्च प्रक्रीडित इवाबभौ।

मधुरैर्व्वाद्यगीतैश्च नृत्यैश्चाभिनयाङ्गतैः। शृङ्गारैः सुप्रहारैश्च कैलासो मदनायते।

आदित्याभासिभिः शृङ्गैर्भिन्नाञ्जनचयप्रभः। विन्ध्यो नीलाम्बुदश्यामो विभिन्न इव तोयदः।

धान्यार्थं सर्व्वभूतानां मेरुपृष्ठे महाचले। निर्म्मुमुर्निर्म्मलं तोयं मेघजालैरिवोत्तमैः।

शिलाभिर्व्वहुचित्राभिर्धातुभिर्व्वहुचित्रितैः। प्रस्रवद्भिर्गुहाद्वारैः सलिलं स्फाटिकप्रभं। १२०१०

घोषान्ते वायुसंमूढा घना इव सविद्युतः। चित्रैः पुष्पितवृक्षगणाः शोभन्त इव भूषिताः।

नगाः कनकसंभूतैर्व्विचित्रैरिव भूषणैः। विहङ्गमाभिलीनाश्च लतास्तरुसमाश्रिताः।

विलम्बन्त्यः सपुष्पाश्च नृत्यन्ते वायुघट्टिताः। पवनेन समुद्धूता महता माधवेऽहनि।

मुमुचुः पुष्पसंघातं तोयवेलेव वर्षति। फलवद्भिश्च विपुलैः शाखास्कन्धावरोहिभिः।

पादपैः पर्णबहुलैर्भूषिता च वसुन्धरा। मधुप्रिया मधुकरा मधुमत्तविहङ्गमाः। १२०१५

घोषयन्तीव गायन्तः कामस्यागमसम्भवं। विष्णुर्मधुनिहन्ता च चकार मधुवाहिनीं।

नदीं प्रस्रवनिर्भेदां सुतोयां बहुलोदकां। भृङ्गारवर्णसिकतां मधुतोयां मनोरमां।

विमलैरम्बुभिः पूर्णां पुष्पसञ्चयवाहिनीं। विवेश पुष्करं सा तु ब्रह्मणो वाक्यचोदिता।

ऋषिभिश्चानुचरिता ब्रह्मतत्त्वं निषेविभिः। धात्री कपिलरूपेण गोर्भूत्वा चरते पयः।

मधुरं वितते यज्ञे ब्रह्मणो वाक्यचोदिता। यस्य श्रवणीभूतं यस्मात् प्रस्रवात्मवीं। १२०२०

इडाख्य भवते वेदं शाश्वतं परमाद्भुतं। सरस्वत्याः समुद्भूतं ब्रह्मणैव तमोनुदं।

महातोयमतिकम्य पुष्करेषु विसर्पति। सुपादरूपा धर्म्मज्ञा प्रज्ञारूपेण च्छादयत्।

रूपं कनकवर्णाभं तपोयुक्तेन वर्चसा । अग्रगन्धक्षतोन्मुक्त संभूतः पर्व्वतो महान् ।
गुहदारगुणप्राण. शाश्वत. सिद्धसेवित. । वेदिकाभि. सुचित्राभिः काञ्चनोभिर्विराजितः ।
पुष्कराणि परीत्यैव स्थितो विपुलदक्षिण । महामेरोर्यथा रूपं पञ्चभिर्धातुभिर्हतं । ११०२५
चेतनयाऽभिसम्पन्नो रूपेणाद्भुतदर्शन. । एवं रूपं करिष्यामि मनसा धर्म्मचारिणा ।
रूपं बहुविधं लोके पार्थिवी चेतना तथा । तेषु लोकान् प्रपश्येयं पञ्चभिर्धातुलक्षणै. ।
पठेन च स सर्व्वेयं मनसा धर्म्मचारिणीं । सङ्गेषु भावमोक्षाभ्यां पश्यन्नपि सम्हत्य. ।
विमुक्त सर्व्वसङ्गेभ्यो धारयन्निष्परिग्रह. । न च विन्देत मां कश्चिन्मनसा कामकारिणीं ।
पञ्चधातुनिबद्धाश्च नानाभावितचेष्टिता । ये च विष्णुमधोवन्ते बहुधा पादविग्रहै । ११०३०
ते मां पश्येयुरव्यक्तां तपसा दग्धकिल्बिषाः । ये च मामभिरोहेयुर्नरा धर्म्मपथे स्थिता. ।
तेऽपि स्वर्गजित स्वर्गे पश्येयुर्मां गतक्लमा. । यश्चैव पर्व्वतः श्रीशः कर्म्मदृष्टे प्रतिष्ठित ।
एतमाश्रित्य पुण्येषु प्राणत्यागेषु निर्म्मला. । अप्सरोभिः समागम्य विचरेयुर्मनोजवाः ।
नन्दनं वनमासाद्य काम्यकश्च महद्वन । इमा विद्या समास्थाय मङ्गलाः पुष्करेष्विह ।
शरीरं क्षपयिष्यन्ति शतैर्व्वह्नविधै. क्षमा. । सिद्धिं प्राप्य कर्मयुक्ते कामैर्व्वह्नविधैर्नरा. । ११०३५
इमं लोकममुञ्चैव समेतैर्युर्यथासुखं । गौरी सिद्धेति विख्याता त्रिषु लोकेषु विद्यया ।
प्रभावं तपसो दृष्टं दर्शयन्ति समाहिता । यथा ज्ञानाभिसन्धौमामभिज्ञानात् सर्व्वदाः ।
भवेयुस्ते निरारम्भा धातुभिर्मुक्तबन्धना. । सहस्रगुणमप्यत्र दत्त्वा दानफलानि च ।
अविमानेन विमार्गं मन एकेन कर्म्मणा । सर्व्वैर्वाप्रमेयेण अव्ययं फलमाप्नुयुः ।
अमुष्मिन् लोके धर्मज्ञा सह सर्व्वकुलोद्भवै । येषामिह च सान्निध्यं यज्ञे ब्राह्मणसंकुले । ११०४०
ते भूयो यजमानाद्या अभिजित्य पुन पुन । तया तां मन्यसे गौरी मनसा धर्म्मचारिणी ।
अनुग्रहाय भूताना मामजस्र तपोधने । सत्य एष वरो विद्ये भविता नात्र संशय. ।
नाफलो विद्यते धर्म्मश्चरितो ब्रह्मचारिणा । ॥

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सप्तदशाधिकद्विशतोऽध्याय. ॥ २१७ ॥

॥ वैशम्पायन उवाच ॥ दिशं जिगमिषुर्दिव्यामुत्तरां सत्यसाधन । तया स धातुनिचये पुण्ये पर्व्वतरोधसि ।
विष्णु परमधर्म्मात्मा एकपादेन तस्थिवान् । दशवर्षसहस्राणि पुष्करे पुष्करेक्षण । ११०४५
आत्मन्यात्मानमाधाय तपसा ब्रह्मसम्भव । घटते कर्म्मणोग्रेण लोकमुत्थानकारणात् ।
भास्वरो भस्मनाच्छाद्य गात्राणि स्वयमात्मन । अष्टौ वर्षसहस्राणि सहस्रञ्च तपोधन. ।
तेजसा तेन ज्योतींषि विभाव्य ब्राह्मणर्षभ । तिष्ठते मनसो मध्ये योगात्मा भावयन् जगत् ।
सोमो विषयमाविश्य मनसा धारयन्मन. । मुक्त परमधर्म्मात्मा ब्राह्मीं सिद्धिमुपागत ।
सम्प्रदृश्यति सर्व्वत्र दिवि भूम्यम्बरे तथा । ज्योतिश्च कर्म्म कुर्व्वाणो बहुरूपः स्वसम्पदा । ११०५०
महेश्वरो निगूढात्मा तपरूपेण तिष्ठति । उद्धृत्य दक्षिण पाद वायुभक्ष समाहितः ।

अष्टौ वर्षसहस्राणि सहस्रं शतमेव च। महायोगी महादेवो नियमाद्ब्रह्मसम्भव।
अथ वायुर्घनीभूतो ऽन्ते चरति गोपते:। फेनीभूतं समुद्गारैः पवनं निर्गिन्मुखात्।
स निष्क्रान्तस्ततो वक्त्रात् प्राणेन परमात्मवान्। निर्यामभूतः पतितो नैवार्द्रो नैव पार्थिवः।
स फेनो वारिमाविश्य चचार वसुधातले। नैवार्द्रो नैव शुष्काङ्गो वायुः संघातमागतः। ११९१५
तत्काले फेनमुत्क्षिप्य पवनः सह वारिणा। निरालम्बे निरालम्बस्त्वभ्राणि समपद्यत।
ते क्षिपन्ति पयो भूमावात्मानं स्वेन सङ्घिताः। नीलमेघारुणप्रख्या नैवार्द्रा नैव पार्थिवाः।
ब्राह्मीं मूर्त्तिं समाधाय वायुः सर्व्वत्रगो वशी। समाः सहस्रं संपूर्णं चचार विपुलं तपः।
वह्निर्व्विरूढजटो भूत्वा चीरवल्कलवासधृक्। तपस्तप्यदनाहारो मौनमास्थाय पुष्करे।
वर्षाणाञ्च सहस्राणि त्रीणि चैकञ्च यत्नतः। तस्याग्नेस्तेज संभूतो महानग्निः प्रवर्त्तते। ११९२०
स्वर्गप्रकाशकश्चैव स्वर्गवासी तमोनुदः। दिव्यो भूतप्रकाशाख्यस्तपसा ब्रह्मसम्भवः।
तपश्चरति धूमाग्निर्लोकानां भूतभावनः। तत्तमो भुवि राजेन्द्र मानुषेषु प्रतिष्ठितं।
भास्करस्तेजसंहारो यतो भवति सत्तम। मर्त्त्यानां सर्व्वभूतानां तेज आविश्य वर्त्तते।
न तु योगबले राजन् ब्राह्मणस्य विशेषतः। तत्तमो नाशयेद्राजौ नाग्नेश भविता द्वयं।
पुष्यमित्रो महातेजा यतः सर्व्वत्रगो वशी। तपश्चरति धर्म्मात्मा पुष्करेषु समाहितः। ११९२५
महेन्द्रशिखराद्धारा यावत्यो यान्ति मेदिनीं। तावत्स्वरूपमास्थाय तिष्ठते निखिलाः समाः।
जानुभ्यां पतितो भूमौ ज्योतिर्नभसि पश्यति। समाः सहस्रं निखिलं नेत्रैरनिमिषैर्जगत।
नेत्राणि बहुधा तस्य नेत्रान्तैरभिनिःसृताः। मध्यं दिनकरे प्राप्ते रश्मिवान् स परिप्लवे।
ते रश्मयः प्रभासन्ते शतशोऽथ सहस्रशः। रराज तेजःसंयोगाज्ज्वलद्भिरिव पावकः।
सविस्फुलिङ्गैर्नेत्रान्तैरादित्यमनुवर्त्तते। कर्म्मणोऽन्ते युगान्ते वा जगतो बहुरूपिणः। ११९३०
बहुधा तु पुनर्भूत्वा निषण्णो वसुधातले। समाः सहस्रं संपूर्णं तपस्तेपे सुदारुणं।
निगृहीतेन्द्रियो भूत्वा नाप्सरोभिर्ललाम ह। मेरोः शिखरमासाद्य कामं कामेन पीडयन्।
तपःकामः स यक्षस्तु कुबेरो नरवाहनः। विष्णुरेव तपोऽध्यक्षस्तेजसोऽन्तेन जृम्भते।
न हि कश्चित् पुमानस्ति य एतत्तप आचरेत्। त्रिषु लोकेषु राजेन्द्र ऋते विष्णुं सनातनं।
वासुकिर्न्वेद्धशीर्षश्च नागेन्द्रो मौनमास्थितः। तप आचरते सम्यक् निधाय मनसा मनः। ११९३५
शेषः सत्यधृतिर्नागो बलवान् ब्रह्मसम्भवः। रुक्ममारुह्य धर्म्मात्मा अवाक्शीर्षोऽवलम्बते।
जिह्वं भिर्लिलिहानाभिर्गोभिर्विषमुत्सृजन्। समासहस्रं संपूर्णं निराहारस्तपोधनः।
कालकूटं विषं तद्धि सुमहत् समपद्यत। येन लोको ह्यभिपन्नो न सुखं विन्दते नृप।
सर्व्वत्रानुगतं तीक्ष्णं भुजगेषु महीतले। जङ्गमं स्थावरञ्चैव सर्व्वत्रानुगतं विषं।
परस्परं विहन्त्रेन हिंसायुक्तेन भारत। नाशयत्यात्मनोऽङ्गानि तेन तीक्ष्णेन भारत। ११९४०
अथ ब्रह्मा महाभागो भूतानां हितकाम्यया। मन्त्रं विसृजते राजन् ब्रह्माक्षरमयं हितं।

गरुत्मान् विततैः पक्षैर्नखाग्रैः सलिलं महीं । समासहस्रं संपूर्णं बलाग्रेणावलम्बते ।
पर्णभारैश्च विकचैर्विशीर्णैर्वसुधातले । रराज वसुधा चैव तैः पर्णैर्व्विप्रचित्रिता ।
येन वित्तेन जीवेयुः सर्व्वभूतानि भारत । इह लोके मनुष्येन्द्र देवलोके च भारत ।
द्यौरिवाचितनक्षत्रा महीतलविसर्पिभिः । मघवान् हिमसंपाते तपत्येकचरो वशी । १९०८५
पुष्कराश्रमि धर्म्मात्मा मत्स्योल्लिखितमूर्द्धजः । अथ खतलमाक्रम्य पृथिवी प्रांशुदेहिनी ।
तपश्चरति धर्म्मात्मा बाहुमुद्यम्य दक्षिणं । साग्रं वर्षसहस्रञ्च शतमेकञ्च सुव्रता ।
तपश्चरति संयोगाद्वायुभक्षा समाहिता । समाधियोगात् सङ्गाद्वा ब्रह्मयोगस्य भारत ।
येनेयं पृथिवी राजन् धार्य्यते ब्रह्मयोनिना । अनाद्यन्तमनिर्देश्यं सर्व्वत्र विषयैषिणा ।
योऽसौ विष्णुरगाधात्मा परमात्मा निराकृतिः । दिनेऽनिवर्त्ती भवति रात्रौ भवति वै स्थिरः । १९०९०
सत्यसन्धः स धर्म्मात्मा कामकारकरोऽभवत् । तस्य च सोद्यतः पाणिः पृथिव्यां पृथिवीसमः ।
रात्रौ तपनो भवति मण्डलं विपुलं नभः । स चन्द्रविषयं राजन्नक्रमयामास रुन्धति ।
ग्रहाणां गतयश्चैव ताराणाञ्च विशेषतः । तां छायामाविशत् सोमात् स्ववह्निर्म्मण्डलेन वै ।
पृथिव्यां दक्षिणो हस्तो महायोगी महामनाः । सैषा छाया शशीभूता शशिमण्डलमाविशत् ।
अलिङ्गा पृथिवी लिङ्गादद्भुतादक्षया दिवि । अङ्गैरङ्गान्युपगुह्य तपश्चरति दुश्चरं । १९०९५
निश्चयात् प्रोक्ष पादौ तु पृथ्वी वाच्यमुपागता । सूर्य्यार्च्चिभिः पीयमानादाक्षिपति महीतलात् ।
महीव चाम्बुवसनायुगान्ते विष्णुतेजसा । रराज सूर्य्यरश्मिभिर्व्यतिषक्ता महीनदी ।
स्फाटिकेव प्रभा येषा काञ्चनैर्धातुभिर्वृता । आदित्येन समादत्ता रश्मितेजोऽभिसंभवे ।
मण्डलान्तर्गता देवी चक्षुषा नोपलभ्यते । रश्मिभिः पुनरुत्तीर्णा ततो योगेन धावति ।
आकाशगङ्गा संवृत्ता विपुलैरम्बुविप्रुदैः । शीतच्छायैश्च तरुभिर्लताभिश्च सुगन्धिभिः । १९१००
पद्मषण्डैश्च विविधैः प्रप्रभे दिव्यगन्धिभिः । काञ्चनापीडजघना स्फाटिकान्तरमेखला ।
पद्मरेणुभिरापीता चक्रवाकावतंसिका । नीलगर्भसुकेशान्ता पुष्पमञ्जरशंकुला ।
शोभते विप्रसर्पन्ती प्रमदेव विभूषिता । सैषा गङ्गाफलं लेभे पुष्करेण समागता ।
सुतपाश्चन्द्रविहिता लोकानां धारणे रता । सरस्वती स्वरैर्य्यत्क्रमधीते ब्रह्मवादिनी ।
पृष्ठात्प्रयाता शैलेन्द्रे मन्दरे मन्दगामिनी । स्वयंभुवश्चतुरो वेदान् पादैश्चतुर्भिरावृतान् । १९१०५
यजुर्भिः सामभिश्चैव दयिताञ्छिवया तया । ऋषिभिर्ज्वलनप्रख्यैस्तपसा दग्धकिल्बिषैः ।
सुपार्श्वस्य गिरेः पादैः परिदायैः सुपार्श्वैः । निखनन् सर्व्वभूतानि नियमेन च रक्षते ।
मन्दराये विपर्य्यन्तं जगत्क्रमतीन्द्रियं । विरामनियमे प्राप्ते तूष्णीम्भूता बभूव ह ।
न वाचमीरयेद्देवी नियामात् सत्यवादिनी । अथ भूतानि सर्व्वाणि तूष्णीम्भूतानि सर्व्वशः ।
न शेकुरभिधानार्थं व्याहर्त्तुं वदनैर्व्वचात् । विभज्य योगं मनसा सर्व्वभूतेष्वनुपदं । १९११०
सरस्वती स्वरयुता व्याजहार महास्वनं । सरस्वत्या समायुक्ता शिवां स्पृशन्ति देहिनः ।

अस्मिन्नेवाथ ते सर्व्वे गानं गायन्ति श्रियया। आदित्या वसवो रुद्रा मरुतश्चाश्विभिः सह।
जटिलाश्चीरवसना मुञ्जमेखलधारिण। गन्धर्व्वाः किन्नराश्चैव सनागाः सह चाश्रम।
तपश्चरन्ति सहिताः पुष्करेषु मनीषिणः। अपि कीटपतङ्गैश्च सह सर्व्वे सरीसृपैः।
शोषयन्ति शरीराणि तपसोग्रेण यत्नत.। विष्णुर्व्विष्णुत्वमापन्नो देहान्तरविसृष्टवान्। ११११५
संरचति महायोगो सर्व्वांस्तान् सहचारिण.। पुष्करे रमते विष्णु. पुनरेव द्विधाकृत।
दीप्यमानः स्वतेजोभिर्विधूम इव पावक। सोऽग्निर्मन.समुद्भूत पृथिवीं तापयन्निव।
प्रधावति समं तेन मण्डलं दशयोजनं। विरराजार्च्चिभिर्द्दीप्तैः शतशश्चावलम्बिभि.।
विशोऽप्यपार्यविभवैर्म्मयूखैरिव दीपित.।तस्याग्नेर्व्विस्फुलिङ्गानां न शेकुर्दहने रता.।
विप्रकीर्णस्य वासुधामर्थ्यादामिव भास्करः। सोऽग्निर्दीप्यति सर्व्वांगर्विधूम इव पावक.। १११२०
ऋत्विग्भिर्ज्वलनप्रख्यैर्व्विकृतो वा महाध्वरे। सोऽग्निर्धूमगतस्तत्र तिष्ठते विपुलस्तदा।
यावद्विष्णु क्रमप्राप्तो नियमस्य समापनात्। रक्षां कृत्वा न तं विद्याद्विष्णुर्व्विष्णुपराक्रम.।
भूत्वा शतशरीरो वै नागो वालाहकोऽभवत्। तमग्निमात्मसंसृष्टं लेलिहानं महामतिः।
प्रतिप्रवृद्धं तेजोभिर्भूतानां हितकाम्यया। वारिणा सुखशीतेन प्राणिना प्राणवर्द्धन।
व्यसिञ्चद्दहन तत्र नागो वालाहकस्तदा। ततः सिद्धगणैर्ज्जुष्ट पुष्करे तप्यते तप.। १११२५
संहृत्य मनसात्मानं महायोगी महाबल.। संहृत्य पादगात्राणि मनो मूर्द्धि विधारयन्।
अचलं स्थानमासाद्य तूष्णीभूतो बभूव ह। एष धर्म्मो हि धर्म्माणां सोपधानविकल्पित।
हित. सर्व्वेषु भूतेषु इह चामुत्र चोभयो.। अथ दैत्या हतास्तत्र समागम्योद्यतायुधाः।
मायाप्रासैर्व्वहुविधैर्न्नगैरेरभिसंवृता.। अग्निं दैत्याः पर्व्वताग्रैरभिघ्नन्ति परन्तप।
ज्वलन्तं ज्वलनप्रख्या महाकाया महाबलाः। मेघीभूताश्च मायाभिर्व्वर्षन्ति बलदर्पिता.। १११३०
तस्मिन्नेवाग्निसंघाते संघातं तं महाबलाः। ते शैलास्त्वर्च्चिषा दग्धा प्रणष्टाः सहस्रश.।
युगान्ते प्रभुरादित्यो जनानिव दिधक्षति। न शेकुरग्निं दैत्यास्ते मायाभिमुखमुद्यतं।
आदित्यमिव दीप्यन्तं नभ. सूर्य्योदये यथा। विहतैरुत्तमैः सर्व्वैर्द्दैत्या भग्नपराक्रमाः।
गन्धमादनमासाद्य निषण्णा नगमूर्द्धनि। स चाग्निर्व्वायवैर्लोकैर्विवृद्धि. सह सङ्गत.।
अन्तरीक्षपरान्दैत्यान्निर्द्दहन् विचरन्दिवि। नागो वालाहकश्चैव मेघै. संघातमागतः। १११३५
मुमोच सलिलं भूमौ पर्ज्जन्य इव वृष्टिमान्। मन्ते सञ्चोदितो नागो द्विजेभ्यो वदनोद्गतैः।
मुमोच तोयसंघातं मानयन्विप्रशं जलं।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे अष्टादशाधिकद्विशततमोऽध्याय. ॥ २१८ ॥
॥ जनमेजय उवाच ॥ संयुज्य तपसा देवा. किं कुर्व्वन्त तत. परं। न हि तद्विद्यते लोके तपसा यन्न लभ्यते।
॥ वैशम्पायन उवाच ॥ अथ दीक्षां समास्थाय सर्व्वे विष्णुमना गणा.। पुष्करादग्निमुद्धृत्य प्रणीय च यथाविधि।
जुहुवुर्मन्त्रविधिना ब्राह्मणा मन्त्रचोदिताः। हविषा मन्त्रपूतेन यथा वै विधिरेव च। १११४०

स चाग्निर्व्विधिवत्तत्र वर्द्धते ब्रह्मतेजसा । तेजोभिर्व्विक्रुतोभूत प्रभु प्रदृषविग्रह ।
ब्रह्मदण्ड इति ख्यातो वपुषा निद्ददचिव । दिव्यरूपप्रहरणे खसिचर्मधनुर्द्धर ।
सगदो लाङ्गली चक्री शरी चर्म्मी परश्वधी । शूली वज्री खड्गपाणि शक्तिमान् वरकार्मुकी ।
विष्णुश्चक्रधर खड्गी मुषली लाङ्गलायुध । नरो लाङ्गलमालम्ब्य मुषलञ्च महाबल ।
वज्रमिन्द्रस्तपोयोगाच्छतपर्व्वाणमाविपत् । रुद्र शूल पिनाकञ्च मनसा धारयन प्रभु । ११११४
मृत्युर्दण्डं सपाशञ्च काल शक्तिमग्रहत । जग्राह परशु लष्टा कुवेरस्य परश्वध ।
निर्व्विकारे समायुक्ता शतशोऽथ सहस्रश । विश्वकर्म्मा च लष्टा च चकाते ह्यायुध वज्र ।
इन्द्रायाग्नेरथ प्रादात् सूर्य्याय च प्रतापिने । परमात्मा ददौ विष्णुरुद्राय च महात्मने ।
छन्दोमिरेव लष्टा च स चकाराथ वाहिनी । विश्वकर्म्मा विमानानि चकार बहुभि क्रमै ।
शरीराश्च समुद्दृत्य विष्णु सत्यपराक्रम । पुष्करात् पर्व्वणि घनात् पृतनार्थं प्रवर्त्तयत् । १११५०
याश्चैव सूर्य्यरश्मीणा लरया समकल्पयत् । ययाऽभियुज्य सग्रामे शत्रु निर्व्विभिदे रणे ।
स त दण्ड ममुचित निर्व्विकार समाहित । ब्रह्मा जग्राह विधिना ध्यानद्धानगत प्रभु ।
स्वै प्रभावैश्च विधिना सोऽस्त्रग्राममचतुर्व्विध । ऐन्द्रमाग्नेयवायव्य रौद्र रौद्रेण वर्च्चसा ।
एभिर्व्विकारै सयुक्ता दिते पुत्रा महाबला । तपसा शिवया चैव अस्त्रै प्रहरणैरपि ।
बलेन चतुरङ्गेण वीर्य्येण सुसमाहिता । अप्रष्टया रणे सर्व्वे सर्णेनैवाभवस्तदा । १११५५
ते विहाय गुहामध्ये सभाण्डोपस्करे रथे । मन्दरस्य गिरे पार्श्वे विवेरुर्व्वसुधातले ।
चतुरङ्ग बल सर्व्वं संहृत्य तपस प्रभु । विष्णुरेव महायोगी चचार वसुधातले ।
भूयोऽन्यत्तप आसेदुरसुरन्तो आह्वाणै सह । तैश्च सर्व्वै सुरगणैस्सर्वचोरनिवासिभि ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे ऊनविंशत्यधिकद्विशततोऽध्याय ॥ २१९ ॥
॥ जनमेजय उवाच ॥ वर्त्तमाने खिले ब्रह्मन्निर्म्मथादे महाग्रहे । अविनाशे च भूताना कथमासन् प्रजास्तदा ।
॥ वैशम्पायन उवाच ॥ पृथु वैण्य प्रजापालमभ्यषिञ्चत प्रजापति । राज्याय ऋषिभि सार्द्धं प्रजा धर्म्मपरायण । १११६०
एष न परमो राजा सानुरागो व्यजायत । त्रेतायाञ्च प्रवृत्तायामन्योन्यमनुजल्पिरे ।
एष नो वृत्तिदाता च शिल्पानाञ्च समर्पिता । निर्म्माता सर्व्वभूताना सत्यप्राप्तेन कर्म्मणा ।
एतस्मिन्नन्तरे देवा गन्धमादनसानुषु । बहुभिर्नियमै श्रान्ता निषण्णा गिरिसानुषु ।
अथ गन्धं समासाद्य समन्ताद्देवदानवा । माधवे समये प्राप्ते तेन गन्धेन दर्पिता ।
पुष्पमात्रस्य यद्दीर्य्यं मारुतेन विसर्पित । मनोग्राहि सुख सर्व्व पार्थिव गन्धमुत्तमम् । १११६५
ते दैत्यास्तेन गन्धेन किञ्चिद्विस्मयमागता । प्रसन्नमनसो भूत्वा पर सौख्यमुपागता ।
ऊचुश्च सहिता सर्व्वे तेन गन्धेन दर्पिता । पुष्पमात्रस्य यद्वीर्य्यं किं तस्य फलतो भवेत् ।
अनुमानेन विज्ञेया विविधा कर्म्मवृद्धय । शुभाश्चैवाशुभाश्चैव बुद्धिप्राणेन देहिना ।
तस्मादथ पयोमध्ये औषधीर्निर्म्मथामहे । मन्दरेण विशालेन बलिना कामरूपिणा ।

समुद्रमभिसंरम्भा मथ्नीम. सोमजं जलं। पीला च सहिता. सर्व्वे प्रस्थिताः कामरूपिणः। ११९७०
विष्णुरेवाग्रणीस्त्वेषां भविष्यति महाबलः। दिवञ्च वसुधाञ्चैव भोक्ष्यामः सह शत्रुभिः।
समूलपत्रशाखाश्च सपुष्पाः सफलाश्रिनः। सर्व्वग्रहांश्च रुद्धोमी वसुधां वसुधातले।
उद्धृत्य गिरिपादेभ्यो गन्धमादनसानुजान्। प्रभाष्य वचनं दैत्या मन्दरस्य प्रकम्पने।
समुद्धर्त्तुं प्रधावन्तः कम्पयन्ति स्म मेदिनीं। निश्चयेन महावीर्य्या बाहुभिः परिघाह्विभिः।
स शेकुस्ते समुद्धर्त्तुं शैलेन्द्रं दनुवंशजाः। निपेतुर्जानुभिर्घृष्टा विपुले पर्व्वताम्बरे। ११९७५
समाधायात्मनात्मानं तपसा दग्धकिल्बिषाः। पितामहं प्रपद्यन्त शिरोभिः कामरूपिणः।
तेषां मनोऽभिलषितं ब्रह्मा सर्व्वत्रगो वशी। ज्ञात्वा बहुविधैर्व्वाक्यैर्व्याजहार सरस्वतीं।
अशरीरां शरीरस्थ. परया वर्णसम्पदा। सर्व्वलोकपतिर्ब्रह्मा लोकानां हितकाम्यया।
आदित्यैर्व्वसुभिश्चैव रुद्रैश्च समरुद्गणैः। देवैर्यक्षैः सगन्धर्व्वैः किन्नरैश्च प्रगायिभिः।
समेत्य सहितैः सर्व्वैरुद्धर्त्तुं शक्यते गिरिः। अमृतार्थं महातेजा धातुभिः समरञ्जितः। ११९८०
सुरासुरगणाः सर्व्वे समुत्पाट्य महागिरिं। हस्तारूढाः प्रपश्यन्ति वीरुधो हि नवं रसं।
एतच्छ्रुत्वा तु वचनं सर्व्वेषामन्तिके तदा। दैतेया बाहुबलिनो मनोभिर्वाग्भिरेव च।
विक्रोडभूता मह्यधा बभूवुर्लवणाश्रयः। यत्र पुष्करविन्दस्थं सहितैर्द्देवदानवैः।
सुरासुरगणाः सर्व्वे सहिता लवणाश्रयः। मन्दरं पुष्करं कृत्वा नेत्रं वासुकिमेव च।
समा. सहस्रं मथितं जलमोषधिभिः सह। क्षीरभूतं समायोगादमृतं समपद्यत। ११९८५
तज्जहुरसुराः पूर्व्वमाक्रान्ता लोभमन्युना। तदा पश्चाज्जहुर्द्देवाः कामतेजोबलान्विताः।
धन्वन्तरिस्तथा मद्यं श्रीर्द्देवी कौस्तुभो मणि.। शशाङ्को विमलश्चापि समुत्तस्थुः समन्ततः।
उच्चैःश्रवा हयो रम्यः पीयूषं तदनन्तरं। पश्चाद्देवास्तदा पातुमुद्यता राहुमब्रुवन्।
न च केचित् पिबन्त्यन्ये दैत्या नैव च दानवाः। शिरश्छेदाय हरिः संख्ये राहोश्चक्रेण कं मृधे।
अभियुक्तं पितृगणैर्मुनिभिश्च सनातनैः। तदिन्द्रहस्तादमृतं जहार पृथिवी स्वयं। ११९९०
जगामान्तर्गता देवी ब्रह्मवाक्यप्रचोदिता।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे विंशत्यधिकद्विशतोऽध्यायः॥ २२०॥
॥ जनमेजय उवाच। निहते दैत्यसंघाते विष्णोश्चातिपराक्रमे। दैतेया दानवेयाश्च किमिच्छन्ति पराक्रमात्।
॥ वैशम्पायन उवाच॥ दानवा राज्यमिच्छन्ति पराक्रम्य महाबलाः। तप इच्छन्ति सहिता देवाः सत्यपराक्रमाः।
॥ जनमेजय उवाच॥ कथं कालस्य महतो हिरण्यकशिपुरुद्दा, यजते ब्राह्मणः स्वेन प्राशैर्य्य. स कामदः।
॥ वैशम्पायन उवाच॥ यमेद्दडमुखेन राजसूयेन पार्थिवः। क्रतुना दानवश्रेष्ठो वसुधायां महाबलः। ११९९५
गङ्गायमुनयोर्मध्ये यदभूद्विपुलं तप.। समेयुस्तत्र सहिता यजमाने महासुरे।
वालखिल्या वेदविदांसो महाव्रतपरायणाः। दत्तयश्चापरे सिद्धा योगधर्मेण भारत।
मुनयो वालिखिल्याश्च नानाधर्मेण शोधिताः। बहवो हि द्विजा मुख्या नित्यं धर्म्मपरायणाः।

स्वप्नस्य महाभागा विप्रै. पूज्या. सहस्रश । विपुले रत्नविभवे ह्रियमाण इतस्तत ।
शुक्रस्तु सह पुत्रेण दैत्यं याजयते प्रभुः । हिरण्यकशिपुं मध्ये गणानां ज्वलनप्रभ । ११९००
हिरण्यकशिपुश्चैव व्याजहार सरस्वती । कामादरं ददामीति तद्वै सम्प्रतिपद्यतां ।
विष्णुर्वामनरूपेण भिक्षां तां प्रतिगृह्णाति । हिरण्यकशिपोर्हस्तात्त्रि:पदं पदमेव च ।
तत क्रमितुमारेभे विष्णु सत्यपराक्रम. । त्रीन् लोकास्त्रिपदै. क्रान्तैर्दिव्य वपुरधारयत् ।
हृतराज्याश्च दैतेया पातालविवरं ययु । ससैन्यगणसन्नद्धा. सप्रासा. सासितोमरा. ।
सयन्त्रलगुडाश्चैव सपताकरथध्वजा । सचर्मवर्मकोषाश्च सायुधा. सपरश्वधाः । ११९०५
तथेन्द्रं विष्णुसहिता. सहसेऽभ्युत्थिता गण. । अभ्यषिञ्चन् प्रमुदिता लोकानामधिपं सुराः ।
स तान् स्वधामृतेनाशु पितॄन् वै समतर्पयत् । ब्रह्मा तदमृतं दिव्यं महेन्द्राय प्रयच्छति ।
अव्ययस्याव्ययश्चैव संवृत्तस्तेन कर्मणा । तत शङ्खमुपाध्मासीत् द्विषतां लोमहर्षणं ।
पितामहकरोद्भूतं जनित्रे प्रथमे पदे । तं श्रुत्वा शङ्खशब्दन्तु त्रयो लोका. समाहिता. ।
निर्वृतिं परमां प्राप्ता इन्द्रं नाथमवाप्य च । सर्वे प्रहर्षैश्चैव संयुक्ता वह्निसन्निभै. । ११९१०
मन्दरार्थे सुविहितैर्ज्वलद्भिरिव पावकै ।
इति श्रीमहाभारते खिलेषु हरिवंश भविष्यपर्वणि पौष्करे एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥
॥ वैशम्पायन उवाच ॥ ततो महति वृत्तान्ते स्थिते राज्ये महोदये । देवानां मानुषाणाञ्च सहवासोऽभवत्तदा ।
एकत समधीयन्त सहिताः प्रवदन्ति च । स्वयञ्च भागं गृह्णन्ति यज्ञकर्मणि भारत ।
प्राचेतसं ततो दक्ष दीक्षितो वै वृहस्पति । वाजिमेधाय भगवानृषिभि परिवारित. ।
तस्मिन्प्रातामहे यज्ञे दक्षस्य विदितात्मन । आमित्रमकरोद्रुद्रो भागार्थं सह नन्दिना । ११९१५
रुद्रस्यैव हि तद्रूपं द्विधाभूतं तदीप्सया । जात. परमधर्मात्मा नन्दी पुरुषविग्रह ॥
तेन योगेन राजेन्द्र यत्तद्ब्रह्म सनातन । विहित सत्यवचनैस्तेनैव परमात्मना ।
स्वरूपैश्चाप्यरूपैश्च विरूपैर्घटोदरै । ऊर्द्ध्वनेत्रैर्महाकायैर्विकटैर्वामनैस्तथा ।
शिखिभिर्जटिभिश्चैव व्यवेश्च शङ्कुकर्णिभि । चीरिभिश्चर्मिभिश्चैव कूटमुद्गरपाणिभिः ।
सघण्टाचीरिभिश्चैव मुञ्जमेखलधारिभि । सहस्रकटकैश्चैव स्वर्णकुण्डलधारिभि । ११९२०
सडिण्डिमै. सभेरीकै सम्रदङ्गै. सवेणुभि । एतै परिवृतो देवो मख तं समुपाव्रजत् ।
सशङ्खमुरजैश्चापि सतालतलपाणिभि. । उग्रायुधधरो देव सपिनाक इवान्तक. ।
विरराजार्चिभिर्दीप्तैर्मखे मखवतां वरः । कालाग्निरिव दीप्तार्चि र्जगद्दग्धुमिवोद्यत ।
*नन्दी पिनाकपाणिश्च प्रमथुर्मखमुत्तम । युगान्त इव कालाग्नि र्विश्वं दग्धुमिवोद्यत. ।*
यूपमुत्क्षिप्य धावन्ति निशाचरगणास्तत. । चाषयन्मुनिसंघाश्च चीरचर्मनिवासिन । ११९२५
हवींष्यन्ये पिबन्त्येवं जिह्वाभिर्लालसलोचनाः । भक्षयन्ति पशूनन्ये रसनाग्रे प्रजल्पिभि. ।
मुमुचुश्चापरे यूपान् प्रसभ प्रहरन्ति च । वह्निमन्ये प्रसिञ्चन्ति वारिभि प्रहसन्ति च ।

जघुरेवे मुमोच शूद्र ब्रह्मदण्डमिवोद्यतं । स विद्धस्तेन बाणेन महादेवो न कम्पते ।
वज्रेणेव महाशन्मिर्मन्दरस्य न चाल्यते । ततः प्रसभमाप्लुत्य रुद्रं विष्णुः सनातनः ।
जग्राह कण्ठे भगवान्नीलकण्ठस्ततोऽभवत् । अनादिनिधनो देवः चम्यतां भगवान्मम । ११२६०
सर्व्वभूतागमाचार्य्यः कर्म्मणा च न चाल्यते । कर्म्मणाश्चैव कर्त्ता च विकर्त्ता चैव भारत ।
अरोपत्वाच भूतानां सर्व्वभूतेषु चोत्तमः । स्वयमेव हि यत्कर्म्म विधत्ते कर्म्मयोनिषु ।
तयोः शुभतमो राजन् स्वयमेव तथाऽकरोत् । अन्तरीक्षाच्छुभा वाच श्रूयन्ते मधुराक्षराः ।
सिद्धानां वदनोन्मुक्ताः सनातन नमोऽस्तु ते । नन्दी पिनाकमुद्यम्य बलवान्रुद्रसम्भवः ।
मूर्द्धन्यभिजघानाजौ विष्णुं क्रोधेन मूर्च्छितः । ततः प्रहसितो विष्णुर्नन्दिं दृष्ट्वा सुरोत्तमः । ११२६५
स्तम्भयामास भगवान् सर्व्वभूतपतिर्हरि । विष्णुर्ब्रह्मपरो भूत्वा तेजसा प्रज्वलन्निव ।
क्षमया च समायुक्तः स्थितः स्थाणुरिवाचलः । अचिन्त्यश्चाप्रमेयश्च अजेयश्चारिन्दमः ।
युगान्ताग्निसमो भूत्वा शान्तात्मा हरिरव्ययः । प्रसन्नः कल्पयामास भागं रुद्राय धीमते ।
विष्णुर्द्धर्म्मपरो नित्यं त्यक्तकामः सुरर्षभः । विष्णुना चैव राजेन्द्र स यज्ञः सन्धितः पुनः ।
यथापचश्च ते सर्व्वे गणा आसन्महीपते । तस्मिन् युद्धे महाघोरे विष्णोरुद्रस्य चैव ह । ११२७०
यथापवं भवेद्युद्धं दक्षयज्ञविनाशने । विनाशश्चैव यज्ञस्य तदा लोके प्रतिष्ठितः ।
सर्व्वभूतेषु राजेन्द्र स्थितो यज्ञः सनातनः । दक्षो यज्ञफलञ्चैव प्राप्तवान् स प्रजापतिः ।
एष पौष्करको नाम प्रादुर्भावो महात्मनः । पुराणे पुष्करे चैव यथा द्वैपायनेरितः ।
यथावदनुपूर्व्व्येण संस्तुतः परमर्षिभिः ।
यश्चैनमग्र्यं प्रवरं पुराणं सदा ऽप्रमत्तः शृणुयाद्यथोक्तं । अवाप्य कामानिह वीतशोकः परत्र स स्वर्गफलानि भुङ्क्ते । ११२७५
इमाञ्चोदाहृतां दिव्यां कथाममितबुद्धिमान् । श्रावयेद्यस्तु विप्रेभ्यः शुचिः प्रयतमानसः ।
अधीत्य सर्व्वमध्यात्मं देवलोके महीयते ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

॥ जनमेजय उवाच ॥ प्रादुर्भावं पुराणेषु विष्णोरमिततेजसः । सतां कथयतां विप्र वाराह इति नः श्रुतं ।
न जाने तस्य चरितं न विधिं न च विस्तरं । न कर्म्मगुणसन्तानं न हेतुं न मनीषितं ।
किमात्मको वराहोऽसौ का मूर्त्तिः काऽस्य देवता । किमाचारः किम्प्रभावः किं वा तेन पुरा कृतं । ११२८०
एतन्मे सर्व्व तत्त्वेन वाराहं श्रुतिविस्तरं । यज्ञार्थन्तु समेतानां द्विजातीनां महात्मनां ।
॥ वैशम्पायन उवाच ॥ हन्त ते कथयिष्यामि पुराणं ब्रह्मसम्मितं । नानाश्रुतिसमायुक्तं कृष्णद्वैपायनेरितं ।
महावराहचरितं कृष्णस्याद्भुतकर्म्मणः । यथा नारायणो राजन् वाराहं वपुरास्थितः ।
दंष्ट्रया गां समुद्रस्थामुज्जहारारिसूदनः । छान्दोगीभिरुदाराभिः श्रुतिभिः समलङ्कृतः ।
शुचिः प्रयतवाग्भूत्वा निबोध जनमेजय । इदं पुराणं परमं पुण्यं वेदैश्च सम्मितं । ११२८५
नानाश्रुतिसमायुक्तं नास्तिकाय न कीर्त्तयेत् । पुराणमेतदखिलं सांख्यं योगं तथैव च ।

कात्स्न्येन विधिना प्रोक्तं योऽस्यार्थं वेदयिष्यति। विश्वेदेवास्तथा साध्या रुद्रादित्यास्तथाऽश्विनौ।
प्रजानां पतयश्चैव सप्त चैव महर्षय.। मनसश्चापजाश्चैव पूर्व्वजाश्च महर्षय.।
वसवोऽप्सरसश्चैव गन्धर्व्वा यक्षराक्षसा:। दैत्या: पिशाचा नागाश्च भूतानि विविधानि च।
ब्राह्मणा: क्षत्रिया वैश्या: शूद्रा म्लेच्छादयो भुवि। चतुष्पदानि सत्त्वानि तिर्य्यग्योनिगतानि च। १२१८०
जङ्गमानि च सत्त्वानि यच्चान्यज्जीवसंज्ञितं। पूर्णे युगसहस्रान्ते ब्राह्मोऽहनि तथा गते।
निर्व्वाणे सर्व्वभूतानां सर्व्वोत्पातसमुद्भवे। हिरण्यरेतास्त्रिशिखस्ततो भूत्वा वृषाकपि:।
शिखाभिर्व्विधमल्लोकान् शोषयति देहिन:। दह्यमानास्ततस्तस्य तेजोरश्मिभिरग्रत:।
विवर्णवर्णा दग्धाङ्गा हतार्च्चिषश्च्युतास्तनवे.। साङ्गोपनिषदा वेदा इतिहासपुरोगमा:।
सर्व्वविद्या: क्रियाश्चैव सत्यधर्म्मपरायणा.। ब्रह्माणमग्रत. कृत्वा प्रभवं विश्वतोमुखं। १२१८५
सर्व्वे देवगणाश्चैव त्रयस्त्रिंशच्च छन्दसा। तस्मिन्नहनि संप्राप्ते तं हंसं महदक्षरं।
प्रविशन्ति महायोगं हरिं नारायणं प्रभुं। तेषां तत्र प्रविष्टानां प्रलयोत्पत्तिरुच्यते।
यथा सूर्य्यस्य सततमुदयास्तमने प्रभो। पूर्णे युगसहस्रान्ते कल्पो निःशेष उच्यते।
यस्मिन् जीवकृत सर्व्वं नि:शेष न.वतिष्ठते। संहृत्य लोकानिखिलान् सुरासुरनरोरगान्।
कृत्वात्मगर्भे भगवानास्ते एको जगद्गुरु.। स स्रष्टा सर्व्वभूतानां कल्पान्तेषु पुन. पुन.। १२१९०
अव्यक्त. शाश्वतो देवस्तस्मिन् सर्व्वमिदं जगत्। नष्टार्क्किरणे लोके चन्द्ररश्मिविवर्ज्जिते।
त्यक्तधूमाग्निपवने क्षीणयज्ञतप:क्रिये। अपक्षिगणसंपाते सर्व्वप्राण्यहरे पथि।
अमर्य्यादाकुले रौद्रे सर्व्वतस्तमसा वृते। अदृश्ये सर्व्वतो लोकेऽभिन्नभावे सर्व्वकर्म्मणा।
प्रशान्ते सर्व्वसम्पाते नष्टवैरपरिग्रहे। गते स्वभावसंस्थान लोके नारायणात्मके।
परमेष्ठी हृषीकेश: शयनायोपचक्रमे। पीतवासा लोहित च कृष्णजीमूतसन्निभ:। १२१९५
शिखासहस्रविकचं जटाभारं समुद्वहन्। श्रीवत्सलक्षितं पुण्यं रक्तचन्दनरूषितं।
वक्षो बिभ्रन्महाबाहु. सविद्युदिव तोयद:। पुण्डरीकसहस्रस्य मालयाऽस्य शुशुभे तदा।
पत्नी चैव स्वयं लक्ष्मीर्देहमावृत्य तिष्ठति। तत: स्वपिति धर्म्मात्मा सर्व्वलोकपितामह:।
कमप्यमितविक्रान्तो निद्रायोगमुपागत.। ततो वर्षसहस्रे तु पूर्णे स पुरुषोत्तम.।
स्वयमेव विभुर्भूत्वा बुध्यते विबुधाधिप:। ततश्चिन्तयते भूय: सृष्टिं लोकस्य लोककृत्। १२२००
पितृदेवासुरनरान् पारमेष्ठ्येन कर्म्मणा। ततश्चिन्तयते कार्य्यं देवेषु समितिञ्जय:।
सक्षरं सर्व्वलोकस्य विदधाति स वाक्पति.। कर्त्ता चैव विकर्त्ता च संहर्त्ता च प्रजापति:।
धाता विधाता च तथा संयमो नियमो यम:। नारायणपरा वेदा नारायणपरा: क्रिया.।
नारायणपरो यज्ञो नारायणपरा श्रुति.। नारायणपरो मोक्षो नारायणपरा गति:।
नारायणपरो धर्म्मो नारायणपर: क्रतु:। नारायणपरं ज्ञान नारायणपरं तप:। १२२०५
नारायणपरं सत्यं नारायणपरं पदं। नारायणात् परो देवो न भूतो न भविष्यति।

स स्वयम्भूरिति ज्ञेयः स ब्रह्मा भुवनाधिपः । स वायुरिति विज्ञेय एष यज्ञः प्रजापतिः ।
सदसच्च स विज्ञेयः सर्व्वज्ञः स प्रज्ञाकरः । यदेदितव्यं विद्यैस्तदेव परिविन्दति ।
यच्च वेद्यं भगवतो देवा अपि न तद्विदुः । प्रजानां पतयः सप्त ऋषयश्च महामरैः ।
मास्यान्तमधिगच्छन्ति तेनानन्त इति श्रुतिः । यदस्य परमं रूपं तन्न पश्यन्ति देवताः । ११११०
प्रादुर्भावेषु संभूतं यत्तद्दर्शन्ति देवताः । दर्शितं यदनेनैव तदवेचन्ति देवताः ।
यन्न दर्शितवानेष कस्तदन्वेष्टुमर्हति । ग्रामणीः सर्व्वभूतानामग्निमारुतयोर्गतिः ।
तेजसस्तपसश्चैव निधानममृतस्य च । चातुराश्रम्यधर्म्मेशश्चातुर्होत्रफलाशनः ।
चतुःसागरपर्य्यन्तश्चतुर्युगनिवर्त्तकः । तदेव संहृत्य जगत् कृत्वा गर्भस्थमात्मनः ।
मुमोचाण्डं महायोगी धृत्वा वर्षसहस्रकं । १११११५
सुरासुरद्विजभुजगाप्सरोगणैर्द्रुमौषधिचितिधरयक्षगुह्यकैः । प्रजापतिः श्रुतिधररत्नमां कुलं तदाऽसृजज्जगदिदमात्मना प्रभुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे प्रादुर्भावे त्रयोविंशत्यधिकद्विशततोऽध्यायः ॥ २२३ ॥
॥ वैशम्पायन उवाच ॥ जगदण्डमिदं पूर्व्वमासीत् सर्व्वं हिरण्मयं । प्रजापतेर्मूर्त्तिमयमितीयं वैदिकी श्रुतिः ।
तद्वै वर्षसहस्रान्ते विभेदोर्द्ध्वमुखं विभुः । लोकोद्भवनहेतुर्वै विभेदाधोमुखं पुनः ।
भूयोऽष्टधा विभेदाण्डं विभुर्व्वै लोकयोनिकृत् । चकार जगतश्चात्र विभागं सर्व्वभागवित् ।
यच्छिद्रमूर्द्ध्वमाकाशं परा सुकृतिनां गतिः । विहितं विश्वयोगेन यदधस्तद्रसातलं । १११२०
यदण्डमकरोत् पूर्व्वं देवलोकसिसृक्षया । समन्तादष्टधा योगी च्छिद्राणि कृतवांश्च सः ।
दिशश्च विदिशः सर्व्वा मनसैवाकरोद्विधा । नानारागविरागाणि यान्यण्डशकलानि वै ।
बहुवर्णधराश्चित्रा बभूवुस्ते बलाहकाः । यदण्डमध्ये स्कन्नन्तु द्रवमासीत् समाहितं ।
जातरूपं समभवत्तत् सर्व्वं पृथिवीतले । तस्य क्लेदार्णवौघेन प्राच्छादयत समन्ततः ।
पृथिवी निखिला राजन् युगान्ते सागरैरिव । यच्चाण्डमकरोदूर्द्ध्वं देवलोकचिकीर्षया । १११२५
तत्र यत् सलिलं स्कन्नं सोऽभवत् काञ्चनो गिरिः । तेनाकुला सुताः सर्व्वा दिशश्चोपदिशश्च ह ।
अन्तरीक्षञ्च नाकञ्च यच्चान्यत् किञ्चिदन्तरे । यत्र यत्र जलं स्कन्नं तत्र तत्रोत्थितो गिरिः ।
सहस्रशैलगहना विषमा मेदिनी त्वभूत् । तैः सा पर्व्वतजालैश्च बहुयोजनविस्तृतैः ।
पीडिता गुरुभिर्द्देवी पृथिवी व्यथिताऽभवत् । महीतले भूरिजलं दिव्यं नारायणात्मकं ।
हिरण्मयं समुत्सृज्य तेजश्च जलरूपि तत् । अशक्ता वै धारयितुमधस्तात् प्राविशत्तया । १११३०
पीड्यमाना भगवतस्तेजसा तेन सा क्षितिः । पृथिवीं विशतो दृष्ट्वा तामधो मधुसूदनः ।
उद्धारार्थं मनश्चक्रे लोकानां हितकाम्यया ।
॥ भगवानुवाच ॥ एषा मत्तेजसो वीर्य्यं समासाद्य तपस्विनी । रसातलं प्रविशते पङ्के गौरिव दुर्बला ।
॥ पृथिव्युवाच ॥ त्रिविक्रमायामितविक्रमाय महावराहाय चतुर्भुजाय । श्रीशार्ङ्गचक्रासिगदाधराय नमोऽस्तु ते देव वरप्रदाय ।

त्वयात्मा धार्य्यते देव त्वया संधार्य्यते जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च । ११११५
यत्त्वया धार्य्यते किञ्चित्तेजसा च बलेन च । ततस्तव प्रसादेन मया पश्चात्तु धार्य्यते ।
त्वया धृतं धारयामि नाधृतं धारयाम्यहं । न हि तद्विद्यते भूतं यत्त्वया नेह धार्य्यते ।
त्वमेव कुरुषे वीर नारायण युगे युगे । मम भारावतरणं जगतो हितकाम्यया ।
दानवैस्तेजसा क्रान्ता रसातलतं गतां । त्रयास्व मां सुरश्रेष्ठ त्वामेव शरणं गता ।
दानवैः पीड्यमानाऽहं राक्षसैश्च दुरात्मभिः । त्वामेव शरणं नित्यमुपयामि सनातनं । १११२०
तावन्मेऽस्ति भयं भूयो यावन्न त्वां ककुद्मिन । शरणं मनसा यामि शतशोऽप्युपलक्षये ।
॥ भगवानुवाच ॥ माभैर्द्धरणि कल्याणि शान्तिं व्रज समाहिता । एष त्वामुचितं स्थानमानयामि मनोषितं ।
॥ वैशम्पायन उवाच ॥ ततो महात्मा मनसा दिव्यं रूपमचिन्तयत् । किंनु रूपमहं कृत्वा उद्धरेयं वसुन्धरां ।
जले निमग्नां धरणीं येनाहं वै समुद्धरे । इति सञ्चिन्त्य मनसा हरिर्नारायणः प्रभुः ।
जलक्रीडारुचिस्तस्माद्वाराहं वपुरस्मरत् । हरिरुद्धरणे युक्तस्तदाऽभूद्दश भूमिधृक् । १११२५
अधृष्यं सर्व्वभूतानां वाङ्मयं ब्रह्मसंज्ञितं । दशयोजनविस्तारमुच्छ्रितं शतयोजनं ।
नीलजीमूतसङ्काशं मेघस्तनितनिस्वनं । गिरिसंहननं भीमं श्वेततीक्ष्णाग्रदंष्ट्रिणं ।
विद्युदग्निप्रकाशाक्षमादित्यसमतेजसं । पीनवृत्तायतस्कन्धं दृप्तशार्द्दूलविक्रम ।
पीनोन्नतकटीदेशं वृषलक्षणलक्षितं । रूपमास्थाय विपुलं वाराहमजितं हरिः ।
पृथिव्युद्धरणार्थाय प्रविवेश रसातलं । वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः । १११३०
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः । अहोरात्रेक्षणधरो वेदाङ्गश्रुतिभूषणः ।
आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् । सत्यधर्म्ममयः श्रीमान् क्रमविक्रमसत्कृतः ।
प्रायश्चित्तमहाघोणः पशुजानुर्म्महाकृतिः । उद्गात्रन्त्रो होमलिङ्गो वीजौषधिमहाफलः ।
वाय्वन्तरात्मा मन्त्रस्फिक् विकृतः सोमशोणितः । वेदिस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरन्वितः । दक्षिणाहृदयो योगी महासत्रमयो महान् । १११३५
उपाकर्म्मोष्ठरुचकः प्रवर्ग्यावर्त्तभूषणः । नानाछन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः । भूत्वा यज्ञवराहोऽसौ द्रागधः प्राविशद्धरः ।
अद्भिः सञ्छादितामुर्व्वीं स तामार्च्छत् प्रजापतिः । रसातलतले मग्नां रसातलतलं गतः ।
प्रभुर्लोकहितार्थाय दंष्ट्रायेणोज्जहार गां । ततः स्वस्थानमानीय पृथिवीं पृथिवीधरः ।
मुमोच पूर्व्वं मनसा धारयित्वा धराधरः । ततो जगाम निर्व्वाणं मेदिनी तस्य धारणात् । १११४०
चकार च नमस्कारं तस्मै देवाय विष्णवे । एवं यज्ञवराहेण भूत्वा लोकहितार्थिना ।
उद्धृता पृथिवी देवी सागराम्बुधरा पुरा । अथोद्धृत्य क्षितिं देवो जगतः स्थापनेच्छया ।
पृथिवीप्रविभागाय मनश्चक्रेऽम्बुजेक्षणः । रसां गतामेवं विचिन्त्य स सुरोत्तमः ।

ततो विभुः प्रवरवराहरूपधृक् वृषाकपिः प्रसभमथैकदंष्ट्रया । समुद्धरद्धरणिमतुल्यविक्रमो महायशा लोकहितार्थमच्युतः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे पृथिव्युद्धरणे चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

॥ वैशम्पायन उवाच ॥ तस्योपरि जलौघस्य महती नौरिव स्थिता । विततत्वात्तु देहस्य न ययौ संप्लवं मही । ११९७५

ततः स चिन्तयामास प्रविभागं क्षितेर्विभुः । समुच्छ्रयञ्च सर्व्वेषां पर्व्वतानां समन्ततः ।

विलिखनं प्रमाणञ्च गतिं प्रभवमेव च । माहात्म्यञ्च विशेषञ्च नदीनामप्यचिन्तयत् ।

चतुरस्रां धरां कृत्वा कृत्वा चैव महार्णवान् । मध्ये पृथिव्याः सौवर्णमकरोन्मेरुपर्व्वतं ।

शतयोजनविस्तारं सहस्रञ्च समुच्छ्रितं । जातरूपमयैः शृङ्गैस्तरुणादित्यसन्निभैः ।

आत्मतेजोगुणमयं वेदिकाभोगकल्पितं । विविधांश्च महास्कन्धान् काञ्चनान् पुष्करेक्षणः । ११९८०

नित्यपुष्पफलान् वृक्षान् कृतवांस्तत्र पर्व्वते । प्राचीं दिशमथो गत्वा चकारोदयपर्व्वतं ।

शतयोजनविस्तारं तावद्द्विगुणमुच्छ्रितं । चकार स महादेवः पुनः सौमनसं गिरिं ।

नानारत्नसहस्राणां कृत्वा तत्र तु सञ्चयान् । वेदिकां बहुवर्णाञ्च सन्ध्याभ्राभामकल्पयत् ।

सहस्रशृङ्गञ्च गिरिं नानामणिशताचितं । कृतवान् वृषगहनं शतयोजनमुच्छ्रितं ।

आसनं तत्र परमं सर्व्वभूतनमस्कृतं । कृतवानात्मनः स्थानं विश्वकर्म्मा प्रजापतिः । ११९८५

शैशिरञ्च महाशैलं तुषारचयसन्निभं । चकार दुर्गगहनं कन्दरान्तरमण्डितं ।

शिशिरप्रभवाञ्चैव नदीं द्विजगणाकुलां । चकार पुलिनोपेतां वसुधारामिति श्रुतिः ।

सा दिशं निखिलां प्राचीं पुण्यैर्मुखशतैर्युता । शोभयत्यमृतप्रख्यैर्मुक्तामञ्जुविभूषितैः ।

नित्यपुष्पफलोपेतैश्छादयद्भिः सुसंहतैः । भूषिताऽभ्यधिकं कान्तैः सा नदी तीरजैर्द्रुमैः ।

कृत्वा प्राचीविभागन्तु दक्षिणायामथो दिशि । चकार पर्व्वतं रम्यमर्द्धकाञ्चनराजतं । ११९९०

एकतः सूर्य्यसंकाशमेकतः शशिसन्निभं । स विभ्रत् शुशुभेऽतीव द्वौ वर्णौ पर्व्वतोत्तमः ।

तेजसा युगपद्भाति सूर्य्याचन्द्रमसाविव । वपुष्मत्तमया तत्र भानुमन्तं महागिरिं ।

सर्व्वकामफलैर्वृक्षैर्वृतं दिव्यैर्मनोरमैः । चकार कुञ्जरञ्चैव कुञ्जरप्रतिमाकृतिं ।

सर्व्वतः काञ्चनगुहं बहुयोजनविस्तृतं । वृषभप्रतिमञ्चैव वृषभं नाम पर्व्वतं ।

हेमचन्दनवृक्षाढ्यं पुष्पहासं स सृष्टवान् । महेन्द्रमय शैलेन्द्रं शतयोजनमुच्छ्रितं । ११९९५

जातरूपमयैः शृङ्गैः सुपुष्पितमहाद्रुमं । मेदिन्यां कृतवान्देवः प्रतिचोभमिवाचलं ।

नानारत्नसमाकीर्णं सूर्य्येन्दुसदृशप्रभं । चकार मलयञ्चाद्रिं चित्रपुष्पितपादपं ।

मैनाकञ्च महाशैलं शिलाजालसमाकुलं । दक्षिणस्यां दिशि शुभं चकाराचलमायतं ।

सहस्रशिखरं विन्ध्यं नानाद्रुमलतावृतं । नदीञ्च विपुलावर्त्तां पुलिनश्रोणिभूषितां ।

क्षीरसंकाशसलिलां पयोधारामिति श्रुतिः । सुरम्यां तोयकलिलां विचित्रां दक्षिणां दिशं । १२०००

दिव्यतीर्थशतापाङ्गीं प्लावयन्तीं शुभाम्भसा । दिशं याम्यां प्रतिष्ठाप्य प्रतीचीं दिशमागमत ।

अकरोत्तत्र शैलेन्द्रं शतयोजनमुच्छ्रितं। शोभितं शिखरैश्चित्रैः सुप्रकृष्टैर्हिरण्मयैः।
काञ्चनीभिः शिलाभिश्च गुहाभिश्च विभूषितं। समाकुलं सूर्य्यनिभैः सालैस्तालैश्च भास्वरैः।
शुभैर्जातरूपैश्च श्रीमद्भिश्चित्रवेदिकैः। शृङ्गं गिरिवरस्यापि तत्रासौ संन्यवेशयत्।
मेरुप्रतिमरूपाणि वपुषा प्रभया च ह। सहस्रशतधारञ्च पर्व्वतं मेरुसन्निभं। १२४७२
पुण्यतीर्थगुणोपेतं भगवान् संन्यवेशयत्। षष्टियोजनविस्तारं तावदेव समुच्छ्रितं।
आत्मरूपोपमं तत्र वाराहं नाम नामतः। निवेशयामास विभुर्द्दिव्यं वैदूर्य्यपर्व्वतं।
राजताः काञ्चनाश्चैव यत्र दिव्याः शिलोच्चयाः। तत्रैव चक्रसदृशं चक्रवन्तं महाचलं।
सहस्रकूटं विपुलं भगवान् संन्यवेशयत्। शङ्खप्रतिमरूपञ्च राजतं पर्व्वतोत्तमं।
सितद्रुमशताकीर्णं शङ्खं नाम्ना न्यवेशयत्। सुवर्णरत्नसंभूतं पारिजातं महाद्रुमं। १२४७६
महतः पर्व्वतस्यापि पुष्पहासं न्यवेशयत्। शुभामतिरसाञ्चैव घृतधारेति विश्रुतां।
वराहः सरितं पुण्यां प्रतीच्यामकरोत् प्रभुः। प्रतीच्यां स विधिं कृत्वा पर्व्वतं काञ्चनोज्ज्वलं।
गुणोत्तरश्चोत्तरस्यां संन्यवेशयदच्युतः। ततः सौम्यगिरिं सौम्यमन्तरीक्षप्रमाणतः।
रुक्मधातुप्रतिच्छन्नमकरोद्भास्करप्रभं। स च देशो विसूर्य्योऽपि तस्य भासा प्रकाशते।
तस्य लक्ष्म्याऽधिकं भाति तपता रविणा यथा। सूक्ष्मलक्षणविज्ञेयस्तपतीव दिवाकरः। १२४८४
सहस्रशिखरञ्चैव नानातीर्थसमाकुलं। चकार रत्नसंकीर्णं सूर्य्योऽस्तं नाम पर्व्वतं।
मनोहरगुणोपेतं मन्दरञ्चाचलोत्तमं। उद्दामपुष्पगन्धञ्च पर्व्वतं गन्धमादनं।
चकार तस्य शृङ्गेषु सुवर्णरससम्भवां। जम्बूं जाम्बूनदमयीमत्यन्ताद्भुतदर्शनां।
गिरिं त्रिशिखरञ्चैव तथा पुष्करपर्व्वतं। शुभ्रं पाण्डरमेघाभं कैलासञ्च नगोत्तमं।
हिमवन्तञ्च शैलेन्द्रं दिव्यधातुविभूषितं। निवेशयामास हरिर्व्वाराहीं तनुमाश्रितः। १२४९०
नदीं सर्व्वगुणोपेतामुत्तरस्यां दिशि प्रभुः। मधुधारां स कृतवान् दिव्यां सुखशताकुलां।
सर्व्वे चैव क्षितिधराः सपक्षाः कामचारिणः। तदा कृता भगवता विधात्रा परमेष्ठिना।
स कृत्वा प्रविभागन्तु पृथिव्या लोकभावनः। देवासुराणामुत्पत्तौ कृतवान् बुद्धिमव्ययः।
सर्व्वासु दिक्षु घृतसोपमानश्चकार शैलान् विविधाभिरामान्। हिताय लोकस्य स लोकनाथः पुण्या नदीश्चापि नगोपगूढाः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे पञ्चविंशत्यधिकद्विशततोऽध्यायः॥ २२५॥
॥ वैशम्पायन उवाच॥ जगत्स्रष्टुमना देवश्चिन्तयामास पूर्व्वतः। तस्य चिन्तयतो वक्त्रान्निःसृतः पुरुषः किल। १२४९६
ततः स पुरुषो देवं किं करोमीत्युपस्थितः। प्रत्युवाच स्मितं कृत्वा देवदेवो जगत्पतिः।
विभजात्मानमित्युक्त्वा गतोऽन्तर्द्धानमीश्वरः। अन्तर्हितस्य देवस्य शरीरस्य भास्वतः।
प्रदीपस्येव शान्तस्य गतिस्तस्य न विद्यते। ततस्तेनेरितां वाणीं सोऽन्वचिन्तयत प्रभुः।
हिरण्यगर्भो भगवानेष एव च्छन्दसा स्तुतः। मुक्तः प्रजापतिः पूर्व्वमभवद्भुवनाधिपः।
तदाप्रभृति तस्यासौ यज्ञभागो विधीयते। १२५०१

॥ प्रजापतिरुवाच ॥ विभजात्मानमित्युक्तस्तेनास्मि सुमहात्मना । कथमात्मा विभज्यः स्यात् संशयो ह्यत्र मे महान् ।
इति चिन्तयतस्तस्य ओमित्येवोत्थितः स्वरः । स भूमावन्तरीक्षे च नाके च कृतवान् स्वनं ।
तच्चैवाभ्यसतस्तस्य मनःसारमयं पुनः । हृदयाद्देवदेवस्य वषट्कारः समुत्थितः ।
भूम्यन्तरीक्षनाकानां भूयः स्वरात्मिकाः पराः । महास्मृतिमयाः पुण्या महाव्याहृतयोऽभवन् ।
छन्दसां प्रवरा देवी चतुर्विंशाक्षराऽभवत् । तत्पदं संस्मरन्दिव्यं सावित्रीमकरोत् प्रभुः । १२४३५
ऋक्सामाथर्व्वयजुषश्चतुरो भगवान् प्रभुः । चकार निखिलान् वेदान् ब्रह्मयुक्तेन कर्म्मणा ।
ततो मनसि तस्यैव सनः सनक एव च । सनातनश्च भगवान् वरदश्च सनन्दकः ।
सनत्कुमारश्च विभुस्तत्र जज्ञे सनातनः । मानसा रुद्रपूर्व्वा वै इत्येते षण्महर्षयः ।
ब्रह्माणं कपिलश्चैव षडेतान् ब्रह्मयोगिनः । यतयो योगतन्त्रेषु यान् स्तुवन्ति द्विजातयः ।
ततो मरीचिमत्रिञ्च पुलस्त्यं पुलहं क्रतुं । भृगुमङ्गिरसञ्चैव मनुञ्चैव प्रजापतिं । १२४४०
पितॄंश्च सर्व्वभूतानां सदेवासुररक्षसां । महर्षीनसृजत् प्रभुरष्टावेतांश्च मानसान् ।
एते युगसहस्रान्ते याश्चैषामभवन् प्रजाः । कल्पे निःशेषमुक्ते वै ततो गच्छन्ति निर्वृतिं ।
ततो वर्षसहस्रान्ते उत्पत्तिस्तु विधीयते । एतेषामेव देवानां प्रजाकारणयोगिनां ।
किन्तु कर्म्मविशेषेण देवतानां युगे युगे । नामजन्मविशेषाश्च तथा युगविपर्य्ययः ।
अङ्गुष्ठाद्दक्षिणाद्दक्ष उत्पन्नो भगवानृषिः । तस्यैव तु पुनर्भार्य्या वामाङ्गुष्ठादजायत । १२४४५
तत्र तस्याभवन् कन्या विश्रुता लोकमातरः । याभिर्व्याप्तास्त्रयो लोकाः प्रजाभिर्मनुजाधिप ।
अदितिञ्च दितिञ्चैव दनुं प्राधां मुनिं तथा । खशामनायुषां कद्रुं विनतां सुरभीं तथा ।
इरां क्रोधवशाञ्चैव सुरसाञ्च त्रयोदश । एताश्चैव तु दुहितॄः प्रददौ कश्यपाय तु ।
प्रजाः सञ्चिन्त्य मनसा गतिज्ञेनान्तरात्मना । अरुन्धतीं वसुं यामीं लम्बां भानुं मरुत्वतीं ।
संकल्पाञ्च मुहूर्त्ताञ्च साध्यां विश्वाञ्च भारत । मनवे ब्रह्मपुत्राय दक्ष एता ददौ दश । १२४५०
ततः सर्व्वानवद्याङ्गीः कन्याः कमललोचनाः । पूर्णचन्द्राननाः दिव्या गन्धवत्यो मनोरमाः ।
कीर्त्तिं लक्ष्मीं धृतिं तुष्टिं बुद्धिं मेधां क्रियां तथा । मतिं पुष्टिञ्च लज्जाञ्च दक्षो धर्म्माय वै ददौ ।
आत्रेयश्चैव यो भूतस्तस्य तोयात्मकः प्रभुः । पुत्रो ग्रहाणामधिपः सर्व्वं प्रकृत्य मित्सदा ।
तस्मै नक्षत्रयोगिन्यः सप्तविंशतिरुत्तमाः । रोहिणीप्रमुखाः कन्या दक्षः प्राचेतसो ददौ ।
एतासां पुत्रपौत्रांश्च प्रोच्यमानान्मया शृणु । कश्यपस्य मनोश्चैव धर्म्मस्य शशिनस्तथा । १२४५५
अर्य्यमा वरुणो मित्रः पूषा धाता पुरन्दरः । त्वष्टा भगोऽंशः सविता पर्ज्जन्यश्चेति विश्रुताः ।
अदित्यां जज्ञिरे देवाः कश्यपाल्लोकभावनाः । दित्यां पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतं ।
हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्य्यवान् । द्वावप्यमितविक्रान्तौ तपसा कश्यपोपमौ ।
हिरण्यकशिपोः पुत्राः पञ्चैव सुमहाबलाः । प्रह्लादश्चैव संह्लादस्तथाऽनुह्लाद एव च ।
ह्रदश्चैव तु विक्रान्तः पञ्चमोऽनुह्रदस्तथा । प्रह्लादस्य त्रयः पुत्रा विक्रान्ताश्च महाबलाः । १२४६०

विरोचनस्य जम्भस्य कुजम्भश्चेति विश्रुताः। बलिर्विरोचनसुतो बाण एको बलेः सुतः।
बाणस्य चेन्द्रदमनः पुत्रः परपुरञ्जयः। दनोस्तु पुत्रा बहवो वंशे ख्याता महाबलाः।
विप्रचित्तिः प्रथमजस्तेषां राजा बभूव ह। गणः प्रजज्ञे क्रोधायाः पुत्रपौत्रमनन्तकं।
रौद्राः क्रोधवशा नाम क्रूरकर्माण एव ते। सिंहिका सुषुवे राहुं ग्रहं चन्द्रार्कमर्द्दनं।
घस्तारश्चैव चन्द्रस्य सूर्य्यस्य च महाप्रभं। कालायाः कालकल्पस्तु गणः परमदारुणः। १२४६५
अभवद्दीप्तसूर्य्याचो नीलमेघसमप्रभः। सहस्रशीर्षः शेषस्तु वासुकिस्तक्षकस्तथा।
बहूनां कद्रुपुत्राणामेते प्राधान्यमागताः। धर्म्मात्मानो वेदविदः सदा प्राणिहिते रताः।
लोकतन्त्रधराश्चैव वरदाः कामरूपिणः। तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महाबलः।
अरुणश्चारुणिश्चैव विनतायाः सुताः स्मृताः। इमाश्चाप्सरसः पुण्या विविधाः पुण्यलक्षणाः।
सुषुवेऽष्टौ महाभागाः प्राधा देवर्षिपूजिताः। अनवद्यामनूकाञ्च अनूनामरुणप्रियां। १२४७०
अनुगां सुभगाञ्चैव स्त्रियः प्राधा व्यजायत। अलम्बुषा मिश्रकेशी पुण्डरीका तिलोत्तमा।
सुरूपा लक्ष्मणा क्षेमा तथा रम्भा मनोरमा। असिता च सुबाहुश्च सुवृत्ता सुमुखी तथा।
सुप्रिया च सुगन्धा च सुरसा च प्रमाथिनी। काम्या शारद्वती चैव मौनेयाऽप्सरसः स्मृताः।
विश्वावसुर्भरण्यश्च गन्धर्व्वाश्चैव विश्रुताः। मेनका सहजन्या च पर्णिनी पुञ्जिकस्थला।
घृतस्थला घृताची च विश्वाची चोर्व्वशी तथा। अनुम्लोचेति विख्याता प्रम्लोचेति च ता दश। १२४७५
मनोवती चापि तथा वैदिक्योऽप्सरसः स्मृताः। प्रजापतेस्तु संकल्पात् सम्भूता भुवनप्रिया।
अमृतं ब्राह्मणा गावो रुद्राश्चेति चतुष्टयं। सुरभ्यपत्यमित्येवं पुराणे निश्चयं गतं।
एतद्वै कश्यपापत्यं मनोव्वंशं निबोधत। संक्षेपेणैव तत् सर्व्वं कीर्त्तयिष्यामि तेऽनघ।
विश्वेदेवास्तु विश्वायाः साध्या साध्यान् व्यजायत। मरुत्वत्या मरुत्वन्तो वसोस्तु वसवस्तथा।
भानोस्तु भानवस्तात मुहूर्त्तास्तु मुहूर्त्तजाः। लम्बा घोषं विजज्ञेऽथ नागवीथी च जामिजा। १२४८०
पृथिवीविषयं सर्व्वमरुन्धत्यां व्यजायत। संकल्पायास्तु कौरव्य जज्ञे संकल्प एव च।
धर्म्मस्य पुत्रो लक्ष्म्यास्तु जज्ञे कामो जगत्प्रियः। हर्षो यशश्च कामस्य रत्याः पुत्रद्वयं स्मृतं।
सोमस्य पुत्रो रोहिण्या जज्ञे वर्चा महाप्रभः। उदयन्नेव भगवान् वर्चस्वी येन जायते।
एवं पुंसहस्राणि स्त्रीणाञ्चैव परस्परं। एतावत्तु जगन्मूलं यत्र लोकाः प्रतिष्ठिताः।
प्रजापतिस्तु भगवान् गुणतः श्रैष्ठ्यं देहिनः। आधिपत्येषु युक्तेषु न्ययोजयत योगवित्। १२४८५
दिशो दश क्षितिमुदधीनथार्णवान् खगान् द्रुमौषधीरुरगर्षींस्तुरासुरान्। प्रजापतीन् भुवनसृजो नभो भुव क्रिया मखानय
स्तवान् गिरीश्च सः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे जगत्सर्गे षड्विंशत्यधिकद्विशततमोऽध्यायः॥ २२६॥

॥ वैशम्पायन उवाच॥ त्रयाणामथ लोकानामादित्यानाञ्च भारत। चकार शक्रं राजानमादित्यसमतेजसं।
स वज्री कवची जिष्णुरदित्यामथ जज्ञिवान्। स्मृतः सहायो भगवान् यथा सोऽध्वर्य्युभिः स्तुतः।

समाधमन्ये संप्राप्ता न शेकुश्चलितुं रथाः । दानवौघमहामेघं देवायुधतडिद्युति ।
अन्योन्यबाणवर्षेण युद्धदुर्दिनमाबभौ । हिरण्याक्षस्य बलवान् क्रुद्धः स दितिनन्दनः ।
व्यवर्द्धत महातेजाः समुद्र इव पर्वणि । तस्य क्रुद्धस्य सहसा मुखान्निश्चेरुरर्चिषः । १२११०
साग्निधूमस्य पवनो ववौ तस्य समीपतः । सोऽस्त्रजालैर्बहुविधैर्द्धनुर्भिः परिघैरपि ।
सर्व्वमाकाशमावव्रे पर्व्वतैरुच्छ्रितैरिव । बहुभिः शितनिस्त्रिंशैस्त्रिशूलभिन्नशिरोरसः ।
न शेकुश्चलितुं देवा हिरण्याक्षार्द्दिता युधि । तेन विद्राविता देवा हिरण्याक्षेण संयुगे ।
न शेकुर्य्यत्नवन्तोऽपि यत्नं कर्त्तुमचेतसः । सर्व्वे विद्राविता देवा हिरण्याक्षेण संयुगे ।
तेन शक्रः सहस्राक्षस्तम्भितोऽस्त्रेण धीमता । ऐरावतगतः शक्रो नाशकच्चलितुं भयात् । १२११५
सर्व्वांश्च निखिलान्देवान् पराजित्य स दानवः । त्रासयित्वा च देवेशमात्मस्थं मन्यते जगत् ।
सतोयमेघप्रतिमोपनिस्वनं प्रभिन्नमातङ्गविलासविक्रमं । धनुर्विधुन्वन्तमुदारवर्चसं तदा ऽसुरेन्द्रं ददृशुः सुराः स्थितं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि शक्रस्तम्भने अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥
॥ वैशम्पायन उवाच ॥ निश्चयस्थे सुरपतौ निर्जितेषु सुरेषु च । हिरण्याक्षवधे बुद्धिं चक्रे चक्रगदाधरः ।
वाराहः पर्व्वतो नाम्ना पूर्व्वं यः समुदाहृतः । स एव भूत्वा भगवानाजगामासुरान्तकृत् ।
ततश्चन्द्रप्रतीकाशमग्र्यं शङ्खमुत्तमं । सहस्रारञ्च तच्चक्रं चक्रपर्व्वतसन्निभं । १२१२०
महादेवो महाबुद्धिर्महायोगी महेश्वरः । मथ्यते योऽमरैः सर्व्वैर्गुणैर्नामभिरव्ययः ।
सदा सर्व्वात्मनि श्रेष्ठः सद्भिर्यः सेव्यते सदा । इज्यते च पुराणेषु यो लोके लोकभावनः ।
यो वैकुण्ठः सुरेन्द्राणामनन्तो भोगिनामपि । विष्णुर्यो योगविदुषां यो यज्ञो यज्ञकर्म्मणां ।
यस्य यस्य प्रसादेन भुवनस्था दिवौकसः । आज्यं महर्षिभिर्दत्तमश्नुवन्ति त्रिधाकृतं ।
यो नैधनोऽग्निर्दैत्यानां यः सुराणां परा गतिः । यः पवित्रं पवित्राणां क्षयश्चोरपि यो विभुः । १२१२५
यस्य चक्रं प्रविष्टानि दानवानां युगे युगे । कुलान्याकुलतां यान्ति यानि दृप्तानि वीर्य्यतः ।
ततो दैत्यद्रवकरं घोराख्यं शङ्खमुत्तमं । दध्मौ मायेन बलवानाविपन्दैत्यजीवितं ।
श्रुत्वा शङ्खस्वनं घोरमसुराणां भयावहं । क्षुभिता दानवाः सर्व्वे दिशो दश व्यलोकयन् ।
ततः सरक्तनयनो हिरण्याक्षो महासुरः । कोऽयं स्थितिं ब्रुवन्नेवमाणो नारायणमुदैक्षत ।
वराहरूपिणं देवं स्थितं पुरुषविग्रहं । शङ्खचक्रोद्यतकरं देवानामार्त्तिनाशनं । १२१३०
रराज शङ्खचक्राभ्यां ताभ्याममुरसूदन । सूर्य्याचन्द्रमसोर्मध्ये यथा नीलपयोधरः ।
ततोऽसुरगणाः सर्व्वे हिरण्याक्षपुरोगमाः । उद्यतायुधनिस्त्रिंशा दृष्ट्वा देवमुपाद्रवन् ।
पीड्यमानोऽतिबलिभिर्दैत्यैः सर्व्वायुधोद्यतैः । न चचाल हरिर्युद्धे कम्प्यमान इवाचलः ।
ततः प्रज्वलितां शक्तिं वराहोरसि दानवः । हिरण्याक्षो महातेजा पातयामास वीर्य्यवान् ।
तस्याः शक्त्याः प्रहारेण शङ्खा विस्मयमागताः । समीपमागतां दृष्ट्वा महाशक्तिं महाबलः । १२१३५
हुङ्कारेणैव निर्भर्त्स्य पातयामास भूतले । तस्थौ मतिहतायान्तु शङ्खा साध्विति चाब्रवीत् ।

यः प्रभुः सर्व्वदेवानां वराहस्तेन ताडितः । ततो भगवता चक्रमाविध्यादित्यसन्निभं ।
पातितं दानवेन्द्रस्य शिरश्चक्रमकर्म्मणा । ततः छिन्नस्तथैव शिरस्तस्य भूमौ पपात च ।
दैत्येन्द्रस्याशनिहतं मेरोः शृङ्गमिवोत्तमं । हिरण्याक्षे हते दैत्ये ये शेषास्तत्र दानवाः ।
सर्व्वे तस्य भयत्रस्ता जग्मुराशु दिशो दश । ११९८०
स सर्व्वलोकाप्रतिचक्रचक्रो महाहवेष्वप्रतिमोग्रचक्र. । बभौ वराहो युधि चक्रपाणिः कालो युगान्तेष्विव दण्डपाणिः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे ऊनत्रिंशदधिकद्विशततोऽध्यायः ॥ २२८ ॥
॥ वैशम्पायन उवाच ॥ विद्राव्य तु रणे सर्व्वानसुरान् पुरुषोत्तमः । मुमोच तत्र बद्धांस्तान् पुरन्दरमुखान् सुरान् ।
ततः प्रकृतिमापन्नाः सर्व्वे देवगणास्तदा । पुरन्दरं पुरस्कृत्य नारायणमुपस्थिताः ।
॥ देवा ऊचुः ॥ तव प्रसादाद्भगवंस्तव बाहुबलेन च । जीवामोऽद्य महाबाहो विमुक्तास्त्वत्कृतान्नात् ।
त्वच्छासनाद्धि भगवन् किं कुर्व्वन्त्वदितेः सुताः । इच्छामः पादशुश्रूषां तव कर्त्तुं सनातन । ११९८५
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा वचनं तेषां पुण्डरीकनिभेक्षणः । उवाच वचनं देवान्मुदा युक्तो हतद्विषः ।
॥ भगवानुवाच ॥ यो यस्य भवतां लोको मयैव विहितः पुरा । पाल्यतां स तु यत्नेन नियोगश्च क्वचित् क्वचित् ।
ऐश्वर्यं प्रतिपन्नाः स्थ क्रतुभागपुरस्कृतं । मयैव पूर्व्वं निर्दिष्टो नियोगः प्रतिपाल्यतां ।
शक्रश्चोवाच भगवान् वचनं दुन्दुभिस्वन. । इदं यथावत्कर्त्तव्यं सत्सु चासत्सु च त्वया ।
गच्छन्तु तपसा स्वर्गं मुनयः संशितव्रताः । यज्ञैरिष्ट्वा यायजूकाः फलन्ति प्राप्नुवन्तु च । ११९९०
भाव. सद्धर्म्मशीलानामभावः पापकर्म्मणां । सन्त. स्वर्गजितः सन्तु सर्व्वाश्रमनिवासिन. ।
सत्यशूरा दानशूरा रणशूराश्च ये नराः । ते स्वर्गफलमश्नन्तु सदा ये चानसूयवः ।
अश्रद्दधानाः पुरुषाः कामिनोऽर्थपराः शठाः । अब्रह्मण्या नास्तिकाश्च नरकं यान्तु मानवाः ।
एतावत् क्रियतां वाक्यं मयोक्तं चिद्रशेश्वराः । ततो मयि स्थिते सर्व्वे वो बाधिष्यन्ति नारयः ।
इत्युक्त्वाऽन्तर्हितो देवः शङ्खचक्रगदाधरः । देवतानाञ्च सर्व्वेषामभवद्विस्मयो महान् । ११९९५
एतदत्यद्भुतं दृष्ट्वा वराहचरितं सुराः । नमस्कृत्य वराहाय ना पृष्ठमितो गताः ।
ततः स्थान्याधिपत्यानि प्रतिपन्नानि दैवतैः । सर्व्वलोकाधिपत्ये च प्रतिष्ठां वासवो गतः ।
विमुक्ता दानवगणैः प्रकृतिं धरणी गता । स्थैर्य्यहेतोर्द्धरण्यास्तु ज्ञात्वा चागच्छतान् गिरीन् ।
तेषु स्थानेषु संस्थाप्य पर्व्वतानां पुरन्दरः । चिच्छेद भगवान् पक्षान् वज्रेण शतपर्व्वणा ।
सर्व्वेषामेव पक्षास्तु छिन्नाः शक्रेण धीमता । एकः सपक्षो मैनाकः सुरैस्त्वभयः कृतः । १२०००
एष नारायणस्याद्यः प्रादुर्भावो महात्मन. । वाराह इति विप्रेन्द्रैः पुराणे परिकीर्त्तितः ।
कृष्णद्वैपायनमते नानाश्रुतिसमाहिते । नाशुश्रूषवे न पापाय न नृशंसाय कीर्त्तयेत् ।
न क्षुद्राय न लोभाय न गुरुदेवकारिणे । नाशिष्याय तथा राजन्न कृतघ्नाय चैव हि ।
आयुष्कामैर्यशस्कामैर्यशस्कामैश्च मानवै. । जयैषिभिश्च श्रोतव्यो देवानामेव वै जयः ।
पुराणो वेदसम्बद्धः शिवः स्वस्त्ययनो महान् । पावनः सर्व्वभूतानां सात्त्विको विजयप्रदः । १२००५

सम्बाधमन्ये संप्राप्ता न शेकुश्चलितुं रथाः । दामवौघमहामेघं देवायुधतडिद्युति ।
अन्योन्यबाणवर्षेण युद्धदुर्द्दिनमाबभौ । हिरण्याक्षस्तु बलवान् क्रुद्धः स दितिनन्दनः ।
व्यवर्द्धत महातेजाः समुद्र इव पर्व्वणि । तस्य क्रुद्धस्य सहसा मुखान्निश्चेरुरर्च्चिषः । ११११०
साग्निधूमस्य पवनो ववौ तस्य समीपतः । सोऽस्त्रजालैर्व्वहुविधैर्द्धनुर्भिः परिघैरपि ।
सर्व्वमाकाशमावव्रे पर्व्वतैरुच्छ्रितैरिव । बहुभिः शितनिस्त्रिंशैश्छिन्नभिन्नशिरोरसः ।
न शेकुश्चलितुं देवा हिरण्याक्षार्द्दिता युधि । तेन विद्राविता देवा हिरण्याक्षेण संयुगे ।
न शेकुर्य्यत्नवन्तोऽपि यत्नं कर्त्तुमचेतसः । सर्व्वे विद्राविता देवा हिरण्याक्षेण संयुगे ।
तेन शक्रः सहस्राक्षस्तम्भितोऽस्त्रेण धीमता । ऐरावतगतः सङ्ख्ये नाशकच्चलितुं भयात् । १११११
सर्व्वांश्च निखिलान्देवान् पराजित्य स दानवः । स्तम्भयित्वा च देवेशमात्मस्थं मन्यते जगत् ।
सतोयमेघप्रतिमोग्रनिस्वनं प्रभिन्नमातङ्गविलासविक्रमं । धनुर्व्विधुन्वन्तमुदारवर्चसं तदा ऽसुरेन्द्रं ददृशुः सुराः स्थितं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि शक्रस्तम्भने अष्टाविंशत्यधिकद्विशततोऽध्यायः ॥ २२८ ॥
॥ वैशम्पायन उवाच ॥ निग्रयते सुरपतौ निर्ज्जितेषु सुरेषु च । हिरण्याक्षवधे बुद्धिं चक्रे चक्रगदाधरः ।
वाराहः पर्व्वतो नाम्ना पूर्व्वं स. समुद्राहृतः । स एव भूत्वा भगवानाजगामासुरान्तकृत् ।
ततश्चन्द्रप्रतीकाशमगृह्णाच्छङ्खमुत्तमं । सहस्रारञ्च तच्चक्रं चक्रपर्व्वतसन्निभं । १११२०
महादेवो महाबुद्धिर्म्महायोगी महेश्वरः । पश्यते योऽमरैः सर्व्वैर्गुह्यैर्नामभिरव्ययः ।
सदा सर्व्वात्मनि श्रेष्ठः सद्भिर्यः सेव्यते सदा । इज्यते च पुराणैश्च यो लोके लोकभावनः ।
यो वैकुण्ठः सुरेन्द्राणामनन्तो भोगिनामपि । विष्णुर्यो योगविदुषां यो यज्ञो यज्ञकर्म्मणां ।
मखे यस्य प्रसादेन भुवनस्था दिवौकसः । आज्यं महर्षिभिर्द्दत्तमश्नुवन्ति विधाकृतं ।
यो नैधनोऽग्निर्द्दैत्यानां यः सुराणां परा गतिः । यः पवित्रं पवित्राणां स्वयम्भोरपि यो विभुः । १११२१
यस्य चक्रं प्रविष्टानि दानवानां युगे युगे । कुलान्याकुलतां यान्ति यानि दृप्तानि वीर्य्यतः ।
ततो दैत्यद्रवकरं पौराणं शङ्खमुत्तमं । दध्मौ प्राणेन बलवानाविरन्दैत्यजीवितं ।
श्रुत्वा शङ्खस्वनं घोरमसुराणां भयावहं । क्षुभिता दानवाः सर्व्वे दिशो दश व्यलोकयन् ।
ततः संरक्तनयनो हिरण्याक्षो महासुरः । कोऽयं स्थिति ब्रुवन्रोषान्नारायणमुदैक्षत ।
वराहरूपिणं देवं स्थितं पुरुषविग्रहं । शङ्खचक्रोद्यतकरं देवानामार्त्तिनाशनं । १११३०
रराज शङ्खचक्राभ्यां ताभ्याममुरसूदनः । सूर्य्याचन्द्रमसोर्म्मध्ये यथा नीलपयोधरः ।
ततोऽसुरगणा सर्व्वे हिरण्याक्षपुरोगमाः । उद्यतायुधनिस्त्रिंशा दृष्ट्वा देवमुपाद्रवन् ।
पीड्यमानोऽतिबलिभिर्द्दैत्यैः सर्व्वायुधोद्यतैः । न चचाल हरिर्युद्धे कम्पमान इवाचलः ।
ततः प्रज्वलितां शक्तिं वराहोरसि दानवः । हिरण्याक्षो महातेजाः पातयामास वीर्य्यवान् ।
तस्याः शक्त्याः प्रहारेण शक्रो विस्मयमागतः । समीपमागतां दृष्ट्वा महाशक्तिं महाबलः । १११३१
हुङ्कारेणैव निर्भर्त्स्य पातयामास भूतले । तस्यां प्रतिहतायान्तु शक्रा साध्विति चाब्रवीत् ।

यः प्रभुः सर्व्वदेवानां वराहस्तेन ताडितः । ततो भगवता चक्रमाविध्यादित्यसन्निभं ।
पातितं दानवेन्द्रस्य शिरश्चोत्तमकर्म्मणा । ततः छिन्नस्तेव शिरस्तस्य भूमौ पपात ह ।
दैत्येन्द्रस्याशनिहतं मेरोः शृङ्गमिवोत्तमं । हिरण्याक्षे हते दैत्ये ये शेषास्तत्र दानवाः ।
सर्व्वे तस्य भयत्रस्ता जग्मुराशु दिशो दश । ११६८०
स सर्व्वलोकाप्रतिमप्रभावो महाहवेष्वप्रतिमोघचक्रः । बभौ वराहो युधि चक्रपाणिः कालो युगान्तेष्विव दण्डपाणिः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे ऊनत्रिंशदधिकद्विशततोऽध्यायः ॥ २२९ ॥
॥ वैशम्पायन उवाच ॥ विद्राव्य तु रणे सर्व्वानसुरान् पुरुषोत्तमः । मुमोच तत्र बद्धांस्तान् पुरन्दरमुखान् सुरान् ।
ततः प्रकृतिमापन्नाः सर्व्वे देवगणास्तदा । पुरन्दरं पुरस्कृत्य नारायणमुपस्थिताः ।
॥ देवा ऊचुः ॥ तव प्रसादाद्भगवंस्तव बाहुबलेन च । जीवामोऽद्य महाबाहो विमुक्तास्त्वत्प्रसादनात् ।
त्वच्छासनाद्धि भगवन् किं कुर्व्वन्त्वदितेः सुताः । इच्छामः पादशुश्रूषां तव कर्त्तुं सनातन । ११६८५
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा वचनं तेषां पुण्डरीकनिभेक्षणः । उवाच वचनं देवान्मुदा युक्तो हतद्विषः ।
॥ भगवानुवाच ॥ यो यस्य भवतां लोको मयैव विहितः पुरा । पाल्यतां स तु यत्नेन नियोगश्च क्वचित् क्वचित् ।
ऐश्वर्य्यं प्रतिपन्नाः स्थ क्रतुभागपुरस्कृतं । मयैव पूर्व्वं निर्द्दिष्टो नियोगः प्रतिपाल्यतां ।
शक्रश्चोवाच भगवान् वचनं दुन्दुभिस्वनः । इदं यथावत्कर्त्तव्यं सत्यु चासत्यु च त्वया ।
गच्छन्तु तपसा स्वर्गं मुनयः संशितव्रताः । यज्ञैरिष्ट्वा याज्ञिकाः फलन्ते प्राप्नुवन्तु च । ११६९०
भावः सद्धर्म्मशीलानामभावः पापकर्म्मणां । सन्तः स्वर्गजितः सन्तु सर्व्वाश्रमनिवासिनः ।
सत्यशूरा दानशूरा रणशूराश्च ये नराः । ते स्वर्गफलमश्नन्तु सदा ये चानसूयवः ।
अश्रद्दधानाः पुरुषाः कामिनोऽर्थपराः शठाः । अब्रह्मण्या नास्तिकाश्च नरकं यान्तु मानवाः ।
एतावत् क्रियतां वाक्यं मयोक्तं त्रिदशेश्वराः । ततो मयि स्थिते सर्व्वे वो नाधियन्ति नारयः ।
इत्युक्त्वाऽन्तर्हितो देवः शङ्खचक्रगदाधरः । दैवतानाञ्च सर्व्वेषामभवद्विस्मयो महान् । ११६९५
एतदद्भुतं दृष्ट्वा वराहचरितं सुराः । नमस्कृत्य वराहाय ते प्रशमितो गताः ।
ततः स्थान्याधिपत्यानि प्रतिपन्नानि दैवतैः । सर्व्वलोकाधिपत्ये च प्रतिष्ठां वासवो गतः ।
विमुक्ता दानवगणैः प्रकृतिं धरणी गता । स्थैर्य्यहेतोर्द्धरण्यास्तु शाता चागस्कृतान् गिरीन् ।
तेषु स्थानेषु संस्थाप्य पर्व्वतानां पुरन्दरः । चिच्छेद भगवान् पक्षान् वज्रेण शतपर्व्वणा ।
सर्व्वेषामेव पक्षास्तु छिन्नाः शक्रेण धीमता । एकः सपक्षो मैनाकः सुरेन्द्राभयदः कृतः । ११७००
एष नारायणस्याद्यः प्रादुर्भावो महात्मनः । वाराह इति विप्रेन्द्रैः पुराणे परिकीर्त्तितः ।
कृष्णद्वैपायनमतं नानाश्रुतिसमाहितं । नाशुचये न पापाय न कृतघ्नाय कीर्त्तयेत् ।
न क्षुद्राय न लोभाय न गुरुद्वेषकारिणे । नाशिष्याय तथा राजन् कृतघ्नाय चैव हि ।
आयुष्यमिदं धन्यं कामेदं शस्तमिदं मानवैः । श्रुत्वैविशिष्टश्च श्रोतव्यो देवानामेष वै जयः ।
पुराणो वेदसम्भूतः शिवः स्वस्त्ययनो महान् । पावनः सर्व्वभूतानां नास्तिक्यो विजयप्रदः । ११७०५

जातमात्रस्तु भगवानदित्यां स सुमेधृतः । तदा प्रभृति देवेशः कौशिकत्वमुपागतः ।
अभिषिच्याधिराज्ये तु सहस्राक्षं पुरन्दरं । ब्रह्मा क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे । १२४८०
यज्ञानां तपसाञ्चैव नक्षत्रग्रहयोस्तथा । द्विजानामोषधीनाञ्च सोमं राज्येऽभ्यषेचयत् ।
दक्षं प्रजानान्तु पतिमपां वरुणं पतिं । पितॄणां सर्व्वनिधनं कालं वैश्वानरं प्रभुं ।
गन्धानाञ्चैव सर्व्वेषां भूतानाञ्चाशरीरिणां । शब्दाकाशबलानाञ्च वायुरीशस्तदा कृतः ।
सर्व्वभूतपिशाचानां मातृणाञ्च तथा गवां । उत्पातग्रहरोगाणां व्याधीनामीतिनां तथा ।
प्रेतानाञ्चैव सर्व्वेषां महादेवः कृतः प्रभुः । यक्षाणां राक्षसानाञ्च गुह्यकानां धनस्य च । १२४८५
रत्नानाञ्चैव सर्व्वेषां कृतो वैश्रवणः प्रभुः । सर्व्वेषां दंष्ट्रिणां शेषो नागानामथ वासुकिः ।
सरीसृपाणां सर्व्वेषां प्रभुत्वे तक्षकः कृतः । सागराणां नदीनाञ्च मेघानां वर्षितस्य च ।
आदित्यानामवरजः पर्ज्जन्योऽधिपतिः कृतः । गन्धर्व्वाणामधिपतिस्तथा चित्ररथः कृतः ।
सर्व्वाप्सरोगणानाञ्च कामदेवः कृतः प्रभुः । चतुष्पदानां सर्व्वेषां वाहनानाञ्च सर्व्वशः ।
महेश्वरध्वजः श्रीमान् गोवृषोऽधिपतिः कृतः । दैत्यानाञ्च महातेजा हिरण्याक्षः कृतः प्रभुः । १२४९०
हिरण्यकशिपुश्चैव यौवराज्येऽभिषेचितः । दानवानाञ्च सर्व्वेषामसुराणां महाबलः ।
विप्रचित्तिः प्रथमजस्तेषां राज्येऽभिषेचितः । गणानां कालकेयानां महाकालः कृतः प्रभुः ।
अनायुषायाः पुत्त्राणां वृत्रो राजा तदा कृतः । सिंहिकातनयो यस्तु राहुर्नाम महाग्रहः ।
उत्पातानामनेकेषामशुभानां पतिः कृतः । ऋतूनामथ मासानां युगानाञ्चैव भारत ।
पक्षाणाञ्च क्षपाणाञ्च तथाऽहस्तिथिपर्व्वणां । कलाकाष्ठामुहूर्त्तानां गतेरयनयोस्तथा । १२४९५
कृतः संवत्सरो राजा योगस्य गणितस्य च । पक्षिणामथ सर्व्वेषां चक्षुषाञ्च महाबलः ।
सुपर्णो भोगिनाञ्चैव गरुडोऽधिपतिः कृतः । अरुणो गरुडभ्राता जवापुष्पसमप्रभः ।
येगानाञ्चैव सर्व्वेषां साध्यानामधिपः कृतः । पुत्त्रोऽस्य विरजो नाम कश्यपस्य प्रजापतेः ।
राजा प्राच्यां दिशि तदा वासवेनाभिषेचितः । आदित्यस्य विभोः पुत्त्रो धर्म्मराजो महायशाः ।
दक्षिणस्यां दिशि यमो महेन्द्रेणाभिसत्कृतः । कश्यपस्यौरसः पुत्त्रः सलिलान्तर्गतः पुरा । १२५००
अम्बुराज इति ख्यातः प्रतीच्यां दिशि पार्थिवः । पुलस्त्यपुत्त्रो द्युतिमान् महेन्द्रप्रतिमः प्रभुः ।
एकाक्षः पिङ्गलो नाम सौम्यायां दिशि पार्थिवः । एवं विभज्य राज्यानि स्वयम्भूर्लोकभावनः ।
लोकांश्च त्रिदिवे दिव्यानददत् स पृथक् पृथक् । कस्यचित् सूर्य्यसङ्काशान् कस्यचिदग्निसप्रभान् ।
कस्यचिद्विद्युदुद्योतान् कस्यचिच्चन्द्रनिर्म्मलान् । नानावर्णान् कामगमाननेकशतयोजनान् ।
सतां सुकृतिनां लोकान् पापदुष्कृतिदुर्लभान् । ये च भासा विभान्त्येते सौम्यास्तारागणा इव । १२५०५
एते सुकृतिनां लोका यत्र पुण्यकृतो गताः । ये यज्ञैर्मखैः पुण्यैः समाप्तवरदक्षिणैः ।
स्वदारनिरता दान्ता ऋजवः सत्यवादिनः । दीनानुग्रहकर्त्तारो ब्रह्मण्या लोभवर्ज्जिताः ।
ते त्यक्तरजसः सन्तो यान्ति तत्र तपोऽन्विताः । एवं नियोज्य तनयान् ब्रह्मा लोकपितामहः ।

एष कौरव्य तत्त्वेन कथितस्तेऽनुपूर्व्वशः। वराहस्य नरश्रेष्ठ प्रादुर्भावो महात्मनः।
ये यजन्ति मखैः पुण्यैर्दैवतानि पितॄनपि। आत्मानमात्मना नित्यं विष्णुमेव यजन्ति ते।
लोकायनाय चिदयायनाय ब्रह्मायणायात्मभवायनाय। नारायणायात्महितायनाय महावराहाय नमस्कुरुध्व।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे प्रादुर्भावे त्रिंशदधिकद्विशततमोऽध्यायः॥ २३०॥
॥ वैशम्पायन उवाच ॥ वाराह एष कथितो नारसिंहमतः शृणु। यत्र भूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः।
पुरा कृतयुगे राजन् हिरण्यकशिपुः प्रभुः। दैत्यानामादिपुरुषश्चकार सुमहत्तपः। ११८१०
दशवर्षसहस्राणि शतानि दश पञ्च च। जलवासी समभवत् स्नानमौनदृढव्रतः।
ततः शमदमाभ्याञ्च ब्रह्मचर्य्येण चैव ह। ब्रह्मा प्रीतोऽभवत्तस्य तपसा नियमेन च।
ततः स्वयम्भूर्भगवान् स्वयमागत्य तत्र ह। विमानेनार्कवर्णेन हंसयुक्तेन भास्वता।
आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैस्तथा। रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिन्नरैः।
दिग्भिश्चापि विदिग्भिश्च नदीभिः सागरैस्तथा। नक्षत्रैश्च मुहूर्त्तैश्च खचरैश्च महाग्रहैः। ११८१५
देवैर्ब्रह्मर्षिभिः सार्द्धं सिद्धैः सप्तर्षिभिस्तथा। राजर्षिभिः पुण्यकृद्भिर्गन्धर्व्वैरप्सरोगणैः।
चराचरगुरुः श्रीमान् वृतः सर्व्वैः सुरैस्तथा। ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यं वचनमब्रवीत्।
॥ ब्रह्मोवाच ॥ प्रीतोऽस्मि तव भक्तस्य तपसाऽनेन सुव्रत। वरं वरय भद्रं ते यथेष्टं काममाप्नुहि।
ततो हिरण्यकशिपुः प्रीतात्मा दानवोत्तमः। कृताञ्जलिपुटः श्रीमान् वचनञ्चेदमब्रवीत्।
॥ हिरण्यकशिपुरुवाच ॥ न देवासुरगन्धर्व्वा न यक्षोरगराक्षसाः। न मानुषाः पिशाचा वा निहन्युर्मां कथञ्चन। ११८२०
ऋषयो नैव मां क्रुद्धाः सर्व्वलोकपितामह। शपेयुस्तपसा युक्ता वर एष वृतो मया।
न शस्त्रेण न चास्त्रेण गिरिणा पादपेन वा। न शुष्केण न चार्द्रेण स्याच्च चान्येन मे वधः।
न स्वर्गेऽप्यथ पाताले नाकाशे नावनीतले। न चाभ्यन्तररात्र्योश्चान्ते चाप्यन्येन मे वधः।
पाणिप्रहारेणैकेन सभृत्यबलवाहनं। यो मां नाशयितुं शक्तः स मे मृत्युर्भविष्यति।
भवेयमहमेवार्कः सोमो वायुर्हुताशनः। सलिलञ्चान्तरीक्षञ्च नक्षत्राणि दिशो दश। ११८२५
अहं क्रोधश्च कामश्च वरुणो वासवो यमः। धनदश्च धनाध्यक्षो यक्षः किम्पुरुषाधिपः।
मूर्त्तिमन्ति च दिव्यानि तथाऽस्त्राणि महाहवे। उपतिष्ठन्तु मां देव सर्व्वलोकपितामह।
॥ ब्रह्मोवाच ॥ एते दिव्या वरास्तात मया दत्तास्तवाद्भुताः। सर्व्वान् कामान् मत्प्रभावात् प्राप्स्यसि त्वं न संशयः।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा स भगवान् जगामाकाशमेव हि। वैराजं ब्रह्मसदनं ब्रह्मर्षिगणसेवितं।
ततो देवाश्च नागाश्च गन्धर्व्वा ऋषिभिः सह। वरप्रदानं श्रुत्वैवं पितामहमुपस्थिताः। ११८३०
॥ देवा ऊचुः ॥ वरेणानेन भगवन् बाधिष्यति स नोऽसुरः। तत्प्रसीदस्व भगवन् वधोऽप्यस्य विचिन्त्यतां।
॥ वैशम्पायन उवाच ॥ ततो लोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः। भगवान् सर्व्वलोकानामादिकर्त्ता स्वयं प्रभुः।
स्रष्टा च हव्यकव्यानामव्यक्तः प्रकृतिर्ध्रुवः। श्रावयामास सुरान् सुशीतैर्वचनाम्बुभिः।
अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलं। तपसोऽन्तेऽस्य भगवान् वधं विष्णुः करिष्यति।

पुण्यगन्धाः स्रजस्तत्र नित्यपुष्पफला द्रुमाः । उष्णे शीतानि तोयानि शीते चोष्णानि सन्ति वै । ११६६९
पुष्पितायान्महाशाखान् प्रवालाङ्कुरधारिणः । लतावितानसञ्छन्नान् सरःसु च नदीषु च ।
द्रुमान् बहुविधांस्तत्र मृगेन्द्रो ददृशे प्रभुः । गन्धवन्ति च पुष्पाणि रसवन्ति फलानि च ।
नानि शीतानि तोयानि तत्र तत्र सरांसि च । अपश्यत् सर्व्वतीर्थानि सभायां तस्य स प्रभुः ।
नलिनैः पुण्डरीकैश्च शतपत्रैः सुगन्धिभिः । रक्तैः कुवलयैर्नीलैः कुमुदैः सन्ततानि च ।
स कान्तैर्धार्त्तराष्ट्रैश्च राजहंसैः सरःप्रियैः । कारण्डवैश्चक्रवाकैः सारसैः कुररैरपि । ११६७०
विमलस्फाटिकाभानि पाण्डरच्छदनानि च । कलहंसोपगीतानि सारसाभिरुतानि च ।
गन्धयुक्ताः शुभास्तत्र पुष्पमञ्जरिधारिणीः । दृष्टवान् पादपाग्रेषु नानापुष्पधरा लताः ।
केतकाशोकवकुलाः पुन्नागतिलकार्ज्जुनाः । चूतनीपकदम्बाश्च नागपुष्पाः प्रियङ्गवः ।
शाल्मल्यः पाटलीवृक्षा वञ्जुलाः सहरिद्रवः । सालास्तालाः पियालाश्च चम्पकाश्च मनोहराः ।
तथैवान्ये व्यराजन्त सभायां पुष्पिता द्रुमाः । वैदूर्य्याश्च द्रुमा दिव्या ज्वलिताग्निसमप्रभाः । ११६७५
स्कन्धवन्तः सुशाखाश्च बहुतालसमुच्छ्रयाः । अञ्जनाशोकपर्य्याया भान्ति वञ्जुलकैर्द्रुमाः ।
वरुणा वत्सनाभाश्च पनसाश्चन्दनैः सह । नीलाः सुमनसश्चैव पीताश्चाश्वत्थतिन्दुकाः ।
प्राचीनामलका लोध्रा मल्लिका भद्रदारव । आम्रातकास्तथा जम्बू लकुचाः शैलवालुकाः ।
सर्ज्जरसाः कुन्दुरवः पुन्नागाः कुटजास्तथा । रक्ताः कुरुवकाश्चैव नीपाश्चागुरुभिः सह ।
कदम्बाश्चैव भव्याश्च दाडिमा बीजपूरकाः । कालीयका दुकूलाश्च हिङ्गवस्तैलपर्णिकाः । ११६८०
खर्ज्जूरा नारिकेलाश्च चर्मवृक्षा हरीतकी । मधूकाः सप्तपर्णाश्च बिल्वाः पारावतास्तथा ।
पनसाश्च तमालाश्च नानागुल्मलतावृताः । लताश्च विविधाकाराः पत्रपुष्पफलोपगाः ।
एते चान्ये च बहवस्तत्र काननजा द्रुमाः । नानापुष्पफलोपेता व्यराजन्त समन्ततः ।
चकोराः शतपत्राश्च मत्तकोकिलशारिकाः । पुष्पितान् फलितांश्चैताम् संपतन्ति महाद्रुमान् ।
रक्तपीतारुणास्तत्र पादपाग्रगता द्विजाः । परस्परमवेक्षन्त प्रहृष्टा जीवजीवकाः । ११६८५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे हिरण्यकशिपुप्रभावर्णने एकत्रिंशदधिकद्विशततोऽध्यायः ॥२३१॥

॥ वैशम्पायन उवाच ॥ तस्यां सभायां दैत्येन्द्रो हिरण्यकशिपुः प्रभुः । आसीन आसने रम्ये कलमात्रे प्रमाणतः ।
दिवाकरनिभे दीप्ते दिव्यास्तरणसंस्तृते । रराज सुचिरं राजन् ज्वलत्काञ्चनकुण्डलः ।
तस्य दैत्यपतेर्मन्दं विरजस्कः समन्ततः । दिव्यगन्धवहस्तत्र मारुतः सुसुखो ववौ ।
तत्र देवाः सगन्धर्व्वा गणैरप्सरसां वृताः । दिव्यतानेन दिव्यानि जगुर्गीतानि गायनाः ।
विश्वाची सहजन्या च प्रम्लोचेति च विश्रुता । दिव्या च सौरभेयी च समीची पुञ्जिकस्थला । ११६९०
मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता । चारुनेत्रा घृताची च मेनका चोर्व्वशी तथा ।
एताः सहस्रशश्चान्या नृत्यगीतविशारदाः । उपातिष्ठन्त राजानं हिरण्यकशिपुं तदा ।
हिरण्यकशिपुस्तत्र विचित्राभरणाम्बरः । कौषवशेषतः शूरस्तस्थौ ज्वलितकुण्डलः ।

तत्रासीनं महाबाहुं हिरण्यकशिपुं प्रभुं । उपासन्ति दितेः पुत्राः सर्व्वे लब्धवराः पुरा ।
बलिर्व्वैरोचनिस्तत्र नरकः पृथिवीसुतः । प्रह्लादो विप्रचित्तिश्च गविष्ठश्च महासुरः । १०९९५
चन्द्रहन्ता क्रोधहन्ता सुनामा सुमतिस्तथा । घटोदरो महापार्श्वः क्रथनः पिठरस्तथा ।
विश्वरूपः सुरूपश्च विरूपश्च महाबलः । दशग्रीवश्च वाली च मेघवासा महाबलः ।
घटाभो विकटाभश्च संह्रादश्चेन्द्रतापनः । दैत्यदानवसंघाश्च सर्व्वे ज्वलितकुण्डलाः ।
स्रग्विणो वाग्मिनः सर्व्वे सर्व्वे सुचरितव्रताः । सर्व्वे लब्धवराः शूराः सर्व्वे विगतमृत्यवः ।
एते चान्ये च बहवो हिरण्यकशिपुं प्रभुं । उपासन्त महात्मानं सर्व्वे दिव्यपरिच्छदाः । ११०००
विमानैर्विविधाकारैर्भ्राजमानैरिवाग्निभिः । स्रग्विणो भूषिताः सर्व्वे गमनागमने रताः ।
विचित्राभरणोपेता विचित्रवसनास्तथा । विचित्रशस्त्रकवचा विचित्रध्वजवाहनाः ।
महेन्द्रचापसदृशैर्विचित्रैरङ्गदैर्व्वरैः । भूषिताङ्गा दितेः पुत्रास्तमुपासन्त नित्यशः ।
तस्यां सभायां दिव्यायामसुराः पर्व्वतोपमाः । हिरण्यमुकुटाः सर्व्वे दिवाकरकरप्रभाः ।
कनकमणिविचित्रवेदिकायामुपहितनिर्म्मलवज्रवीथिकायां । स तु मृगपतिरीक्षितः सभायां सुरुचिररत्नगवाक्षसंवृतायां । ११००५
कनकविमलहारभूषिताङ्गं दितितनयं मृगाधिपो ददर्श । दिवसकरकरप्रभं ज्वलन्तं दितिजसहस्रगणैर्निषेव्यमाणं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे द्वात्रिंशदधिकद्विशततोऽध्यायः ॥ २३२ ॥

॥ वैशम्पायन उवाच ॥ ततो दृष्ट्वा महाबाहुं कालचक्रमिवागतं । नारसिंहवपुश्छन्नं भस्मच्छन्नमिवानलं ।
विकुञ्चितसटच्छस्य नरसिंहस्य भारत । रूपौदार्य्यं बभौ तत्र समस्तं शशिसन्निभं ।
अहो रूपमिदं श्वेतं शङ्खकुन्देन्दुसन्निभं । अब्रुवन्दानवाः सर्व्वे हिरण्यकशिपुश्च सः ।
एवं हि ब्रुवतां तेषां निर्द्दग्धानां महात्मनां । नरसिंहेन चक्षुर्भ्यां चोदिताः कालधर्म्मणा । ११०१०
हिरण्यकशिपोः पुत्रः प्रह्लादो नाम वीर्य्यवान् । दिव्येन चक्षुषा सिंहमपश्यद्देवमागतं ।
तं दृष्ट्वा रुक्मशैलाभमपूर्व्वां तनुमास्थितं । विस्मिता दानवाः सर्व्वे हिरण्यकशिपुश्च सः ।
॥ प्रह्लाद उवाच ॥ महाराज महाबाहो दैत्यानामादिसम्भव । न श्रुतं नैव नो दृष्टं नारसिंहमिदं वपुः ।
अव्यक्तप्रभवं दिव्यं किमिदं रूपमद्भुतं । दैत्यान्तकरणं घोरं शंसतीव मनांसि नः ।
अस्य देवाः शरीरस्थाः सागराः सरितस्तथा । हिमवान् पारियात्रश्च ये चान्ये कुलपर्व्वताः । ११०१५
चन्द्रमाः सह नक्षत्रैरादित्यैर्वसुभिः सह । धनदो वरुणश्चैव यमः शक्रः शचीपतिः ।
मरुतो देवगन्धर्व्वा ऋषयश्च तपोधनाः । नागा यक्षाः पिशाचाश्च राक्षसा भीमविक्रमाः ।
ब्रह्मा देवः पशुपतिर्ललाटस्थो विभाति वै । स्थावराणि च भूतानि जङ्गमानि तथैव च ।
भवांश्च सहितोऽस्माभिः सर्व्वैर्दैत्यगणैर्वृतः । विमानशतसंकीर्णा तथैवाभ्रन्तरा सभा ।
सर्व्वं त्रिभुवनं राजन् लोकधर्म्मश्च शाश्वतः । दृश्यते नरसिंहेऽस्मिन् यथेन्दौ विमले जगत् । ११०२०
प्रजापतिश्चात्र मनुर्म्महात्मा ग्रहाश्च योगाश्च मही नभश्च । उत्पातकालश्च धृतिः स्मृतिश्च रजश्च सत्त्वश्च तपो दमश्च ।

सनत्कुमारश्च महानुभावो विश्वे च देवा वसवश्च सर्व्वे । क्रोधश्च कामश्च तथैव हर्षो दर्पश्च मोहः पितरश्च सर्व्वे ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे प्रह्लादवाक्ये त्रयस्त्रिंशदधिकद्विशततोऽध्यायः ॥ २३३ ॥

॥ वैशम्पायन उवाच ॥ प्रह्लादस्य वचः श्रुत्वा हिरण्यकशिपुर्व्वचः । उवाच दानवान् सर्व्वान् सगणान्दनुजाधिपः ।
मृगेन्द्रो गृह्यतां शीघ्रमपूर्व्वां तनुमास्थितः । यदि वा संशयः कश्चिद्वध्यतां वनगोचरः ।
तच्छ्रुत्वा दानवाः सर्व्वे मृगेन्द्रं भीमविक्रमं । परिक्षिपन्तो मुदितास्त्रासयामासुरोजसा । ११००५
सिंहनादं विमुच्याथ नरसिंहो महाबलः । बभञ्ज तां सभां दिव्यां व्यादितास्य इवान्तकः ।
सभायां भज्यमानायां हिरण्यकशिपुः स्वयं । चिक्षेपास्त्राणि घोराणि सिंहायाद्भुतविक्रमः ।
सर्व्वास्त्राणामथ श्रेष्ठं दण्डमस्त्रं सुभैरवं । कालचक्रं तथाऽत्युग्रं विष्णुचक्रं तथाऽपरं ।
धर्म्मचक्रं महाचक्रमजितं नाम नामतः । चक्रमैन्द्रं तथा घोरमृषिचक्रं तथैव च ।
पैतामहं महच्चक्रं तथा त्रैलोक्यसंहृतं । विचित्रामशनिञ्चैव शुष्कार्द्रं चाशनिद्वयं । ११०१०
रौद्रं तदुग्रं शूलञ्च कङ्कालं मुषलं तथा । अस्त्रं ब्रह्मशिरश्चैव ब्राह्ममस्त्रं तथैव च ।
ऐषीकमस्त्रमैन्द्रञ्च आग्नेयं शैशिरन्तथा । वायव्यं मथनं नाम कापालमथ किङ्करं ।
तथाऽप्रतिहतां शक्तिं क्रौञ्चमस्त्रं तथैव च । अस्त्रं हयशिरो नाम सौमास्त्रं शिशिरप्रभं ।
पैशाचमस्त्रमजितं सर्पमस्त्रं तथाऽद्भुतं । मोहनं शोषणञ्चैव सन्तापनविलापनं ।
जृम्भणं पातनञ्चैव त्वाष्ट्रञ्चापि सुदारुणं । कालमुद्गरमक्षोभ्यं क्षोभणञ्च महाप्रभं । ११०१५
संवर्त्तं मोहनञ्चैव तथा मायाधरं परं । गान्धर्व्वमस्त्रं दयितमसिरत्नञ्च नन्दकं ।
प्रस्वापनं प्रमथनं वारुणञ्चास्त्रमुत्तमं । अस्त्रं पाशुपतञ्चैव यस्याप्रतिहता गतिः ।
एतान्यस्त्राणि सर्व्वाणि हिरण्यकशिपुस्तदा । चिक्षेप नरसिंहस्य दीप्तस्याग्नेरिवाहुतिः ।
अस्त्रैः प्रज्वलितैः सिंहमावृणोदसुराधिपः । विवस्वान् घर्म्मसमये हिमवन्तमिवांशुभिः ।
स ह्यमर्षानिलोद्भूतो दैत्यानां सैन्यसागरः । क्षणेनाप्लावयत् सिंहं मैनाकमिव सागरः । ११०२०
प्रासैः पाशैश्च खड्गैश्च गदाभिर्मुषलैस्तथा । वज्रैरशनिभिश्चैव शिलाभिश्च महाद्रुमैः ।
मुद्गरैः कूटपाशैश्च शूलोलूखलपर्व्वतैः । शतघ्नीभिश्च दीप्ताभिर्दण्डैरपि सुदारुणैः ।
परिवार्य्य समन्तात्तु निघ्नन्तस्ते हरिं तदा । स्वल्पमप्यस्य न क्षुभमूर्ज्जितस्य महात्मनः ।

ते दानवाः पाशगृहीतहस्ता महेन्द्रवज्राशनितुल्यवेगाः । समन्ततोऽभ्युद्यतबाहुदण्डाः स्थितास्त्रिशीर्षा इव नागपोताः ।
सुवर्णमालाकुलभूषिताङ्गाः पीतांशुकाभोगविभागभाजः । मुक्तावलीदामविभूषिताङ्गाः हंसा इवाभान्ति विशालपक्षाः । ११०२५
तेषान्तु वायुप्रतिमौजसां वै केयूरमालावलयोत्कटानां । तान्युत्तमाङ्गान्यभितो विभान्ति प्रभातसूर्य्यांशुसमप्रभाणि ।
क्षिप्तैः समपज्वलितानलप्रभैर्महास्त्रपूगैः स समावृतो बभौ । गिरिर्य्यथा सन्ततवर्षिभिर्घनैः कृतान्धकारोत्तमकन्दरद्रुमः ।
तैर्हन्यमानोऽपि महास्त्रजालैर्महाबलैर्दैत्यगणैः समेतैः । नाकम्पताजौ भगवान् प्रतापवान् स्थितः प्रकृत्या हिमवानिवाचलः ।
सन्त्रासितास्ते नरसिंहरूपिणा दितेः सुताः पावकतुल्यवर्चसः । भयाद्विचेलुः पवनोद्धुता यथा महोर्म्मयः सागरवारिसम्भवाः ।

शतैर्द्धनुर्भिः सुमहातिवेगा युगान्तकालप्रतिमान् शरौघान्। एकायनस्था मुमुचुर्नृसिंहे महासुराः क्रोधविदीपिताङ्गाः। ११००५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे चतुस्त्रिंशदधिकद्विशततोऽध्यायः॥ २३४ ॥

॥ वैशम्पायन उवाच ॥ खराः खरमुखाश्चैव मकराशीविषाननाः। ईहामृगमुखाश्चान्ये वराहमुखसंस्थिताः।

बालसूर्य्यमुखाश्चैव धूमकेतुमुखास्तथा। चन्द्रार्द्धचन्द्रवक्त्राश्च प्रदीप्ताग्निमुखास्तथा।

हंसकुक्कुटवक्त्राश्च व्यादितास्या भयावहाः। पञ्चास्या लेलिहानाश्च काकगृध्रमुखास्तथा।

द्विजिह्वाश्च त्रिशीर्षाश्च तथोल्कामुखसंस्थिताः। महाग्राहनिभाश्चान्ये दानवा बलदर्पिताः।

कैलासवपुषस्तस्य शरीरे शरवृष्टिभिः। अवध्यस्य मृगेन्द्रस्य न व्यथां चक्रुराहवे। ११०११

एवं भूयोऽपरान् घोरानसृजन्दानवाः शरान्। मृगेन्द्रोरसि संक्रुद्धा निश्वसन्त इवोरगाः।

ते दानवशरा घोरा मृगेन्द्राय समीरिता। विलयं जग्मुराकाशे खद्योता इव पर्व्वते।

ततश्चक्राणि घोराणि दैत्याः क्रोधसमन्विताः। मृगेन्द्रायाक्षिपंस्तूर्णं प्रज्वलन्ति समन्ततः।

तैरासीद्गगनं चक्रैः संपतद्भिः समावृतं। युगान्ते संप्रकाशद्भिश्चन्द्रादित्यग्रहैरिव।

तानि सर्व्वाणि चक्राणि मृगेन्द्रेण महात्मना। निगीर्णानि प्रदीप्तानि पावकार्चिःसमानि वै। ११०१६

तानि चक्राणि वदनं प्रविशन्ति विभान्ति वै। मेघोदरदरी घोरां चन्द्रसूर्य्यग्रहा इव।

हिरण्यकशिपुर्दैत्यो भूयः प्रासृजदूर्ज्जितां। शक्तिं प्रज्वलितां घोरां हुताशनतडित्प्रभां।

तामापतन्तीं संप्रेक्ष्य मृगेन्द्रः शक्तिमुत्तमां। हुङ्कारेणैव रौद्रेण बभञ्ज भगवांस्तदा।

रराज भग्ना सा शक्तिर्मृगेन्द्रेण महीतले। सविस्फुलिङ्गा ज्वलिता महोल्केव नभश्च्युता।

नाराचपंक्तिः सिंहस्य चिप्ता रेजे विदूरतः। नीलोत्पलपलाशानां मालेवोज्ज्वलदर्शना। ११०२१

गर्ज्जित्वा स यथाकामं विक्रम्य च यथासुखं। तत्सैन्यमुत्सारितवांस्तृणाग्राणीव मारुतः।

ततोऽश्मवर्षं दैत्येन्द्रा व्यसृजन्त नभोगताः। नगमात्रैः शिलाखण्डैर्गिरिकूटैर्महाप्रभैः।

तदश्मवर्षं सिंहस्य गात्रे निपतितं महत्। दिशो दश प्रकीर्णं हि खद्योतप्रकरो यथा।

तमश्मौघैर्दितिसुतास्तदा सिंहमरिन्दमं। प्राच्छादयन् यथा मेघा धाराभीरिव पर्व्वतं।

न च तच्चालयामासुर्दैत्यौघा देवमास्थितं। भीमवेगाचलश्रेष्ठं समुद्रा इव मन्दरं। ११०२६

ततोऽश्मवर्षे विहते जलवर्षमनन्तरं। धाराभिरक्षमात्राभिः प्रादुरासीत् समन्ततः।

नभसः प्रच्युता धारास्तिग्मवेगाः सहस्रशः। आवृण्वन् सर्व्वतो व्योम दिशश्चोपदिशस्तथा।

धाराणाञ्च निपातेन वायोर्विस्फूर्ज्जितेन च। वर्द्धता चैव वर्षेण न प्राज्ञायत किञ्चन।

धारा दिवि च संयुक्ता वसुधायाञ्च सर्व्वशः। न स्पृशन्ति स्म तं तत्र निपतन्त्योऽनिशं भुवि।

बाह्यतो वृष्टिवर्षं नोपरिष्टात्तु तोयदाः। मृगेन्द्ररूपिणस्तस्य स्थितस्य युधि मायया। ११०३१

हतेऽश्मवर्षे तुमुले जलवर्षे च शोषिते। सोऽसृजद्दानवो मायामग्निवायुसमीरितां।

नभसः प्रच्युतश्चैव तिग्मवेगः समन्ततः। ज्वालामाली महारौद्रो दीप्ततेजा हुताशनः।

स सृष्टः पावकस्तेन दैत्येन्द्रेण महात्मना। न शशाक महातेजा दग्धुमप्रतिमौजसं।

तस्मिन्नस्तोयदैः सार्द्धं सहस्राक्षो महाद्युतिः । महता तोयवर्षेण शमयामास पावकं ।
तस्यां प्रतिहतायान्तु मायायां युधि दानवाः । ससृजुर्घोरसङ्काशं तमस्तीव्रं समन्ततः । ११९८०
तमसा संवृते लोके दैत्येष्वात्तायुधेषु वै । स्वतेजसा परिवृतो दिवाकर इवाबभौ ।
त्रिशिखां भ्रुकुटिञ्चास्य ददृशुर्दानवा रणे । ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे पञ्चविंशदधिकद्विशततोऽध्यायः ॥ २२५ ॥
॥ वैशम्पायन उवाच ॥ ततः सर्व्वासु मायासु हतासु दितिनन्दनाः । हिरण्यकशिपुं दैत्या विषण्णाः शरणं गताः ।
ततः प्रज्वलितः क्रोधात् प्रदहन्निव चक्षुषा । हिरण्यकशिपुर्दैत्यश्चालयामास मेदिनीं ।
ततः प्रक्षुभिताः सर्व्वे सागराः सलिलाकराः । चलिता गिरयः सर्व्वे काननानि च सर्व्वशः । ११९८५
तस्मिन् क्रुद्धे तु दैत्येन्द्रे तमोभूतमभूज्जगत् । तमसा समवच्छन्नं न प्राज्ञायत किञ्चन ।
आवहः प्रवहश्चैव विवहश्च समीरणः । परावहः संवहश्च उद्वहश्च महाबलः ।
तथा परिवहः श्रीमानुत्पातभयशंसिनः । इत्येते क्षुभिताः सप्त मारुता गगनेचराः ।
ये ग्रहाः सर्व्वलोकस्य क्षये प्रादुर्भवन्ति वै । ते ग्रहा गगने हृष्टा व्यचरन्त यथासुखं ।
अयोगतश्चाप्यचरद्योगं दिवि निशाकरः । सग्रहं सहनक्षत्रं प्रजज्वाल नभो निशि । ११९९०
विवर्णतश्च भगवान् गतो दिवि दिवाकरः । कृष्णः कबन्धश्च महान् लक्ष्यते स्म नभस्तले ।
अमुञ्चच्चार्चिषा सूर्य्यो धूमवर्त्तिं महाभयां । गगनस्थश्च भगवान् सततं परिविश्यते ।
सप्त धूमनिभा घोराः सूर्य्या दिवि समुत्थिताः । सोमस्य गगनस्थस्य ग्रहास्तिष्ठन्ति शृङ्गगाः ।
वामे च दक्षिणे चैव स्थितौ शुक्रबृहस्पती । शनैश्चरो लोहिताङ्गो लोहितार्कसमद्युतिः ।
समं समभिरोहन्ति दुर्गाणि गगनेचराः । शृङ्गाणि कनकैर्घोरा युगान्तावर्त्तका ग्रहाः । ११९९५
चन्द्रमाश्च सनक्षत्रो ग्रहैः सप्तभिरावृतः । चराचरविनाशाय रोहिणीं नाभ्यवर्त्तत ।
गृहीतो राहुणा सूर्य्य उल्काभिरभिहन्यते । उल्काः प्रज्वलिताश्चन्द्रे प्रचेलुर्घोरदर्शनाः ।
देवानामपि यो देवः सोऽप्यवर्षत शोणितं । अपतद्गगनादुल्का विद्युद्रूपाशनिस्वना ।
अकाले च द्रुमाः सर्व्वे पुष्प्यन्ति च फलन्ति च । लताश्च सफलाः सर्व्वा या आहुर्दैत्यनाशनं ।
फले फलान्यजायन्त पुष्पे पुष्पं तथैव च । उन्मीलन्ति निमीलन्ति हसन्ति च रुदन्ति च । १२०००
विक्रोशन्ति च गम्भीरं धूमायन्ते ज्वलन्ति च । प्रतिमाः सर्व्वदेवानां कथयन्त्यो युगक्षयं ।
आरण्यैः सह संसृष्टा ग्राम्याश्च मृगपक्षिणः । शृगुर्भैरवं तत्र मृगेन्द्रे समुपस्थिते ।
नद्यश्च प्रतिलोमं वै वहन्ति कलुषोदकाः । न प्रकाशन्ति च दिशो रक्तरेणुसमाकुलाः ।
वानस्पत्या न पूज्यन्ते पूजनार्हाः कथञ्चन । वायुवेगेन हन्यन्ते भज्यन्ते प्रपतन्ति च ।
यदा च सर्व्वभूतानां छाया न परिवर्त्तते । अपराह्णगते सूर्य्ये लोकानां भयकारके । १२००५
तदा हिरण्यकशिपोर्दैत्यस्योपरि वेश्मनः । भाण्डागारायुधागारे निविष्टमभवन्मधु ।
तथैव चायुधागारे धूमराशिरदृश्यत । स तान्दृष्ट्वा महोत्पातान् हिरण्यकशिपुस्तदा ।

पुरो स्थितं तदा शुक्रं वचनञ्चेदमब्रवीत् । किमर्थं भगवन्नेते महोत्पाताः समुत्थिताः ।
श्रोतुमिच्छामि कार्त्स्न्येन परं कौतूहलं हि मे ।
॥ शुक्र उवाच ॥ शृणु राजन्नवहितो वदतो मे महासुर । यदर्थमिते दृश्यन्ते महोत्पाता महाभयाः । ११८१०
यद्येते सम्प्रदृश्यन्ते राज्ञो राष्ट्रे महासुर । देशो वा म्रियते तस्य राजा वा बधमृच्छति ।
तत्र बुद्ध्या समीचस्व यथा सर्व्वं ग्रहीष्यसि । महद्भयं हि नचिराद्भवितेति न संशयः ।
एतावदुक्त्वा शुक्रस्तु हिरण्यकशिपुं तदा । स्वस्तीत्युक्त्वा च दैत्येन्द्रं जगाम स्वं निवेशनं ।
तस्मिन् गते तु दैत्येन्द्रो ध्यात्वा सुचिरं तदा । आसाञ्चक्रे सुदीनात्मा ब्रह्मवाक्यमनुस्मरन् ।
असुराणां विनाशाय सुराणां विजयाय च । दृश्यन्ते विविधोत्पाता घोरा घोरनिदर्शनाः । ११८१५
एते चान्ये च बहवो घोरा ह्युत्पातसंभवाः । दैत्येन्द्रस्य विनाशाय दृश्यन्ते कालनिर्म्मिताः ।
ततो हिरण्यकशिपुर्गदामादाय सत्वरं । अभ्यद्रवत वेगेन धरणीमनुकम्पयन् ।
हिरण्यकशिपुर्दैत्यः पदा संस्पृष्टवान्महीं । सन्दष्टोष्ठपुटः क्रोधाद्वाराह इव पूर्व्वजः ।
मेदिन्यां कम्प्यमानायां दैत्येन्द्रेण महात्मना । महीधरेभ्यो नागेन्द्रा निष्पेतुर्भयविक्लवाः ।
विषज्वालाकुलैर्व्वक्त्रैर्विमुञ्चन्तो हुताशनं । चतुःशीर्षाः पञ्चशीर्षाः सप्तशीर्षाश्च पन्नगाः । ११८२०
वासुकिस्तक्षकश्चैव कर्क्कोटकधनञ्जयौ । एलापत्रः कालियश्च महापद्मश्च वीर्य्यवान् ।
सहस्रशीर्षो नागो हेमतालध्वजः प्रभुः । शेषोऽनन्तो महीपालो दुष्प्रकम्प्यः प्रकम्पितः ।
दीप्तान्यन्तर्जलस्थानि शयिवीधरणानि वै । क्रुद्धेन तत्र दैत्येन कम्पितानि समन्ततः ।
पातालतलवासिन्यो नागतेजोधराः शिवाः । आपश्च सहसा क्षुब्धा दुष्प्रकम्पतमाः शुभाः ।
नदी भागीरथी चैव सरयूः कौशिकी तथा । यमुना चैव कावेरी कृष्णवेणा तथैव च । ११८२५
तुङ्गवेणा महाभागा नदी गोदावरी तथा । चर्म्मण्वती च सिन्धुश्च तथा नदनदीपतिः ।
मेकलप्रभवश्चैव शोणो मणिनिभोदकः । सुस्रोता नर्म्मदा चैव तथा वेत्रवती नदी ।
गोमती गोकुलाकीर्णा तथा पूर्व्वा सरस्वती । मही कालमही चैव तमसा पुष्पवाहिनी ।
सीता चेक्षुमती चैव देविका च महानदी । जाम्बूनदो रत्नचितः सर्व्वरत्नोपशोभितः ।
सुवर्णकुड्यकश्चैव सुवर्णाकरमण्डितः । महानदश्च लौहित्यः शैलकाननभूषितः । ११८३०
पत्तनं कौशिकाराणां त्रिशिरा रजताकराः । मगधाश्च महाग्रामा पौण्ड्रा वङ्गास्तथैव च ।
सुह्माः पल्ला विदेहाश्च मालवाः काशिकोसलाः । भवनं वैनतेयस्य सुपर्णस्य च कल्पितं ।
कैलासशिखराकारं यत्कृतं विश्वकर्म्मणा । रक्ततोयो भीमवेगो लौहित्यो नाम सागरः ।
शुभ्रः पाण्डुरमेघाभः क्षीरोदश्चैव सागरः । उदयश्चैव शैलेन्द्र उच्छ्रितः शतयोजनं ।
सुवर्णवेदिकः श्रीमान्मेघपङ्क्तिनिषेवितः । भ्राजमानोऽर्कसदृशैर्जातरूपमयैर्द्रुमैः । ११८३५
शालैस्तालैस्तमालैश्च कर्णिकारैः सुपुष्पितैः । अयोमुखश्च विपुलः पर्व्वतो धातुमण्डितः ।
तमालवनगन्धश्च पर्व्वतो मलयः शुभः । सुराष्ट्राश्चैव वाह्लीका महाभीरास्तथैव च ।

भोजाः पाण्ड्याश्च अङ्गाश्च कलिङ्गास्ताम्रलिप्तकाः। तथैव चौड्राः पौण्ड्राश्च वामचूलाः सकेरलाः।
क्षोभितास्तेन दैत्येन सदेवाः साप्सरोगणाः। अगस्त्यभवनञ्चैव यदगस्त्यकृतं पुरा।
सिद्धचारणसंघैश्च सेवितं सुमनोरमं। विचित्रनानाविहगं सुपुष्पितलताद्रुमं। १२८४०
जातरूपमयैः शृङ्गैरप्सरोगणसेवितं। गिरिः पुष्पितकश्चैव लक्ष्मीवान् प्रियदर्शनः।
उत्थितः सागरं भित्त्वा वयस्यश्चन्द्रसूर्य्ययोः। रराज सुमहाशृङ्गैर्गगनं विलिखन्निव।
चन्द्रसूर्य्यांशुसंकाशैः सागराम्बुसमावृतः। विद्युत्वान् पर्व्वतः श्रीमानायतः शतयोजनं।
विद्युतां यत्र सम्पाता निपात्यन्ते नगोत्तमे। ऋषभः पर्व्वतश्चैव श्रीमान् वृषभसंस्थितः।
कुञ्जरः पर्व्वतश्चैव यत्रागस्त्यगृहं शुभं। विशालरथ्या दुर्द्धर्षा सर्पाणामालया पुरी। १२८४५
तया भोगवती चापि दैत्येन्द्रेण प्रकम्पिता। महामेघगिरिश्चैव पारियात्रश्च पर्व्वतः।
चक्रवांश्च गिरिश्रेष्ठो वराहश्चैव पर्व्वतः। प्राग्ज्योतिषपुरश्चैव जातरूपमयं शुभं।
यस्मिन्वसति दुष्टात्मा नरको नाम दानवः। मेघश्च पर्व्वतश्रेष्ठो मेघगम्भीरनिस्वनः।
यत्र षष्टिः सहस्राणि पर्व्वतानां विशाम्पते। तरुणादित्यसंकाशो मेरुश्चैव महागिरिः।
देवावासः शुभः पुण्यो गिरिराजो हिरण्मयः। हेमशृङ्गो महाशैलस्तथा मेघसखो गिरिः। १२८५०
कैलासश्चापि शैलेन्द्रो दानवेन्द्रेण कम्पितः। यक्षराक्षसगन्धर्व्वैर्नित्यं सेवितकन्दरः।
श्रीमान्मनोहरश्चैव नित्यं पुष्पितपादपः। हेमपुष्करसञ्छन्नं तेन वैखानसं सरः।
कम्पितं मानसञ्चैव राजहंसनिषेवितं। त्रिशृङ्गः पर्व्वतश्चैव कुमारी च सरिद्वरा।
तुषारचयसंकाशो मन्दरश्चैव पर्व्वतः। उशीरवीजश्च गिरी रुद्रोपस्थस्तथाऽद्रिराट्।
प्रजापतेश्च निलयस्तथा पुष्करपर्व्वतः। देवावृतपर्व्वतश्चैव तथा वै वालुको गिरिः। १२८५५
क्रौञ्चः सप्तर्षिशैलश्च धूमवर्णश्च पर्व्वतः। एते चान्ये च गिरयो देशा जनपदास्तथा।
नद्यश्च सागराः सर्व्वे दानवेन्द्रेण कम्पिताः। कपिलश्च महीपुत्रो व्याघ्रवांश्चैव कम्पितः।
खेचराश्च निशापुत्राः पातालतलवासिनः। गणस्तथाऽपरो रौद्रो मेघनामाऽङ्कुशायुधः।
ऊर्द्ध्वगो भीमवेगश्च सर्व्व एवाभिकम्पिताः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे षट्त्रिंशदधिकद्विशततोऽध्यायः ॥ २३६ ॥

॥ वैशम्पायन उवाच ॥ ततादित्याश्च साध्याश्च विश्वे च वसवस्तथा। रुद्रा देवा महात्मानो मरुतश्च महाबलाः। १२८६०
आगम्य ते मृगेन्द्रस्य सकाशं सूर्य्यवर्चसः। ऊचुः संत्रस्तमनसो देवा लोकत्रयार्द्दिताः।
जहि देव दितेः पुत्रं दानवं लोकनाशनं। दुर्वृत्तमसदाचारं सह सर्व्वैर्महासुरैः।
त्वं ह्येषामन्तको नान्यो दैत्यानां दैत्यनाशन। तस्मात्त्वं हितार्थाय लोकानां स्वस्ति वै कुरु।
त्वं गुरुः सर्व्वलोकानां त्वमिन्द्रस्त्वं पितामहः। ऋते त्वदन्यच्छरणं न भूतं न भविष्यति।
तच्छ्रुत्वा वचनं देवो देवानामादिसम्भवः। ननाद सुमहानादमतिगम्भीरनिस्वनः। १२८६५
पाटितान्यसुरेन्द्राणां मृगेन्द्रेण महात्मना। सिंहनादेन महता हृदयानि मनांसि च।

गणः क्रोधवशो नाम कालकेयस्तथाऽपरः । वेगश्च वैनतेयश्च वैह्निकेयश्च वीर्य्यवान् ।
संह्रादीयो महानादी विदेषश्च तथा मणः । कपिलश्च महोपुत्तो व्याघ्राक्षः क्षितिकम्पनः ।
खेचराश्च निशापुत्राः पातालतलवासिनः । गणस्तथाऽपरो रौद्रो मेघनादोऽङ्कुशायुधः ।
ऊर्द्ध्वगो भीमवेगश्च भीमकर्म्माऽर्कलोचनः । वज्री शूली करालश्च हिरण्यकशिपुस्ततः । ११८७०
जीमूतघनसंकाशो जीमूतघनवेगवान् । जीमूतघननिर्घोषो जीमूतसदृशद्युतिः ।
देवारिर्दितिजो दृप्तो नृसिंहं समुपाद्रवत् । समुत्पत्य ततस्तीक्ष्णैर्मृगेन्द्रेण महानखैः ।
तदोङ्कारसहायेन विदार्य्य निहतो युधि ।
मही च लोकश्च शशी नभश्च ग्रहाश्च सूर्य्यश्च दिशश्च सर्व्वाः । नद्यश्च शैलाश्च महार्णवाश्च गताः प्रसादं दितिपुत्त्रनाशात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे हिरण्यकशिपुवधे सप्तत्रिंशदधिकद्विशतोऽध्यायः ॥ २३७ ॥
॥ वैशम्पायन उवाच ॥ ततः प्रमुदिता देवा ऋषयश्च तपोधनाः । तुष्टुवुर्विविधैस्तोत्रैरादिदेवं सनातनं । ११८७५
॥ देवा ऊचुः ॥ यत्त्वया विहितं देव नारसिंहमिदं वपुः । एतदेवार्च्चयिष्यन्ति परावरविदो जनाः ।
मृगेन्द्रत्वञ्च लोकेषु सर्व्वसत्त्वेषु वा विभो । गास्यन्ति च त्वां मुनयो मृगेन्द्र इति नित्यशः ।
त्वत्प्रसादात् स्वकं स्थानं प्रतिपन्नाः स्म वै विभो । इत्युक्तवत्सु देवेषु नृसिंहस्य महात्मनः ।
ब्रह्मा च परमप्रीतो विष्णोः स्तोत्रमुदैरयत् ।
॥ ब्रह्मोवाच ॥ भवानक्षरमव्यक्तमचिन्त्यं गुह्यमुत्तमं । कूटस्थमकृतं कर्त्तृ सनातनमनामयं । ११८८०
सांख्ये योगे च या बुद्धिस्तत्त्वार्थपरिनिष्ठिता । तां भवान् वेद विद्यात्मा पुरुषः शाश्वतो ध्रुवः ।
व्यक्ताव्यक्तश्च भगवांस्त्वत्तः सर्व्वमिदं जगत् । भवानेव वयं देवा भवानात्मा भवान् प्रभुः ।
चतुर्विभक्तमूर्त्तिस्त्वं सर्व्वलोकगुरुर्विभुः । चतुर्युगसहस्रेशः सर्व्वलोकान्तकान्तकः ।
चतुर्व्वेदश्चतुर्होत्रश्चतुरात्मा सनातनः । प्रतिष्ठा सर्व्वलोकानामनन्तबलपौरुषः ।
कपिलप्रभृतीनाञ्च त्वं यतीनां परा गतिः । अनादिमध्यनिधनः सर्व्वात्मा पुरुषोत्तमः । ११८८५
स्रष्टा त्वं त्वञ्च संहर्त्ता त्वमेको लोकभावनः । भवान् ब्रह्मा च रुद्रश्च महेन्द्रो वरुणो यमः ।
भवान् कर्त्ता विकर्त्ता च लोकानां प्रभवोऽव्ययः ।
पराञ्च सिद्धिं परमञ्च देवं परञ्च मन्त्रं परमं तपश्च । परञ्च धर्म्मं परमं यशश्च त्वामाहुरग्र्यं पुरुषं पुराणं ।
परञ्च सत्यं परमं हविश्च परं पवित्रं परमञ्च मार्गं । परञ्च यज्ञं परमञ्च होत्रं त्वामाहुरग्र्यं पुरुषं पुराणं ।
परं शरीरं परमञ्च धाम परञ्च योगं परमाञ्च वाणीं । परं रहस्यं परमां गतिञ्च त्वामाहुरग्र्यं पुरुषं पुराणं । ११८९०
परं परस्यापि परं पदं यत् परं परस्यापि परञ्च देवं । परं परस्यापि परं प्रभुञ्च त्वामाहुरग्र्यं पुरुषं पुराणं ।
परं परस्यापि परं प्रधानं परं परस्यापि परञ्च तत्त्वं । परं परस्यापि परञ्च धाम त्वामाहुरग्र्यं पुरुषं पुराणं ।
परं परस्यापि परं यशो यत् परं परस्यापि परं परं यत् । परं परस्यापि परं पवित्रं त्वामाहुरग्र्यं पुरुषं पुराणं ।
परं परस्यापि परं पुराणं परञ्च गुह्यं परमञ्च सत्त्वं । परेण योगेन परं सुगुप्तं त्वामाहुरग्र्यं पुरुषं पुराणं ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु भगवान् सर्व्वलोकपितामहः । स्तुत्वा नारायणं देवं ब्रह्मलोकं गतः प्रभुः । ११८९५

ततो नदत्सु तूर्य्येषु नृत्यन्तीष्वप्सरःसु च । क्षीरोदस्योत्तरं कूलं जगाम हरिरीश्वरः ।
नारसिंहं वपुस्त्यक्त्वा स्थापयित्वा च तद्वपुः । पौराणं रूपमास्थाय प्रययौ गरुडध्वजः ।
अष्टचक्रेण यानेन भूतयुक्तेन भास्वता । अव्यक्तप्रकृतिर्देवः स्वस्थानमगमत् प्रभुः ।
एवं महात्मना तेन नृसिंहवपुषा तदा । देवारिर्निहतो राजन् हिरण्यकशिपु पुरा ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे वृष्णुहोवे अष्टत्रिंशदधिकद्विशततोऽध्यायः ॥२३८॥
॥ वैशम्पायन उवाच ॥ नारसिंहो मया प्रोक्तो भूयोऽथ वामनोऽपरः । यत्र वामनमास्थाय रूपं रूपवतांवरः । ११९००
बलेर्ब्बलवतो यज्ञे विष्णुना प्रभविष्णुना । विक्रमैस्त्रिभिराक्रम्य त्रैलोक्यमखिलं हृतं ।
समुद्ररसना चोर्व्वी नानानगविभूषिता । हृत्वा दत्ता सुरेन्द्राय शक्राय प्रभविष्णुना ।
॥ जनमेजय उवाच ॥ अत्र मे संशयो ब्रह्मन्नत्र मे विस्मयो महान् । कथं नारायणो देवो वामनत्वमुपागतः ।
यः पुराणे पुराणात्मा भूत्वा नारायणो विभुः । पद्मनाभो महाबाहुर्लोकानां प्रकृतिर्ध्रुवः ।
अनादिमध्यनिधनस्त्रैलोक्यादिः सनातनः । देवदेवः सुराध्यक्षः कृष्णो लोकनमस्कृतः । ११९०५
हव्यकव्यवहः श्रीमान् हव्यकव्यभुगव्ययः । अदित्या देवमातुस्तु कथं गर्भेऽभवत् प्रभुः ।
स्रष्टा यो वासवस्यापि स कथं वासवानुजः । प्रसूतो दिवि देवेशो विष्णुत्वं प्राप्तवान् कथं ।
एतदाचक्ष्व मे ब्रह्मन् प्रादुर्भावं महात्मनः ।
॥ वैशम्पायन उवाच ॥ शृणु राजन् कथां दिव्यामर्च्चितामृषिपुङ्गवैः । पुराणैः कविभिः प्रोक्तां ब्रह्मोक्तां ब्राह्मणेरितां ।
मारीचस्य सुरेशस्य कश्यपस्य प्रजापतेः । अदितिर्दितिर्द्वे भार्य्ये भगिन्यौ जनमेजय । ११९१०
अदित्यां जज्ञिरे देवाः कश्यपस्य महात्मनः । धाताऽर्य्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्ज्जन्यो दशमः स्मृतः । ततस्त्वेकादशस्त्वष्टा द्वादशो विष्णुरुच्यते ।
दित्यां प्रसूतो बलवान् हिरण्यकशिपुः प्रभुः । तस्यानुजस्तु दैत्येन्द्रो हिरण्याक्षो महाबलः ।
हिरण्यकशिपोः पुत्राः पञ्च घोरपराक्रमाः । प्रह्लादह्लादौ संह्लादो अनोऽनुह्राद एव च ।
विरोचनस्तु प्राह्लादिस्तस्य पुत्रो बलिः स्मृतः । पुत्रपौत्रं बलवतां तेषामक्षयमव्ययं । ११९१५
तेजस्विनां सुरारीणां दैत्येन्द्राणां महात्मनां । गणाः सुबहवो राजन् देशे देशे सहस्रशः ।
ते दृष्ट्वा नरसिंहेन हिरण्यकशिपुं हतं । दैत्या देववधार्थाय बलिमिन्द्रं प्रचक्रिरे ।
दृष्ट्वा धर्म्मपरं नित्यं सत्यवाक्यं जितेन्द्रियं । शौर्य्याध्ययनसम्पन्नं सर्व्वशास्त्रविशारदं ।
परावरगृहीतार्थं तत्त्वदर्शिनमव्ययं । तेजस्विनं कृतास्त्रञ्च हिरण्यकशिपुं यथा ।
अभिषेकेण दिव्येन बलिं वैरोचनिं प्रभुं । दैत्याधिपत्ये दितिजास्तदा सर्व्वेऽभ्यपूजयन् । ११९२०
अभिषिक्तस्तु दैत्यैस्तैर्बलिर्ब्बलवतां वरः । प्रजापा चैव तुष्टेन हिरण्यकशिपोः पदे ।
अभिषिक्तोऽसुरैः सार्द्धं बलिर्वैरोचनिस्तदा । काञ्चनैः कलसैः स्फीतैः सर्व्वतीर्थाम्बुसम्भृतैः ।
जयशब्दं ततश्चक्रुरभिषिक्तस्य दानवाः । बलेरतुलवीर्य्यस्य सिंहासनगतस्य च ।
इतीन्द्रं दानवाः सर्व्वे बलिं बलवतांवरं । ततो विज्ञापयामासुः शिरोभिः पतिताः क्षितौ ।

॥ दैत्या ऊचुः ॥ विदितं तव दैत्येन्द्र हिरण्यकशिपोर्यथा। त्रैलोक्यमासीदखिलं सह स्थावरजङ्गमं। १२८१४
पितामहस्तु ते हत्वा सुरैः सुरनिसूदन। हृतं तदेव त्रैलोक्यं शक्रश्चैवाभिषेचितः।
तत्त्वं पैतामहं राज्यं प्रत्याहर्त्तुमिहार्हसि। अस्माभिः सहितो नाथ त्रैलोक्यमिदमव्ययं।
प्रत्यानयस्व भद्रं ते राज्यं पैतामहं विभो।
असुरगणसहस्रसंवृतस्त्वं जय दिवि देवपतिं सहानुगं तं। अमितबलपराक्रमोऽसि राजन्नतिशयसे स्वगुणैः पितामहं त्वं।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने बलेरभिषेके ऊनचत्वारिंशदधिकद्विशततोऽध्यायः॥ २३८॥
॥ वैशम्पायन उवाच ॥ निशम्य तेषां वचनं महामतिर्बलिस्तदा प्रीतमना महाबलः। आज्ञापयामास स दैत्यकोटीस्त्रिलोक्य
अद्यैव जयेम सर्व्वं। १२८२०
तस्य तद्वचनं श्रुत्वा बलेर्वैरोचनेस्तदा। उद्योगं परमञ्चक्रुर्दानवा युद्धदुर्म्मदाः।
महापार्श्वो निकुम्भश्च पूर्णकुम्भश्च वीर्य्यवान्। काञ्चनाक्षः कपिस्कन्धो व्याघ्राक्षः चितिकम्पनः।
शितकेशोर्द्धवक्त्रश्च वज्रनाभः शिखी जटी। सहस्रबाहुर्विकचो मीनाक्षः प्रियदर्शनः।
एकाक्ष एकपान्मुण्डो विद्युदक्षश्चतुर्भुजः। गजोदरो गजशिरा गजस्कन्धो गजेक्षणः।
अष्टदंष्ट्रश्चतुर्दंष्ट्रो मेघनादो जलप्रभः। करालो व्यालजिह्वश्च शताङ्गः शतलोचनः। १२८२५
सहस्रपात् कृष्णमुखः कृष्णश्चैव महासुरः। रणोत्कटो दानपतिः शैलकम्पो कुलाकुलः।
समुद्रो रभसश्चण्डो धूम्रश्चैव प्रियङ्करः। गोकर्णो गोखुरो रौद्रो गोदन्तः स्वस्तिको ध्रुवः।
सोमपो सोमभक्षश्च वेगवान् केतुमान् शिबिः। पङ्कदिग्धशरीरश्च दृढत्कीर्त्तिर्महोदरः।
समप्रभो विकुम्भाण्डो विरूपाक्षो हराहरौ। श्वेतशीर्षश्चन्द्रहनुश्चन्द्रहा चन्द्रतापनः।
विवरो दीर्घकण्ठश्च मरुपो मारुताशनः। कालकक्षो महाक्रोधः शलभः कुलभः क्रथः। १२८३०
समुद्रमथनो नादो विदर्भश्च महाबलः। प्रलम्बो नरको वाली खसमः काललोचनः।
वरिष्ठश्च गविष्ठश्च भूतलोन्मथनो विभुः। सुप्रसादः किरीटी च सुग्रीवश्च महासुरः।
सुबाहुः खड्गबाहुश्च वरुणः कलशोदरः। सोमपो देवयाजी च प्रवरो वीरमर्द्दनः।
ऊर्द्ध्वपुण्ड्रकेशश्च कुम्भनेत्रः शशिध्वजः। यथास्मृतिमया प्रोक्ता मारीचेः कीर्त्तिवर्द्धनाः।
एते चान्ये च बहवो नानाभूषणभूषिताः। रथैर्घ्वैर्गजैश्चाश्वैर्युद्धाय दंशिताः। १२८३५
दिव्यमाल्याम्बरधरा दिव्यस्रगनुलेपनाः। दिव्यैश्च कवचैर्गुप्ता दिव्यैश्चोच्छ्रितैर्ध्वजैः।
दिव्याम्बरधरा दैत्या गर्जमाना इवाम्बुदाः। दृढद्भिः स्यन्दनाघोषैर्नादयन्तो वसुन्धरां।
महाबला दिव्यबलास्त्रधारिणो भुजङ्गभोगप्रतिमैर्महाभुजैः। सुदुर्जया दैत्यवराः सुरारयो दितिप्रिया लोहितलोहि
तेक्षणाः।
ते अम्बरकेञ्जलनेन्दुवीर्य्या महेन्द्रवज्राशनितुल्यवेगाः। विवृत्तदंष्ट्रा हरिधूम्रकेशा विनर्द्दमानाः शरदीव मेघाः।
सहस्रबाहुर्योऽस्तु बलेः पुत्रो महाबलः। रणातिरथकोव्याऽसौ मंत्रज्ञात स बोर्य्यवान्। १२८४०
सर्व्वे मायाधराः शूराः सर्व्वे दिव्यास्त्रयोधिनः। सर्व्वे बलमदोत्सिक्ताः सर्व्वे समरलालसाः।

सर्व्वे काञ्चनशैलाभा, सर्व्वे कौशेयवाससः । किरीटोष्णीषमुकुटा दिव्यभूषणभूषिताः ।
हिरण्यकवचा सर्व्वे हिरण्यध्वजकेतवः । स्यन्दनस्था व्यराजन्त शारदा इव खे घनाः ।
तापनीयैर्व्वरैर्निष्कैः कालाग्निज्वलितप्रभैः । हेमपर्व्वतशृङ्गस्थाः पुष्पिता इव किंशुकाः ।
तेषां मध्यगतो बाणः प्रावृषीवोत्थितो घनः । स्थितः शक्तिगदापाणिस्त्रिनल्वप्रतिमे रथे । ११८५५
चित्राचित्राध्वजयुगे चित्रभक्तिविराजिते । गदापरिघसंपूर्णे हेमजालविभूषिते ।
अन्वीयमानो दितिजैर्वालिखिल्यैरिवांशुमान् । नानाप्रहरणैर्घोरैस्तीक्ष्णदंष्ट्रैरिवोरगैः ।
पञ्च तस्य महावीर्या दानवा युद्धदुर्म्मदाः । ररक्षू रथमव्यग्रा व्यादितास्या भयानकाः ।
सबाहुर्म्मेघनादश्च भीमवेगश्च वीर्य्यवान् । तथा गगनमूर्द्धा च वेगवान् केतुमानपि ।
कनकरजतभक्तिचित्रपार्श्वे पतगपतिप्रतिमे रथे स्थितोऽभूत् । जलदनिनदतुल्यनेमिघोषे सुरगणसैन्यवधाय दानवेन्द्रः ।११८६०
अनायुषायाः पुत्त्रस्तु बलो नाम महासुरः । वृतः शतसहस्रेण रथानां भीमवर्च्चसाम् ।
युक्तमृक्षसहस्रेण रथमारुह्य वीर्य्यवान् । नीलायसमयं घोरं वायसाङ्कं सुदुर्ज्जयं ।
नीलाम्बरधरः श्रीमान् वैदूर्य्याचलसन्निभः । महता रथवृन्देन प्रययौ दानवस्तदा ।
तत्रैकार्णवसङ्काशे सैन्यमध्ये व्यराजत । प्रभातसमये श्रीमान् समुद्रस्थ इवांशुमान् ।
स तप्तजाम्बूनदतुल्यवर्च्चसा निशाकराकारतडिद्गणारुणः । किरीटमुख्येन विभाति शोभिना यथा गिरिः शृङ्गवरेण भास्वता ।११८६५
षष्टीरथसहस्राणि नमुचेरसुरस्य वै । खरयुक्तानि सर्व्वाणि मेघतुल्यरवाणि च ।
नानाप्रहरणाः सर्व्वे सर्व्वे ते चित्रयोधिनः । महाभ्रघनसङ्काशा वेगवन्तो महाबलाः ।
रथो व्याघ्रसहस्रेण युक्तः परमवीर्य्यवान् । नमुचेरसुरेन्द्रस्य सर्व्वरत्नविभूषितः ।
शार्दूलचिह्नः शुशुभे तस्य केतुर्हिरण्मयः । रथस्थोऽसुरेशश्च दिनमध्ये रविर्यथा ।
स भीमवेगश्च महाबलश्च प्रगृह्य चापं हिमवानिव स्थितः । नीलाम्बरः काञ्चनपद्ममाली दिशागजो यद्वदुपेतकक्षः । ११८७०
किङ्किणीजालनिर्घोषं तपनीयपरिष्कृतम् । सपताकध्वजोपेतं ससन्ध्यमिव तोयदम् ।
चक्रैश्चतुर्भिः संयुक्तमष्टनल्वायतान्तरं । हेमजालाकुलं दीप्तं कालचक्रमिवोद्यतं ।
नानायुधधरं दिव्यं व्याघ्रचर्म्मपरिच्छदं । ईहामृगगणाकीर्णं चित्रभक्तिविराजितं ।
तूणीरशतसम्पूर्णं शक्तितोमरसङ्कुलं । गदामुद्गरसम्बाधमारुरोह मयो रथं ।
युक्तमृक्षसहस्रेण लम्बकेशरवर्च्चसा । राजतेनेव शैलेन शोभितं सिंहकेतुना । ११८७५
स तदा शुशुभे दैत्यो विश्वकर्म्मकृते रथे । रथरत्ने स्थितः श्रीमानुदयस्थ इवांशुमान् ।
विमलरजतबिन्दुशोभिताङ्गं मणिकनकोज्ज्वलचारुभक्तिचित्रं । अयुतशतसहस्रमूर्ज्जितानां मयमनुयाति महाहवे रथानां ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने चत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४० ॥
॥ वैशम्पायन उवाच ॥ पुलोमा तु महादैत्यस्तिमिराकारसन्निभः । अध्यरोहायसं घोरं रथं परपुरञ्जयः ।
पर्व्वतोत्करसंकाशं लोहजालान्तरान्तरं । नेमिघोषेण महता क्षुभ्यन्तमिव सागरं ।
गदापरिघनिस्त्रिंशैस्तोमरैः सपरश्वधैः । शक्तिमुद्गरसम्पूर्णं सतोयमिव तोयदं । ११८८०

रथमुष्ट्रसहस्रेण संयुक्तं वायुवेगिना । पुलोमाहञ्च युद्धाय प्रस्थितो युद्धदुर्मदः ।
षष्टीरथसहस्राणि पुलोमानं महाबलं । अन्वयुः सूर्य्यवर्णानि भ्राजमानानि तेजसा ।
खड्गध्वजेन महता तप्तकाञ्चनवर्चसा । शुशुभे रथमध्यस्थः पर्व्वतस्य इवांशुमान् ।
सुचारुचामीकरपट्टनद्धां महागदां कालनिभां महात्मा । प्रगृह्य वभ्राज स सैन्यमध्ये कार्ष्णायसो केतुरिवोच्छ्रितोऽग्रः ।
हयग्रीवस्तु बलवान् हयग्रीवैर्महासुरैः । वृतः शतसहस्रेण रथानां रथसत्तमः । ११९८५
धराधरनिभाकारं सपत्नानीकमर्द्दनं । स्यन्दनं भीममास्थाय युद्धायाभिमुखः स्थितः ।
श्वेतशैलप्रतीकाशः श्वेतकुण्डलभूषणः । शुशुभे रथमध्यस्थः श्वेतशृङ्ग इवाचलः ।
महता संप्रदीप्तेन राजता नागकेतुना । वैदूर्य्यमणिचित्रेण प्रवालाङ्कुरशोभिना ।
अमितबलपराक्रमद्युतीनां बहुरथिनामनुयातमुच्छ्रितानां । असुरगणशतानि गच्छमानं त्रिदशगणा इव वासवं प्रयान्तं ।
प्रह्लादस्तु महाप्राज्ञः सर्व्वशास्त्रविशारदः । सर्व्वमायाधरः श्रीमान् यष्टा क्रतुशतैः प्रभुः । ११९९०
समनह्यत तेजस्वी पावकार्चिःसमप्रभः । रथानीकेन महता दुर्द्दिनाम्भोदनादिना ।
शूरेणामितवीर्य्येण हेमकुण्डलधारिणा । वृतो दैत्यसहस्रेण देवैरिव पितामहः ।
स्वीर्य्योदग्रणीर्दृप्तो मत्तवारणविक्रमः । सुरसैन्यस्य सर्व्वस्य प्रतिघात इव स्थितः ।
स धैर्य्येणोदधेस्तुल्यो वपुषाऽग्निरिव ज्वलन् । तेजसा भास्कराकारः क्षमया पृथिवीसमः ।
तालध्वजेन दीप्तेन रथेनातिविराजता । यान्तं तमनुयान्ति स्म दानवाः शतसंघशः । ११९९५
हिरण्यकवचाः सर्व्वे सर्व्वे रत्नविभूषिताः । दिव्याङ्गरागाभरणाः समरेष्वनिवर्त्तिनः ।
जाम्बूनदविचित्राङ्गा वैदूर्य्यरचिताङ्गदाः । दिव्यचन्दनमध्यस्थाः खस्था इव महाग्रहाः ।
आचारवांश्चैव जितेन्द्रियश्च धर्म्मे रतः सत्यपरोऽनसूयुः । स्थितोऽग्नितोयाम्बुदवायुकल्पो रूपो यथा सर्व्वहरः कृतान्तः ।
शम्बरस्तु महामायो दैत्यानां रथयूथपः । आरुरोह रथं दिव्यं सर्व्वयुद्धविशारदः ।
लोहिताक्षो महाबाहुः प्रतप्तोत्तमकुण्डलः । जीमूतवनसंकाशो दिव्यस्रगनुलेपनः । १२०००
विद्युद्द्योतनिकाशेन मुकुटेनार्कवर्चसा । मणिरत्नविचित्रेण वैदूर्य्यान्तरशोभिना ।
तपनीयेन महता कवचेन विराजता । सन्ध्याभ्रेणेव सञ्छन्नः श्रीमानञ्जनशिलोच्चयः ।
त्रिंशच्छतसहस्राणि दैत्यानां चित्रयोधिनां । बलिनां कालकल्पानामन्वयुः शम्बरं तदा ।
युक्तं हयसहस्रेण शुक्लवर्णेन राजता । क्रौञ्चध्वजेन दीप्तेन रथेनाहवशोभिना ।
व्यासक्तवैदूर्य्यसुवर्णजालं नानाविहङ्गोज्ज्वलभक्तिचित्रं । विद्युत्प्रभं भीमरवं सुवेगं रथं समारुह्य रराज दैत्यः । १२००५
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने प्रदुर्भावे दैत्यसन्नहने एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४१॥
॥ वैशम्पायन उवाच ॥ अनुह्रादस्तु तत्रैव दैत्यः परपुरञ्जयः । हिरण्यकशिपोः पुत्रः प्रययौ युद्धलालसः
चतुश्चक्रेण यानेन विनल्वप्रतिमेन च । युक्तेनाश्वैर्महावीर्य्यैः सिंहवक्त्रैरजिह्मगैः ।
भीमगम्भीरघोषेण नेमिघोषेण वल्गुना । चालयन् वसुधां सर्व्वां सशैलवनकाननां ।
विनर्द्दमाना दैत्यास्तं समन्तात् पर्य्यवारयन् । शतं शतसहस्राणां रथानां हेममालिनां ।

परिघैर्भिन्दिपालैश्च प्रासैः पाशैः परश्वधैः । विविधायुधहस्ताश्च शूलमुद्गरपाणयः ।  १२०१०
सुवर्णजालनिर्युक्तैर्वर्म्मभिश्च समलङ्कृताः । रथैश्च कवचैश्चान्ये शोभमाना महासुराः ।
ततो विमानोच्छ्रितशैलरूपे बभौ रथे काञ्चनरत्नचित्रे । दैत्याधिपः स्वबलानुरूपः समास्थितश्चाप्रतिमेयरूपे ।
विरोचनश्च बलवान् वैश्वानरसमद्युतिः । महता रथवंशेन मन्त्राज्यकुशलः शुचिः ।
व्यूहानां विनियोगज्ञो ज्ञानविज्ञानतत्त्ववित् । बलेः पिताऽसुरवरः सुराणामिव वासवः ।
सर्व्वायुधधरोपेतं किङ्किणीजालभूषितं । युक्तं वाजिमुख्यानां सहस्रेणाशुगामिना ।  १२०१५
रथमारुह्य दैत्येन्द्रो बभौ मेरुरिवापरः । किङ्किणीजालपर्य्यन्तं गन्धर्व्वध्वजशोभितं ।
सन्ध्याभ्रसमवर्णाभिः पताकाभिरलङ्कृतं ।
प्रवालजाम्बूनदभक्तिचित्र व्याघ्राजिनमुक्ताफलशोभितञ्च । रथं समारुह्य किरीटमाली ययौ स युद्धाभिमुखोऽसुरेन्द्रः ।
विरोचनानुजश्चैव कुजम्भो नाम वीर्य्यवान् । स्यन्दनैर्बहुसाहस्रैर्विचित्राञ्चनभूषितैः ।
वृतो महबलोपेतैर्दैवारिभिररिन्दमः । प्रासपाशगदाहस्तैर्नानावर्य्युद्धकाङ्क्षिभिः ।  १२०२०
स पर्व्वतनिभाकारो भिन्नाञ्जनचयप्रभः । महता भ्राजमानेन किरीटेनार्कवर्चसा ।
सर्व्वरत्नविचित्रेण कवचेन सुसंवृतः । महता दीप्तवपुषा खर्गदार इवाऽऽत्मवान् ।
शातकौम्भेन महता तालरूपेण केतुना । रराज रथमध्यस्थो मेरुस्थ इव भास्करः ।
रथपटुरतिवीर्य्यसत्त्वयुक्तिः सुरसमराभिमुखः प्रयाति तूर्णं । असुरगणसमावृतः कुजम्भस्त्रिदशगणैरिव वृत्रहाऽमरेन्द्रः ।
असिलोमा च तत्रैव दानवः पर्व्वतायुधः । दारुणं वपुरास्थाय दारुणो दारुणाननः ।  १२०२५
रौद्रः शकटचक्राक्षो महाकायो महाबलः । कृष्णवासा महादंष्ट्रः किरीटी लोहिताननः ।
वृतो दैत्यसहस्रैर्घोरैर्गिरिपादपयोधिभिः । नानारूपधरैर्दैत्यैर्दैत्यैश्चित्रदशनभ्रुभिः ।
ते शूलहस्ता गगने चरन्त इतस्ततश्चोग्रदभीमनादाः । खं छादयन्तश्चपलैर्महास्त्रैर्यथोत्थिता प्रावृषि कालमेघाः ।
अनायुषायाः पुत्रस्तु वृत्रो नाम महासुरः । देवशत्रुर्म्महाकायस्तपस्वी निर्भितोदरः ।
दीप्तजिह्वो हरिश्मश्रुरूर्द्ध्वरोमा महाबल । नीलाङ्गो लोहितग्रीवः किरीटी लोहिताम्बरः ।  १२०३०
आजानुबाहुर्विकृत श्वेतदंष्ट्रो विभीषणः । महामायाधरो भीमो हेमकेयूरभूषणः ।
महता मणिचित्रेण कवचेन सुसंवृतः । हेममालाधरो रौद्रश्चक्रकेतुरमर्षणः ।
किङ्किणीशतसंघुष्टं तपनीयपरिष्कृतं । युक्तं हयसहस्रेण रक्तध्वजपताकिना ।
रथानीकेन महता युद्धायाभिमुखो ययौ । दिव्यं स्यन्दनमास्थाय दैत्यानां नन्दिवर्द्धनः ।
तपितकनकबिन्दुपिङ्गलाक्षो दितिवृषभोऽसुरसैन्ययुद्धनेता । विकसितकमलाभचारुवक्त्रः सितदशन शुशुभे तदा रथस्थः ।  १२०३५
एक चक्रस्तु तत्रैव सूर्य्यचक्र इवोदितः । कालचक्रोपमो रौद्रश्चक्रायुध इवोद्यत ।
सर्व्वायुधमयं दिव्यं रथमास्थाय भास्वरं । वृतो दैत्यगणैर्दृप्तैः कालायसशिलायुधैः ।
तस्याशीतिसहस्राणि रथिनां चित्रयोधिनां । आयसैः काञ्चनैश्चैव सन्नद्धा वरवर्म्मिणः ।

व्यराजन्तान्तरीक्षस्था नीला इव पयोधराः । सर्व्वे कालानलप्रख्या रुधिराचा महाबलाः ।
सन्दष्टौष्ठपुटा घोरा महाकाया महासुराः । वधाय सुरसैन्यस्य संनद्धाश्च महाबलाः । १३७४०
सर्व्वे कालानलप्रख्या वीराः समरदुर्जयाः । सागरोदरगम्भीरा नीलवस्त्रा दुरासदाः ।
नेदुर्यान्तोऽसुरवरा वेलातीता इवार्णवाः ।
ते भूरिमायाः सुविवृद्धकायाः किरीटिनः काञ्चनभूषिताङ्गाः । ययुस्तदा स्वायुधदीप्तहस्ता नभः सपक्षा इव पर्व्वतेन्द्राः ।
संदिष्टो बलिपुत्रेण त्वभ्रातां बलोऽसुरः । वधाय सुरसैन्यस्य संनद्धश्चेति वीर्य्यवान् ।
हेममाली महादंष्ट्रः स्रग्वी रुचिरकुण्डलः । रक्तमाल्याम्बरधरश्चण्डः समरदुर्ज्जयः । १३७४५
सुमहावृत्तनयनः सकिरीटो धनुर्द्धरः । प्रभिन्न इव मातङ्गः शार्दूलसमविक्रमः ।
महातालनिभश्चापं महारुचिरसायकं । विस्फारयन्महावेगं वज्रनिष्पेषनिस्वनं ।
रथेन खरयुक्तेन ध्वजेन भुजगेन च । शुशुभे स्यन्दनस्थः स सन्ध्यागत इवांशुमान् ।
रथैश्च बहुसाहस्रैर्हेमपट्टविभूषितैः । शूलमुद्गरसंकीर्णैर्तोयपूर्णैरिवाम्बुदैः ।
स दैत्येन्द्रोऽभिचक्राम युद्धकाल उपस्थिते । १३७५०
पवनसमगतिर्विशालवक्षा विकसितपङ्कजचारुगर्भगौरः । प्रवररथगतो ययौ स तूर्णं त्रिदशगणैरभिलक्षितप्रभावः ।
सिंहिकातनयश्चैव राहुर्नाम महासुरः । विकटः पर्व्वताकारः शतशीर्षः शतोदरः ।
पीतमाल्याम्बरधरो जाम्बूनदविभूषितः । स्निग्धवैदूर्य्यसङ्काशः पद्मपत्रनिभेक्षणः ।
सर्व्वकाञ्चनसंयुक्तं मणिजालपरिष्कृतं । पताकाशतसम्बाधं युक्तं परमवाजिभिः ।
आरुरोह रथं तूर्णं दैत्यः परमवीर्य्यवान् । ननाद च महाघोरं कम्पयन् वसुधातलं । १३७५५
मयेन विहितो दिव्यस्तस्य केतुर्हिरण्मयः । मयूरपक्षसङ्काशं कवचञ्चायसं महत् ।
भीमवेगरवैश्चान्यैर्रथैर्दैत्यैः सुभास्वरैः । नानाप्रहरणाकीर्णैः सेव्यमानो महाबलः ।
असुरगणपतिर्गजेन्द्रगामी गतिरभवत् सुगतिर्महासुराणां । अरिगणमथितो विभुः प्रयातो गिरिवरमस्तमिवांशुमान् सुदीप्तः ।
विप्रचित्तिस्तु तत्रैव दनोर्वंशविवर्द्धनः । कश्यपस्यात्मज श्रीमान् ब्रह्मणस्तेजसा समः ।
यष्टा क्रतुसहस्राणां वेदवित्तपसाऽन्वितः । स्वयम्भुवा दत्तवरो वरदश्च स्वयं प्रभुः । १३७६०
दंशिलश्च वशिलश्च महत्त्वश्च महाद्युते । ऐश्वर्य्यगुणसम्पन्नो ब्रह्मेव स्वयमूर्जितः ।
शार्दूलपुत्रैश्च पौत्रैश्च समनह्यन्महाबलः । सर्व्वे मायाधराः शूराः कृतास्त्रा रणदुर्ज्जयाः ।
सर्व्वे कमलगर्भाभा मेरुशृङ्गाच्छ्रयोच्छ्रिताः । सर्व्वे रजतसङ्काशाः कैलासशिखरोपमाः ।
मयेन निर्म्मितास्तेषां रथाः परमरथोत्तमाः । विरजन्तो व्यराजन्त शारदा इव तोयदाः ।
सर्व्वे श्वेतध्वजाः श्वेताः श्वेतदण्डसमुच्छ्रयाः । श्वेताम्बरधरा दैत्याः श्वेतमाल्यविभूषिताः । १३७६५
श्वेतकवचाः सर्व्वे वै श्वेतकुण्डलमण्डिताः । मुक्ताहारावृतोरस्का भान्ति नाकेश्वरा इव ।
महाभ्रनिभाकाराः शतघ्नी भीमदर्शनाः । रक्तचित्राम्बरधराश्चित्राभरणभूषिताः ।

त्रैलोक्यविजयं नाम रथमास्थाय वीर्य्यवान्। कैलासशिखराकारमष्टनल्वायतान्तरं।
युक्तं वाजिसहस्रेण सितेन शशिवर्चसा। पताकाशतसञ्छन्नं नानायुधविकल्पितं।
हंसेन्दुकुन्दप्रतिमं विशालं श्वेतातपत्रं दनुजेश्वरस्य। विभाति तस्योपरि धार्य्यमाणं श्वेताद्रिमूर्द्धनि गत. शशाङ्कः। ११०७०
केशी दानवमुख्यस्तु दीप्तताम्रविलोचनः। नीलमेघचयप्रख्यः कालः परुषविग्रहः।
महाग्रहनिभाकारः शत्रूणां लोमहर्षणः। चित्रमाल्याम्बरधरो रक्ताभरणभूषित.।
शताक्षः शतबाहुश्च हरिश्मश्रुर्महाबलः। शङ्कुकर्णो महानादो वपुषा रौद्रदर्शनः।
संयुक्तैर्दिव्यमहिषैर्घण्टाकोटिशतस्वनं। महावारिधराकारमास्थाय रथमुत्तमं।
ध्वजेनोग्रेण महता नीलकेशरवर्चसा। नानारागविचित्राभि. पताकाभिर्विभूषितं। ११०७५
द्वापञ्चाशत्सहस्राणि रथानामुग्रतेजसां। ययुस्तस्यासुरेन्द्रस्य प्रयातस्य सुरान प्रति।
भान्ति भिन्नाञ्जननिभाः प्रयातस्य महात्मन.। दंष्ट्राढ्यवृक्षवदनाः सबलाका इवाम्बुदाः।
तत्तस्य वैदूर्य्यसुवर्णचित्रं विद्युत्प्रभं भास्करसन्निकाशं। किरीटमाभात्यसुरेश्वरस्य दावाग्निदीप्तं शिखरं यथाऽद्रेः।
वृषपर्व्वाऽसुरश्चैव श्रीमान् सुरनिषूदनः। आरुरोह रथं दीप्तं मेरुशृङ्गमिवांशुमान्।
प्रतप्तजाम्बूनदचित्रकूबरं महारथं भास्वरं महार्हं। स्वलङ्कृतं राजतनेमिमण्डलं गभस्तिमच्चतडित्प्रकाशं। ११०८०
केयूरमुक्ताङ्गदनद्धबाहुः सहस्रतारेण च वर्म्मणा सः। सांग्रामिकैराभरणैश्च चित्रैर्मध्याह्नसूर्य्यप्रतिमो बभूव।
महाबलो बद्धतलाङ्गुलित्रो बलोत्कटः किंशुकलोहिताक्षः। विकृष्य चामीकरचारुचित्रं चापं स्थितो वृत्तविशालनेत्रः।
महासुरेन्द्रस्तु महासुरैर्वृतो बलिस्तदा स्यन्दनमारुरोह। वैदूर्य्यहेमोपचितं विशालं विद्युत्प्रभं षोडशनल्वमात्रं।
युक्तं सहस्रेण दितेः सुतानां गजाननानां विकृताकृतीनां। चामीकरोरश्छदभूषितानां विनर्द्दतां प्रावृडिवाम्बुदानां।
महारथं देवरथप्रकाशं सहस्रमायेन मयेन सृष्टं। ईहामृगाकीर्णितभक्तिचित्रं दिव्यं रथं वीररथानुयातं। ११०८५
सकिङ्किणीकां विमलां सुचित्रां हिरण्मयैः पद्मशतैरलङ्कृतां। अबध्नाद्दै वैजयिकीं जयाय स्रजं बलिर्हेमविचित्रपुष्पां।
आमुच्य मालां प्रभया विचित्रां बलिस्तदा भाति भुजे विशाले। रराज तैः सर्व्वसमृद्धियुक्तैर्महार्चिषा सूर्य्य इवाम्बरस्थः।
स्रजं तदा बध्यति चारुशुभ्रां सर्व्वासुराणामिव सारभूतां। वैरोचनिः सर्व्वश्रियाऽभिजुष्टो विभ्राजतेऽसौ शरदीव चन्द्रः।
मेरोस्तटैः काञ्चनरागरक्तैरादित्यसंसक्तमिवाभ्रजालं, प्रासाश्च पाशाश्च हिरण्यनद्धाश्चर्म्माणि खड्गाश्च परश्वधाश्च।
धनूंषि चेन्द्रायुधसप्रभाणि दिव्या गदा वज्रमुखाश्च शतघ्न.। दिव्याश्च शूला विशिखाश्च दीप्ता नाराचपूर्णा विविधाश्च
तूणाः। ११०९०
धृता रथे दैत्यवृषस्य तस्य चक्राशिरे प्रज्वलिता यथोल्काः। तच्चामरापीडधराः सुदंष्ट्राः सुवर्णमुक्तामणिहेमचित्राः।
वीजन्ति बालव्यजनैर्विनीता. स्वलङ्कृताः स्यन्दनवेदिकास्थाः। अय.शिरा. वाजिशिरा दुरापः शिविर्म्मतङ्गो विकचः
शताक्ष.।
जयो निकुम्भः कुपथश्च दानवो ररक्षुरेते दश दानवाधिपं। पुरःसराश्चैव सहस्रशोऽसुराः पदातयो दानवराजरक्षिणः।
शतघ्निचक्राशनिशक्तिपाणयः संजग्मुरेतेऽनिलतुल्यवेगिनः। घण्टा. सशङ्खाः स्वपनीयनद्धाः साडम्बरा झर्झरडिण्डिमाश्च।
महारवा दुन्दुभयश्च नेदुः प्रयाणकाले दितिजेश्वरस्य। तस्योच्छ्रित काञ्चनवेदिकाढ्यो हिरण्मयो दिव्यमहापताक। ११०९५

महाध्वजो वै तपनीयनद्धो रराज वीरस्य यथा विवस्वान् । समुच्छ्रितं काञ्चनमातपत्रं स्रक् काञ्चनी वक्षसि चास्य भाति ।
समन्ततश्चैनमुपाचरन्ति दैत्यर्षयः प्राञ्जलयो प्रपन्नाः । पुरोहिताः शत्रुवधे समाहितास्तथैव चान्ये श्रुतशीलवृद्धाः ।
जप्यैश्च मन्त्रैश्च महौषधीभिर्महात्मनः स्वस्त्ययनं प्रचक्रुः । स तत्र वस्त्राणि शुभाश्च गा वै धान्यांश्च रत्नानि तथैव निष्कान् ।
बलिर्द्विजेभ्यः प्रयतः प्रयच्छन् विराजतेऽतीव यथा धनेशः । सहस्रमुख्यो बहुकिङ्किणीकः परार्घ्यजाम्बूनदहेमचित्रः ।
सहस्रचन्द्रोऽयुततारकश्च रथो बलेरग्निरिवाविभाति । तमास्थितो दानवसंघहोतं महाबलः कार्मुकदृक् सशाण. । १११००
उदर्त्तयिष्यत्त्रिदशेन्द्रसेनामतीव रौद्रं स बिभर्त्ति रूपं । स वेगवान् वीररथौघसंकुलः प्रयाति देवान् प्रति दैत्यसागरः ।
महानिलोद्धूततरङ्गसङ्कुलो यथाऽर्णवो लोकविनाशनाय । त्रैलोक्यविनाशकरैर्वपुर्भिस्तान्यप्रतो भान्ति बलेरथस्य ।
महाबलान्युच्छ्रितकार्मुकाणि सपर्व्वतानीव वनानि राजन् ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने दैत्यसन्नहने द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥
॥ वैशम्पायन उवाच ॥ श्रुतस्ते दैत्यसैन्यस्य विस्तरो जनमेजय । भूयस्त्रिदशसैन्यस्य शृणु विस्तरमादितः ।
सुराधिपस्तु भगवानाज्ञापयदसौ सुरान् । मरुद्गणांस्तथादित्यान् विश्वान् साध्यांश्च वासवः । १११०५
वसूनष्टौ भृशं सर्व्वान् यक्षरक्षोमहोरगान् । विद्याधरगणान् सर्व्वान् गन्धर्व्वांश्च महारथान् ।
महार्णवांश्च शैलांश्च तथा रुद्रान्महौजसः । यमवैश्रवणौ चोभौ वरुणञ्च जलाधिपं ।
ये च सिद्धा महात्मानः पितरश्च मनस्विनः । राजर्षयश्च शतशो योगसिद्धास्तथैव च ।
त्रिदशाज्ञापकः शक्र आज्ञापयति वीर्य्यवान् । भवन्तो दैत्यनाशाय संनह्यन्तामिति प्रभुः ।
शक्रस्य वचनं श्रुत्वा ततः सर्व्वे दिवौकसः । सन्नह्यन्त महात्मानः शक्रस्य समविक्रमाः । ११११०
नानाकवचिनः सर्व्वे विचित्रकरचध्वजाः । नानायुधोद्यतकरा मत्ता इव महागजाः ।
केचिदारुरुहुर्व्याघ्रान् केचिदारुरुहुर्गजान् । रथानारुरुहुः केचित् केचिदारुरुहुर्वृषान् ।
हरिश्मश्रुर्हरिनेत्रो द्विरदैरावतध्वजं । रथं हरिहयैर्युक्तां स प्रायात् समरं प्रति ।
आदित्यवर्णं विपुलं सुनाभं स्वयम्भुवा निर्म्मितमीश्वरार्थं । जालैश्च जाम्बूनदभक्तिचित्रैरलङ्कृतं काञ्चनदामभिश्च ।
सकूबरोपस्करबन्धुरेशं विद्युत्प्रभाभिः कृतमाभितार्थं । कैलासशृङ्गोपममिन्द्रयानं सुचारुचारु प्रतिचक्रचक्रं । १११११५
तारासहस्रैः खचितं ज्वलद्भिर्द्दिवाहमाल्यार्च्चितसर्व्वदेहं । समुच्छ्रितस्रग्ध्वजमप्रधाच जाज्वल्यमानं वपुषोत्तमेन ।
आस्थाय तं भासुरमाशुवेगं शचीपतिर्लोकपतिः सुरेशः । वज्रस्य भर्त्ता भुवनस्य गोप्ता ययौ महात्मा भगवान्महेन्द्रः ।
आमुच्य वर्म्मार्थं सहस्रतारं ङताशनादित्यसमप्रभावं । सूर्य्यप्रभञ्चामुमुचे किरीटं मालाञ्च जाम्बूनदवैजयन्तीं ।
लब्ध्वा हृत भास्कररश्मिदीप्तं सुतीक्ष्णघोरामलनैकधारं । महासुराणां रुधिराशभुग्रं प्रगृह्य वज्रं शतपर्व्वभीमं ।
महाशनी द्वे च महायहाभे दीप्तामसोघाञ्च स शक्तिमुग्रां । चक्रं तथैन्द्रं सुमहच्च चापं प्रगृह्य शक्रः प्रययौ रणाय । ११११२०
सहस्रदृग्भूतपतिः सनातनः सनातनानामपि यः सनातनः । खड्गञ्च देवाधिपतिर्महात्मा वैयाघ्रमादाय च चर्म्म चित्रं ।
क्षीरोदविक्षोभसमुत्थितानि पुराऽमृतादुत्तमभूषणानि । देवासुराणां श्रमनिर्म्मितानि सोमार्कनक्षत्रतडित्प्रभाणि ।
दत्तान्यदित्या मणिकुण्डलानि युद्धं प्रयातस्य सुरेश्वरस्य । तैर्भूषितो याति सरस्वचरुद्द्योतयन् वै विदिशो दिशश्च ।
हरिः प्रभुर्नैकसहस्रचित्रो विभाति युद्धाभिमुखः सुरेन्द्रः । यथा सितं शारदमभ्रवृन्दं नभस्तलं स्वचसहस्रचित्रं ।

स्तुवन्ति यान्तं विपुलैर्व्वचोभिर्ज्जयाशिषा चोर्ज्जितसत्त्ववीर्य्यं। अत्रिर्वशिष्ठो जमदग्निरौर्व्वो बृहस्पतिर्नारदपर्व्वतौ च ।१११२५
समन्वयुर्देवगणा महेन्द्रं प्रयान्तमादित्यसमप्रभावं। विश्वे च देवा मरुतश्च सर्व्वे साध्यास्तथादित्यगणाश्च सर्व्वे।
ते देवराजस्य पुरन्दरस्य हयाश्च ते मातलिसंप्रहीताः। प्रयान्ति देवेश्वरमुद्वहन्तो नभस्तलं पक्षिरिवाक्षिपन्तः।
ब्रह्मर्षयश्चैव सुरर्षयश्च राजर्षयश्चाक्षयपुण्यलोकाः। सर्व्वेऽनुजग्मुः सहसा ज्वलन्तं तेजोऽन्वितं शक्रमभिचषाहं।
प्रगृह्य शूलानि परश्वधांश्च दीप्तानि चापानि तथाऽशनीश्च। वर्म्माणि चामुच्य हिरण्मयानि प्रयान्ति सूर्य्यांशुसमप्रभाणि।
तथा कुवेरोऽश्वसहस्रयुक्तं श्रेष्ठं रथं सर्व्वसहं महार्हं। दिव्यं समारुह्य रणाय यातो धनेश्वरो दीप्तगदाग्रहस्तः। १११३०
निशाचराः पावकधूम्रकाया रक्षोवृषा रुद्रसखस्य तस्य। विशालनानायुधदीप्तहस्ता यान्त्यग्रतो वैश्रवणस्य राज्ञः।
ते लोहिताक्षाः परिपार्श्व देवं प्रजन्ति भिन्नाञ्जनचूर्णवर्णाः। यक्षोत्तमा यक्षपतिं धनेशं रक्षन्ति वै प्रासगदासिहस्ताः।
पुण्यः प्रभुः प्राणपतिर्यतात्मा वैवस्वतो धर्म्मभृतांवरिष्ठः। तडिद्गणाभं शतवाजियुक्तं रथं समारोहत सूर्य्यकल्पं।
तं लोकपालं पितरोऽनुजग्मुर्निर्णिक्तपापा ज्वलितास्तपोभिः। सर्व्वे च भूता भुवनप्रधाना नानायुधव्यग्रकराः सुभीमाः।
दण्डं महास्त्रं प्रतिगृह्य देवो लोकाङ्कुशं विग्रहनिश्चितार्थं। हिरण्मयानां कमलोत्पलानां मालां मनोज्ञामवसज्य कण्ठे।१११३५
स्थितोऽस्मिमेदामिषलोहिताङ्गः सर्व्वासुराणां निधनं विकाङ्क्षन्। तेजोमयं मुद्गरमुग्ररूपं विकर्षमाणोऽरुणधूम्रनेत्रः।
समन्वितो व्याधिगणैरनेकैर्ययौ हरिश्मश्रुरुदारसत्त्वः। महासुराणां निधनाय बुद्धिं चक्रे तथा भूतपतिः कृतान्तः।
ततस्त्रिशीर्षैर्भुजगैर्दहद्भिर्युक्तं रथं हेमचितं महात्मा। आस्थाय कुन्देन्दुनिभं जलेशो ययौ रणायासुरदर्पहन्ता।
वैदूर्य्यमुक्तामणिभूषिताङ्गस्तेजोमयः पाशगृहीतहस्तः। महासुराणां निधनाय देवः प्रयाति रूप्याङ्गदनद्धबाहुः।
अन्वीयमानो जलदेवताभिर्निषेव्यमाणो जलजैश्च सत्त्वैः। संस्तूयमानश्च महर्षिवृन्दैः संपूज्यमानश्च महाभुजङ्गैः। १११४०
कैलासशृङ्गप्रतिमोऽप्रमेयः समुद्रनाथोऽमृतपो महात्मा। महोरगैः स्वैस्तनयैश्च गुप्तो ययौ रथेनार्कसमप्रभेण।
युद्धाय तं यान्तमदीनसत्त्वं नभस्तले चन्द्रमिवातिकान्तं। पश्यन्ति भूतानि महानुभावं संहृष्टरोमाणि कृताञ्जलीनि।
धाता ऽर्य्यमा ऽंशोऽथ भगो विवस्वान् पर्ज्जन्यमित्रौ च शशी च देवः। त्वष्टा तथैवोर्ज्जितविश्वकर्म्मा पूषा च साक्षादिव देवराज।
सोरश्छदैः सध्वजकिङ्किणीकैर्वैदूर्य्यनिष्काञ्चितहेमकण्ठैः। हयोत्तमैः शक्रहयप्रकाशैर्युक्तान् यानानारुरुहुः सुरास्ते।
दिवाकराकारनिभानि केचिद्धुताशनार्चिःप्रतिमानि केचित्। निशाकरांशुप्रतिमानि केचित्तडिद्गुणोद्योतनिभानि केचित्। १११४५
नीलांशुमेघप्रतिमानि केचित् कार्ष्णायसाकारनिभानि केचित्। वर्म्माणि दृव्यानि महाप्रभाणि लब्ध्वा कृतान्युत्तमभानुमन्ति।
आमुच्य मालाश्च सुवर्णपद्माः प्रयान्ति तोयानिलतुल्यवेगाः। द्वावश्विनौ चापि महानुभावौ रूपोत्तमौ धर्म्मभृतां वरिष्ठौ।
रथं समारुह्य सुवर्णचित्रं रणं गतौ काञ्चनगौरवर्णौ। मनोः सुता वै वसवश्च सर्व्वे बलोत्कटा दैत्यवधाय देवाः।
रथांश्च नागांश्च महाप्रमाणानास्थाय जग्मुः सुशितासिहस्ताः। रुद्राश्च सर्व्वेऽरुणधूम्रकायाः श्वेतैर्वृषैर्गोपतिभिर्वहद्भिः।
महौजसः सत्त्वगुणोपपन्ना दीप्तात्मतेजोभिरभिज्वलन्तः। नानायुधव्यग्रकराः सुरास्ते लोकान् समस्तानिव निर्द्दहन्तः। १११५०
ययुः ससैन्यास्तपनीयकण्ठाः सविद्युतस्तोयधरा यथैव। विश्वे च देवास्तपसा ज्वलन्तो वीर्य्योत्तमाः सूर्य्यमरीचिवर्णाः।
ययुः ससैन्या युधि दुर्निवार्य्या बलोत्कटाः पुष्करमालिनश्च। रथैः सुयुक्तैस्तपनीयवर्णैर्वैदूर्य्यमुक्तामणिदामचित्रैः।

नानायुधाकारसमाकुलास्ते पारिप्लवैश्चैव सितातपत्रैः। तेजोमयैः काञ्चनजालचित्रैः सुनिर्म्मलैः पावकसन्निभैस्ते।
उरश्छदैः सध्वजकिङ्किणीकैर्दैत्यैश्च नाथाः सकलेनवह्निः। दिगागजेन्द्रैश्च महाबलैस्ते कैलासशृङ्गप्रतिमैर्द्विरद्भिः।
प्रजग्मुरुग्रायुधदीप्तहस्तास्तुर्युगान्ते ज्वलिता इवोल्काः। साध्याश्च देवाः सुमहाप्रभावाः स्वाधीनचक्राः प्रतिदीप्तवक्त्राः॥१११५५
ययुः सजाम्बूनदभूषिताङ्गा गङ्गौघमानैर्गगनैर्बलौघैः। विद्योतयन्तो विदिशो दिशश्च महाबलास्ते जयतां वरिष्ठाः।
वरिष्ठपृष्ठाष्टभुजाः सुदृप्ता वैश्वानरार्कप्रतिमप्रभावाः। ते मन्त्रविद्भिश्च नमस्यमानाः संपूज्यमानाश्च सुरैः सयक्षैः।
गन्धर्व्वसंघैरनुगम्यमाना वधाय तेषाममुराधिपानां। वैदूर्य्यरत्नस्फटिकाग्र्यचित्रैर्ध्वजैः सुवर्णैश्च परिष्कृतानां।
रूपं बभूवोत्कटभूषणानां दैत्येन्द्रनाशाय विभूषितानां। आत्मप्रभाभिश्च बलोत्कटाभिर्व्वर्णप्रभाभिश्च तमोनुदाभिः।
ध्वजोत्तमाभिः स्वशरीरभाभिर्महाप्रभाभिश्च महोज्ज्वलाभिः। विभान्ति ते देववराः ससाध्याः प्रभातशङ्खस्वनसिंहनादाः। १११६०
महारथस्थास्तु दिवौकसस्ते महाबलाः शत्रुबलं प्रयान्ति। महास्त्रहस्ता ययुरुग्ररूपा महासुराणां निधनाय देवाः।
तथैव सर्व्वे मरुतोऽतिवीर्य्या बलोत्कटास्ते समरं प्रतीताः। ययुर्महामेघसमानवर्णा बह्वायुधास्तोयदनादनादाः।
महेन्द्रकेतुप्रतिमा महाबला गदां प्रगृह्यासुरसूदनां युधि। रणोत्कटा लोहितचन्दनाक्ताः सुगन्धिमाल्याम्बरभूषिताङ्गाः।
ते युद्धशौण्डाः सुभुजाः सुदीप्ता वीर्य्योत्कटाः क्रोधविलोहिताक्षाः। ययुः सजाम्बूनदपद्ममाला यथेष्टनानायुधकामरूपाः।
खड्गप्रभाश्यामलितांसपीठाः पुरन्दरं वै परिवार्य्य देवाः। वैदूर्य्यचामीकरचारुचित्राण्याबध्य गात्रेषु महाप्रभाणि। १११६५
वर्म्माणि दैत्यास्त्रनिवारणानि प्रयान्ति युद्धाय सपत्नसाहाः। तैरुच्छ्रितैः काञ्चनवेदिकाढ्यैर्म्बरध्वजैर्भास्कररश्मिवर्णैः।
यथौ सुराणां पृतनोग्रतेजाः समुन्नदन्तो युधि सिंहनादान्। इत्येतदुग्रं त्रिदशेश्वरस्य सैन्यं तदासीत् सुमहाप्रभावं।
युद्धं प्रयातस्य जयावहस्य वधाय तेषामसुराधिपानां।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवसन्नहने त्रिचत्वारिंशदधिकद्विशततोऽध्यायः॥ २४३ ॥

॥ वैशम्पायन उवाच॥ ततः प्रवृत्तोऽसुरदेवविग्रहस्तदाद्भुतो वै त्रिदशासुराकुलः। वेलामतिक्रम्य युगान्तकाले महार्णवानामिव सङ्गमो महान्।
नानायुधोद्द्योतविदीपिताङ्गा महाबला व्यायतकार्म्मुकास्ते। मदोत्कटा वारणहस्तहस्ताः सुदुर्ज्जयास्तोयदनादनादाः॥ १११७०
विस्फारयन्तः सहसा धनूंषि चक्राणि चादित्यसमप्रभाणि। समुत्क्षिपन्तो ह्यशनीश्च घोराः खड्गांश्च ते वज्रमुखाश्च शक्तीः।
महागदाः काञ्चनपट्टनद्धास्तथायथान् कार्म्मुकमुद्गरांश्च। शूलानि दण्डांश्च विगृह्य दीप्तान्द्रन्ति शूराः शतशो रणस्थाः।
एतस्मिन्नन्तरे तेषामन्योन्यमभिनिघ्नतां। द्वन्द्वयुद्धान्यवर्त्तन्त देवानां दानवैः सह।
मरुतां पञ्चमो यस्तु बाणं सोऽयुध्यतासुरं। महाबलः सुरवरः सावित्र इति यं विदुः।
अनायुषायाः पुत्रस्तु बलो नाम महासुरः। सोऽयुध्यत रणेऽत्युग्रो ध्रुवेण वसुना सह। १११७५
पुलोमा तु महादैत्यो बलिना वायुना सह। ससैन्यः पर्व्वताकारो रणेऽयुध्यत दंशितः।
नमुचिश्चासुरश्रेष्ठो धरेण समयुध्यत। सार्द्धं सर्व्वेण सैन्येन व्यादितास्य इवान्तकः।
विश्वकर्म्मा सुरश्रेष्ठो नयेन समयुध्यत। प्रवरौ विश्वकर्म्माणौ ख्यातौ देवासुरेश्वरौ।
हयग्रीवश्च दितिजः सह पूष्णा त्वयुध्यत। शूरेणामितवीर्य्येण भास्कराकारतेजसा।

शम्बरस्तु महावीर्य्यो महामायो महासुरः । भगेनायुध्यत तदा हलिनो युद्धदुर्म्मदः । ११९८०
शरभः शलभश्चैव दैत्यानां चन्द्रभास्करौ । प्रयुद्धौ सह सोमेन शिशिरास्त्रेण धीमता ।
विरोचनस्तु बलवान् बलेर्ब्बलवतः पिता । विश्वकर्म्मेनेन साध्येन तदाऽयुध्यत दानवः ।
कुजम्भस्तु महातेजा हिरण्यकशिपोः सुतः । अंशेनायुध्यत सह प्रासप्रहरणेन वै ।
असिलोमा तु बलिना मारुतेन महाहवे । तदाऽयुध्यत दीप्तास्यो विकटः पर्व्वतायुधः ।
अनायुषायाः पुत्रस्तु वृत्रो नाम महासुरः । अश्विभ्यां देववैद्याभ्यां महायुध्यत संयुगे । ११९८५
एकचक्रस्तु दितिजश्चक्रहस्तो दुरासदः । महायुध्यत देवेन साध्येन दितिजारिणा ।
बलस्तु मधुपिङ्गाक्षो वृत्रभ्राता महासुरः । मृगव्याधेन रुद्रेण महायुध्यत वीर्य्यवान् ।
राहुस्तु विकृताकारः शतशीर्षो महोदरः । अजैकपादेन रणे महायुध्यत वीर्य्यवान् ।
केशी तु दानवश्रेष्ठः प्रावृट्कालाम्बुदप्रभः । धनेश्वरेण महता महायुध्यत संयुगे ।
बलिना वृषपर्व्वा तु सह निष्कम्भुना रणे । विश्वदेवेन देवेन महायुध्यत वीर्य्यवान् । ११९९०
प्रह्लादस्तु महावीर्य्यो वीरैः स्वैस्तनयैर्वृतः । युयुधे सह कालेन रणे काल इव स्थितः ।
अनुह्लादः कुवेरेण धनदेन महाबलः । गदाहस्तेन युयुधे क्षोभयन् देववाहिनीं ।
विप्रचित्तिस्तु दैत्येन्द्रो वरुणेन महात्मना । प्रवृत्तो वै रणं कर्त्तुं दैत्यानां नन्दिवर्द्धनः ।
बलिस्तु सह शक्रेण सुरेशेन महात्मना । युयुधे देवराजेन बलिना बलवान्रणे ।
शेषा देवाश्च दैत्याश्च जघ्नुरन्योन्यमाहवे । विनदन्तो महानादान् प्रासासिशरशक्तिभिः । ११९९५
अदृश्यन्त महोत्पाता ये प्रोक्ता जगतः क्षये । मरुतः सप्त ते क्षुब्धा व्यशीर्य्यन्त च पर्व्वताः ।
सप्त चैवोत्थिताः सूर्य्याः शोषयन्तो महार्णवान् । बहुधाऽभिद्यत धरा मथ्यमानेव वायुना ।
व्युत्थिताश्च महामेघाः शक्रचापाङ्कितोदराः । प्रणेदुः सर्व्वभूतानि सर्व्वाः सतिमिरा दिशः ।
देवानामनयः क्रूरो दृश्यते कालनिर्म्मितः । घोरोत्पाताः समुद्भूता युगान्तसमये यथा ।
न चान्तरीक्षं न दिशो न भूमिर्न भास्करोऽदृश्यत रेणुजालैः । ववुश्च वातास्तुमुलाः सधूमा दिशश्च सर्व्वास्तिमिरोपगूढाः । १२०००
एते चान्ये च बहवो दृश्यन्ते दैवनिर्म्मिताः । भूमौ तथाऽन्तरीक्षे च घोरोत्पाताः समन्ततः ।
तद्युद्धं देवदैत्यानां भीमानां भीमदर्शनं । अपश्यत गुरुर्ब्रह्मा सर्व्वैरेव सुरैः सह ।
वेदैश्चतुर्भिः साङ्गैश्च विद्याभिश्च सनातनः । पद्मयोनिर्वृतः श्रीमान् सिद्धैश्च परमर्षिभिः ।
नानामणिस्तम्भसहस्रचित्रमारुह्य यानं ददृशे स्वयम्भूः । सुभास्वरं भूतसहस्रयुक्तं प्रदीप्यमाणं वपुषा परेण ।
प्रतप्तजाम्बूनददामचित्रमानन्दभेरीशतसंप्रणादं । नक्षत्रचन्द्रांशुभिरंशुमन्तं वैदूर्य्यसोमार्कविभूषिताङ्गं । १२००५
तमात्मजो वै पुलहः पुलस्त्यस्तथा मरीचिर्भ्भृगुरङ्गिराश्च । ऋक्सामभिः सम्यगभिष्टुवन्तः सेवन्ति देवं वरदं विमाने ।
ते पावका देवगुरुं दिवीशं साङ्गाश्च वेदा मखदेवताश्च । सेवन्ति सेव्यं भुवनेश्वरेशं भूतानि चान्यानि महानुभावं ।
एते च भूयश्च महर्षिमुख्या वैखानसाः पावकयोनयश्च । सर्व्वे ययुर्देवपुरोधसस्तु युद्धोत्सुकाः सर्व्वसुरासुराणां ।

योगेश्वराः षट् च दिवाकराभा वाभूषणैर्भूषितसर्व्वदेहाः। अलङ्कृता वै दहृशुर्नभस्था नारायणश्चैव नरश्च देवः।
वङ्गैश्चतुर्भिर्दधरैश्चतुर्भिः संपूर्णचन्द्रप्रतिमैः सुकान्तैः। सर्व्वा दिशो निस्तिमिराश्चकार नवोदितोऽसौ शरदीव चन्द्रः। ११११०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुश्चत्वारिंशदधिकद्विशततोऽध्यायः॥ २४४॥

॥ वैशम्पायन उवाच ॥ उभयोः सेनयोराजन् भूयो युद्धमवर्त्तत। सङ्ग्रामयज्ञनादेन त्रैलोक्यमिदमव्ययं।
गोमुखाडम्बराणाञ्च भेरीणां मुरजैः सह। झर्झरीडिण्डिमानाञ्च अश्रूयन्त महास्वनाः।
प्रवृत्तो युद्धयज्ञस्तु तुमुलो लोमहर्षणः। रणभूमौ महानादः स्वर्गीयः शूरसंमतः।
युद्धयज्ञस्य नेताऽभूत् प्रह्लादो नाम दानवः। विरोचनस्तथाऽध्वर्य्युर्युद्धयज्ञप्रवर्त्तकः।
होता चैवात्र नमुचिर्वृत्रस्तत्रोपकल्पकः। मन्त्राश्च दैत्याः प्रथिता यज्ञकर्म्मणि तत्र वै। ११११५
अनुयातास्तु पितरमधिका वा पराक्रमैः। यष्टा वै तत्र बाणस्तु सम्यगेवावतिष्ठते।
ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं सुदुर्ज्जयं। मन्त्रास्तत्राभ्यवर्त्तन्त साध्वनुह्रादयोजिताः।
उद्गाता च मयः श्रीमान् स्थितः शत्रुभयङ्करः। विनदन् दितिजश्रेष्ठो देवानीकान्यवारयत्।
बलिस्तु बलवान् राजा वैश्वानरसमद्युतिः। जयैर्हानैश्च संयुक्तो ब्रह्मत्वमकरोत् प्रभुः।
रणाग्निर्ज्वलितो घोरो वैरेन्धनसमीरितः। हूयते तनुरैस्तत्र रथवेदी सुसंस्कृताः। १११२०
शङ्खशब्दः सुविपुलो भेरीणाञ्च महास्वनः। उद्घुष्टं तुमुलञ्चैव मन्त्रत्वेन प्रयुज्यते।
बलश्च बलकश्चैव पुलोमा च महासुरः। शस्त्रं चमसं कृत्वा सत्रं सम्यक् प्रचक्रिरे।
कलापदण्डा विमला विपुला रथपङ्क्तयः। यूपाश्च समकल्पन्त युद्धयज्ञे महाफले।
कर्णिनालीकनाराचवत्सदन्तोपबृंहकाः। तोमराः सोमकलशा विचित्राणि धनूंषि च।
अस्थीन्यन्तकपालानि पुरोडाशाः शिरांसि च। आज्यञ्च रुधिरं रौद्रं तस्मिन् युद्धेऽभिहूयते। १११२५
इध्माः परिधयस्तत्र प्रहारा विपुला गदाः। हयग्रीवोऽसिलोमा च राजा केशी च दानवः।
विरोचनश्च जम्भश्च कुजम्भश्च महाबलः। सदस्यास्तत्र तु मखे विप्रचित्तिश्च वीर्य्यवान्।
हयवस्तु स्रुवस्तत्र रथाश्चमद्भुताः शुभाः। धनुष्कोट्यो धनुर्ज्याश्च स्रुचस्तत्र महामखे।
प्रतिप्रस्थानिकं कर्म्म वृषपर्व्वाऽकरोत्तदा। बलिस्तु दीक्षितस्तत्र तस्य पत्नी महाचमूः।
शम्बरस्तत्र शामित्रमकरोद्दितिनन्दनः। अतिरात्रे महाबाहुर्वितते यज्ञकर्म्मणि। १११३०
दक्षिणा तस्य यज्ञस्य कालनेमिः प्रतापवान्। वैताने कर्म्मणि तते यः ख्यातो हव्यवाडिव।
विदशानान्तु सैन्यस्य शरीरैर्गतजीवितैः। तस्मिन् यज्ञे तु सवनं वर्द्धते दैत्यनिर्म्मितं।
देवानां रुधिरं संख्ये पपुस्ताः दितेः सुताः। नर्द्दमानाः प्रमुदिताः सोमपानं रणाध्वरे।
यदा बलिर्महादैत्यो निर्जेता समरे सुरान्। तदा त्ववभृथो यज्ञे भविता वै न संशयः।
महासुरेन्द्रपतयो यज्वानो भूरिदक्षिणाः। वेदवन्तो व्रतवन्तः शूराः सर्व्वे तनुत्यजः। १११३५
त्रैलोक्यहरणे सन्ना युद्धयज्ञाय दीक्षिताः। बद्धकृष्णाजिनाः सर्व्वे व्रतिनो मुञ्जधारिणः।
एकनिश्चयकार्य्याश्च मैत्रेयनयकोविदाः। सुरदानवसैन्यानां शब्दः समभवन्महान्।

नानायुधविहस्तानां नरितानां प्रधावतां । क्ष्वेडितोत्कुष्टनिनदैर्गजबृंहितनिस्वनैः ।
शङ्खदुन्दुभिनिर्घोषैर्धनुर्विततनिस्वनैः । रथनेमिस्वनैर्घोरैः सुमुलः सर्वतोऽभवत् ।
हयानां हेषमाणानां दानवानाञ्च गर्जतां । क्ष्वेडितोत्कृष्टसंनादैः पाणिपादरवैस्तथा । ११११०
दानवानां परैवाश्च प्रस्रवन्ति महान्ति च । घनरै भीमकर्माणि सैन्यानि प्रचकाशिरे ।
ततो नागा रथाश्चैव आभूषणविभूषिताः । धावमाना व्यदृश्यन्त मेघा इव सविद्युतः ।
स्वर्णपृष्ठगदा दीप्ताः शूलशक्त्यृष्टिपरश्वधाः । चाह बभ्राजिरे तत्र लेलिहानेषु पर्वसु ।
रथा बहुविधाकाराः शतशोऽथ सहस्रशः । हेमभाण्डपरिष्कारा ज्वलन्त इव पर्वताः ।
दानवानां सुराणाञ्च समालोक्य तु सैनिकाः । काञ्चनैः कवचैः सर्वे ज्वलितार्कसमप्रभैः । ११११५
भ्यराजः समदृश्यन्त ज्योतींषि गगने यथा । उद्यतैरायुधैश्चित्रैस्तलबद्धाः पताकिनः ।
क्षपमाणाः सुरगणास्समुपागता बभुः । नानावर्णाः पताकाश्च ध्वजमालाश्च संयुगे ।
युध्यतां रथमेधानामीरयामास मारुतः । ध्वजाश्छत्रवस्त्राणि शर्माणि कवचानि च ।
रश्मिभिर्भासयामास रश्मिवर्णानि रश्मिराट् । सर्वेषामप्रमेयाणां बलानां पादचारिणां ।
रजः सञ्छादयामास पञ्चवर्णापाण्डरं दिशः । दीप्ताम्बरधराः सर्वे दीप्ता युद्धाय स्थिताः । १११२०
प्रतिनस्त्रिभिरन्योन्यमनीकं प्रत्यनीकतः । गिरिकूटोच्छ्रयाः सर्वे तदा ते देवदानवाः ।
अन्योन्यमभिनिघ्नन्तो रणस्थाश्च यथोधिनः । मुद्गरैर्मुसलैः शूलैरयस्पैरुलूखलैः ।
वज्रैरशनिभिश्चैव खड्गचक्रादिभिस्तथा । उद्यतैरायुधैश्चित्रैस्तलबद्धाः पताकिनः ।
बाणैः सुरुचिरैस्तीक्ष्णैः पत्रवाजैर्दुरासदैः । तथा प्रवर्त्तिते तेषां विमर्देऽद्भुतविक्रमे ।
सावित्रस्य वधं प्रेप्सुर्बाणो जग्राह कार्मुकं । शरजालेन दिव्येन च्छादयामास सुरोत्तमं । १११२५
सन्दीप्त इवाग्निमान् संप्रजज्वाल तेजसा । सागराभां महासेनां देवानां दैत्यपुङ्गवः ।
अशोषयत बाणौघैरर्कोंऽशुभिरिवार्णवं । मारुतः स महावेगः सावित्रः शक्तिमुत्तमां ।
चिक्षेप बलिपुत्राय शक्रोऽशनिमिवाद्रये । आपतन्ती च सा शक्तिर्महोल्का ज्वलिता यथा ।
द्विधा च्छिन्ना क्षुरप्रेण बाणेनाद्भुतकर्मणा । हतायामथ शक्त्यान्तु सावित्रो देवसत्तमः ।
विश्वकर्मकृतं दिव्यं सुतीक्ष्णं दानवार्दनं । सुपीतधारं विपुलं विमलं चन्द्रवर्चसं । १११३०
अष्टशाखिचितं खड्गमाशीविषविषोपमं । तं गृहीत्वा रणमुखे प्रज्वलन्तं महाप्रभं ।
बाणाभ्याशे महातेजाः खड्गपाणिरवस्थितः । तत्र स्थितं समालक्ष्य सावित्रं बलिनन्दनः ।
लोहिताक्षो महाकायश्चिक्षेप च ननाद च । ततोऽर्ककिरणाकारानग्निप्रतिमाञ्छरान् ।
सन्दधे चापे बाणोघानाशीविषसमान् बली । रुक्मपुङ्खान् प्रदीप्ताग्रानुग्रवेगानलङ्कृतान् ।
आकर्णपूर्णांश्चिक्षेप शरानग्र्यान् समन्ततः । दृढचापप्रयुक्तास्ते शरा वैश्वानरप्रभाः । १११३५
सावित्रं छादयामासुः कैलासमिव तोयदाः । स च्छाद्यमानः शरौघैर्बाणेन बलिसूनुना ।
पराङ्मुखः सुरवरः प्रयातः सुरथध्वजः । तं पराजित्य सावित्रं बाणः परमहर्षितः ।

प्रगृह्य कार्म्मुकं घोरं गतः शक्ररथं प्रति। बलश्चाप्यसुरश्रेष्ठ. प्रगृह्य महतीं गदां ॥
धुवाय वसवे मूर्द्धि रौद्रोऽचिक्षेप दानवः। तस्य निर्मथितस्कंधो हेमचित्रश्च वर्म्म वै।
गदावेगेन भीमेन ध्रुवस्य समरे तदा। शेषास्तु वसव. सर्व्वे दिव्यास्त्रैर्वरदर्शनाः।
आच्छादयन्वयो दैत्यमादित्यमिव तोयदाः। ततः सोऽमर्षितो वार्य्यैर्बलो दानवसत्तमः।
अवातरद्रथात्तस्मादुद्यम्य वेगवान्। शिरःसु पातयामास शत्रूणां तां गदां तदा।
दिश. आद्रावयत्सर्व्वाश्छिन्दन् सा महागदा। इन्द्राशनिरिवेन्द्रेण प्रवृद्धा सुमहास्वना।
तस्याः सविद्युद्घोषायास्तेन शब्देन वेजिताः। व्यद्रवन्त परित्रस्ता रथेभ्यो रथिनस्तदा।
तदुदीर्णं रथानीकं सूर्य्याभं मेघनिस्वनं। देवानां शरधाराभिरभ्यवर्षत्समन्ततः।
क्षुरप्रैर्विशिखैर्भल्लैर्वत्सदन्तै. शिलीमुखैः। मुहुर्मुहुर्महातेजाः प्रत्यविध्यन्महासुरं।
बलकस्तु महाबाहुर्व्यर्दितास्त्रं इवान्तकः। तडिद्गुणार्कसदृशो वैश्वानरसमप्रभ ॥
पिबन्निव शरौघांस्तान् देवचापसमुत्थितान्। अभ्यद्रवत दैत्येन्द्रो महार्णव इवापर।
अवस्फुर्ज्जन् दिशः सर्व्वाः स्वेन वीर्य्येण दानव.। आरुजंश्छिन्दशान् दैत्यः सिन्धुवेगो नगानिव।
अभ्यद्रवत्तरसा देवान् वायुर्वृक्षानिवौजसा। समयश्च महेष्वासान वसुभ्या समसज्जत।
आपश्चैवानिलश्चैव ववर्षतुररिन्दमौ। शरवर्षाणि दीप्तानि मेघाविव परन्तपौ।
चिक्षेपांस्तान् विशिखान्दीप्तांश्चिच्छेद स नभस्तले। अदृश्यमाणस्तत् कर्म्म ध्रुवस्तमभिदुद्रुवे।
तौ समं शरवर्षाभ्यामन्योन्यमभिजघ्नतु.। उत्तमाभिजनौ शूरौ देवदैत्यौ यशस्करौ।
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ। रथशक्तिभिरन्योन्यं विशिखैश्चाप्यकृन्ततां।
निर्भिन्दन्तौ च गात्राणि विलिखन्तौ च सायकैः। क्षमयन्तौ च बलिनौ प्रतुदन्तौ रणे स्थितौ।
चरन्तौ विविधान्मार्गान्मण्डलानि च भागश.। मुहुराजघ्नतुः क्रुद्धावन्योन्यमभिमानिनौ।
.असिभ्यां चर्म्मणी दिव्ये विपुले च शरासने। निक्षिप्याऽचलसङ्काशौ बाहुयुद्धं प्रचक्रतु.।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ। बाहुभि. समसज्जेतामायसैः परिघैरिव।
तयोरासीद्भुजाघातनिपात प्रशब्दस्तथा। अतीव भीम. संह्रादो वज्रपर्व्वतयोरिव।
द्विपाविव विषाणाग्रैः शृङ्गैरिव महावृषौ। अन्योन्यमभिसंरब्धौ मुहुर्त्तं पर्य्यकर्षतां।
तत. पराजितो देवो बलकेन तदा धुव । रथं त्यक्त्वा भयात्तस्य प्रनष्ट. प्राङ्मुखो वसुः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामनप्रादुर्भावे देवासुरयुद्धे पञ्चचत्वारिंशदधिकद्विशततोऽध्याय.॥२४५॥
॥ वैशम्पायन उवाच ॥ पुनरेव तु तत्रासीन्महद्युद्धं सुदारुणं। क्रुद्धस्य नमुचेश्चैव धरस्य च महात्मन.।
संरब्धौ च महाबाहू महेष्वासावरिन्दमौ। परस्परमुदीक्षेतां दहन्ताविव लोचनैः।
विस्फार्य्य च महच्चापं हेमपृष्ठं दुरासदं। संरम्भात् स वसुश्रेष्ठस्त्यक्त्वा प्राणानयुध्यत।
स सायकमयैर्ज्जालैर्धरो दैत्यरथं प्रति। भानुमद्भिः शिलाधौतैर्भानो ,राच्छादयत् प्रभां।
ततः प्रहस्य नमुचिर्धरस्य तु शिलाशितान्। अग्रजस्सायकान्दीप्तान् भीमवेगान्दुरासदान्।

महातेजा महाबाहुर्महावेगो महारथः । विव्याधातिरथो दैत्यो नवभिर्निशितैः शरैः ।
स तोत्त्रैरिव मातङ्गो वार्य्यमाणः पतत्त्रिभिः । अभ्यधावत संक्रुद्धो नमुचिं वसुसत्तम ।
तमापतन्तं वेगेन नमुचीरभसाद्रणे । दैत्यं प्रत्यसरद्देवं मत्तो मत्तमिव द्विपं ।
ततः प्राध्मापयच्छङ्खं भेरीशतनिनादितं । विक्षोभ्य तद्बलं हर्षादुद्धूतार्णवसप्रभं । १११००
अश्वान्व्यसवर्णांश्च हमवर्णः स वाजिभिः । मिश्रयन् समरे दैत्यो वसुं प्राच्छादयच्छरैः ।
समास्थितौ तयाऽन्योन्यं वसुदानवयोरथौ । दृष्ट्वा प्राकम्पत, मुक्तस्विद्भावानां महद्बलं ।
क्रोधसंरम्भरक्ताक्षौ प्रेक्षमाणौ परस्परं । गर्ज्जन्ताविव शार्दूलौ प्रभिन्नाविव वारणौ ।
यमराष्ट्रोपमं रौद्रमासीदायोधनं तयोः । नराश्वरथसम्बाधं मत्तवारणसंकुलं ।
समाजमिव तं दृष्ट्वा प्रेक्षमाणा महारथाः । आशंसन्तो जयं ताभ्यां योधास्ते गगने स्थिताः । १११०५
तयोः प्रैक्षन्त समरं सन्निकृष्टं महात्मयोः । सिद्धगन्धर्व्वमुनयो देवदानवयोस्तदा ।
तौ च्छादयन्तावन्योन्यं समरे निशितैः शरैः । शरजालावृतं व्योम चक्रतुश्च महाबलौ ।
तावन्योन्यं जिघांसन्तौ शरैस्तीक्ष्णैर्महारथौ । प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ ।
सुवर्णविकृतान् वाणान् प्रमुञ्चन्तावरिन्दमौ । भास्कराभं तदाकाशमुल्काभिरिव चक्रतुः ।
तयोः शराः प्रकाशन्ते देवदानवयोस्तदा । पंक्तयः शरदि मत्तानां सारसानामिवाम्बरे । ११११०
छिद्यास्वगजानां हि शरीरैर्गतजीवितैः । क्षणेन संवृता भूमिर्मेघैरिव नभस्तलं ।
ततः सुधारं ज्वलितं सूर्य्यमण्डलसन्निभं । धराय वसवे मुक्तं चक्रं नमुचिना रणे ।
पतता तेन चक्रेण धरस्य स्यन्दनोत्तमः । सध्वजः सायुधः साश्वो दग्धोऽर्ककिरणप्रभः ।
स त्यक्त्वा तं रथं देवः प्रदीप्तं चक्रतेजसा । भयात्तस्यासुरेन्द्रस्य गतः खं वसुसत्तम ।
पराजित्यासुरो देवं नमुचिर्ब्बलगर्व्वितः । प्रयातः स्वेन सैन्येन भूयः सुरचमूं प्रति । ११११५
अथ त्वष्टा मयश्चैव देवदैत्यौ सुविश्रुतौ । प्रवरौ विश्वकर्म्माणौ मायाशतविशारदौ ।
तयोः प्राणहरस्यासीत् सम्प्रहारो महात्मनोः । अन्योन्यस्पर्द्धिनोस्तत्र चिरात्प्रभृति दीप्तयोः ।
त्वष्टा तु निशितैर्व्वाणैर्दैत्यं तं बलगर्व्वितं । पराक्रान्तः पराक्रम्य विव्याध बहुभिः शरैः ।
मयस्तु प्रतिविव्याध त्वष्टारं निशितैः शरैः । महावेगैः प्रसन्नाग्रैः शातकुम्भविभूषितैः ।
ननाद दितिजश्रेष्ठं हत्वा त्वष्टा शरैर्भृशं । सक्रुद्धो दैत्यसैन्यस्य विचिन्वन्निव जीवितं । १११२०
शक्तिं कनकवैदूर्य्यचित्रदण्डां महाप्रभां । देवो गृहीत्वा समरे दैत्येन्द्रे प्रत्यवासृजत् ।
भीमां सर्व्वायसीं त्वष्टा पुरन्दर इवाशनिं । तां त्वष्टुर्भुजनिर्मुक्तामर्कवैश्वानरप्रभां ।
मयश्चिच्छेद तीक्ष्णाग्रैः शीघ्रं सप्तभिराशुगैः । ततः चिच्छन्निव प्राणांस्त्वष्टुः कोपान्महासुरः ।
प्रेषयामास संरब्धः शरान् वर्हिणवाससः । चिच्छेद वाणांस्त्वष्टा तान् ज्वलितैर्नतपर्व्वभिः ।
दैत्यस्य सुमहावेगैः सुवर्णविकृतैः शरैः । तौ वृषाविव नर्दन्तौ बलिनौ वाशितान्तरे । १११२५
शार्दूलाविव चान्योन्यं प्रसक्तावभिजघ्नतुः । अन्योन्यं प्रतिविध्यन्तावन्योन्यस्यान्तरैषिणौ ।

अन्योन्यमभिवीक्षेतां क्रुद्धावाशीविषाविव । महागजाविवाभाद्य विषाणाग्रैः परस्परं ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः । ततः सुविपुलां दीप्तां मयो रुक्माङ्गदां गदां ।
त्वष्टरि प्राहिणोत् क्रुद्धः सर्व्वप्राणहरां रणे । तया अघानातिरथस्त्वष्टुरुत्तमवाजिनः ।
गदया दानवः क्रुद्धो वज्रेणेन्द्र इवाचलान् । अथ क्रुद्धो महादैत्यो क्षुराभ्यां तस्य संयुगे । ११११०
पुनर्द्वाभ्यां शराभ्यान्तु निशिताभ्यां महारणे । ध्वजं त्वष्टुरथ छित्त्वा सूतं प्रेष्य यमक्षयं ।
महाकायान्महावेगान् सदश्वान् गदयाऽहनत् । दृष्ट्वा त्वष्टा तु समरे ध्वजं सूतञ्च पातितं ।
हताश्वस्तमुत्सृज्य रथं भूमौ व्यवस्थितः । विस्फार्य्य सुमहच्चापं युद्धाय कृतनिश्चयः ।
हताश्वसूतं विरथं कृत्वा रिपुमवस्थितः । जयश्रिया सेव्यमानो दीप्यमान इवानलः ।
मयः कालान्तकप्रख्यश्चापपाणिरदृश्यत । निर्द्दहन्देवसैन्यानि दावाग्निरिव काननं । ११११५
त्वष्टुः सोऽक्षिपतात्युग्रो नाराचांस्तिग्मतेजसः । चतुर्द्दश शिलाधौतान् सायकान् विविधाकृतीन् ।
ते पपुस्तस्य देवस्य शोणितं रुक्मभूषणाः । आशीविषा इव क्रुद्धा भुजगाः कालचोदिताः ।
ते तु क्षितिं समासाद्य शोभन्ते स्माक्तपुङ्खिताः । अर्द्धप्रविष्टाः संरब्धा बिलानीव महोरगाः ।
तं प्रत्यविध्यत्त्वष्टा तु जाम्बूनदविभूषितैः । चतुर्द्दशभिरत्युग्रैर्नाराचैरभिदारयन् ।
ते तस्य दैत्यस्य भुजं सव्यं निर्भिद्य पत्रिणः । विदार्य्य प्राविशन् भूमिं भुजङ्गा इव वेगिताः । १११२०
ते व्यकाशन्त नाराचाः प्रविशन्तो वसुन्धरां । अस्तं गच्छन्तमादित्यं प्रविशन्त इवांशवः ।
मयस्तु त्रिभिरत्युग्रैस्त्वष्टारन्तु पतत्रिभिः । अर्द्दयामास दैत्येन्द्रो ज्वलितैः शोणिताशनैः ।
त्वष्टाऽथ मयनिर्मुक्तैः सायकैरर्द्दितो भृशं । अपायाद्रथमुत्सृज्य व्रीडयाऽभिसमन्वितः ।
स तत्र हतसूताश्वं भुजङ्गमिव निर्विषं । त्वष्टारं विरथं कृत्वा मुदितः स तु दानवः ।
विस्फारयन् सुरुचिरं चापं रुक्माङ्गदं दृढं । रणे व्यतिष्ठद्दैत्येन्द्रो ज्वलन्निव हुताशनः । १११२५
पुलोमा तु बलश्लाघी दृप्तो दानवसत्तमः । रणे श्वेताश्वयुक्तेन रथेन समदृश्यत ।
ततो वै सर्व्वभूतानां शरीरान्तरचारिणा । बलिना कालकल्पेन महाप्रध्वन वायुना ।
पुलोमस्तत्र पवनः कृत्वा व्यातत्तनिःस्वनं । नाक्षुभ्यत यथा सत्तो मत्तः प्रतिगर्जनं ।
दैत्यचापच्युतैर्ब्बाणैः प्राच्छादयत दिशो दश । रश्मिजालैरिवार्कस्य विततं साम्बरं जगत् ।
स तापितमनाः क्रुद्धः श्वसन्निव महोरगः । बभौ दैत्यशरैर्व्याप्तो रश्मिवानिव भास्करः । १११३०
दैत्यचापभुजोत्सृष्टाः शरा वर्हिणवाससः । रुक्मपुङ्खा व्यकाशन्त सर्पाः श्वेतोऽग्ना इव ।
चापध्वजरथाकाशमम्बरादीप्तमुखाद्गुणात् । प्रपतन्तः स्म दृश्यन्ते दैत्यचापच्युताः शराः ।
एवं सशीघ्रहस्तान् पवरान्मनभानिव मारुते । सुरर्षं विष्टतां विचरन्तु नैव दितिजः शरान् ।
ततस्तकनिव सुसमादतनं स मारुतः । ततः प्राणानतिक्रम्य विव्याध नवभिः शरैः ।
तस्य वेगमसंहार्य्यं दृष्ट्वा वायुः सनातनः । उत्तमं शस्त्रमादाय सर्पमस्त्रापकस्मात् । १११३५
ततो विधम्य सर्वान् स शरजालानि मारुतः । विव्याध दैत्यं विंशत्या शितैर्नतपर्वभिः ।

मरुद्गणानां प्रवरा इव दिव्या महौजसः। साधु साध्विति वेगेन सिंहनादं प्रचक्रिरे।
तस्मिन् समुत्थिते शब्दे तुमुले लोमहर्षणे। अभ्यधावन्त दितिजाः पौलोमाः क्रोधमूर्च्छिताः।
ततः प्रच्छादयामासुः पवनं शरवृष्टिभिः। पर्वतं वारिधाराभिः प्रावृषीव बलाहकाः।
ते पीडयन्तः पवनं क्रुद्धाः सप्त महारथाः। प्रजासंहरणे घोराः सोमं सप्तग्रहा इव। १२२२०
ततो दक्षिणमक्षोभ्यं नानारत्नविभूषितं। करं करिकराकारमुद्यम्य युधि मारुतः।
तेषां मूर्द्धसु दैत्यानां पातयामास वीर्य्यवान्। निहता वायुवेगेन तेन सप्त महारथाः।
त्यक्ता प्राणान् पुलोमा तु विव्याध नवभिः शरैः। तस्यापि तमसंहार्य्यं दृष्ट्वा वायुः सनातनः।
अथ छित्त्वा शरौघांस्तान् ज्वलितान् वै पुलोमतः। तेषां विदार्य्य तेजांसि दानवानां महात्मनां।
शोणितक्लिन्नमुकुटा गैरिकाक्ता इवाद्रयः। ते च्छिन्नमर्म्मास्थिभुजाः पतन्तो भान्ति दानवाः। १२२२५
मातङ्गयूथपा रुग्णाः पुष्पिता इव पादपाः। तेषां विदारितैर्देहैर्दानवानां महात्मनां।
ततः प्रावर्त्तत नदी रौद्ररूपा भयावहा। प्रस्रवन्ती रणे रक्तं भीरूणां भयवर्द्धिनी।
देवदैत्यगजाश्वानां रुधिरौघपरिप्लुता। रणभूमिरभूद्रौद्रा तत्र तत्र सहस्रशः।
संवृता गतसत्त्वैश्च खचराचरखेचरैः। सानुषङ्गपताकैश्च पातितैश्च ध्वजैरथैः।
शीर्णकुम्भैस्तथा नागैर्घण्टाभिः सुविभूषितैः। सुवर्णपुङ्खैर्ज्वलितैर्नाराचैस्तिग्मतेजितैः। १२२३०
देवदानवनिर्मुक्तैः सविषैरुरगैरिव। प्रासतोमरभल्लैश्च शक्तिखड्गपरश्वधैः।
सुवर्णकिरातैश्चापैर्गदामुसलपट्टिशैः। कनकाङ्गदकेयूरैर्मुकुटैः कुण्डलैः शुभैः।
तनुत्रैः सतलत्रैश्च हारैर्निष्कैश्च शोभनैः। हतैश्च दितिजैर्भिन्नैः शस्त्रस्यन्दनवर्ज्जितैः।
पातितैरपविद्धैश्च शवनी द्यौरिव ग्रहैः। निपातितध्वजरथो हतवाजिरथद्विपः।
विमर्द्दो देवदैत्यानां सदृशः कर्म्मणा बभौ। अथ दैत्यसहस्रेण पौलोमेन महारथः। १२२३५
संवृतः पवनः श्रीमान् गदामुसलपाणिना। ते जघ्नु शतसाहस्राः पवनं दानवोत्तमाः।
तैर्वध्यमानश्च बभौ तोयार्द्रित इव द्विपः। हत्वाऽष्टौ तत्र दैत्यानां शतानि पवनः प्रभुः।
कृत्वा मार्गं महाबाहुः प्रयातः स महारथः। अद्यापि च सुविस्तीर्णः पन्थाः संदृश्यते दिवि।
नाम्ना वायुपथो नाम सिद्धाः पश्यन्ति तं सदा।
॥ वैशम्पायन उवाच ॥ हयग्रीवस्तु दितिजः पूषणमासाद्य वीर्य्यवान्। ननाद सुमहानादं सिंहवत्सुमहाबलः। १२२४०
विस्फार्य्य सुमहाच्चापं हेमजालविभूषितं। पूषणं दितिजोऽपश्यत् क्रुद्धो घोरेण चक्षुषा।
भुजाभ्यामाददानस्य सन्दधानस्य सायकान्। मुञ्चतः कर्षतो वाऽपि ददृशे तत्र नान्तरं।
अग्निचक्रोपमं दीप्तं मण्डलीकृतकार्म्मुकं। तत्रासीद्दानवेन्द्रस्य सव्यदक्षिणमस्यतः।
रुक्मपुङ्खैस्ततस्तस्य चापमुक्तैः शितैः शरैः। प्राच्छाद्यन्त शिलाधौतैर्दिशः सूर्य्यस्य च प्रभाः।
ततः काञ्चनपुङ्खानां शराणां नतपर्व्वणां। नभश्चराणां नभसि दृश्यन्ते बहवो प्रभाः। १२२४५
गिरिशृङ्गनिभाच्चापात्प्रभवन्तः शरोत्तमाः। श्रेणीकृताः प्रकाशन्ते यान्तः क्रौञ्चा इवाम्बरे।

गार्द्धपत्रान् शिलाधौतान् कार्त्तस्वरविभूषितान् । प्रसन्नाग्रान्महावेगान्मुमोच दितिजः शरान् ।
ततश्चापबलोद्भूताः शातकुम्भविभूषिताः । देहे समवकीर्य्यन्त पूष्णः सुनिशिताः शराः ।
ते व्योम्नि रुक्मविकृताः संप्रकाशन्त सर्व्वशः । खद्योता इव घर्म्मान्ते खे चरन्तः सहस्रशः ।
शिलाधौताः प्रसन्नाग्राः पूषणं विव्यधुः शराः । दैत्यः प्रच्छादयामास पूषणं शरवृष्टिभिः । १११९०
पर्व्वतं वारिधाराभिश्छादयन्निव तोयदः । ततस्तु पूष्णो देवस्य बलवीर्य्यपराक्रमं ।
व्यवसायञ्च सत्त्वञ्च ददृशुस्त्रिदशाः क्षतं । तां समुद्रादिवोद्भूतां शरवृष्टिं समुत्थितां ।
नाचिन्तयत्तदा पूषा दैत्यश्चाप्यद्रवद्रुषा । हेमपृष्ठं महानादं पूष्ण आसीन्महद्धनुः ।
विकृष्टं मण्डलीभूतं शक्रायुधमिवापरं । ततः शराः प्रादुरासन् पूरयन्त इवाम्बरं ।
सुवर्णपुङ्खाः पूष्णस्ते प्रभवन्तः शरासनात् । मालेव रुक्मपुङ्खानां वितता व्योम्नि पत्रिणां । १११९५
प्रादुरासीन्महाघोरा ह्रदतो पूषकार्म्मुकात् । ततो व्योम्नि विमुक्तानि शरजालानि सर्व्वशः ।
आहतानि व्यशीर्य्यन्त शरैः सन्नतपर्व्वभिः । ततः कनकपुङ्खानां शराणां कङ्कवाससां ।
पततां पात्यमानानां स्वनासीत् संहतं नभे । पूषा लच्छादयदाणैर्हयग्रीवं शिलाशितैः ।
नामाङ्कैरर्कसदृशैर्हृद्यैर्हेमपरिष्कृतैः । ततो व्यसृजदुग्राणि शरवर्षाणि दानवः ।
अमर्षी बलवान् क्रुद्धो दिधक्षन्निव पावकः । पूष्णस्ताञ्जौ ध्वजञ्चैव पताकां धनुरेव च । ११२००
रश्मीन् योक्त्राणि चाश्वानां हयग्रीवो रणेऽच्छिनत् । अथाश्वाश्वान् पुनर्भित्त्वा चतुर्भिः सायकोत्तमैः ।
सारथिं सुमहातेजा रथोपस्थादपातयत् । हतस्तु विरथः पूषा हयग्रीवेण संयुगे ।
समकम्पत भीतोऽथो सिन्धोरिव महार्णवः । गतः शकरथाभ्याशं मुक्तो मृत्युमुखादिव ।
तच्चाद्भुतमिदं भूयो युद्धमासीत् सुदारुणं । कृतप्रतिकृतं घोरं शम्बरस्य भगस्य च ।
सप्तकिष्कुपरीणाहं द्वादशारत्निकार्म्मुकं । वासवाशनिनिर्घोषं दृढज्यं भारसाधनं । ११२०५
कर्षयाश्च स दृष्टान् व्यसृजत् सायकान् बहून् । क्रोधसंरक्तनयनः शम्बरः सर्व्वयोगवित् ।
तेन वित्रास्यमानानि देवसैन्यानि सर्व्वशः । समकम्पन्त भीतानि सिन्धोरिव महार्णवः ।
तमापतन्तं संप्रेक्ष्य विरूपाक्षं विभीषणं । भगः प्रस्फुरमाणोष्ठस्त्वरमाणो न्यवारयत् ।
ततो भगो महेष्वासो दिव्यं विस्फारयन्धनुः । अवाकिरद्दिशः सर्व्वा ज्याविशेषेण नादयन् ।
तमभ्ययोद्भगो दैत्यं तूर्णमस्यन्तमन्तिकात् । मातङ्गमिव मातङ्गो दृप्तं प्रतिदृप्तो यथा । ११२१०
तौ प्रगृह्य महावेगौ धनुषी भारसाधने । प्रच्छादयेतामन्योन्यं तक्षमाणौ महेषुभिः ।
तयोः सुतुमुलं युद्धमासीद्घोरं महारणे । भगशम्बरयोर्भीममप्रमेयं महात्मनोः ।
अथ पूर्णायतोत्सृष्टैः शरैः सन्नतपर्व्वभिः । व्यदारयेतामन्योन्यं काष्ठे निर्भिद्य मर्म्मणी ।
तौ तु विक्षतसर्व्वाङ्गौ शोणितौघपरिप्लुतौ । संप्रेक्षमाणौ रथिनावुभौ परमदुर्म्मदौ ।
तक्षमाणौ शितैर्बाणैर्वीक्षितुमशक्नुतां । ततो विव्याध समरे त्वरमाणोऽसुरो भगं । ११२१५
नाराचैः क्रोधताम्राक्षः कालान्तकयमोपमः । गरुत्मानिव चाकाशे पोथयानो महोरगान् ।

नाराचा न्यपतन्देहे तूर्णं शम्बरचोदिताः । अप्राप्तानन्तरीचे तान् भगश्चिच्छेद पत्रिभिः ।
ज्वलितान् सुमहावेगान् दिवाकरसमप्रभान् । ततो भगं चतुःषष्ट्या विव्याधासुरसत्तमः ।
सायकानां सुतीक्ष्णानां सुमुखानां सुवेगिनां । तयोस्तु सुचिरं कालं युद्धं समभिवाभवत् ।
शम्बरस्य च मायाभिर्नादृश्यत ततोऽन्तरं । दोर्भ्यां विचिपतश्चापं रथं विष्टभ्य तिष्ठतः । ११४२०
श्रूयते धनुषः शब्दो विस्फूर्जितमिवाशनेः । स भगस्य हयान् हत्वा छित्त्वा च ध्वजमाहवे ।
अभ्यवर्षच्छरैर्दैत्यः पर्जन्य इव वृष्टिमान् । न तस्यासीदनिर्भिन्नं गात्रे ह्यङ्गुलमन्तरं ।
भगादित्यस्य देवस्य शम्बरेणास्त्रयोधिना । दैत्यस्य चाद्भुतं दिव्यमस्त्रेणास्त्रमवारयत् ।
मायायुद्धेन मायावी शम्बरस्तु महाबलः । अवञ्चयद्भगं दैत्यो मायाभिर्लाघवेन च ।
सहस्रमायो द्युतिमान्देवसेनानिसूदनः । शम्बरोऽदृश्यत पुनः सञ्छन्नः शतधा शरैः । ११४२५
पतितोऽदृश्यत पुनर्व्यसुर्भूमौ महाबलः । अथ स्म दृश्यते भूयः शतधा शैलसन्निभः ।
दिशागजेन्द्रमारूढो दृश्यते च पुनर्बली । आदित्यमात्रश्च पुनर्भूत्वा भवति शैलवत् ।
महामेघनिभः श्रीमांस्तिर्य्यगूर्द्धञ्च सोऽभवत् । पुनः कृत्वा विरूपाणि घोराणि विकृतानि वै ।
सर्व्वां भीषयते सेनां देवानां भीमदर्शनः । ते भीताः प्रपलायन्ते सिंहं दृष्ट्वा मृगा इव ।
ततश्चान्यं नवं देहं कृत्वा शंसृततरं पुनः । गच्छत्यूर्द्धगतिं घोरो दिशः शब्देन पूरयन् । ११४३०
नभस्तलगतश्चापि वर्षते वासवो यथा । सम्वर्त्तकाम्बुदप्रख्यः पूरयन् पृथिवीमिमां ।
सवर्त्तकोऽनलश्चैव भूत्वा भीमपराक्रमः । शतावर्त्तः शतशिखो ददाह च पुनः सुरान् ।
मुहूर्त्ताच्च महाशैलः शतवर्ष्मा शतोदरः । अदृश्यत दिवं स्तम्भन् कैलास इव पर्व्वतः ।
यान्यादित्याश्च साध्याश्च यानि विश्वे च देवताः । चिपन्त्यस्त्राणि दिव्यानि तान्यसौ ग्रसतेऽसुरः ।
युध्यमानश्च समरे सरथः सोऽसुरोत्तमः । गन्धर्व्वनगराकारस्तत्रैवान्तरधीयत । ११४३५
त भीताः समुद्वेजन्त त्रिदशा भीमविक्रमं । सहस्रमायं समरे शम्बरं चित्रयोधिनं ।
भगोऽपि भयसन्त्रस्तो दानवेन्द्रस्य संयुगे । रथं त्यक्त्वा महाभागो महेन्द्रं शरणं गतः ।
पराजित्य तु तं देवं दानवेन्द्रः प्रतापवान् । गतो यत्र महातेजा जातवेदा महाप्रभः ।
स वह्निं वाग्भिरुग्राभिः क्रुद्धो निर्भर्त्सयतासकृत् । भवान्येष हि ते मृत्युरित्युक्त्वाऽन्तर्द्दधे च सः ।
एतस्मिन्नन्तरे चैव ब्राह्मणेन्द्रो महाबलः । जघान सोमः शीतास्त्रो दानवानां चमूं रणे । ११४४०
कैलासशिखराकारो द्युतिमद्भिर्धनुर्धरैर्वृतः । अवधीद्दानवान्दृप्तो दण्डपाणिरिवान्तकः ।
सोऽयथचयवृन्दानि वाजिवृन्दानि वै प्रभुः । दैत्येषु व्यचरत्सोमान् युगान्ते कालवद्बली ।
स कर्षयद्वृन्दानि जरुवेगेन चन्द्रमाः । ददाह दानवान् सर्व्वान् दावाग्निरिव चोदितः ।
मृद्नन्वयेभ्यो रथिनो गजेभ्यो गजयोधिनः । सादिनाश्चाश्वपृष्ठेभ्यो भूमौ चैव पदातिनः ।
हिमेन व्यधमत् सर्व्वान् वायुर्वृक्षानिवौजसा । चन्द्रमाः सुमहातेजा दानवानां महाचमूं । ११४४५
तदाऽस्त्रमभवत्तस्य प्रदिग्धं शत्रुशोणितैः । पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् ।

साध्यस्य बाणाभिहतस्तोत्रार्दित इव द्विपः। विरोचनः प्रजज्वाल क्रोधेनाग्निरिवाध्वरे।
स कार्मुकविनिर्मुक्तैर्विघ्नन्दानवसत्तमः। विष्वक्सेनं विभेदाजौ दीप्तैः सप्तभिराशुगैः।
सोऽतिविद्धो बलवता दानवेन सुरोत्तमः। मूर्च्छामभिजगामाशु ध्वजञ्चापाश्रयत्तदा।
ततः स पुनराश्वस्य साध्यो युद्धे मनो दधे। विस्फार्य्य सुमहच्चापं दैत्यमध्ये व्यवस्थितः।
विरोचनस्तु बलवानभ्ययुध्यत सर्व्वशः। क्षोभयन् सुरसैन्यानि समन्तान्निशितैः शरैः। ११६८०
ततस्तस्यासुरेन्द्रस्य युध्यमानस्य संयुगे। श्रूयते तुमुलः शब्दो जीमूतस्येव गर्ज्जतः।
स जगर्ज्ज महाघोरो विनिघ्नन्देववाहिनीम्। चण्डमेघोऽश्मवर्षीव सविद्युत्स्तनयित्नुमान्।
दिशो विद्रावयामास शरवर्षेण दानवः। सर्व्वसैन्यानि देवानामुद्यतास्त्रो महाहवे।
ते प्राद्रवन्त वित्रस्ता रथेभ्यो रथिनस्तदा। सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः।
श्रुत्वा कार्मुकनिर्घोषं विस्फूर्जितमिवाशनेः। सर्व्वसैन्यानि भीतानि व्यवाक्षोभन्त संयुगे। ११६८५
विरोचनभयत्रस्ता रथेभ्यो रथिनस्तदा। पदातीनां यथा संघा यत्र देवः शचीपतिः।
विष्वक्सेनस्य साध्यस्य सर्व्वतः सुमहाबलः। पादरक्षसहस्राणि निजघान चतुर्दश।
अश्ववृन्देषु नागेषु रथानीकेषु वा विभुः। पदातीनाञ्च संघेषु विनिघ्नन् प्रत्यदृश्यत।
वितत्य श्येनवत् पक्षौ सर्व्वतः स वरूथिनीम्। भित्त्वा भित्त्वा महाबाहुः शिरांस्याजावकृन्तत।
सादिनश्च पदाताश्च हतशेषास्तथा रथाः। विष्वक्सेनेन सहिता विरोचनमभिद्रवन्। ११६९०
तेऽसिचर्म्मगदाशक्तिपरिघप्रासतोमरैः। तमेवानुप्रधावन्तः सिंहनादं विनेदिरे।
अथ सोऽसिं समुद्यम्य जवमास्थाय दानवः। चकर्त्त रथिनामाजौ शिरांसि च धनूंषि च।
रथनागाश्ववृन्देषु बलवानरिमर्द्दनः। विरोचनश्चरन् मार्गान् प्रकारानेकविंशतिं।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतं। सम्पातं समुदीर्णञ्च दर्शयामास दानवः।
केचिद्दराचिता रुग्णा दानवेन महात्मना। विनेदुर्भिन्नमर्म्माणो निपेतुश्च गतासवः। ११६९५
छिन्नपृष्ठा हतारोहा दानवेन महात्मना। विद्रुताः स्वान्यनीकानि अभ्यस्यद्भवारणाः।
निपेतुरुर्व्यामाकाशाच्छिन्ना रुक्मध्वजाः। विविधाश्चामरास्यापा महामात्रशिरांसि च।
शतोपमाहरश्चागानश्वांश्च भ्रमविक्षतान्। चकर्त्त रथिनामाजौ शिरांसि च धनूंषि च।
आप्लुत्य रथिनः कांश्चित् परामृश्य महाबलः। सूतांश्चिच्छेद खड्गेन ध्वजानपि च दानवः।
मुहुरुत्पततो दिक्षु धावतश्च यशस्विनः। मार्गांश्च चरतश्चित्रान् व्यत्रसन्त ततोऽसुराः। ११७००
निजघान पदा कांश्चिदाक्षिप्यान्यानपोथयत्। खड्गेनान्यांश्च चिच्छेद नादेनान्यानभीषयत्।
ऊरुवेगसमुद्धूताश्च प्रपतन्त्यपरे भुवि। अपरे चैनमालोक्य भयात् प्राणानवासृजन्।
तस्मिंस्तु वर्त्तमाने वै युद्धे महति दारुणे। रथाश्वाजिनागानां सुराणाञ्च महाक्षये।
कुरुश्रेष्ठ दितिश्रेष्ठो धंशमादित्यमाहवे। योधयामास समरे वृषः प्रतिवृषं यथा।
अपामावहसंकाशो मत्तवारणविक्रमः। क्षुरप्रैर्निशितैर्घोरैः शरैरष्टभिराशुगैः। ११७०५

देवसेनासहस्राणि सरथानि महाहवे। तस्य वाणपथं प्राप्य नाभ्यवर्त्तन्त सर्व्वशः।
प्रणेदुः सर्व्वभूतानि बभूवुस्तिमिरा दिशः। देवानामजयश्चैव प्रत्यदृश्यत दारुणः।
अंशस्तु दानवेन्द्रस्य जघानोत्तमविक्रमः। अनीकं दशसाहस्रं कुञ्जराणां तरस्विनां।
आपतन्तं गजानीकं कुजम्भो वीक्ष्य दानवः। गदापाणिरवारोहद्रथोपस्थादरिन्दमः।
अद्रिसारमयीं गुर्व्वीं प्रगृह्य महतीं गदां। अभ्यद्रवद्गजानीकं व्यादितास्य इवान्तकः। १२११०
स गजान् गदया निघ्नन् व्यचरत् समरे बली। कुजम्भो दानवश्रेष्ठो दण्डपाणिरिवान्तकः।
विशीर्णदन्तांश्च बहून् भिन्नकुम्भांश्च वारणान्। अकरोद्दानवश्रेष्ठ उद्दिश्योद्दिश्य तान् बली।
विशीर्णदन्ता बहवो भिन्नकुम्भास्तथाऽपरे। कुजम्भेनार्द्दिता नागा व्यद्रवन्त दिशो दश।
कुजम्भस्य च येऽमात्या दानवा घोरदर्शनाः। नाराचैर्विमलैस्तीक्ष्णैरभ्यघ्नन् गजयोधिनः।
क्षुरैः क्षुरप्रैर्भल्लैश्च दात्रैरञ्जलिकैस्तथा। चिच्छेद चोत्तमाङ्गानि कुजम्भो दानवोत्तमः। १२११५
शिरोभिः प्रपतद्भिश्च गगनं समपूर्य्यत। अश्मवृष्टिरिवाभाति बाहुभिश्च महाद्रुमैः।
छिन्नोत्तमाङ्गाः स्कन्धेषु गजानां गजयोधिनः। अदृश्यन्त महाराज ताला विशिरसो यथा।
आपतन्तं महानागमंशस्यासुरसत्तमः। विव्याधैकेषुणा क्रुद्धस्ततः स विमुखोऽभवत्।
विगाह्यैवं गजानीकं कुजम्भो दानवोत्तमः। विनिघ्नन् प्रवरान् सैन्यान् गदया गदिनाम्वरः।
एकप्रहाराभिहतान् कुजम्भेन महागजान्। अपश्यन्त सुराः सर्व्वे पर्व्वतानिव पातितान्। १२१२०
कुजम्भस्य च मार्गेषु विशीर्णास्ते महागजाः। वज्राहता इवेन्द्रेण विशीर्णा इव पर्व्वताः।
अमन्यन्त सुरास्तञ्च मूर्त्तिमन्तमिवान्तकं। गन्धादेव व्यशीर्य्यन्त सिंहस्येवेतरे मृगाः।
स भ्रामयंश्च गदां विश्वदुचितां जगशोणितैः। व्यादितास्यो नदन् क्रुद्धो रौद्रं रूपमधारयत्।
यथा हि भगवान् रुद्रः प्रजानां संक्षये पुरा। प्रक्रीडमानो गदया रणमध्ये महासुरः।
गोपाल इव दण्डेन कालयत् स महागजान्। क्रुद्धं कालमिवाकाशे दण्डमुद्यम्य दानवं। १२१२५
अपश्यन्त सुराः सर्व्वे कुजम्भं भीमविक्रमं। हतारोहास्तु तत्रान्ये प्रभिन्ना वारणोत्तमाः।
गदया हन्यमानाश्च वाणैश्च भृशविक्षताः। असहन्तः कुजम्भस्य गदावेगं महाहवे।
स्वान्यनीकानि मृद्नन्तः प्राद्रवन्त महागजाः। महावात इवाभ्राणि विधम्य गदया गजान्।
अतिष्ठत् समरे दैत्यः कालः संवर्त्तको यथा।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः॥२४७॥

॥ वैशम्पायन उवाच ॥ ततः सर्व्वाणि सैन्यानि देवराजस्य शासनात्। अभ्यद्रवन्त दितिजान्नदतो भैरवान्रवान्। १२१३०
तं बलौघमपर्य्यन्तं देवानां सुदुरासदं। रथनागाश्वकलिलं शङ्खदुन्दुभिनादितं।
आपतन्तं सुदुष्पारं रजसा सर्व्वतो वृतं। दैत्यसागरमक्षोभ्यं समुद्रमिव पर्व्वणि।
तदाश्चर्य्यमपर्य्यन्तमक्षोभ्यमिवाद्भुतं। रथनागाश्वकलिलं समुदीर्णं महाबलं।
आवार्य्य तरसा सर्व्वं कुजम्भो बलिनाम्वरः। अतिष्ठत् समरे दैत्यो गिरिर्मेरुरिवाचलः।

अनीकानि कुजम्भस्तु गदया संन्यवारयत् । अनीकिनी कुजम्भेन वारिताऽभून्निरुद्यमा । १११११
तस्मिंस्तथावर्त्तमाने संप्रहारे सुदारुणे । तेषान्तु संप्रहारे वै वर्त्तमाने महात्मनां ।
असिलो मा हरिश्चैव जघ्नतुर्व्वै परस्परं । असिलोमा तु बलवान् संक्रुद्धो दानवाधिपः ।
देवसैन्यस्य सर्व्वस्य धूमकेतुरिवोत्थितः । तमांस्यर्क इवापोहत् सुरसैन्यानि संयुगे ।
सहस्ररश्मिप्रतिमो दानवस्य रथोत्तमः । शरैर्मेघ इवावर्षत् देवानीके प्रतापवान् ।
शरोघैरश्मिभिर्द्दीप्तैः प्रतपन् घोरदर्शनः । रौद्रः क्रूरो दुराधर्षो दुर्व्वार्य्यो ज्वलितोमुखे । १११४०
युध्यते हरिणा सार्द्धं ग्रसमान इव प्रभुः । उग्रेवुरुग्रवदनो स्वदमानो महागजान् ।
सुराणामुत्तमाङ्गानि प्राचिनोत् सुमहाबलः । ग्रसमानः स सैन्यानि शरदंष्ट्रः प्रतापवान् ।
अग्निजिह्वो दुराधर्षस्तापव्यात्ताननोऽसुरः । परश्वधधरः श्रीमान् मृदङ्गापूरितध्वनिः ।
अतिष्ठद्दानवव्याघ्रः संयुगे व्याघ्रवद्बली । मौर्व्वीघोषस्तनयित्नुः शुवत्कपृषतो महान् ।
धनुर्विद्युद्गणाटोपो महामेघ इवापरः । बलौघसागरो घोरो बाहुग्राहो दुरासदः । १११४५
कार्म्मुकोर्म्मितरङ्गौघो वाणावर्त्तमहाह्रदः । गदासिमकरो रौद्रो ज्यावेल. श्रियेयोद्धतः ।
नाराचमीनः सुमहान् गर्ज्जितोत्क्रुष्टघोषवान् । हयान् गजान् पदातांश्च रथांश्च तरसा बहून् ।
न्यमज्जयत संग्रामे परवीरान् शरास्त्रवान् । अस्नापयत देवौघान् दारुणो दानवेश्वरः ।
प्रामर्द्दत युधि श्रीमान्दैत्यश्रेष्ठो महाबलः । अपश्यंस्त्रिदशाः सर्व्वे शुद्धजाम्बूनदप्रभं ।
सन्नद्धं तत्र युध्यन्तं ज्वलन्तमिव पावकं । मध्यन्दिनगतं सूर्य्यं तपन्तमिव तेजसा । १११५०
न शेकुः सर्व्वसैन्यानि दानवं प्रसमीक्षितुं । यथा प्रवृद्धो घर्म्मान्ते दहेत्कक्षं हुताशनः ।
तथा सुरवरान्दैत्यो दहति स्म स्वतेजसा । देवानां दानवानाञ्च बलं नर्द्दति दारुणं ।
विमूढमभवत्सर्व्वमाकुलञ्च समन्ततः । तत शूरा बलोदग्रा हस्त्यश्वरथधूर्गताः ।
आर्य्यां बुद्धिं समास्थाय न त्यजन्ति महाहवं । तदुत्पिञ्जलकं युद्धमभवद्रोमहर्षणं ।
देवदानवयोर्घोरं रुधिरस्रावकर्द्दमं । न दिशः संप्रजानन्ति भयत्रासनिपीडिताः । १११५५
शस्त्रघातांश्च विविधान्दानवानां महारणे । अन्योन्यं मूढचित्तास्ते निजमूर्च्छाकुलीकृताः ।
स्वान् परान्नाभ्यजानन्त विमूढाः शस्त्रतेजसा । शिरोरुहेषु संगृह्य कश्चिच्छूरस्य संयुगे ।
शूरश्छिनत्ति मूर्द्धानं सन्दष्टौष्ठपुटाननः । बाहुभिर्मुष्टिभिश्चैव वज्रकल्पैः सुदारुणैः ।
प्रहरन्ति रणे वीरा न्यस्तशस्त्राः परस्परं । योधप्राणहरे रौद्रे स्वर्गद्वारविघट्टने ।
सङ्कुले तुमुले युद्धे वर्त्तमाने भयावहे । हयो हयं गजो नागं वीरो वीरं महाहवे । १११६०
अभिदुद्राव वेगेन व्यहनच्चैवमन्तिकात् । असुराश्च सुराश्चैव विक्रमाढ्या महारथाः ।
उत्सृजन्तो रणे प्राणान्निजघ्नुरितरेतरं । मुक्तकेशा विकवचा विरथाश्छिन्नकार्म्मुकाः ।
हस्तैः पादैरयुध्यन्त दानवास्त्रिदशैः सह । हरिस्तु निशितं भल्लं प्रेषयामास संयुगे ।
स तस्य धनुषः कोटिं छित्त्वा भूमावपातयत् । पुनश्चापि शुवत्कानां शतानि नतपर्व्वणां ।

प्राहिणोत्सहसा तस्य दानवेन्द्रस्य संयुगे । तस्य देहे विमुक्तास्ते मारुतेन समीरिताः । ११६६५
मग्नार्द्धकाया विबभुः पन्नगा इव पर्व्वते । स तैर्निपातितैर्गात्रैः क्षरद्भिरसृगव्ययं ।
बभौ दैत्यो महाबाहुर्भोद्गांतुमिवोत्सृजन् । ततोऽसिलोमा संक्रुद्धः प्रगृह्यान्यन्महद्धनुः ।
रुक्मपुङ्खांश्च निशितान् प्रेषयामास सायकान् । तैश्च मर्म्मसु विव्याध सर्पानलविषोपमैः ।
गात्रं सञ्छादयामास महाभ्रैरिव पर्व्वतं । भूयः सन्धाय स शरं सुमोघान्तकसन्निभं ।
सुपुङ्खं सूर्य्यसङ्काशं वाणमप्रतिमं रणे । तेन विद्धः स वाणेन संयुगे भीमकर्म्मणा । ११६७०
मुमोह सहसा देवो भूमौ च निपपात ह । ततो हाहाकृतं सर्व्वं देवे भूतलमाश्रिते ।
जगत्सदेवमाविग्नं यथाऽर्कपतने तथा । परिवारांस्तु समरे जघानास्य महासुरः ।
एकत्रिंशत्सहस्राणि योधानां दानवोत्तम । जयश्रिया सेव्यमानो दीप्यमान इवानलः ।
प्रगृह्य कार्म्मुकं घोरं गतः शक्ररथं प्रति । तत्रैव तु महायुद्धे ससैन्यावश्विनावुभौ ।
प्रयुद्धौ सह वृत्रेण बलिना देवतारिणा । वाणखड्गधनुष्पाणिः समरे त्यक्तजीवितः । ११६७५
आसाद्य सोऽश्विनौ वृत्रः स्थितो गिरिरिवाचलः । ततः शङ्खमुपाध्माय द्विषतां लोमहर्षणं ।
ज्याघोषतलनिर्घोषैः सर्व्वभूतान्यमोहयत् । ततः संहृष्टरोमाणः शङ्खशब्दं विशुश्रुवुः ।
सचराचरदेवौघास्त्रस्तार्णवसमस्वनं । गदापरिघनिस्त्रिंशशक्तिशूलपरश्वधाः ।
प्रगृहीता व्यराजन्त सचराचरबाहुभिः । तैः प्रमुक्तान्महाकायैः शूलशक्तिपरश्वधान् ।
भल्लैर्वृत्रः प्रचिच्छेद भीमवेगरवैस्तथा । सोऽन्तरीक्षचराणाञ्च भूमिष्ठानाञ्च गर्ज्जतां । ११६८०
शरैर्विव्याध गात्राणि देवानां प्रियदर्शनः । वृत्रासुरभुजोत्सृष्टैर्वज्रभिर्यैवरत्नपां ।
निकृत्तान्येव दृश्यन्ते शरीराणि शिरांसि च । अथ रक्तमहावृष्टिरभ्यवर्षत मेदिनी ।
गदापरिघभिन्नानां देवानां गात्रसम्भवा । प्रच्छाद्यमानं देवौघैर्वृत्रं भीमपराक्रमं ।
ददृशुः सर्व्वभूतानि सूर्य्यमभ्रगणैरिव । स रश्मिभिरिवादित्यः प्रतपन् सर्व्वदेवताः ।
अविध्यद्बलवान् क्रुद्धः सायकैर्म्मर्म्मभेदिभिः । नदतो विविधान्नादानर्द्दितस्यापि सायकैः । ११६८५
न मोहमसुरेन्द्रस्य ददृशुस्त्रिदशा रणे । तेऽसिशक्तिगदाभिश्च परिघप्रासतोमरैः ।
परश्वधैस्त्रिशूलैश्च प्रववर्षुर्महारयाः । ततो वृत्रः सुसंक्रुद्धस्तदाऽभ्यर्द्दितो बली ।
अभ्यवर्षच्छितैर्वाणैस्तान् सर्व्वान् सत्यविक्रमः । ते वै विप्रकृता देवा विप्रकीर्णमहायुधाः ।
घोरमार्त्तस्वरं चक्रुर्वृत्रासुरभयार्द्दिताः । उत्सृज्य ते गदाशक्तिशूलासिपरशून् रणे ।
उत्तरां दिशमाजग्मुस्त्रासिता दृढधन्वना । ततः शूलगदापाणिर्व्यूढोरस्को महाभुजः । ११६९०
प्रावलात रणे दैत्यस्त्रासयन् सचराचरं । तत्रैकस्तु महाबाहुरग्नी शूलधरः प्रभुः ।
अभ्यधावत दैत्येन्द्रं वृत्रमप्रतिमं रणे । गृहीतचापो वेगेन प्रभिन्न इव वारणः ।
वक्षस्यनेकैस्त्रिभिः स शरैर्विव्याधासुरसत्तमं । सोऽतिविद्धो महेष्वासो वृत्रः परनकोपनः ।
गदां जग्राह बलवान् गदायुद्धविशारदः । तां प्रगृह्य गदां भीमामद्रिसारमयीं दृढां ।

अश्विनं सहसागम्य ताडयामास वीर्यवान्। दीप्यमानं ततः शूलमश्वी सुविपुलं दृढं। ११६९५
प्राहिणोद्वृत्रदैत्याय समरे लोमहर्षणं। भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविशारदः।
अश्विनं सहसाऽभ्यर्च्छद्दुरात्मानिव पन्नगं। सोऽन्तरीक्षं समुत्पत्य विधूय महतीं गदां।
नासत्योरपि चिक्षेप गिरिशृङ्गोपमां बली। गदयाऽभिहतोऽथाश्वी त्यक्त्वा शूलमनुत्तमं।
प्रययौ सहसा तत्र यत्रायुध्यत वासवः। पराजित्य तु संग्रामे सोऽश्विनं भीमविक्रमं।
जयश्रिया सेव्यमानो वृत्रो युद्धे व्यवस्थितः। ११७००
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे अष्टचत्वारिंशदधिकद्विशततोऽध्यायः॥२४८॥
॥ वैशम्पायन उवाच ॥ तत्रैव सुमहायुद्धे रणाजिर्द्दैवसत्तमः। युध्यते सह दैत्येन एकचक्रेण धीमता।
प्रच्छाद्य रथपन्थानमुल्कोग्रन्तं महारवं। एकचक्रस्य सैन्यन्तु शरवर्षैरवाकिरत्।
महासुरा महावीर्य्या महापट्टिशयोधिनः। शूलानि च भुशुण्डीश्च क्षिपन्ति स्म महारणे।
तच्छूलवर्षं सुमहद्गदाशक्तिसमाकुलं। अश्विवं दितिजैर्मुक्तं दुर्निवार्य्यं चराचरैः।
अन्योन्यमभ्यवर्त्तन्त देवासुरगणा युधि। महाद्रिशिखराकारा वीर्य्यवन्तो महारथाः। ११७०५
शतं शताश्च तुरगास्तस्य युक्ता महारथे। महासुरवरस्येव हिरण्यकशिपोर्युधि।
तेषां चरणपातेन चक्रनेमिस्वनेन च। तस्य बाणनिपातैश्च हता वै शतशः सुराः।
ततः स लघुभिश्चित्रैः शरैः सन्नतपर्व्वभिः। आयुधान्यच्छिनत् क्रुद्धः शतशोऽथ सहस्रशः।
बध्यमानाः शरैस्तीक्ष्णैरथद्विरदवाजिनः। गमिताः प्रलयं केचिच्छिद्रैर्नावा रणे।
ततः प्रक्षीयमाणांस्तानुपलभ्य दितेः सुताः। त्यक्त्वा प्राणान् न्यवर्त्तन्त प्रगृहीतशरासनाः। ११७१०
ते दिशो विदिशश्चैव प्रतिरुध्य प्रहारिणः। अभ्यघ्नन्निशितैः शस्त्रैर्द्देवान्दितिसुता रणे।
रणाजिर्ज्वलितं घोरं परमं तिग्मतेजसं। मुमोचास्त्रं महाबाहुर्मथनं नाम संयुगे।
ततः शस्त्राणि शूलानि निशितानि सहस्रशः। अस्त्रवीर्य्येण महता दितिजः संप्रचिच्छिदे।
छित्त्वा शूलांश्च तान् सर्व्वानेकचक्रो महासुरः। प्रत्यविध्यत तं सार्धं दशभिर्निशितैः शरैः।
अस्त्रवेगं निहत्यैवं सोऽस्त्रैस्तस्यानु सैनिकान्। ज्वलितैरपरैः शीघ्रैस्तानविध्यत् सहस्रशः। ११७१५
तेषां छिन्नानि गात्राणि विसृजन्ति स्म शोणितं। पादपैवातिदृष्टानि शृङ्गाणि धरणीभृतां।
इन्द्राग्निसमसंस्पर्शैर्वेगवद्भिरजिह्मगैः। दितिजैर्बध्यमानाश्च विनेशुः सुरसत्तमाः।
एकचक्रो रणे तिष्ठन्नपश्यद्गजयूथपान्। वराभरणनिर्ह्रादान् समुद्रस्तनितस्वनान्।
मत्तान् सुकल्पितान् दृप्तान्महामात्रैरधिष्ठितान्। कुलीनान् वीर्य्यसम्पन्नान् प्रतिद्विरदघातिनः।
शिक्षितान् गजशिक्षायामैरावणसमान् युधि। न्यहनत् परसैन्यस्य गजान् गज इवासुरः। ११७२०
विचरन्तो महानागान् भीमरूपांस्त्रिधा मदं। मेघस्तनितनिर्घोषान् महाद्रीनिव चोच्छ्रितान्।
सहस्रशस्थितान् दिव्यान् जाम्बूनदपरिष्कृतान्। सुवर्णजालैर्विततांस्तरुणादित्यवर्चसः।
एकचक्रो गदापाणिर्बलवान् गदिनाम्बरः। उत्सारयामास गजान् महाभ्राणीव मारुतः।

विश्रुतस्त्रिषु लोकेषु क्रोधात्मा अज एकपात्। तत्तयोस्तुमुलं युद्धं सुमहल्लोमहर्षणं।
आसीत् प्रतिभयं रौद्रं वीराणां जयमिच्छतां। देवदानवदेहैस्तु दुस्तरा कोश्रमादला। ११९५५
शरीरसंघातवहा प्रसृता लोहितापगा। निजघानासुरं क्रुद्धो रुद्रो रौद्राकृतिः प्रभुः।
राजं शतमुखं युद्धे शत्रुसैन्यविदारणं। तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिं।
जघान समरे श्रीमान् क्रुद्धो दैत्यस्य सायकैः। तस्य पारिषदो ह्येको रथशक्त्या महाबलः।
विभेद समरे हृष्टो दानवं तं स्तनान्तरे। विभिन्नगात्रो रुद्रेण तथा पारिषदैरपि।
रुद्रस्य रथमायान्तं राजद्दानवसत्तमः। प्रममाथ तलेनाशु सहसा क्रोधमूर्च्छितः। ११९६०
भिन्नगात्रः शरैस्तीक्ष्णैः स रुद्रममितौजसं। रुद्रपारिषदांश्चापि जघानाशु पराक्रमी।
सृजन्तं शरवर्षाणि दानवं घोरदर्शनं। विभेद समरे रुद्रो बाणैः सन्नतपर्व्वभिः।
वर्त्तमाने तथा रौद्रे संग्रामे लोमहर्षणे। रुधिरौघप्रवाहिन्यो महानद्यः प्रसुस्रुवुः।
दानवः समरे रुद्रं नीलाञ्जनचयोपमः। निर्विभेद शरैस्तीक्ष्णैर्महं सूर्य्यं इवांशुभिः।
हतैर्दानवमुख्यैस्तु शूलशक्तिपरश्वधैः। पतितैः पर्व्वताभैश्च दानवैः कामरूपिभिः। ११९६५
वर्त्तमाने महाघोरे संग्रामे लोमहर्षणे। महाभेरीमृदङ्गानां पणवानां तथैव च।
शङ्खानां पटहानाञ्च सम्बभूव महास्वनः। हतानां स्वनतां तत्र दैत्यानाञ्चापि निस्वनः।
देवानाञ्च तथा तत्र शुश्रुवे दारुणो महान्। तुरङ्गमखुरोत्कीर्णं रथनेमिसमुद्धतं।
रुरोध मार्गं योधानां चक्षूंषि च धरारजः। शस्त्रपुष्पोपहारा सा तत्रासीद्युद्धमेदिनी।
दुर्दर्शा दुर्विगाह्या च मांसशोणितकर्द्दमा। भल्लैः खड्गैर्गदाभिश्च शक्तितोमरपट्टिशैः। ११९७०
अपविद्धैश्च शतशो रथैः सांग्रामिकैर्हतैः। निहतैः कुञ्जरैश्चैव तथा विदशदानवैः।
चक्राक्षयुगशस्त्रैश्च भग्नैरवनिमाश्रितैः। बभूवायोधनं घोरं दिग्धिताशनसङ्कुलं।
उत्थितुश्च कबन्धानि दिक्षु सर्व्वासु संयुगे। अन्योन्यसङ्कुवीराणां शूराणां जयमिच्छतां।
संप्रहारस्तदा युद्धे वर्त्तते स्म भयङ्करः। सैन्यानां संप्रयुद्धानां शूराणामनिवर्त्तिनां।
अजस्य चैकपादस्य राहोश्चैव महात्मनः। तेषान्तु तत्रापततां सैन्यानामतिनिस्वनः। ११९७५
उद्वर्त्ततामन्तकाले समुद्राणामिव स्वनः। तथैकस्तु स धृष्टो भीमो रुद्रो महाबलः।
विभेद केशिनं शतधा गदापट्टिशशूलभृत्। घोरा नानाप्रहरणा भीमाक्षा भीमदर्शनाः।
निष्पेतुरुग्रदर्पिता महापारिषदास्तथा। रथमास्थाय स श्रीमांस्तप्तकाञ्चनकुण्डलः।
दानवैः संवृतः केशी युध्यते युधि दुर्ज्जयः। तस्य संग्रामशौण्डस्य संग्रामेपि युयुत्सतः।
निष्पेतुरुग्रवीर्य्यस्य ज्वालाः प्रविततो मुखात्। स तु सिंहाञ्चितस्कन्धः शार्दूलसमविक्रमः। ११९८०
महाजलदसंकाशो मृदङ्गसमनिस्वनः। तस्य निष्पतमानस्य दानवैः संवृतस्य वै।
बभूव सुमहानादः क्षोभयंस्त्रिदिवं तदा। तेन शब्देन वित्रस्ता त्रिदशानां महाचमूः।
द्रुमशैलप्रहरणा योद्धुमेवाभ्यवर्त्तत। तेषाञ्च देवदैत्यानां युयुत्सूनां परस्परं।

सन्निपात. सुतुमुलो रौद्रो लोकभयावहः। तेषां युद्धं महाघोरं संजज्ञे लोमहर्षणं।
देवदानवसंघानां प्राणांस्त्यक्त्वा महाहवे। सर्व्वे ह्यतिबला: शूरा: सर्व्वे पर्व्वतसन्निभा:। १२८८५
सर्व्वे सर्व्वास्त्रविद्वांस: सर्व्वे सर्व्वायुधोद्यता:। त्रिदशा दानवाश्चैव परस्परजिघांसवः।
तेषां विनदतां शब्द: संयुगे मेघनिस्वन.। शुश्रुवेऽतिमहाघोरस्त्रस्थावरकम्पन.।
रेणुश्चारुणसङ्काश: सुभीम, समपद्यत। उद्धूतो देवदैत्यौघै: संरुरोध दिशो दश।
अन्योन्यं रजसा तेन कौशेयारुणपाण्डुना। संवृता बहुरूपेण ददृशुर्नैव संयुगे।
न ध्वजो वा पताका वा न वर्म्म तुरगोऽपि वा। आयुधं स्यन्दनो वाऽपि ददृशे नैव सारथि:। १२८९०
स शब्दस्तुमुलस्तेषामन्योन्यमभिधावतां। श्रूयते तुमुले युद्धे न रूपाणि चकाशिरे।
दानवा एव संरब्धा दानवान् जघ्नुराहवे। त्रिदशांस्त्रिदशाश्चापि निजघ्नुस्तुमुले तदा।
ते परांश्च विनिघ्नन्त: स्वांश्च युद्धे सुरासुरा:। रुधिरार्द्रां तथा चक्रुर्मेदिनीन्ते सुरासुरा:।
ततस्तु रुधिरौघेण सिक्तं स्वदितं रज.। शरीरशतसंकीर्णो बभूव स महारण:।
शूलशक्तिगदाखड्गपरिघप्रासतोमरै:। त्रिदशा दानवाश्चैव जघ्नुरन्योन्यमाहवे। १२८९५
साङ्गभि: परिघाकारैर्निघ्नन्त: पर्व्वतैस्तथा। रुद्रपारिषदा: सर्व्वे सूदयन्ति स्म दानवान्।
रुद्रपारिषदांश्चैव महाद्रुमसहस्रभि। निजघ्नु. समतिक्रम्य शरैश्चासाद्य दानवा.।
एतस्मिन्नन्तरे क्रुद्ध. कोधो दानवसत्तम:। संग्रमहर्षी घोर: स स्वान्यनीकानि हर्षयन्।
तेषां परमसंक्रुद्धो वज्रमस्त्रमुदैरयत्। वज्रेणास्त्रेण दिव्येन दैत्येन सुमहात्मना।
महापारिषदा: सर्व्वे हता युधि सुदुर्ज्जया:। वज्रास्त्रपीडिता भ्रान्ता रुद्रपारिषदा युधि। १२९००
विप्रकीर्णद्रुमा: पेतु: शैला वज्रहता इव। एवं तत्तुमुलं युद्धमभवल्लोमहर्षणं।
केशिन. सह रुद्रेण तदद्भुतमिवाभवत्।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामनप्रादुर्भावे देवासुरयुद्धे ऊनपञ्चाशदधिकद्विशततोऽध्याय:। २४९॥

॥ वैशम्पायन उवाच॥ वृषपर्व्वा तु दैत्येन्द्रो विश्वमद्भुतविक्रमं। निष्कुम्भं योधयामास लोहितार्कसमद्युति।
क्रोधमूर्च्छितवक्त्रस्तु धुन्वन् परमकार्म्मुकं। ध्वजिनो भिद्य शत्रूणां सारथिं त्वरितोऽब्रवीत्।
अत्रैव तावत्त्वरित नय मे सारथे रथं। एते हि देवा. सहिता घ्नन्ति न: समरे बलं।
एतानिहन्तुमिच्छामि समरश्लाघिनो रणे। एतैर्हि दानवानीके कृतं छिद्रमिदं महत्।
तत: प्रजवितश्वेन रथेन रथिनाम्वर:। शरौघमसृजत् क्रुद्ध. शरजालैर्भृशं सुर:।
न स्थातुं देवता. शक्ता: किं पुनर्योद्धुमाहवे। वृषपर्व्वेषुभिर्भिन्ना: सर्व्वे एवाभिदुद्रुवुः।
तान्मृत्युवशमापन्नान् दैवस्तुतवशङ्गतान्। समीक्ष्य भ्रातॄन्निष्कुम्भस्त्वरितश्च महाबल:।
दृष्ट्वा तं तत्र निष्कुम्भं सर्व्वे त्रिदशसत्तमा:। समेत्य सहिता. सर्व्वे तं द्रुतं पर्य्यवारयन्। १२९०५
व्यवस्थितञ्च निष्कुम्भं दृष्ट्वा ते त्रिदशोत्तमा:। बभूवुर्बलवन्तो वै तस्यास्त्रबलाश्रया।
वृषपर्व्वा तु वेगाच्च निष्कुम्भं समरे स्थितं। महेन्द्र इव धाराभि: शरवर्षैरवाकिरत्।

अचिन्तयित्वा वाणांस्तान् शरीरे पतितान् बहून् । स्थितस्त्वग्रमुखे श्रीमान् ससैन्यः स महाबलः ।
संप्रहृष्य महातेजा वृषपर्व्वाणमाहवे । अभिदुद्राव वेगेन कम्पयन्निव मेदिनीम् ।
तस्य त्वाधावमानस्य दीप्यमानस्य तेजसा । बभूव रूपं दुर्द्धर्षं दीप्तस्येव विभावसोः । ११०१८
रथं त्यक्त्वा स तु श्रीमान् सक्रोधः कमलेक्षणः । वृक्षमुत्पाटयामास महाशाखं महाद्रुमं ।
ततश्चिक्षेप तं वृक्षं निष्कुम्भुर्वृषपर्व्वणः । तं गृहीत्वा महावृक्षं पाणिनैकेन दानवः ।
विनद्य सुमहानादं भ्रामयित्वा च वीर्य्यवान् । सगजांश्च गजारोहान् सरथान् रथिनस्तदा ।
जघान दानवस्तेन शाखिना त्रिदशांस्तथा । तमन्तकमिव क्रुद्धं समरे प्राणहारिणं ।
वृषपर्व्वाणमासाद्य त्रिदशा विप्रदुद्रुवुः । तमापतन्तं संक्रुद्धं त्रिदशानां भयावहं । ११०१०
ददर्श वीरो निष्कुम्भुश्चुकोप च ननाद च । स तत्र निशितैर्वाणैस्त्रिंशता मर्म्मभेदिभिः ।
निर्व्विभेद महावीर्य्यो निष्कुम्भुर्दानवाधिपं । दैत्यानामथ निष्कुम्भुः शरशक्तिभिरर्द्दितः ।
विद्धः समरमूर्द्धस्थो, रुधिरं प्रास्रवद्बहु । उद्विग्ना मुक्तकेशाश्च भग्नदर्पा. पराजिताः ।
श्वसन्तो दुद्रुवुः सर्व्वे भयादेव वृषपर्व्वणः । अन्योन्यं समसन्युक्ते त्रासिता वृषपर्व्वणा ।
पृष्ठतस्त्रासंमूढाः प्रेक्षमाणा मुहुर्मुहुः । त्यक्तप्रहरणाः सर्व्वे कृतास्ते वृषपर्व्वणा । ११०२५
संग्रामे युद्धशौण्डेन तदा निष्कुम्भुसैनिकाः । तत्रैव तु महावीर्य्यः प्रह्लादः कालमाहवे ।
योधयामास रक्ताक्षो हिरण्यकशिपोः सुतः । तस्य दानववीरस्य युद्धकाले जयक्रियाः ।
चकार त्वरया युक्तो भार्गवो विजयावहाः । कृताग्नेः तर्पयतो ब्राह्मणांश्च नमस्यतः ।
आज्यगन्धं प्रतिवहन् मारुतः सुरभिर्व्ववौ । स्रजश्च विविधाकारा जयार्थमभिमन्त्रिताः ।
प्रह्लादस्य शुभे मूर्द्ध्नि आबबन्धोशना स्वयं । कालेन सह संग्रामे प्रयुद्धस्य महात्मनः । ११०३०
प्रह्लादस्यातिवीर्य्यस्य शान्तिश्चक्रे स भार्गव. । दश शिष्यसहस्राणि भार्गवस्य महात्मनः ।
यानि दानवमुख्यानां जेपुः शान्तिमनुत्तमां । अथर्व्वाणमयी दिव्यं ब्रह्मसंस्तवचोदितं ।
रणभेषप्रदृश्यं कर्म्म वैजयिकं कृतं । तत. सर्व्वास्त्रविद्वांसः समरेष्वनिवर्त्तिनः ।
विद्याव्रतसमायुक्ताः कृतस्वस्त्ययनक्रियाः । धनुर्हस्ताः कवचिनो वेगेनाप्लुत्य दानवाः ।
बलिप्रभृत्यो राजानं प्रह्लादं पर्य्यवारयन् । आस्थाय दिव्यं विपुलं रथं परमयावृतं । ११०३५
नानाप्रहरणाकीर्णं सचक्रमिव पर्व्वतं । तद्बभूव मुहूर्त्तेन च्छेदिताश्वोत्थिताकुलं ।
मेरोः शिखरमापूर्णं द्यौरिवाम्बुधरागमे । स्रजः पद्मपलाशानामामुच्य सुविभूषिताः ।
बान्धवान् संपरिष्वज्य संपतन्ति रणप्रियाः । महायुधधरः श्रीमान् शुभवर्म्मधरः प्रभुः ।
शतनुचरिरस्यापि धन्वी परमदुर्ज्जयः । सिंहशार्दूलदृप्तानां नदतां किङ्किणीकिनां ।
तस्य सैन्यसहस्राणि प्रयान्त्यग्रे महारणे । सैन्यपद्मगतास्तस्य रथाः परमदुर्ज्जयाः । ११०४०
सप्ततिर्न्ने महाभाग गजास्तावन्त एव च । मध्ये व्यूहोदरस्थस्तु कालनेमिर्महासुरः ।
धनुर्विस्फारयन् घोरं ननाद प्रजहास च । तस्मिन् शतसहस्राणि पुरो यान्ति महायुधे. ।

दानवानां बलवतां शक्रप्रतिमतेजसां। स समं वर्द्धमानश्च पञ्चाशद्यो जनान् विस्तृतो महान्।
अभवद्दानवव्यूहो दुर्भेद्यः सर्व्वदैवतैः। ततः शतसहस्राणि दानवानां धनुर्भृतां।
नानाप्रहरणानाञ्च परिमाणं न विद्यते। गदापरिघनिस्त्रिंशशूलपट्टिशमुद्गरैः। ११९४५
प्रगृहीतैर्व्यराजन्त दानवाः पर्व्वता इव। गर्ज्जन्तो विनदन्तश्च विक्रोशन्तश्च दानवाः।
अयुध्यन्त महावीर्य्याः समरेष्वनिवर्त्तिनः। ततस्तूर्य्यसहस्राणां संजज्ञे निस्वनो महान्।
हयानाञ्च गजानाञ्च गर्ज्जतामतिवेगिनां। दुन्दुभीनाञ्च निर्घोषः पर्ज्जन्यनिनदोपमः।
प्रदुर्बभौ शङ्खशब्दश्च पटहानाञ्च निस्वनः। तेन शङ्खनिनादेन भेरीतूर्य्यरवेण च।
निर्घोषेण रथानाञ्च क्षोभतीव नभस्तलं। सागरप्रतिमौघेन बलेन महता वृतः। ११९५०
प्रह्लादोऽयुध्यत क्रुद्धः कालान्तकयमोपमः। तस्य नादेन रौद्रेण घोरेणाप्रतिमौजसः।
विनेदुः सर्व्वभूतानि त्रैलोक्यविक्रते खगैः। अन्तरीक्षात् पपातोल्का वायुश्च परुषो ववौ।
वमन्त्यः पावकं घोरं शिवाश्चैव ववाशिरे। प्रह्लादस्तु महावीर्य्यः प्रहसन् युद्धदुर्म्मदः।
उवाच वचनं श्रीमांस्तत्कालसममुत्तमं। अद्याहं दर्शयिष्यामि स्वबाहुबलमूर्ज्जितं।
अद्य मद्बाणनिहतान् देवान् द्रक्ष्यथ संयुगे। बान्धवा निहता येषां त्रिदशैरिह सङ्गरे। ११९५५
अद्य ते निर्व्वपिष्यन्ति शत्रुमांसानि दानवाः। इममद्य समुद्धूतं रेणुं समरमूर्द्धनि।
अहं संशमयिष्यामि शत्रुशोणितविस्रवैः। तिमिरौघहतार्कञ्च सैन्यरेणुहतीकृतं।
आकाशं संपतिष्यन्ति खद्योता इव मे शराः। दृष्टाः संपरिमोदध्व देवेभ्यस्त्यज्यतां भयं।
अद्याहं निहनिष्यामि कालेन्द्रं धनुषा रणे। तोषयिष्यामि राजानं बलिं बलवतां वरं।
विद्मान् समरे जित्वा वायैरन्तकसन्निभैः। अक्षयाः सन्ति मे तूणाः शराश्चाशीविषोपमाः। ११९६०
ख्यातं मे पुरतः शक्राः के रणे जीवितेप्सवः। हत्वा रिपुगणांस्तुष्टिरतुराशाश्च राजसु।
हतस्य त्रिदिवे वासो नास्ति युद्धसमा गतिः। ते भयं प्रहतः कृत्वा रणे दानवसत्तमाः।
निहत्येमानरीन् सर्व्वान् मोदध्वं नन्दने वने। एवमुक्त्वा महासैन्यं प्रह्लादो दानवोत्तमः।
कालस्य समरे सैन्यं तरसा ऽमर्द्दतासुरः। सर्व्वास्त्रविच्च शूरश्च नित्यञ्चाप्यपराजितः।
युद्धेष्वभिमुखो नित्यं स्वबाहुबलदर्पितः। षष्टीरथसहस्राणि विविधायुधधारिणां। ११९६५
प्रह्लादस्यातिवीर्य्यस्य ये तस्य तनया निजाः। तैस्तु क्रतुशतैरिष्टं विपुलैराप्तदक्षिणैः।
शान्ता धर्म्मपरा नित्यं नित्यं व्रतपरायणाः। दातारः प्रियवक्तारो वक्तारः शास्त्रवत्सु।
स्वदारनिरता दान्ता ब्रह्मण्याः सत्यसङ्गराः। यष्टारः क्रतुभिर्नित्यं नित्यञ्चाध्ययने रताः।
इष्वस्त्रकुशलाः सर्व्वे बहुशो दृढविक्रमाः। मत्तवारणविक्रान्ताः शत्रुसैन्यविमर्द्दकाः।
ईरयन्तः पदाघातैः सुघोरान् वातरेचकान्। युद्धोत्सुकधियो नित्यं क्रोधरक्तितलोचनाः। ११९७०
सन्दष्टौष्ठपुटा दैत्या विनेदुर्भीमविक्रमाः। क्ष्वेडितास्फोटितरवैर्द्धर्षयन्त परस्परं।
रेणुशङ्खरवैश्चैव सिंहनादैश्च पुष्कलैः। आशुत्याशुत्य सहसा रणे वसुरनेकशः।

तालमात्राणि चापानि विकृष्य सुमहाभुजाः । अमृष्यमाणाः सहसा दनवा बाणपाणयः ।
सुरासुरैरप्यजितं योधयन्ति रणेऽन्तकं । प्रतप्तहेमाभरणाः सर्व्वे ते श्वेतवाससः ।
दानवा मानिनः सर्व्वे सर्व्वे स्वर्गाभिकाङ्क्षिणः । सर्व्वे जयैषिणो वीराः सर्व्वे शत्रुवधोद्यताः । १२०६५
शुशुभे सा चमूर्दृप्ता पताकाध्वजमालिनी । गजाश्वरथसम्बाधा स्वर्गमार्गाभिकाङ्क्षिणी ।
ततः कालस्तु निर्यातो भीमो भीमपराक्रमः । विनदन् सुमहाकायो व्याधिभिर्ब्बहुभिर्वृतः ।
ददर्श महतीं सेनां दानवानां बलीयसां । अभिसंजातहर्षाणां कालं समभिगर्ज्जतां ।
आपतन्तं तदाऽनीकं दानवानां तरस्विनां । प्रतिलोमं चकाराशु व्याधिभिः सहितोऽन्तकः ।
प्रविश्य ध्वजिनीञ्चैषां घातयामास वीर्य्यवान् । कालो रुधिररक्ताक्षः स्वेनानीकेन संवृतः । १२०७०
प्रह्लादबलमत्युग्रं प्रह्लादञ्च महासुरं । आजघान रणे कालो दण्डमुद्गरपट्टिशैः ।
शरशक्त्यृष्टिखड्गांश्च शूलानि मुषलानि च । गदाश्च परिघांश्चैव विचित्रांश्च परश्वधान् ।
धनूंषि च विचित्राणि शतघ्न्यश्च स्थिरायसाः । पात्यन्ते व्याधिभिर्युद्धे दानवानां चमूमुखे ।
बहवो व्याधयो युद्धे बहूनसुरपुङ्गवान् । व्याधीनपि च दैत्यौघा निजघ्नुर्ब्बहवो बहून् ।
शूलेन मथिताः केचित् केचिच्छिन्नाः परश्वधैः । परिघैराहताः केचित् केचिच्च परमायुधैः । १२०७५
केचिद्द्विधाकृताः खड्गैः स्फुरन्तः पतिता भुवि । व्याधयो दानवैरेवं नानाशस्त्रैर्व्विदारिताः ।
ते चापि व्याधिभिः सर्व्वे विविधैरायुधोत्तमैः । खड्गैश्च विमलैस्तीक्ष्णैः प्रासतोमरमुद्गरैः ।
विभिन्ना दानवाः शूलैर्निकृत्ताश्च परश्वधैः । मुद्गरैः पट्टिशैश्चैव व्याधिभिश्च हता भृशं ।
चताः शस्त्रैरनेकैश्च मुष्टिभिश्च हता भृशं । वेमुः शोणितमत्यर्थं विस्पष्टदशनेक्षणाः ।
आर्त्तस्वरश्च नदतां सिंहनादश्च गर्ज्जतां । बभूव तुमुलः शब्दः संग्रामे लोमहर्षणः । १२०८०
मुष्टिभिश्चोत्तमाङ्गानि तलैर्गात्राणि चासकृत् । सादितानि महौ जग्मुस्तिष्ठतामेव संयुगे ।
वसाफेना ध्वजावर्त्ता छिन्नबाहुमहोरगा । शूलशक्तिमहामत्स्या चापग्राहसमाकुला ।
रथशैलसम्बाधा ध्वजद्रुमसमावृता । सशब्दघोरविस्तारा लोहितोदाऽभवन्नदी ।
स्वधतुः शक्रधनुषो काञ्चनाङ्गदविद्युतो । तौ दैत्यकालजलदौ शरधारां ववर्षतुः ।
तौ महामेघसङ्काशौ रथनागगतौ तदा । बभूवतुरतिक्रुद्धौ साम्बुगर्भाविवाम्बुदौ । १२०८५
तप्तकाञ्चनसन्नाहौ दिव्यहारविभूषितौ । तौ विरेजतुरायस्तौ सूर्य्यवैश्वानराविव ।
तौ महाचलसंकाशावन्योन्यस्य चमूं तदा । वज्राशनिसमस्पर्शैर्बाणैर्ज्जघ्नतुराहवे ।
परस्परं समासाद्य तयोर्युधि दुरासदे । नाशंसन्त तदा योधा जीवितान्यपि संयुगे ।
शरनिर्भिन्नसर्व्वाङ्गा युधि प्रक्षीणजीविताः । निपेतुर्योधमुख्यास्तु रुधिरोक्षितवक्षसः ।
पतितैर्निपतद्भिश्च पात्यमानैश्च संयुगे । बभूव भूः समाकीर्णा योधैरुद्धतजीवितैः । १२०९०
न त्यजतोः शरान् घोरान् न च सन्दधतोस्तथा । अन्तरं ददृशे कश्चित् प्रयत्नादपि संयुगे ।
लघुत्वाच्च महाबाहू युद्धशौण्डौ महाबलौ । मण्डलीकृतचापौ तु सकृदेव बभूवतुः ।

प्रह्रादस्य तु वाणौघैर्द्रुद्रावान्तकवाहिनी । तुद्यमाना बलवता वायुनेवाभ्रमण्डलं ।
हतदर्पन्तु विज्ञाय प्रह्राद. कालमाहवे । अपयातश्च समरादिवसं संप्रतर्क्य तं ।
मत्वा वशगतञ्चैव प्रह्रादो युद्धदुर्म्मदः । तच्चैवान्यां चमूं भूय. प्रामर्द्दत महासुरः । ११८०५
कालप्रह्रादयोर्युद्धमभवद्यादृशं तदा । तादृश सर्व्वभूतेषु न भूतं न भविष्यति ।
एवमद्भुतवीर्य्यौजा महारणकृतश्रम । प्रह्रादः परिखिन्नोऽत्र कालस्तपसतो रणात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे पञ्चाशदधिकद्विशततोऽध्यायः ॥ २५० ॥
॥ वैशम्पायन उवाच ॥ अनुह्रादो धनाध्यक्षं प्रह्रादस्यानुजो बली । सर्व्वैर्योधयामास क्षोभयन् यक्षवाहिनीं ।
महता च बलौघेन अनुह्रादः सुरोत्तमं । अर्द्दयामास संक्रुद्धो धनाध्यक्षं प्रतापवान् ।
अर्द्द्यमाणस्त्विराशानाद्दवस्य नुदायुधान् । चकार कदनं घोरं धनुष्पाणिर्म्महासुरः । ११८१०
आवर्त्त इव संजज्ञे बलस्य महतो महान् । क्षुभितस्याप्रमेयस्य सागरस्येव संप्लवः ।
त्रिदशानां शरीरैश्च दानवानाञ्च मेदिनी । बभूव निचिता सर्व्वा पर्व्वतैरिव संवृता ।
मेरुपृष्ठन्तु रक्तेन रञ्जितं संप्रकाशते । सर्व्वतो माधवे मासि पुष्पितैरिव किंशुकैः ।
हतैर्वीरैर्गजैरश्वैः प्रावर्त्तत महानदी । शोणितोदा महाघोरा यमराष्ट्रविवर्द्धिनी ।
मज्जमेदोमहापङ्का विप्रकीर्णान्त्रशैवला । छिन्नकायशिरोमीना ह्यङ्गावयवशर्करा । ११८१५
गृध्रहंसगणाकीर्णा कङ्कसारसनादिनी । वसाफेनसमाकीर्णा मेतकुष्ठलनिस्वना ।
तां कापुरुषदुर्द्धर्षां युद्धभूमिमहानदीं । नदीमिवातपापाये हंससारसशोभितां ।
त्रिदशा दानवाश्चैव तेरुस्तां दुस्तरां तदा । यथा पद्मरजोध्वस्तां नलिनीं गजयूथपाः ।
ततः सृजन्तं वाणौघाननुह्रादं रथे स्थितं । ददर्श तरसा देवो निघ्नन्तं यक्षवाहिनीं ।
क्रुद्धस्ततो दैत्यबलं सूदयामास वित्तप । विक्षिपन्निव खे वायुर्म्महाभ्रपटलं वजात् । ११८२०
समीक्ष्य तुमुलं युद्धमनुह्रादसमूपति. । रथेनादित्यवर्णेन कुवेरमभिदुद्रुवे ।
स धनुर्धन्विनां श्रेष्ठो विकृष्य रणमूर्द्धनि । उत्ससर्ज्ज शितान् वाणान् वित्तेशस्य महात्मन. ।
कुवेरं प्राप्य ते वाणा निर्भिद्य सुसमाहिता. । अनरान् पृष्ठतो जग्मुर्व्यालक्तान् यथोरगान् ।
देव. शरैरभिहतो निशितैर्ज्वलनोपमै. । अनुह्रादं प्रत्युदियात्संक्रुद्ध. परमाहवे ।
ततो वैश्रवणो राजा क्रुद्धो यक्षगणैः सह । ववर्ष शरवर्षाणि दानवान् प्रति वीर्य्यवान् । ११८२५
तद्वया शरदं वर्षं गोवृन्द मौक्षमागत । अनारयन् वारयितुं प्रतिष्ठन्ति मैक्षिता. ।
एवमेव कुवेरस्य शरवर्षं महासुर । निमीलिताक्ष सहसा दैत्योऽसहत दारुणं ।
रोषित शरवर्षेण धनदेन महा बल । इन्द्रकेतुप्रतीकाशमभितोऽपश्यत द्रुमं ।
प्रवृद्धशाखाविटपं तरुणाङ्कुरपल्लवं । उत्पाट्य कुपितो दैत्यस्तं फलसमाकुलं ।
निजघान हयश्रेष्ठान् कुवेरस्य महाजवान् । तस्य कर्म्म महाघोरं दृष्ट्वा सर्व्वे महासुरा । ११८३०
सिंहनादं नदन्ति स्म ह्यनुह्रादप्रहर्षिता । तयोः सुतुमुलं युद्धं संजज्ञे देवदैत्ययो. ।

ततस्तौ क्रोधरक्ताक्षावन्योन्यवधकाङ्क्षिणौ । अन्योन्यं विविधैः शस्त्रैर्घोरैर्जघ्नतुराहवे ।
त्रिदशैर्दानवा युद्धे मथिताः प्राणवत्तरैः । दानवैस्त्रिदशाश्चापि क्रुद्धैर्भुवि निपातिताः ।
दानवास्त्वथ संक्रुद्धास्त्रिदशान्निशितैः शरैः । विव्यधुर्व्वज्रसंकाशैः कङ्कपत्रैरजिह्मगैः ।
विदार्य्यमाणा दैत्यौघैस्त्रिदशास्तु महाबलैः । अमर्षिततरा भूयश्चक्रुः कर्माण्यभीतवत् । ११८३५
ते गदाभिः सुभीमाभिः पट्टिशैः शूलमुद्गरैः । परिघैश्च सुतीक्ष्णाग्रैर्दानवाः पीडिताः शरैः ।
शरनिर्भिन्नगात्राश्च खड्गविच्छिन्नवक्षसः । जघ्नुस्ते शिलाश्चैव द्रुमांश्चासुरसत्तमाः ।
ते भीमवेगा दितिजा नर्दमानाः पुनः पुनः । समन्तुस्त्रिदशान् वीर्य्याच्छतशोऽथ सहस्रशः ।
ततः सुतुमुलं युद्धं तेषां तत्समवर्त्तत । शिलाभिर्विपुलाभिश्च बहुशाखैश्च पादपैः ।
परिघैः पट्टिशैश्चैव भिन्दिपालैः परश्वधैः । केचिच्छिन्नशिरसः केचिच्च विदलीकृताः । ११८४०
केचिद्विनिहता भूमौ रुधिरार्द्राः सुरासुराः । केचिद्विद्राविता नष्टाः परस्परवधार्द्दिताः ।
विभिन्नहृदयाः केचिच्छिन्नपादाश्च शेरते । विदारितास्त्रिशूलैश्च केचित्तत्र गतासवः ।
तद्युद्धं सुमहद्धोरं देवदानवसंकुलं । बभूव शस्त्रतुमुलं शिलापादपसंकुलं ।
धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितं । आर्त्तस्तनितनिर्घोषं युद्धगान्धर्व्वमाबभौ ।
कुवेरस्तु धनुष्पाणिर्दानवानामणमूर्द्धनि । दिशो विद्रावयामास संक्रुद्धः शरवृष्टिभिः । ११८४५
कुवेरेणार्द्दितं सैन्यं विद्रुतं प्रेक्ष्य दानवः । अभ्यद्रवदनुह्रादः प्रगृह्य विपुलां शिलां ।
क्रोधाद्द्विगुणरक्ताक्षः पितुस्तुल्यपराक्रमः । शिलां तां पातयामास कुवेरस्य रथोत्तमे ।
आपतन्तीं शिलां दृष्ट्वा गदापाणिर्द्धनाधिपः । रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत ।
सचक्रकूवरहयं सध्वजं सशरासनं । भंक्त्वा रथोत्तमं तस्य निपपात शिला भुवि ।
प्रमथ्य तु कुवेरस्य प्रह्लादस्यानुजो रथं । सुराणां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः । ११८५०
प्रभिन्नशिरसो भग्नास्त्रिदशाः शोणितोक्षिताः । द्रुमैः प्रमथिताङ्गाश्च निपेतुर्द्धरणीतले ।
विद्राव्य विपुलं सैन्यमनुह्रादो महासुरः । गिरिशृङ्गं महद्गृह्य कुवेरमभिदुद्रुवे ।
तमापतन्तं धनदो गदामुद्यम्य वीर्य्यवान् । विनर्द्दन्नाक्रयामास दानवेन्द्रं महाबलं ।
तस्य क्रुद्धस्य संक्रुद्धो गदां तां बहुकण्टकां । न्यपातयत वित्तेशो दानवस्योरसि प्रभुः ।
दैत्यस्तु क्रोधरक्ताक्षस्तं प्रहारमचिन्तयन् । वित्तेशस्योपरि तदा गिरिशृङ्गमपातयत् । ११८५५
स विह्वलितसर्व्वाङ्गो गिरिशृङ्गेण ताडितः । पपात सहसा भूमौ स पिङ्गाक्षो महाबलः ।
रराज पतितो भूमौ विकीर्ण इव पर्व्वतः । वित्तेशं विकलं दृष्ट्वा सर्व्वे ते यक्षराक्षसाः ।
परिवार्य्य महात्मानं ररक्षुर्भीमविक्रमाः । मुहूर्त्तं विकलो भूत्वा प्रभुर्विश्रवसः सुतः ।
उत्थितः सहसा देवः पिङ्गलाक्षो महाबलः । ननाद च महानादं त्रैलोक्यमभिनादयन् ।
जनयन्निव निर्घोषं विधमन्निव पर्व्वतान् । तमवध्यन्तु विज्ञाय निहतं पुनरुत्थितं । ११८६०
प्रेक्ष्य पिङ्गाक्षमायान्तं दानवा विप्रदुद्रुवुः । तांश्च विद्रवतो दृष्ट्वा अनुह्रादोऽसुरोऽब्रवीत् ।

कालनेमिं सुनेमिञ्च महानेमिञ्च दानवं। आत्मानञ्चैव वीर्य्यञ्च विस्मृत्याभिजनं तथा।
क गच्छथ भयत्रस्ताः प्राकृता इव दानवाः। निवर्त्तध्वं महावीर्य्याः किं प्राणान् परिरक्षथ।
नालं युद्धाय यद्योऽयं महतीयं विभीषिका। एतां समुत्थिनामद्य दानवानां विभीषिकां।
विक्रम्य विधमिष्यामि निवर्त्तध्वं महासुराः। तेऽसुराः संनिवृत्याथ समदा इव कुञ्जराः। ११८६५
निजघ्नुः परमक्रुद्धा देवसैन्यं महासुराः। क्षीणप्रहरणाः केचिन्मेघगम्भीरनिस्वनाः।
दर्पोत्कटा भुजैरेव संप्रहारं प्रचक्रिरे। प्रांशुभिश्चैव काष्ठैश्च शिलाभिश्च महाबलाः।
बाहुभिश्च तथाऽन्योन्यमाक्षिपन्ति स्म वेगिताः। मुष्टिभिश्च तलैश्चैव नखपातैर्महाबलाः।
पादपैश्च महाशाखैरयुध्यन्त महारणे। अनुह्लादस्तु संक्रुद्धो देवतानां महाचमूं।
ममन्थ परमायस्तो वनान्यग्निरिवोत्थितः। रुधिरार्द्रास्तु बहवः शेरते योधसत्तमाः। ११८७०
निकृत्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः। अनुह्लादस्य विक्रान्तो देवस्ताशीविषोपमान्।
युध्यमानस्य समरे व्यसृजन्निशितान् शरान्। धनाधिपेन विद्धस्य अनुह्लादस्य संयुगे।
अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः। अथ बाणसहस्रेण विनिघ्नं दानवोत्तमः।
विव्याध समरे क्रुद्धो दण्डपाणिरिवान्तकः। कुवेरस्तु शरैर्भिन्नः समन्तात् क्षतजोक्षितः।
रुधिरं परिसुस्राव गिरिः प्रस्रवणैरिव। लब्ध्वा स तु पुनः संज्ञां रोषरक्तेक्षणः सुरः। ११८७५
गदामथ समासाद्य भीमां भीमपराक्रमः। चिक्षेप दैत्यमुद्दिश्य बलवान् क्रोधमूर्च्छितः।
अप्राप्तामन्तरे सोऽथ तां गदां गदयाऽसुरः। बभञ्ज विनदन् क्रुद्धस्तदाश्चर्य्यमभूत्तदा।
प्रगृह्य तु गदां भूयो ह्यभिदुद्राव दानवं। तमापतन्तं दृष्ट्वैव अनुह्लादो महाबलः।
गिरिशृङ्गमथोत्पाट्य कैलासाचलसन्निभं। धनाधिपं प्रदुद्राव व्यादितास्य इवान्तकः।
तमन्तकमिवायान्तमजय्यं सकलैः सुरैः। ग्रसन्तमिव दैतेयं त्रैलोक्यमखिलं रुषा। ११८८०
तमालोक्य तथारूपं धनाध्यक्षो रणं भयात्। अपहाय ययौ तत्र यत्र देवः शचीपतिः।
तस्य चातिमहत् कर्म्म दृष्ट्वा वित्तपतिस्तदा। जगाम भयसंत्रस्तो यत्र देवः शचीपतिः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे एकपञ्चाशदधिकद्विशततोऽध्यायः॥ २५१॥
॥ वैशम्पायन उवाच ॥ विप्रचित्तिस्तु वरुणं दैत्यानामधिपोऽव्ययः। जघानेषुगणैः क्रुद्धो दीप्तैरिव महोरगैः।
संदह्यमानो दैत्येन दीप्तैः शरगभस्तिभिः। नाभ्यजानत कर्त्तव्यं संग्रामे स जलेश्वरः।
सर्व्वलोकेश्वरस्येव परमेष्ठी प्रजापतिः। नाशक्नोद्यतः स्थातुं विप्रचित्तेर्ज्जलाधिपः। ११८८५
वज्रो नाम महाव्यूहो निर्भयः सर्व्वतोमुखः। संव्यूह्य प्रत्ययुध्यन्त दानवा देववाहिनीं।
अग्निज्वालासमन्तत्र रविमण्डलसन्निभं। मुखमाभाति दैत्यस्य विप्रचित्तेर्महात्मनः।
वरुणस्तु महातेजा विप्रचित्तिं महासुरं। प्रदहन्नेव तेजोभिर्ज्जिगीषुः प्रत्यवैक्षत।
स्रग्दाममालाभरणं दन्तपञ्चाङ्गुलान्तरं। जग्राह परिघं दैत्यः कैलासशिखरोपमं।
पिनद्धं काञ्चनैः पट्टैर्हेममालिनमायसं। यमदण्डोपमं घोरं दैत्यानां भयनाशनं। ११८९०

भ्रामयामास तं क्रुद्धो महाभ्रध्वजोपमं। विननाद निहत्यासौ विप्रचित्तिर्महासुरः।
स कण्ठसूत्रेण निष्केण मुकुटेनापि चाङ्गदैः। कुण्डलाभ्यां विचित्राभ्यां स्रजा चैव विचित्रया।
दानवो भूषणैर्भाति परिघेणायसेन च। यथेन्द्रधनुषा मेघः सविद्युत्स्तनयित्नुमान्।
प्रक्षोभ्य परिघाग्रेण वायुस्कन्धं महास्वनः। प्रजज्वाल सधूमार्चिः सद्य: पर्जनितो ऽनलः।
विद्याधरगणैः सार्द्धं गन्धर्व्वनगरैरपि। सह देवासुरावत्या सिद्धलोकालया सह। ११८८१
ग्रहनक्षत्रचितं सार्कचन्द्रविभूषितं। दैत्येन्द्रपरिघोद्धूतं भ्रमतीव नभस्तलं।
दुरासदः स संजज्ञे परिघाभरणः प्रभुः। सुरेन्धनोऽसुरेन्द्राग्निर्युगान्ताग्निरिवोत्थितः।
त्रिदशा वरुणश्चैव न शेकुः सन्निद्रष्टुं भयात्। तत्रासीन्निर्भयस्त्वेकः कौशिको वासवः प्रभुः।
भास्करप्रतिमं घोरं परिघं रौद्रदर्शनं। पातयामास सेनायां जलेशस्य स दानवः।
पतता तेन संग्रामे जलेशस्य महात्मनः। भूतानां दशसाहस्रं परिघेण समाहतं। ११९००
तेषां गात्राणि चासाद्य व्यशीर्य्यत सहस्रधा। विशीर्य्यमाणो विबभावुल्काशतमिवाम्बरे।
भूयश्चैनं तदा भ्राम्य वरुणायाभ्यपातयत्। पात्यमाने तदा तस्मिन् शरीरे वरुणस्य च।
स भिन्नः परिघो घोरो देवगात्रे व्यशीर्य्यत। शीर्य्यमाणस्य चूर्णानि खद्योता इव चाम्बरे।
स तु तेन प्रहारेण न चचाल जलाधिपः। परिघेणाहतः संख्ये यथा भूमिचलेऽचलः।
सर्वेष्वथ प्रभग्नेषु भिन्नदेहेषु चाहवे। मुहूर्त्तमगमत् क्षोभमपाम्पतिररिन्दमः। ११९०१
सोऽमर्षवशमापन्नो वरुणोऽमितविक्रमः। सर्व्वसंहारमकरोत् स्वपक्षोऽरिमर्द्दनः।
स सागरैश्चतुर्भिश्च वृतो दीप्तैश्च पन्नगैः। शङ्खमुक्तामणिनिभो बिभ्रत्तोयमयं वपुः।
पाण्डरोद्धूतवसनो नानारत्नचिताङ्गदः। वरुणः पाशधृक् श्रीमान् कूर्म्ममीनसमाकुलः।
वरुणस्तु तदा क्रुद्धस्त्रिरोत्थ स्वसैनिकान्। उवाच दृष्ट्वा युध्यध्वं दानवानां जिघांसया।
अहमेनं हनिष्यामि भयं मुक्त्वा तु युध्यत। ततस्ते पन्नगाः सर्व्वे सह्यार्णवसमाश्रयाः। ११९१०
अपुर्दैत्यायणमुखे नर्द्दन्तो जयगृद्धिनः। ते तु नालीकनाराचैर्गदाभिर्मुषलैस्तथा।
अभ्यघ्नन्दानवान्दीप्तानुदिता वरुणानुगाः। विप्रचित्तिस्तु संक्रुद्धो महाबलपराक्रमः।
पन्नगानां शरीराणि व्यधमद्रणमूर्द्धनि। गारुडेन च सोऽस्त्रेण पन्नगान्दानवोत्तमः।
घातयामास समरे गारुडैः पन्नगाशनैः। स शरैः स्वर्णपुङ्खैश्च शातकुम्भविभूषितैः।
पन्नगान् समरे वीरः प्रममाथ सुदुर्ज्जयः। ते भिन्नगात्राः समरे पन्नगाः शरपीडिताः। ११९११
पेतुर्व्यथितसर्व्वाङ्गा गजा इव महागजैः। तं तपन्तमिवादित्यं दीप्तैर्भोगभृतिभिः।
अभ्यधावत संक्रुद्धः समरे वरुणः प्रभुः। ततस्ते दानवास्तत्र भिन्नदेहाः सहस्रशः।
व्यथिता विद्रवन्ति स्म दिशो दश विचेतसः। दशद्रुमांश्च पराक्रम्य वरुणस्तु कुशोवितः।
विमर्द्दमानो युयुधे समरे पाशमुद्गरः। वारुणः पर्य्यतायेषु मुष्टिभिश्च बलोत्कटान्।
अभ्यवर्षत्स समरे विप्रचित्तिं महासुरं। तांश्च भेदं स्थितांश्च प्रहरन्नो बलोत्कटान्। ११९१०

व्यपोहत महातेजा विप्रचित्तिर्म्महासुरः । ततः पावकसङ्काशैः शरैः सुयुक्तैः शीघ्रगामिभिः ।
वरुणस्य महावेगान् विभेद समरे हयान् । कर्म्मणा तेन महता विप्रचित्तेर्म्महात्मनः ।
अग्नेराज्याहुतस्येव तेजः समभिवर्द्धत । स शरैः सूर्य्यसङ्काशैः सुयुक्तैः शीघ्रगामिभिः ।
वारुणौ तौ महावेगौ निर्म्मथ्य महाबलः । चोदयामास सायकाकाशं शरजालेन मोहितौ ।
शूलशक्त्यृष्टिभिश्चास्य चकार रुधिरोक्षितौ । अभिद्रुतस्तु दैत्येन सर्व्वैः सलिलाधिपः । ११९१५
महेन्द्रं शरणं प्राप्तो विप्रचित्तिभयार्द्दितः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥
॥ वैशम्पायन उवाच ॥ पराजयन्तु दैत्यानां दृष्ट्वाऽग्निस्त्रिदशोत्तम । चकार बुद्धिं दैत्यानां वधे महर्षिभिः स्तुतः ।
स्वयम्प्रभायाः शाण्डिल्याः यः पुत्रो हव्यवाहनः । हिरण्यरेताः पिङ्गाक्षो देवदूतो हुताशनः ।
लोहितो लोहितग्रीवो हर्त्ता दाता हविः कविः । पावको विश्वभुग्देवः सर्व्वदेवाननः प्रभुः ।
सुवर्च्चात्मा सुवर्च्चस्कः महार्च्चिर्व्विभावसुः । कृष्णवर्त्मा चित्रभानुर्द्देवाग्र्यश्चित्र एकराट् । ११९२०
लोकसाक्षीऽग्निरुत्तमश्रेष्ठोऽर्च्चिष्मान् वषट्कृतः । हव्यभक्षः शमीगर्भः स्वयोनिः सर्व्वकर्म्मकृत् ।
पावनः सर्व्वभूतानां विश्वात्मा तपोनिधिः । शमनः सर्व्वपापानां लेलिहानस्तनूनपात् ।
प्रदक्षिणावर्त्तशिखः शुचिरोमा महाकृतिः । हव्यभुग्भूतभव्येशो हव्यभागहरो हरिः ।
सोमपः स महातेजा भूतेशः सर्व्वभूतपात् । अथर्व्वा पावको भूतिर्भूतात्मा वै स्वधाधिपः ।
स्वाहापतिः सामगीतः सोमपूताशनोऽर्च्चिधृक् । देवदेवो महाक्रोधो रुद्रात्मा मन्त्रसंस्तुतः । ११९२५
लोहिताश्वं वायुचक्रं रथमास्थाय भूतकृत् । धूमकेतुर्धूमशिखो नीलवासा सुरोत्तमः ।
उद्यम्य दिव्यमाग्नेयमस्त्रं देवो रणे महत् । दानवानां सहस्राणि प्रयुतान्यर्व्वुदानि च ।
समरे विजयाकाङ्क्षी ददाहानिलसारथिः । प्राणो यः सर्व्वभूतानां देहे तिष्ठति पञ्चधा ।
यस्मात् यस्य कृताशस्य सखा च प्रभुरीश्वरः । प्रभञ्जनो यो लोकानां युगान्ते सर्व्वनाशनः ।
अप्सरगता यस्य योनिर्गीर्भिरुदीर्य्यते । यो ह्याकाशमयो देवो दूरगः शब्दसम्भवः । ११९३०
यः कर्त्ता च विकर्त्ता च गतिर्गतिमतां प्रभुः । वेदकर्त्ता सतो लोके ब्रह्मणा यः सनातनः
अमूर्त्तिमन्तं यं प्राहुर्म्महाभूतं महत्तरम् । सोऽग्निं समीरयामास शमीगर्भं समीरणः ।
त्रिदिवारोहिभिर्ज्वालैर्जृम्भमाणो दिशो दश । दानवान् सभावाय युगान्ताग्निरिवानदत् ।
मेदोमज्जामहापङ्कां केशशैवलशाद्वलाम् । योधशीर्षोपलवतीं हतद्विपतटोत्कटाम् ।
शोणितोदां रणे दृष्ट्वा संग्रामसरितं विभुः । वह्निः प्रस्कन्दयामास दैत्यानां भयवर्द्धनः । ११९३५
ततोऽग्निर्द्दितिजान् सर्व्वान् प्रह्लादप्रमुखांस्तदा । पराजयामास विभुः क्रोधमानो महाहवे ।
केचित्प्रदीप्तैर्म्मुकुटैः केचिद्दीप्तैः शिरोरुहैः । केचिद्गात्रैः प्रदीप्तैश्च केचिद्दीप्तैर्म्मुखाननैः ।
केचित् प्रदीप्तैर्व्वर्म्मभिः केचिच्छत्रैर्ध्वजैरथैः । असुरास्तत्र दृश्यन्ते प्रदीप्तेनाग्निना दग्धाः ।
असुरा भयवित्रस्ता विद्रुताश्च दिशो दश । त्यक्तायुधानि सर्व्वाणि विप्रकीर्णरथध्वजाः ।

प्रयान्ति समरे भीता पावकेन पराजिताः । न च पश्यन्ति वह्निं ते संप्रदीप्तं महाहवे । ११९८०
दिशः खं गाश्च मेघांश्च दीप्तान् पश्यन्ति दानवाः । भुवं स्वयम्भुवा सृष्टो युगान्तस्तोययोनिना ।
इत्यत्र दानवाः सर्व्वे मेनिरे त्रस्तचेतसः । मयश्च शम्बरश्चैव महामायाधरावुभौ ।
पार्ज्जन्यवारुणी माये व्यधत्तां वारिविग्रहे । ताभ्यां वह्निः स मायाभ्यां सिच्यमानः समन्ततः ।
तोयौघैः पर्व्वतनिभैर्द्दर्शिरभवद्रणे । शाम्यमानन्तु समरे पावकं दैत्यनाशनम् ।
दृष्ट्वा कोपान्महातेजा वह्निमाह बृहस्पतिः । ११९८५
॥ बृहस्पतिरुवाच ॥ हिरण्यरेतः सुशिख ज्वलनाश्रय सर्व्वभुक् । सप्तजिह्वानल श्याम लेलिहान महाबल ।
आत्मा वायुस्तव विभो शरीरमुत वीरुधः । योनिरापश्च ते प्रोक्ता योनिस्त्वमसि चाम्भसः ।
ऊर्द्धञ्चाधश्च गच्छन्ति सञ्चरन्ति च पार्श्वतः । अर्च्चिषस्ते महाभाग सर्व्वतः प्रभवन्ति च ।
त्वमेवाग्ने सर्व्वमसि त्वयि सर्व्वमिदं जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ।
त्वमग्ने हव्यवाडेकस्त्वमेव परमं हविः । यजन्ते च सदा सन्तस्त्वामेव परमाध्वरे । ११९९०
त्वमन्नं प्राणिनां भुङ्क्षे जगत्पीताशित विभो । त्वत्तः प्रवृत्तो विजयस्त्वयि लोकाः प्रतिष्ठिताः ।
सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह प्राप्ते काले त्वं पचस्येव दीप्त । त्वमेवैकस्तपसे जातवेदो नान्यस्त्वत्तो विद्यते गोषु देव ।
वृषाकपिः सिन्धुपतिस्त्वमग्ने महामखेष्वप्यहरस्त्वमेव । विश्वस्य भूतिस्त्वमसि प्रसूतिस्त्वञ्च प्रतिष्ठा भगवन् प्रजानां ।
प्रजस्वरो रश्मिभिर्जातवेदस्त्वमोषधीरोषधीनां रसांश्च । विश्वं त्वमादाय युगान्तकाले स्रष्टा भवस्यानल सर्गकाले ।
त्वमग्ने सर्व्वभूतानां योनिर्वेदेषु गीयसे । त्वया देवहितार्थाय निहता दानवा रणे । ११९९५
स्वयोनिस्ते महातेजस्तोय मखशताच्चित । तत्स्वयोनिं समासाद्य किं विषीदसि पावक ।
त्रायस्व समरे देवान् दैत्येभ्यः सुरसत्तम । युगान्ताभामरारिघ्न विश्वकर्म्मन् सहस्रभुक् ।
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन् हुताशन ।
इतिश्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे अग्निस्तवे त्रिपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५३॥
॥ वैशम्पायन उवाच ॥ बृहस्पतेस्तु वचनं श्रुत्वाऽग्निः सत्यमीरितं । भूयः सजज्वाल रणे हविषेव महामखे ।
हतास्तु माया दैत्यानां प्रदीप्तेनाग्निना रणे । हतमाया हतबला बलिं ते समुपस्थिताः । १२०००
पराजितेषु दैत्येषु वह्निनाऽद्भुतकर्म्मणा । प्रह्लादस्तु परं वाक्यमाह दैत्यपतिं बलिं ।
भवानग्निश्च वायुश्च भास्करः सलिलं शशी । नक्षत्राणि दिशो व्योम भूश्च दानवसत्तम ।
भविष्यश्चैव भूतश्च भवश्चासुरसत्तम । दत्तं हि ते भगवता वरदेन स्वयम्भुवा ।
इन्द्रत्वममरत्वञ्च युद्धे चाप्यपराजयः । ईशित्वञ्च वशित्वञ्च बलञ्चैवामितं तव ।
सर्व्वभूतेश्वरत्वञ्च प्रभुत्वञ्च सदा तव । महायोगीश्वरत्वञ्च शूरत्वञ्च महामृधे । १२००५
अमितत्वं लघुत्वञ्च ये चान्ये सात्त्विका गुणाः । तत्पराजय देवेन्द्र देवान् सर्व्वांश्च सानुगान् ।
पयोर्द्ध सम्पूर्णा रक्षितया न तदन्यथा । तस्य तद्वचनं श्रुत्वा प्रह्लादस्य महात्मनः ।
बलिः परमसंहृष्टो गत्वा समरयोद्धत ।

ततः प्रयान्तं त्रिदशेन्द्रसन्निभं महासुरेन्द्रं बलिमुत्तमश्रियं। तमन्वयाश्चक्रुरभिप्रदक्षिणं द्विजाश्च मुख्याः परमश्च
मङ्गलाः।
महाजटाभारधरास्तपस्विनस्तदा तमाङ्गिर्विधिमन्त्रमङ्गलैः। अभिष्टुवन्तः कश्यप स्वलङ्कृतं बलिं प्रयान्तं रणमूर्द्धनि
स्थिता । १२९८०
प्रतप्तजाम्बूनदचित्रभूषणैर्हिव्यैश्च रत्नैर्विविधैरलङ्कृतः। विराजमान परमेण वर्चसा रणे विभात्यग्निनिभोऽसुरेश्वरः।
स वै तदा शत्रुबलार्हितं बलं बलिर्द्ददर्शोत्तमवीर्य्यविक्रम. । जलागमे श्रीमदिवाभ्रमण्डलं विक्षोभ्यमाणं नभसीव
वायुना।
ततो ददर्शाथ बलानि सर्व्वतो रणे सुगुप्तानि शतामनेन वै। समुच्छ्रितान्यप्रतराणि तत्र वै समुद्रवेगानिव पर्व्वसन्धिषु।
स प्रफुल्लप्रत्युष्टिगदासिसायकान् क्षिपन्निपूणा समरे महात्मनां। ननाद सिंहर्षभमत्तनागवज्जलागमे तोयदवच्च वीर्य्यवान्।
दिव्यास्त्रधूमो भुजवेगवायुर्म्महाबल. पौरुषविक्रमेन्धन । प्रजादिधक्षन्निव कालवह्नि सुघोररूपो विबभौ रणे बलि. ।१२९८५
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुःपञ्चाशदधिकद्विशततोऽध्याय. ॥ २५४ ॥
॥ वैशम्पायन उवाच ॥ बलिना तु सुरा. सर्व्वे वर्ज्जयित्वा सुराधिपं। रणे शरशतैर्भिन्ना ससैन्या वै पराजिता ।
विमुखा सा तु दैत्येन्द्रैर्व्वध्यमाना महाचमू । जितास्तु बलिना देवा. शक्रमाहुर्म्महाबलं।
॥ देवा ऊचु.॥ भवानिन्द्रश्च धाता च लोकाना प्रभुरव्यय । त्वमप्रतिमकर्म्मा च तथैवानुत्तमद्युतिः।
विद्रुतानीह सैन्यानि सहास्माभि. सुरेश्वर। रथचक्रध्वजाग्र्याणि विभिन्नानि महासुरै.।
रथहस्त्यश्वयोधाश्च पादाताश्च सहस्रशः। भिन्नच्छिन्नाश्च शतशो गदामुसलपट्टिशै । १२९९०
महाभैरवरूप हि दैत्येन्द्रेण कृत रणे। किमुपेक्षसि दैत्येन्द्रैर्हन्यमानां महाचमू।
त्रायस्व त्रिदशश्रेष्ठ शरण्य शरणागतान्। श्रुत्वा तु वचनं तेषां देवानाममराधिपः।
सम्वर्त्तकाग्निवत् क्रुद्ध सर्व्वानदहतासुरान्। दिवाकरकराकारं किरीटं धारयन् प्रभु ।
वैदूर्य्योत्करसङ्काशो नानारत्नचिताङ्गदः। मयूग्रामा धूवाच शतबाहु. सहस्रदृक्।
हरिरेको हरिश्मश्रुर्नागकेतुर्म्महाबल.। वज्रप्रहरण श्रीमान् योगी शतशिरोधरः। १२९९५
सधनुर्बद्धसन्नाह शतादित्यसमप्रभ । देवगन्धर्व्वयक्षौघैरनुयात सहस्रश ।
सामगै सजपैश्चापि स्तूयमानो महर्षिभि.। शतपर्व्व महारौद्रं स्फोटनं सर्व्वतोमुखं।
प्रगृह्य विततं वज्रं दीप्त रौद्राट्टहासिनं। दैत्यानयोधयत् सर्व्वान्महेन्द्र पाकशासन.।
श्रेष्ठ्य सर्व्वभूतानामदित्या दयित सुत । तत. प्रवृत्त. संग्रामो वज्रदैत्येयदेव च।
उभाभ्यामतिवीर्य्याभ्यां तुमुलो लोमहर्षण.। अतिवीर्य्यबलोदग्रं तुमुलं लोमहर्षणं। १३०००
प्रह्लादेन स्तुतिशतै. कर्म्मभिर्ज्जयशंसिभि.। सम्बोधितो दैत्यपतिरग्निरिद्ध इवाबभौ।
सुरासुरेन्द्रयोर्दृष्ट्वा सग्रामं लोमहर्षणं। देवानां दानवानाञ्च भूयो युद्धमभूत्तदा।
ततोऽभिधन्मघेन्द्रस्तं बलिमक्लिर्म्महासुरं। तान्यस्त्राणि महाबाहुश्चिच्छेद शतधा बलि ।
तत. क्रुद्ध पुनस्तत्र सोऽस्त्रं दुर्व्वारण महत्। आग्नेयमथ शत्रुघ्न चिक्षेपेन्द्रो महाबलः।

प्रयान्ति समरे भीताः पावकेन पराजिताः । न च पश्यन्ति वह्निं ते संप्रदीप्तं महाहवे । ११९५०
दिशः खं गाश्च मेघांश्च दीप्तान् पश्यन्ति दानवाः । ध्रुवं स्वयम्भुवा सृष्टो युगान्तस्तोययोनिना ।
इत्येवं दानवाः सर्व्वे मेनिरे त्रस्तचेतसः । मयश्च शम्बरश्चैव महामायाधरावुभौ ।
पार्ज्जन्यवारुणी माये व्यधत्तां वारिविग्रहे । ताभ्यां वह्निः स मायाभ्यां सिच्यमानः समन्ततः ।
तोयौघैः पर्व्वतनिभैर्द्दर्शिरेऽभवद्रणे । शाम्यमानन्तु समरे पावकं दैत्यनाशनं ।
बृहत्कीर्त्तिर्महातेजा वह्निमाह बृहस्पतिः । ११९५५
॥ बृहस्पतिरुवाच ॥ हिरण्यरेतः सुशिख ज्वलनाव्यय सर्व्वभुक् । सप्तजिह्वानल वाम लेलिहान महाबल ।
आत्मा वायुस्तव विभो शरीरमुत वीरुधः । योनिरापश्च ते प्रोक्ता योनिस्त्वमसि चाम्भसः ।
ऊर्द्ध्वञ्चाधश्च गच्छन्ति सञ्चरन्ति च पार्श्वतः । अर्च्चिषस्ते महाभाग सर्व्वतः प्रभवन्ति च ।
त्वमेवाग्ने सर्व्वमसि त्वयि सर्व्वमिदं जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ।
त्वमग्ने हव्यवाडेकस्त्वमेव परमं हविः । यजन्ते च सदा सन्तस्त्वामेव परमाध्वरे । ११९६०
त्वमन्नं प्राणिनां भुङ्क्षे जग्धपीताशितं विभो । त्वत्तः प्रवृत्तो विजयस्त्वयि लोकाः प्रतिष्ठिताः ।
सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह प्राप्ते काले त्वं पचस्येव दीप्तः । त्वमेवैकस्तपसे जातवेदो नान्यस्त्वत्तो विद्यते गोषु देव ।
वृषाकपिः सिन्धुपतिस्त्वमग्ने महामखेष्वप्यहरस्त्वमेव । विश्वस्य भूतिस्त्वमसि प्रसूतिस्त्वञ्च प्रतिष्ठा भगवन् प्रजानां ।
सृजस्यपो रश्मिभिर्जातवेदस्त्वमोषधीरोषधीनां रसाश्च । विश्वं त्वमादाय युगान्तकाले स्रष्टा भवस्यानल सर्गकाले ।
त्वमग्ने सर्व्वभूतानां योनिर्वेदेषु गीयसे । त्वया देवहितार्थाय निहता दानवा रणे । ११९६५
स्वयोनिस्ते महातेजस्तोयं मखगताश्रितं । तत्स्वयोनिं समासाद्य किं विषीदसि पावक ।
त्रायस्व समरे देवान् दैत्येभ्यः सुरसत्तम । युगान्ताभामरारिघ्न विश्वकर्म्मन् सहस्रभुक् ।
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन् हुताशन ।
इतिश्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे अग्निस्तवे त्रिपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५३॥
॥ वैशम्पायन उवाच ॥ बृहस्पतेस्तु वचनं श्रुत्वाऽग्निः सत्यनोदितं । भूयः प्रजज्वाल रणे हविषेव महामखे ।
हतास्तु माया दैत्यानां प्रदीप्तेनाग्निना रणे । हतमाया हतबला बलिं ते समुपस्थिताः । ११९७०
पराजितेषु दैत्येषु वह्निनाऽद्भुतकर्म्मणा । प्रह्लादस्तु परं वाक्यमाह दैत्यपतिं बलिं ।
भवानग्निश्च वायुश्च भास्करः सलिलं शशी । भवानपि दिशो व्योम भूश्च दानवसत्तम ।
भविष्यच्चैव भूतञ्च भवञ्चासुरसत्तम । दत्तं हि ते भगवता वरदेन स्वयम्भुवा ।
इन्द्रत्वञ्चामरत्वञ्च युद्धे चाप्यपराजयः । ईशित्वञ्च वशित्वञ्च सत्त्वञ्चैवाजितं तव ।
सर्व्वभूतेश्वरत्वञ्च प्रभुत्वञ्च सदा तव । महायोगेश्वरत्वञ्च शूरत्वञ्च महामृधे । ११९७५
अमितत्वं लघुत्वञ्च ये चान्ये सात्त्विका गुणाः । तत्पराजय देवेन्द्रं देवान् सर्व्वांश्च सानुगान् ।
यथोक्तं ब्रह्मणा राजंस्त्वत्तया न तदन्यथा । तच्च तद्वचनं श्रुत्वा प्रह्लादस्य महात्मनः ।
बलिः परमसंहृष्टो गतः शक्रयो हृतः ।

ततः प्रयान्तं त्रिदशेन्द्रसन्निधौ महासुरेन्द्रं बलिमुत्तमश्रियं। तमग्रतो चक्रुरभिप्रदक्षिणं द्विजाश्च मुख्याः प्रशशंसुश्च मङ्गलैः।
महाजटाभारधरास्तपस्विनस्तदा तमाशीर्विधिमन्त्रमङ्गलैः। अभिष्टुवन्तः कृतस्वस्त्ययनं बलिं प्रयान्तं रणमूर्द्धनि स्थिताः। ११९८०
प्रतप्तजाम्बूनदचित्रभूषणैर्दिव्यैश्च रत्नैर्विविधैरलङ्कृतः। विराजमानः परमेण वर्चसा रणे विभात्यग्निनिभोऽसुरेश्वरः।
स वै तदा शक्रबलादितं बलं बलिर्ददर्शोत्तमवीर्यविक्रमः। जलागमे श्रीमदिवाभ्रमण्डलं विकीर्यमाणं नभसीव वायुना।
ततो ददर्शाथ बलानि सर्व्वतो रणे सुगुप्तानि हुताशनेन वै। समुच्छ्रितान्यग्रतराणि तत्र वै समुद्रवेगानिव पर्व्वसन्धिषु।
स शूलशक्त्यृष्टिगदासिसायकान् क्षिपन्नियूणां समरे महात्मनां। ननाद सिंहर्षभमत्तनागवज्जलागमे तोयदवच्च वीर्यवान्।
दिव्यास्त्रधूमो भुजवेगवायुर्महाबलः पौरुषविक्रमेन्धनः। प्रजादिधक्षन्निव कालवह्निः सुघोररूपो विबभौ रणे बलिः।११९८५
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुःपञ्चाशदधिकद्विशततमोऽध्यायः॥ २५४ ॥
॥ वैशम्पायन उवाच ॥ बलिना तु सुराः सर्व्वे वर्ज्जयित्वा सुराधिपं। रणे शरशतैर्भिन्नाः ससैन्या वै पराजिताः।
विमुखा सा तु दैत्येन्द्रैर्बध्यमाना महाचमूः। जितास्तु बलिना देवाः शक्रमाहुर्महाबलं।
॥ देवा ऊचुः ॥ भवानिन्द्रश्च धाता च लोकानां प्रभुरव्ययः। समप्रतिमकर्म्मा च तथैवानुपमद्युतिः।
विद्रुतानीह सैन्यानि सहास्माभिः सुरेश्वर। रथचक्रध्वजाग्र्याणि विभिन्नानि महासुरैः।
रथहस्त्यश्वयोधाश्च पादाताश्च सहस्रशः। भिन्नाश्छिन्नाश्च शतशो गदामुषलपट्टिशैः। ११९९०
महाभैरवरूपं हि दैत्येन्द्रेण कृतं रणे। किमुपेक्षसि दैत्येन्द्रैर्हन्यमानां महाचमूं।
त्रायस्व विदशश्रेष्ठ शरण्य शरणागतान्। श्रुत्वा तु वचनं तेषां देवानाममराधिपः।
संवर्त्तकाग्निवत् क्रुद्धः सर्व्वानदहतासुरान्। दिवाकरकराकारं किरीटं धारयन् प्रभुः।
वैदूर्य्योत्करसंकाशो नानारत्नचिताङ्गदः। मयूररोमा धूम्राक्षः शतबाहुः सहस्रदृक्।
हरिरश्वो हरिश्मश्रुर्नागकेतुर्महाबलः। वज्रप्रहरणः श्रीमान् योगी शतशिरोधरः। ११९९५
सधनुर्बद्धसन्नाहः शतादित्यसमप्रभः। देवगन्धर्व्वयक्षौघैरनुयात सहस्रशः।
सामगैः सजपैश्चापि स्तूयमानो महर्षिभिः। शतपर्व्व महारौद्रं स्फोटनं सर्व्वतोमुखं।
प्रगृह्य विततं वज्रं दीप्तं रौद्राट्टहासिनं। दैत्यानयोधयत् सर्व्वान्महेन्द्रः पाकशासनः।
अथास्य सर्व्वभूतानामदित्या दयितः सुतः। तत प्रवृत्तः संग्रामो वज्रेर्द्वैधरथस्य च।
उभाभ्यामतिवीर्य्याभ्यां तुमुलो लोमहर्षणः। अतिवीर्यबलोदग्रं तुमुलं लोमहर्षणं। १२०००
प्रह्लादेन स्तुतिशतैः कर्म्मभिर्ज्जयसम्भवैः। सबोधितो दैत्यपतिरग्निरिद्धं इवाबभौ।
सुरासुरेन्द्रयोर्दृष्ट्वा संग्रामं लोमहर्षणं। देवानां दानवानाञ्च भूयो युद्धमभूत्तदा।
ततोऽविध्यन्महेन्द्रस्तु बलिमस्त्रैर्महासुरं। तान्यस्त्राणि महाबाहुश्चिच्छेद शतधा बलिः।
तत क्रुद्धः पुनश्चाथ सोऽस्त्रं दुर्वारणं महत्। आग्नेयमस्त्रं शत्रुघ्न चिक्षेपेन्द्रो महाबलः।

तद्दृष्ट्वा खे समागच्छत् शक्रग्रामसमप्रभं । चिन्तयामास दैत्येन्द्रो वाहनार्थं च बुद्धिमान् । १४००५
संक्रुद्धो मघवान् वज्रमग्रहीत् पर्व्वतोपमं । हन्तुकामो रणश्लाघी बलिं दैत्याधिपं रणे ।
ततः शुश्राव देवेन्द्रः कौशिको हरिवाहनः । अशरीरां तदा वाणीं तस्मिन्नन्तर्हिते शुभे ।
निवर्त्तस्व महाबाहो सुराणां नन्दिवर्द्धन । पुरन्दर सुरश्रेष्ठ न जेष्यसि बलिं रणे ।
तपसा श्रुतमो दैत्यो वरदानेन चाधिकः । स्वयम्भूपरितोषाच्च सत्याद्धर्म्माच्च वासव ।
नैष शक्यस्त्वया जेतुं विदशैर्वा सुरेश्वर । यो ह्यस्य भगवान् जेता तं शृणुष्व सनातनं । १४०१०
ब्रह्मणो यो हि सर्व्वस्वं देवानां वै परा गतिः । परं रहस्यं धर्म्मस्य परस्य च परा गतिः ।
परात्परतरः श्रीमान् परावरगतिः प्रभुः । व्यक्ताव्यक्तो महाभूतो भूतभव्यभवत्प्रभुः ।
सहस्रशीर्षः पुरुषः सहस्राक्षः सहस्रपात् । शङ्खचक्रगदापाणिः पीतवासाः सुरारिहा ।
जेताऽक्षयो व्ययः श्रीमान् सोऽस्य जेता भविष्यति । श्रुत्वा दिव्यान्तु परमां वाणीं तामशरीरिणीं ।
अपयातो रणात्क्षक्रः सह सर्व्वैर्मरुद्गणैः । अपयाते तु देवेन्द्रे कौशिके हरिवाहने । १४०१५
सिंहनादो महानासीद्दानवानां महात्मनां । ततः किलकिलाशब्दः क्ष्वेडितास्फोटनिस्वनः ।
शङ्खानां निनदश्चात्र योधानां वल्गितस्वनः । वादित्राणाञ्च निर्घोषस्तुमुलश्चाभवत्तदा ।
जयशब्दास्तथैवान देवानान्तु पराजये । सर्व्वेषां दैत्यराजस्तु प्रयातः समुदग्रधीः ।
त्रलोक्यं विबभौ दैत्यो हिरण्यकशिपुर्यथा ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे शक्रापयाने पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥२५५॥

॥ वैशम्पायन उवाच ॥ निष्प्रयत्नेषु देवेषु त्रैलोक्ये दैत्यपालिते । जये बलेर्बलवतो मयशम्बरपोषिते । १४०२०
शुद्धासु दिक्षु सर्व्वासु प्रवृत्ते धर्म्मकर्म्मणि । प्रावृते धर्म्मपथे ह्ययनस्थे दिवाकरे ।
प्रह्लादशम्बरमयैरनुह्रादेन चैव ह । दिक्षु सर्व्वासु गुप्तासु गगने दैत्यपालिते ।
दैत्येषु मखभोभार्थे स्वर्गार्थे दर्शयत्सु च । प्रकृतिस्थे तदा लोके वर्त्तमाने च सत्पथे ।
अभावे सर्व्वपापानां भावे चैव तदा स्थिरे । भावे तपसि विज्ञानामभावे पापकर्म्मणां ।
चतुष्पादे स्थिते धर्म्मे अधर्म्मे पादविग्रहे । प्रजापालनयुक्तेषु भ्राजमानेषु राजसु । १४०२५
स्वधर्म्मसंप्रयुक्तेषु सर्व्वाश्रमनिवासिषु । अभिषिक्तोऽसुरैः सर्व्वैर्देवराज्ये बलिस्तदा ।
हृष्टेष्वसुरसंघेषु नदत्सु मुदितेषु च । अथाभ्युपगता लक्ष्मीर्बलिं पद्मासने स्थिता ।
पद्मोद्यतकरा देवी वरदा सुरसेविनी ।
॥ श्रीरुवाच ॥ बले बलवतां श्रेष्ठ दैत्यराज महासुरे । प्रीताऽस्मि तव भद्रं ते देवतानां पराजये ।
यत्त्वया युधि विक्रम्य देवराजः पराजितः । दृष्ट्वा ते परमं सत्त्वं ततोऽहं स्वयमागता । १४०३०
नाश्चर्य्यं दानवश्रेष्ठ हिरण्यकशिपोः कुले । प्रसूतस्यासुरेन्द्रस्य तव कर्म्मेदमीदृशं ।
विशेषितस्त्वया राजन्दैत्येन्द्रः स पितामहः । येन भुक्तं हि निखिलं त्रैलोक्यमिदमव्ययं ।
विशेषतस्तव विभो सर्व्वा सर्व्वैः स्थितः पथि । तेन त्रैलोक्यमव्ययं भोक्ष्यसे ह्यमितविक्रम ।

एवमुक्ता तु सा देवी लक्ष्मीर्दैत्यवृषं बलिं । प्रविष्टा वरदा सौम्या सर्व्वभूतमनोरमा ।
शिष्टाश्च देव्यः प्रवरा ह्रीः कीर्त्तिर्द्युतिरेव च । प्रभा धृतिः क्षमा भूतिर्नीतिर्विद्या दया मतिः । १३७२५
स्मृतिर्मेधा तथा तुष्टिः पुष्टिर्भुक्तिस्तथैव च । श्रुतिः प्रीतिरिडा कान्तिः शान्तिः पुष्टिः क्रिया तथा ।
सर्व्वाश्चाप्सरसो दिव्या नृत्यगीतविशारदाः । उपतस्थुर्महासत्वं बलिमिन्द्रं महारथं ।
प्रतिपन्नन्तु दैतेयैस्त्रैलोक्यं सचराचरं । प्राप्तञ्चैश्वर्य्यमतुलं बलिना ब्रह्मवादिना ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे षट्पञ्चाशदधिकद्विशततोऽध्यायः ॥ २५६ ॥
॥ जनमेजय उवाच ॥ पराजिताः सुरा दैत्यैः किमकुर्व्वत वै मुने । कथञ्च त्रिदिवं लब्धं भूयो देवैर्द्विजोत्तम ।
॥ वैशम्पायन उवाच ॥ श्रुत्वा वाणीन्तु तां दिव्यां सह देवैः सुराधिपः । शक्रद्विगं प्रस्थितः श्रीमानदित्यालयमुत्तमं । १३७३०
प्राप्यादित्यालयं शक्रः कथयामास तां गिरं । अदित्या या तदा युद्धे तेन दिव्या पुरा श्रुता ।
॥ अदितिरुवाच ॥ यद्येवं पुत्र युष्माभिर्न शक्यो हन्तुमाहवे । बलिर्विरोचनसुतः सर्व्वैश्चैव मरुद्गणैः ।
सहस्रशिरसा हन्तुं केवलं शक्यतेऽसुरः । तेनैकेन सहस्राक्ष न ह्यन्येन शतक्रतो ।
तद्वः पृच्छामि पितरं कश्यपं ब्रह्मवादिनं । पराजयार्थं दैत्यस्य बलेस्तस्य महात्मनः ।
ततोऽदित्या सह सुराः सम्प्राप्ताः कश्यपान्तिकं । अपश्यन् कश्यपं तत्र मुनिं दीप्ततपोनिधिं । १३७३५
आद्यं देवगुरुं दिव्यं क्लिन्नं त्रिषवणाम्बुभिः । तेजसा भास्कराकारं गौरमग्निशिखाप्रभं ।
न्यस्तदण्डं तपोयुक्तं बद्धकृष्णाजिनोत्तरं । वल्कलाजिनसंवीतं जटामण्डलभूषितं ।
हुताशमिव दीप्यन्तं साज्यमन्त्रपुरस्कृतं । स्वाध्यायनिरतं नित्यं वपुष्मन्तमिवानलं ।
तं ब्रह्मवादिनां श्रेष्ठं सुरासुरगुरुं प्रभुं । प्रतपन्तमिवादित्यं मारीचं दीप्ततेजसं ।
यः स्रष्टा सर्व्वभूतानां प्रजानां पतिरुत्तमः । आत्मभावविशेषेण तृतीयो यः प्रजापतिः । १३७४०
ततः प्रणम्य ते वीराः सहादित्या सुरर्षभाः । ऊचुः प्राञ्जलयः सर्व्वे ब्रह्माणमिव मानसाः ।
यच्छ्रुतं युधि शक्रेण सरस्वत्या समीरितं । अजेयस्त्रिदशैः सर्व्वैर्बलिर्दानव इत्युत ।
श्रुत्वा तु वचनं तेषां पुत्राणां कश्यपस्तदा । चकार बुद्धिं गमने ब्रह्मलोकाय लोककृत् ।
॥ कश्यप उवाच ॥ पुत्रा गच्छाम सदनं ब्रह्मणः परमाद्भुतं । यथाश्रुतञ्च तत्रैव ब्रह्मणे वदतानघाः ।
॥ वैशम्पायन उवाच ॥ ततो दित्या सह सुरा यान्तं कश्यपमन्वयुः । प्रस्थितं ब्रह्मसदनं देवर्षिगणसेवितं । १३७४५
ते मुहूर्त्तेन संप्राप्ता ब्रह्मलोकं दिवौकसः । दिव्यैः कामगमैर्यानैर्ययाद्दै सुमहाबलाः ।
ब्रह्माणं द्रष्टुमिच्छन्तस्तपसो राशिमव्ययं । अभ्यगच्छन्त विस्तीर्णां ब्रह्मणः परमां सभां ।
षट्पदोद्गीतमधुरां सामगीतविमिश्रितां । श्रेयस्करीममित्रघ्नो दृष्ट्वा संजहृषुर्मुदा ।
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः । ऋचो बहूचमुख्यैश्च प्रेर्य्यमाणपदाक्षराः ।
शुश्रुवुस्तेऽमरव्याघ्रा विततेषु च कर्म्मसु । यज्ञवेदाङ्गविदुषां पदक्रमविदां तथा । १३७५०
ब्रह्मर्षीणाञ्च घोषेण सा बभूव निनादिता । यज्ञसंस्तवविद्भिश्च शिक्षाविद्भिस्तथा द्विजैः ।
शब्दनिर्व्वचनार्थज्ञैः सर्व्वविद्याविशारदैः । मीमांसाहेतुवाक्यज्ञैः सर्व्ववादविशारदैः ।

हृष्टपुष्टस्वरैस्तत्र द्विजेन्द्रैर्वल्गुभाषितैः। नादितं ब्रह्मसदनं प्रवरं देवसद्मवत्।
ते तत्र समनुप्राप्ताः शृण्वन्तो वै ध्वनिं सुराः। पूतान्यात्मशरीराणि मेनिरे तु न संशयः।
तूष्णीम्भूता एकचित्ता ब्रह्मणि गतमानसाः। विस्मयोत्फुल्लनयना निरैक्षन्त परस्परं। १४०६५
नमस्कुर्व्वन्ति च पुनर्ब्रह्माणं परमं प्रभुं। मनसैव सुरश्रेष्ठाः पुरस्कृत्य तु कश्यपं।
पुनः संघुष्टपरमं वेदोद्धरणनिस्वनं। गम्भीरोदारमधुरं सुस्वरं हंसगद्गदं।
ऐक्यनानात्वसंयोगसमवायविशारदैः। लोकायतिकमुख्यैश्च शुश्रुवुः स्वनमीरितं।
तत्र तत्र च विप्रेन्द्रान् नियतान् संशितव्रतान्। जपहोमपरान्मुख्यान् ददृशुः काश्यपात्मजाः।
तस्यां सभायामास्ते वै ब्रह्मा लोकपितामहः। सुरासुरगुरुः श्रीमान् विदधद्देवमायया। १४०७०
उपासते च तत्रैनं प्रजानां पतयः प्रभुं। दक्षः प्रचेताः पुलहो मरीचिश्च द्विजोत्तम।
भृगुरत्रिर्वशिष्ठश्च गौतमो नारदस्तथा। विद्या मनोऽन्तरीक्षञ्च वायुस्तेजो जलं मही।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च। प्रकृतिश्च विकारश्च यच्चान्यत् कारणं भुवः।
साङ्गोपाङ्गाश्चतुर्वेदाः सरहस्यपदक्रमाः। क्रियाश्च क्रतवश्चैव संकल्पः प्राण एव च।
एते चान्ये च बहवः स्वयम्भुवमुपस्थिताः। अर्थो धर्म्मश्च कामश्च द्वेषो हर्षश्च सर्व्वदा। १४०७५
शुक्रो बृहस्पतिश्चैव संवर्त्तो बुध एव च। शनैश्चरश्च राहुश्च ग्रहाः सर्व्वे तथैव च।
मरुतो विश्वकर्म्मा च नक्षत्राणि च भारत। दिवाकरश्च सोमश्च ब्रह्माणं समुपासते।
सावित्री दुर्गतरणी वाणी सप्तविधा तथा। सर्व्वाणि स्मृतिशास्त्राणि गाथाश्च निगमास्तथा।
भाष्याणि सर्व्वशास्त्राणि देहवन्ति विशाम्पते। क्षणा लवा मुहूर्त्ताश्च दिवा रात्रिश्च भारत।
अर्द्धमासाश्च मासाश्च ऋतवः षट् तथैव च। संवत्सराश्चतुर्युगं सन्ध्या रात्रिश्चतुर्विधा। १४०८०
कालचक्रञ्च यद्दिव्यं नित्यगं ध्रुवमव्ययं। एते चान्ये च बहवः स्वयम्भुवमुपस्थिताः।
तां प्रविष्टः सभां दिव्यां ब्रह्मणः सर्व्वकामदां। कश्यपस्त्रिदशैः सार्द्धं पुत्रैर्द्धर्म्मविदाम्बरः।
सर्व्वतेजोमयं दिव्यं ब्रह्मर्षिगणसेवितं। ब्राह्म्या श्रिया दीप्यमानमचिन्त्यं विगतक्लमं।
ब्रह्माणं वीक्ष्य ते सर्व्वे परमासनमास्थितं। शिरोभिः प्रणता दूरं परमेष्ठिनमव्ययं।
शिरोभिः स्पृश्य चरणौ नियताः परमात्मनः। विमुक्ताः सर्व्वपापेभ्यः शान्ता विगतकल्मषाः। १४०८५
दृष्ट्वा तु तान् सुरान् सर्व्वान् कश्यपेन सहागतान्। आह ब्रह्मा महातेजा देवानां प्रभुरीश्वरः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने ब्रह्मलोकागमने सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

॥ ब्रह्मोवाच ॥ यदर्थमिह सम्प्राप्ता भवन्तः सर्व्व एव हि। विजानाम्यहमव्यग्रमेनमर्थं महाबलाः।
भविष्यति च वः सोऽयं काङ्क्षितो यः सुरोत्तमाः। बलेर्दानवमुख्यस्य यो विजेता भविष्यति।
न केवलं सुरारीणामेको जेता स विश्वकृत्। त्रैलोक्यस्यापि जेताऽसौ देवानामपि च प्रभुः।
यो धाता सर्व्वभूतानां विश्वं यश्च सनातनः। पूर्व्वजं यं सदा प्राहुर्देवगर्भनिदर्शनं। १४०९०
आत्मा वै येन विभुना कृतोऽजेयो महात्मना। बलेरतुलवीर्य्यस्य विश्वस्य जगतस्तथा।

प्रभवः स हि सर्व्वेषामस्माकमपि पूर्व्वजः । अचिन्त्यः स हि विश्वात्मा योगयुक्तः परन्तपः ।
तं देवापि महात्मानं न विदुः कोऽप्यसाविति । देवानस्मांश्च विश्वञ्च स वेत्ति पुरुषोत्तमः ।
तस्यैव तु प्रसादेन प्रवक्ष्ये परमां गतिं । यत्र योगं समास्थाय तपश्चरति दुश्चरं ।
क्षीरोदस्योत्तरे कूले उदीच्यां दिशि देवताः । अमृतं नाम परमं स्थानमाहुर्मनीषिणः । १४९९५
भवन्तस्तत्र वै गत्वा तपसा संशितव्रताः । अमृतं स्थानमासाद्य तपश्चरत दुश्चरं ।
ततः श्रोष्यथ विस्पष्टां स्निग्धगम्भीरनिस्वनां । उष्णान्ते तोयपूर्णस्य तोयदस्य समस्वनां ।
दिव्यां सृष्टाक्षरपदां रम्यामभयदां शिवां । वाणीं परमसंस्कारां वरदां ब्रह्मवादिनीं ।
दिव्यां सरस्वतीं सत्यां सर्व्वकल्मषनाशिनीं । सर्व्वदेवातिदेवस्य भाषितां भावितात्मनः ।
तस्य व्रतसमाप्तौ तु यावद्व्रतविसर्ज्जनं । अमोघस्य तु देवस्य विश्वरूपां महात्मनः । १५०००
स्वागतं वः सुरश्रेष्ठा मत्सकाशमिहागताः । कस्य वा कं वरं देवा ददानि वरदः स्थितः ।
तं दितिः कश्यपश्चैव गृह्णीयातां वरं ततः । प्रणम्य शिरसा पादौ तस्मै योगात्मने तदा ।
भगवानेव नः पुत्त्रो भवत्विति न संशयः । उक्तश्च परया भक्त्या तथाऽस्त्विति स वक्ष्यति ।
देवा ब्रुवन्तु ते सर्व्वे भ्राता नस्त्वं भवेति च । तथाऽस्त्विति च स श्रीमान् वक्ष्यते सर्व्वलोककृत् ।
तस्माद्देवं गृह्णीत तु वरं त्रिदशसत्तमाः । कृतकृत्याः पुनः सर्व्वे गच्छध्वं स्वं स्वमालयं । १५००५
तथाऽस्त्विति सुराः सर्व्वे कश्यपोऽदितिरेव च । ब्रह्मणो वन्द्य चरणौ गताः सौम्यां दिशं प्रति ।
तेऽचिरेणैव संप्राप्ताः क्षीरोदं सरितां पतिं । यथोद्दिष्टं भगवता ब्रह्मणा ब्रह्मवादिना ।
तेऽतीत्य सागरान् सर्व्वान् पर्व्वतांश्च सकाननान् । नदीश्च विविधा दिव्याः पृथिव्यां सुरसत्तमाः ।
अपश्यंस्ते सुघोराश्च सर्व्वसत्त्वविवर्ज्जिता । अभास्कराममर्य्यादां तमसा संवृतां दिशं ।
अमृतं स्थानमासाद्य कश्यपेन सुराः सह । दीक्षिताः कामदं दिव्यं व्रतं वर्षसहस्रिकं । १५०१०
प्रसादार्थं सुरेशाय तस्मै योगाय धीमते । नारायणाय देवाय सहस्राक्षाय भूतये ।
ब्रह्मचर्य्येण मौनेन स्थानवीरासनेन च । दमेन च सुराः सर्व्वे तपो दुश्चरमाश्रिताः ।
कश्यपस्तत्र भगवान् प्रसादार्थं महात्मनः । उदैरयत वेदोक्तं यमाहुः परमं स्तवं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

॥ कश्यप उवाच ॥ नमोऽस्तु ते देवदेवेश एकशृङ्ग वराह वृषार्च्चिष सिन्धुवृष वृषाकपे सुरवृष सुरनिर्म्मित अनिर्म्मित भद्र कपिल विष्वक्सेन ध्रुव धर्म्म धर्म्मराज वैकुण्ठ वृषावर्त्त अनादिमध्यनिधन धनञ्जय शुचिश्रवः पृश्निज पृश्निज अज अजय अमृतेशय सनातन विधातस्त्रिकाम त्रिधाम त्रिककुत्ककुद्मिन् दुन्दुभे महानाभ लोकनाभ पद्मनाभ लोकनाथ विरिञ्चे वरिष्ठ बहुरूप जय अजय विरूप विश्वरूप सत्याक्षर हव्याक्षर हव्यभुक् खण्डपरशो शक्र मुञ्जकेश हंस महाहंस महद्वर हृषीकेश सूक्ष्म परमसूक्ष्म तुराषाट् विश्वमूर्त्ते सुराग्रज नील निष्प्रभो विरजस्तमो रजः सत्त्व सत्त्वधाम सर्व्वलोक सर्व्वलोकप्रतिष्ठ शिपिविष्ट सुतपस्तपोश्रय अग्रज धर्म्मनाभ गभस्तिनाभ धर्म्मनेमे सत्यधाम सत्याक्षर गभस्तिनेमे

चन्द्रस्य विपाप्मन् त्वमेव समुद्रवास अजैकपात्सहस्रशीर्ष सहस्रसम्मित महाशीर्ष सहस्रदृक् सहस्रपात् अधोमुख महामुख
महापुरुष पुरुषोत्तम सहस्रबाहो सहस्रमूर्त्ते सहस्रास्य सहस्रभुज सहस्राज सहस्रप्रभ सहस्रप्रसमाजश्रेष्ठः।
विश्वदेव विश्वसम्भव सर्व्वेषामेव देवानां सौभग आदौगतिः विश्वं त्वमाश्रयनं विश्वं त्वामाहुः पुण्यहाय परम वरद
त्वमेव वषट्कार वौषट् ओङ्कारं त्वामेकमाहुरग्र्यं मखभागप्राशिनं ॥ ११११५
शतधार सहस्रधार भूर्ह्रं भुवर्ह्रं स्वर्ह्रं भूर्भुवस्वर्ह्रं त्वमेव भूत भुवन स्वधा त्वमेव ब्रह्ममय ब्रह्ममय ब्रह्मादिस्त्वमेव ॥
द्यौरसि पृथिव्यसि पूषाऽसि मातरिश्वाऽसि धर्म्मोऽसि मघवाऽसि होता पोता हन्ता नेता मन्ता होम्यहोता वर
स्वरस्त्वं होम्यहोता त्वमेव ॥
आपाऽसि विश्ववाक् धाता परमेण धाम्ना त्वमेव दिग्भ्यः स्रुक् स्रुग्भाण्ड इज्योऽसि यष्टा त्वमसि समिद्धस्त्वं गतिर्गतिमताम
सि मोक्षोऽधिधाताऽसि गुह्योऽसि सिद्धोऽसि धन्योऽसि योगोऽसि परमोऽसि यज्ञोऽसि सोमोऽसि यूपोऽसि दीक्षाऽसि दक्षि
णाऽसि विश्वमसि।
स्थविष्ठ स्थविर विश्वतुराषाट् हिरण्यगर्भ हिरण्यनाभ हिरण्यनारायण नारायणात्मन नृणामयन आदित्यवर्ण आ
दित्य तेजो महापुरुष सुरोत्तम। आदिदेव पद्मनाभ पद्मेशय पद्माक्ष पद्मगर्भ हिरण्याय केशश्मश्रु विश्वदेव विश्वतोमुख
विश्वाक्ष शिवसम्भव विश्वभुक् त्वमेव ॥
भूविक्रम भुवविक्रम स्वविक्रम क्रमावभुक्रमाक्रम सुविभुः प्रभाकरशम्भुः स्वयम्भूश्च भूतादिः। भूतात्मन् प्रभुश्चतुर्महा
भूत विश्वभूत विश्वं त्वमेव विश्वगोप्ताऽसि विश्वसम्भव। पवित्रमसि होत्रमसि सत्यमसि तेजोऽसि सर्व्वमसि हविर्विश्वभुक् ऊर्द्ध
कर्म्मन् अमृतेत्मन अमृतन्यम दिवस्पते ओतप्रोत विश्वस्रुक् विश्वपते घृताचि अग्ने रोहिण सुरासुरगुरो महादेव नृदेवदेवस्त्व
त द्रुहिन अनन्तकर्म्मन् वंश प्राग्वंश विश्वपाल्त्वं त्वमेव विश्वं बिभर्षि वरार्थिनो नस्त्रायस्वेति। ११११९
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने महापुरुषस्तवे ऊनषष्ट्यधिकद्विशततोऽध्यायः ॥ २५९ ॥
॥ वैशम्पायन उवाच ॥ नारायणस्तु भगवान् श्रुत्वैतत्परमं स्तवं। ब्रह्मर्षेन द्विजेन्द्रेण कश्यपेन समीरितं।
स्निग्धगम्भीरनिर्घोषं जीमूतघननिस्वनं। मनसा प्रीतियुक्तेन विबुधानां महात्मनां।
उवाच वचनं सम्यक् हृष्टपुष्टपदाक्षरं। अकामात् प्रभुरे प्रब्दा दर्शनं सोपलभ्यते।
श्रीमान् प्रीतमना देवः सोवाच प्रभुरीश्वरः।
॥ विष्णुरुवाच ॥ प्रीतोऽस्मि वः सुरश्रेष्ठाः सर्व्वेषामेव निश्चयात्। वरं वृणुत भद्रं वो वरदोऽस्मि सुरोत्तमाः। ११११६
॥ कश्यप उवाच ॥ यदेव भगवान् प्रीतः सर्व्वेषाममरोत्तम। तदेव कृत्यकृत्याः स्मस्त्वं हि नः परमा गतिः।
यदि प्रसन्नो भगवान् दातव्यश्च वरो यदि। वासवस्यानुजो भ्राता ज्ञातीनां नन्दिवर्द्धनः।
अदित्यामेव वै श्रीमान् भगवानस्तु मे सुतः।
॥ वैशम्पायन उवाच ॥ अदितिर्देवमाता च एतमेवार्थमुत्तमं। पुत्रार्थे वरदं प्राह भगवन्तं वरार्थिनी।
याचे त्वां पुत्रकामा वै भवान् पुत्रो भवत्विति। ११२०
॥ देवा ऊचुः ॥ निःश्रेयसार्थं सर्व्वेषां देवानां हि महातपाः। भ्राता भर्त्ता च धाता च शरणं नं भजस्व नः।

अदित्याः पुत्रतां याते त्वयि देवाः सवासवाः। देवशब्दं वदिष्यन्ति कश्यपस्यात्मजो भव।
॥ वैशम्पायन उवाच ॥ ततस्तानब्रवीद्विष्णुर्देवान् कश्यपमेव च। एवं भवतु भद्रं वो यथेष्टं काममंशुत।
सर्व्वेषामेव युष्माकं ये भविष्यन्ति शत्रवः। मुहूर्त्तमपि ते सर्व्वे न स्थास्यन्ति ममाग्रतः।
हत्वाऽसुरगणान् सर्व्वान् ये चान्ये देवशत्रवः। करिष्ये देवताः सर्व्वा यज्ञभागाग्रभोजनाः। १४१३५
हव्यादांश्च सुरान् सर्व्वान् कव्यादांश्च पितॄनपि। करिष्ये विबुधश्रेष्ठाः पारमेष्ठ्येन कर्म्मणा।
यथागतेन मार्गेण निवर्त्तध्वं सुरोत्तमाः। देवमातुस्तथाऽदित्याः कश्यपस्यामितात्मनः।
यथा तनोषितं कर्त्ता गच्छध्वं स्वं समाश्रयं।
॥ वैशम्पायन उवाच ॥ एवमुक्ते तु वचने विष्णुना प्रभविष्णुना। देवाः प्रहृष्टमनसः पूजयन्ति स्म सर्व्वशः।
विश्वेदेवा महात्मानः कश्यपोऽदितिरेव च। साध्या मरुद्गणाश्चैव शक्रश्चैव महाबलः। १४१४०
नमस्कृत्य सुरेशाय तस्मै देवाय रंहसे। प्रयाताः प्राग्दिशं पुण्यां विपुलं कश्यपाश्रमं।
ते कश्यपाश्रमं गत्वा ब्रह्मर्षिगणसेवितं। चेरुः स्वाध्यायनिरता अदित्या गर्भमोक्षवः।
अदितिर्देवमाता च गर्भं दध्रेऽतितेजसं। भूतात्मानं महात्मानं दिव्यं वर्षसहस्रिकं।
पूर्णे वर्षसहस्रे तु प्रसूता गर्भमुत्तमं। सुराणां शरणं देवमसुराणां विनाशनं।
गर्भस्थेन तु तेनैव परित्रातास्तदा सुराः। आददानेन तेजांसि त्रैलोक्यस्य महात्मना। १४१४५
तस्मिन् जाते तु देवेशे त्रैलोक्यस्य सुखावहे। भयदे दैत्यसंघानां सुराणां नन्दिवर्द्धने।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने वामनप्रसूतौ षष्ठ्यधिकद्विशततोऽध्यायः ॥ २६० ॥
॥ वैशम्पायन उवाच ॥ प्रजानां पतयः सप्त सप्त चैव महर्षयः। तस्य देवस्य जातस्य नमस्कारं प्रचक्रिरे।
भरद्वाजः कश्यपो गौतमश्च विश्वामित्रो जमदग्निर्वशिष्ठः। यश्चोदितो भास्करेऽभूत् प्रनष्टे सोऽप्यत्रात्रिर्भगवानाजगाम।
मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः। दक्षः प्रजापतिश्चैव नमस्कारं प्रचक्रिरे।
और्व्वो वशिष्ठपुत्रश्च स्तम्बः कश्यप एव च। कपीवानकपीवांश्च दत्तोलिश्च्यवनस्तथा। १४१५०
वशिष्ठपुत्राः सप्तासन् वाशिष्ठा इति विश्रुताः। हिरण्यगर्भस्य सुता ऊर्ज्जजाताः सुतेजसः।
गार्ग्यः प्रभुस्तथैवाग्निः जन्यो वामन एव च। देवबाहुर्यदुध्रश्च पर्ज्जन्यश्चैव सोमजः।
हिरण्यरोमा वेदशिराः सत्यनेत्रस्तथैव च। विश्वेऽतिविश्वश्च्यवनः सुधामा विरजास्तथा।
अतिनामा सहिष्णुश्च नमस्कारमकुर्व्वत। विद्योतमानवपुषः सर्व्वाभरणभूषिताः।
उपानृत्यन्त देवेशं विष्णुमप्सरसां गणाः। ततो गन्धर्व्वमुख्येषु प्रवदत्सु विहायसि। १४१५५
सप्तभिः सह गन्धर्व्वैः प्रागायत च तुम्बुरुः। महाद्युतिश्चित्रशिरा ऊर्णायुरनघस्तथा।
गोमायुः सूर्य्यवर्च्चाश्च सोमवर्च्चाश्च सप्तमः। युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा।
त्रयोदशः शालिशिराः पर्ज्जन्यश्च चतुर्दशः। कलिः पञ्चदशश्चात्र नारदश्चैव षोडशः।
हाहाहूहुश्च गन्धर्व्वो हंसश्चैव महाद्युतिः। इत्येते देवगन्धर्व्वा उपागायन्त केशवं।
तथैवाप्सरसो हृष्टाः सर्व्वाभरणभूषिताः। उपानृत्यन्त देवेशं सर्व्वाङ्गसुभदर्शनाः। १४१६०

ननृतुश्च महाभागा जगुश्चायतलोचनाः । सुमध्या चारुमध्या च प्रियमुख्या वरानना ।
अनूका च तथा यामी मिश्रकेशी अलम्बुषा । मरीचिः शुचिका चैव विद्युत्पर्णा तिलोत्तमा ।
अद्रिका लक्ष्मणा चैव रम्भा तद्वन्मनोरमा । असिता च सुबाहुश्च अविश्वा सुभगा तथा ।
उर्व्वशी चित्रलेखा च सुग्रीवी च सुलोचना । पुण्डरीकसुगन्धा च सुरथा च प्रमाथिनी ।
काम्या शारद्वती चैव तथाऽन्यास्तत्र संघशः । मेनका सहजन्या च पर्णिका पुञ्जिकस्थला । १४९६४
एतास्त्वप्सरसोऽन्याश्च ननृतुर्न्ति सहस्रशः । धाताऽर्य्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्र पूषा विवस्वांश्च त्वष्टा च सविता तथा । कथितो विष्णुरित्येव काश्यपेयो गणस्तथा ।
आदित्या द्वादशैते तु ज्वलन्तो वह्निवर्चसः । चक्रुस्तस्य सुरेशस्य नमस्कारं महात्मनः ।
मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः । अजैकपादहिर्बुध्न. पिनाकी चापराजितः ।
दहनोऽथेश्वरश्चैव कपाली च विशाम्पते । स्थाणुर्भवश्च भगवान्रुद्रास्तत्राऽवतस्थिरे । १४९७०
अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः । विश्वेदेवाश्च साध्याश्च तस्य प्राञ्जलयः स्थिताः ।
शेषानुजा महाभागा वासुकिप्रमुखास्तथा । कच्छपश्चापकुञ्जश्च धृतराष्ट्रबलाहकौ ।
अष्टव्यास्तेजसा दीप्ता महाक्रोधा महाबलाः । एते नागा महात्मान. सर्व्वे प्राञ्जलयः स्थिताः ।
एते चान्ये च बहवो नागास्तस्य महात्मनः । तस्थुः प्राञ्जलयः सर्व्वे नमस्कारं प्रचक्रिरे ।
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महाबलः । अरुणश्चारुणिश्चैव तस्य प्राञ्जलय. स्थिताः । १४९७५
पितामहश्च भगवान् स्वयमागम्य लोककृत् । प्राह देवगुरुः श्रीमान् सह सर्व्वैर्महात्मभिः ।
॥ ब्रह्मोवाच ॥ यस्मात् प्रसूयते लोक. प्रभविष्णु सनातनः । तस्माल्लोकेश्वर. श्रीमान् विष्णुरेव भवत्वयं ।
एवमुक्त्वा तु भगवान् सार्द्धं देवर्षिभिः प्रभुः । नमस्कृत्य सुरेशाय जगाम त्रिदिवं पुनः ।
स तु जात. सुरेशान. कश्यपस्यात्मजः प्रभुः । नवदुर्द्दिनमेघाभो रक्ताक्षो वामनाकृति. ।
श्रीवत्सेनोरसि श्रीमान् रोमजातेन राजता । उत्फुल्लनयनाः सर्व्वाः पश्यन्त्यप्सरसस्तदा । १४९८०
दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भा. सदृशी सा स्यात्तेजसस्तस्य महात्मन. ।
सुराधिप्रतिमः श्रीमान् भूर्भुवोभूतभावन. । शुचिरोमा महोरस्क. सर्व्वतेजोमयः प्रभुः ।
यो गतिः पुण्यशीलानामगतिः पापकर्म्मणां । योगयुक्ता महात्मानो यं विदुर्योगवित्तमं ।
यस्याष्टगुणमैश्वर्य्यं यमाहुर्देवसत्तमं । यं प्राप्य शाश्वतं विप्रा नियताः मोक्षकाङ्क्षिणः ।
जन्मतो मरणाच्चैव मुच्यन्ते योगभाविताः । यदेतत्तप इत्याहुः सर्व्वाश्रमनिवासिनः । १४९८५
सेवन्ते यं यताहारा दुश्चरं व्रतमास्थिताः । योऽनन्त इति नागेषु सेव्यते सर्व्वभोगिभिः ।
सहस्रमूर्द्धा रक्ताक्षः शेषादिभिरनुत्तमै. । यो यज्ञ इति विप्रेन्द्रैरिज्यते स्वर्गलिप्सुभिः ।
नानास्थानगतः श्रीमानेकः कविरनुत्तमः । यं वेदा गान्ति वेत्तारं यज्ञभागप्रदायिनं ।
कृपार्चिश्चन्द्रसूर्य्याभं देवमाकाशविग्रहं । स उवाच सुरान् सर्व्वान् वाचा वै परया विभुः ।
जानन्नपि महातेजा गतो योगेन बालतां । किं करोमि सुरश्रेष्ठा वरं कश्च ददामि वः । १४९९०

यत् काङ्क्षितं वः सर्व्वेषां तद्वै ब्रूत मुदा युताः। तस्य तद्वचनं श्रुत्वा वामनस्य महात्मनः।
सर्व्वे ते हृष्टमनसो देवाः कश्यपनन्दनं। ऊचुः प्राञ्जलयो विष्णुं सुराः शक्रपुरोगमाः।
ब्रह्मणो वरदानेन हृतं नो निखिलं जगत्। तपसा महता चैव विक्रमेण बलेन च।
बलिना दैत्यमुख्येन सर्व्वशेन महात्मना। अवध्यः किल सोऽस्माकं सर्व्वेषां देवसत्तम।
भवान् प्रभवते तस्य नान्यः कश्चन सुव्रत। तत् प्रपद्यामहे सर्व्वे भवन्तं शरणार्थिनः। १२८९५
शरण्यं वरदं देवं सर्व्वभूतभयापहं। त्वमेणाञ्च हितार्थाय लोकानाञ्च सुरेश्वर।
प्रियार्थञ्च तथाऽदित्याः कश्यपस्य तथैव च। कव्यं पितॄणामुचितं सुराणां हव्यमुत्तमं।
प्रवर्त्ततां महाबाहो यथा पूर्व्वं सुरोत्तम। आनृण्यार्थं सुरेशस्य वासवस्य महात्मनः।
प्रत्यानय सुरेन्द्रस्य त्रैलोक्यमिदमव्ययं। क्रतुना वाजिमेधेन यजते स हि दानवः।
यत्प्रत्यानयने युक्तं लोकानां तद्विचिन्तय। १२९००
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने ब्रह्मवाक्ये एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्ते तदा देवैर्विष्णुर्वामनरूपधृक्। महर्षीननुवाचाय सर्व्वान्देवानिदं वचः।
॥ वामन उवाच ॥ तस्य यज्ञसकाशं मां सर्व्वर्षिर्वेदपारगः। बृहस्पतिर्महातेजा नयत्वङ्गिरसः सुतः।
तस्याहं समनुप्राप्तो यज्ञवाटं सुरोत्तमाः। विधास्ये यथायुक्तं त्रैलोक्यहरणाय वै।
॥ वैशम्पायन उवाच ॥ ततो बृहस्पतिः श्रीमाननयद्वामनं प्रभुं। यज्ञवाटं महातेजा दानवेन्द्रस्य धीमतः।
मौञ्जी यज्ञोपवीती च छत्री दण्डाजिनी तथा। वामनो धूसरकेशो भगवान् बालरूपधृक्। १२९०५
लोकेश्वरेश्वरः श्रीमान् सुरेन्द्रपुरोगमैः। अन्वास्यमानो भगवानदृष्टोऽथ बृहद्वन्।
दानवाधिपतेस्तस्य बलेर्वैरोचनस्य ह। यज्ञवाटमचिन्त्यात्मा जगाम सुरसत्तमः।
पालितेऽपि हि दैतेयैः साग्रामिकपरिच्छदैः। द्वारे दानवसम्बाधे सहसैव विवेश ह।
बलिभिश्चैव मन्त्राढ्यैः सर्व्वतः परिवारितं। दैत्यदानवराजेन्द्रमुख्यसंवर्जितं वशी।
तं गत्वा यज्ञवाटन्तु ब्रह्मर्षिगणसंकुलं। आत्मानमेव भगवान् वर्णयामास तं क्रतुं। १२९१०
वर्णयित्वा यथान्यायं यज्ञं यज्ञ सनातनः। विस्तरेणामरश्रेष्ठः प्रश्नैर्विविधैस्तथा।
शुक्रादीन्निजयापि यज्ञकर्म्मविचक्षणः। सर्व्वानेव निजप्राह चकार स निरुत्तरान्।
आराध्य बलेस्तस्य बलिशामभितस्तथा। यज्ञमात्मानमेवासौ हेतुभिः कारणं विभुः।
वैदिकैरसकाशैश्च पुनरप्यथ भारत। प्रत्यक्षमभिसन्धानो दर्शयामास चित्रगुः।
ततो निरुत्तरान् दृष्ट्वा सोपाध्यायानृषीन् कृतान्। अदृष्टेनापि वृद्धांस्तान् वामनेन महौजसा। १२९१५
अद्भुतश्चापि मेने स विरोचनसुतो बलिः। मूर्द्ध्ना कृताञ्जलिश्चेदमब्रवीद्विस्मितो वचः।
कुतस्त्वं कोऽसि कस्यासि किञ्चेहास्ति प्रयोजनं। नैवंविधपरिज्ञानो दृष्टपूर्व्वो मया द्विजः।
बालो मतिमतां श्रेष्ठो ज्ञानविज्ञानकोविदः। शिष्टश्चाप्यस्मत्पक्षो मनोज्ञः प्रियदर्शनः।
नेदृशाः सन्ति देवानामृषीणाञ्चापि सूनवः। न नागानां न यक्षाणां नासुराणां न रक्षसां।

न पितॄणां न सिद्धानां गन्धर्व्वाणान्तथैव च। योऽसि सोऽसि नमस्तेऽस्तु ब्रूहि किं करवाणि ते। १०२२०
॥ वैशम्पायन उवाच ॥ उक्त एवमचिन्त्यात्मा बलिना वामनस्तदा। प्रोवाचोपायतत्त्वज्ञः स्मितपूर्व्वमिदं वचः।
॥ विष्णुरुवाच ॥ अहो यज्ञोऽसुरेन्द्रस्य बहुभक्ष्य. सुसंस्कृतः। पितामहस्येव पुरा यजतः परमेष्ठिन.।
सुरेश्वरस्य शक्रस्य यमस्य वरुणस्य च। विशेषितास्त्वया यज्ञा दानवेन्द्र महाबल।
यजता वाजिमेधेन क्रतूनां प्रवरेण तु। सर्व्वपापविनाशाय स्वर्गमार्गप्रदर्शिना।
सर्व्वकाममयो ह्येष सम्मतो ब्रह्मवादिनां। क्रतूनां प्रवरः श्रीमानश्वमेध इति स्मृत.। १०२२५
सुवर्णशृङ्गो हि महानुभावो लोहखुरो वायुजवो महात्मा। सर्व्वैयज्ञः काञ्चनगात्रगौरः स विश्वयोनि. परमो हि मेध्य.।
आस्थाय वै वाजिनमश्वमेधमिष्ट्वा नरा दुष्कृतमुत्तरन्ति। आक्रम्य यं वेदविदो द्विजेन्द्रा वैश्वानरं वाजिनमश्वमेधं।
यथाश्रमाणां प्रवरो गृहाश्रमो यथा नराणां प्रवरा द्विजातयः। यथाऽसुराणां प्रवरो भवानिह तथा क्रतूनां प्रवरोऽश्वमेधः।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु दैत्येन्द्रो वामनेन समीरितं। मुदा परमया युक्तः प्राह दैत्यपतिर्ब्बलिः।
॥ बलिरुवाच ॥ कस्मासि ब्राह्मणश्रेष्ठ किमिच्छसि ददामि ते। वरं वरय भद्रं ते यथेष्टं काममाप्नुहि। १०२३०
॥ वामन उवाच ॥ न राज्यं न च यानानि न रत्नानि न च स्त्रियः। कामये यदि तुष्टोऽसि धर्म्मे च यदि ते मतिः।
गुर्व्वर्थं मे प्रयच्छस्व पदानि त्रीणि दानव। त्वमग्निशरणार्थाय एष मे परमो वरः।
॥ बलिरुवाच ॥ त्रिभि. किं तव विप्रेन्द्र पदैः प्रवदताम्वर। शतं शतसहस्राणां पदानां मार्गतां भवान्।
॥ शुक्र उवाच ॥ मा ददस्व महाबाहो न त्वं वेत्सि महासुर। एष मायाप्रतिच्छन्नो भगवान् प्रवरो हरिः।
वामनं रूपमास्थाय शक्रप्रियचिकीर्षया। त्वां वञ्चयितुमायातो वटुरूपधरो हरिः। १०२३५
एवमुक्त. स शुक्रेण चिरं सञ्चिन्त्य वै बलिः। प्रहर्षेण समायुक्तः किमतः पात्रमिष्यते।
गृह्य हस्तेन संभ्रान्तो भृङ्गारं कनकोद्भवं।
॥ बलिरुवाच ॥ विप्रेन्द्र प्राङ्मुखस्तिष्ठ स्थितोऽस्मि कमलेक्षण। प्रतीच्छ देहि किं भूमिं का मात्रा भोः पदत्रयं।
दत्तं व. पातयं जलं नैव मिथ्या भवेद्गुरुः।
॥ शुक्र उवाच ॥ भो न देयं कुतो दैत्य विज्ञातोऽयं मया ध्रुवं। कोऽयं विष्णुरसौ गोतिर्वञ्चितस्त्वं न वञ्चितः। १०२४०
कथ स नाथो यद्विष्णुर्यज्ञे स्वयमुपस्थित.। दास्यामि देवदेवाय यद्यदिच्छत्ययं प्रभुः।
को वाऽन्य. पात्रभूतोऽस्मात् विष्णोः परतरं भवेत्। एवमुक्त्वा बलिः शीघ्रं पातयामास वै जलं।
॥ वामन उवाच ॥ पदानि त्रीणि दैत्येन्द्र पर्य्याप्तानि ममानघ। यन्मया पूर्व्वमुक्तं हि तत्तथा न तदन्यथा।
॥ वैशम्पायन उवाच ॥ इत्येतद्वचनं श्रुत्वा वामनस्य महौजसः। कृष्णाजिनोत्तरीयं स हत्वा वैरोचनिस्तदा।
एवमस्त्विति दैत्येशो वाक्यमुक्त्वाऽरिसूदनः। ततो वारिसमापूर्णं भृङ्गारं स परामृशत्। १०२४५
वामनो ह्यसुरेन्द्रस्य चिकीर्षु. कदनं महत्। क्षिप्रं प्रसारयामास दैत्यक्षयकरं करं।
प्राङ्मुखयापि दैत्येशस्तस्मै सुमनसा जलं। दातुकामः करे यावत्तावत्तं प्रत्यषेधयत्।
तस्य तद्रूपमालोक्य अचिन्त्यस्यामितौजस.। अभूतपूर्व्वं देवारेर्जिहीर्षो. श्रियमासुरी।
दक्षिणो महाप्राज्ञः प्रह्लादस्याप्यवोदयः।

॥ प्रह्लाद उवाच ॥ मा ददस्व जलं हस्ते वटोर्व्वामनरूपिणः । स ह्यसौ येन ते पूर्व्वं निहतः प्रपितामहः । १४२८०
विष्णुरेष महाप्राज्ञस्त्वां वञ्चयितुमागतः ।
॥ बलिरुवाच ॥ हन्त तस्मै प्रदास्यामि देवायेमं प्रतिग्रहं । अनुग्रहकरं देवमीदृशन्तु कुतः प्रभुं ।
ब्रह्मणोऽपि गरीयांसं पात्रं लप्स्यामहे वयं । अवश्यञ्चासुरश्रेष्ठ दातव्यं दीक्षितेन वै ।
इत्युक्त्वाऽसुरसंघानां मध्ये वैरोचनिस्तदा । देवाय प्रददौ तस्मै पदानि त्रीणि विष्णवे ।
॥ प्रह्लाद उवाच ॥ दानवेश्वर मादास्त्वं विप्रायास्मै प्रतिग्रहं । नैनं विप्रमहं मन्ये नेदृशो भवति द्विजः । १४२८५
रूपेणानेन दैत्येन्द्र सत्यमेतद्ब्रवीमि ते । नरसिंहमहं मन्ये तमेव पुनरागतं ।
एवमुक्तस्तदा तेन प्रह्लादेनामितौजसा । प्रह्लादमब्रवीद्वाक्यमिदं निर्भर्त्सयन्निव ।
॥ बलिरुवाच ॥ देहीति याचते यो हि प्रत्याख्याति च योऽसुर । उभयोरप्यलक्ष्मी वै भागधेयं विशते नरं ।
प्रतिज्ञाय तु यो विप्रे न ददाति प्रतिग्रहं । स याति नरकं पापी मित्रगोत्रसमन्वितः ।
अलक्ष्मीभयभीतोऽहं ददाम्यस्मै वसुन्धरां । प्रतिग्रहीता वाऽप्यन्यः कश्चित्तस्माद्द्विजोऽथ वै । १४२९०
नाधिको विद्यते यस्मात्तद्ददामि वसुन्धरां । हृदयस्य च मे तुष्टिः परा भवति दानव ।
दृष्ट्वा वामनरूपेण याचन्तं द्विजपुङ्गवं । एष तस्मात् प्रदास्यामि न स्थास्यामि निवारितः ।
भूयश्च प्राब्रवीदेनं वामनं वटुरूपिणं । स्वल्पैः स्वल्पमते किन्ते पादैस्त्रिभिरनुत्तम ।
कृत्स्नां ददामि ते विप्र पृथिवीं सागरैर्वृतां ।
॥ वामन उवाच ॥ न पृथ्वीं कामये कृत्स्नां सन्तुष्टोऽस्मि पदैस्त्रिभिः । एष एव रुचितो मे वरो दानवसत्तम । १४२९५
॥ वैशम्पायन उवाच ॥ तथाऽस्त्विति बलिः प्रोक्त्वा स्पर्शयामास दानवः । पदानि त्रीणि देवाय विष्णवेऽमिततेजसे ।
तोये तु पतिते हस्ते वामनोऽभूदवामनः । सर्व्वदेवमयं रूपं दर्शयामास वै प्रभुः ।
भूः पादौ द्यौः शिरश्चास्य चन्द्रादित्यौ च चक्षुषी । पादाङ्गुल्यः पिशाचाश्च हस्ताङ्गुल्यश्च गुह्यकाः ।
विश्वेदेवाश्च जानुस्था जंघे साध्याः सुरोत्तमाः । यक्षा नखेषु संभूता लेखाश्चाप्सरसस्तथा ।
विद्युतो विपुला दृष्टिः केशाः सूर्य्यांशवस्तथा । तारका रोमकूपाणि रोमाणि च महर्षयः । १४३००
बाहवो विदिशस्तस्य दिशः श्रोत्रे तथैव च । अश्विनौ श्रवणे चास्य नासा वायुर्महाबलः ।
प्रसादश्चन्द्रमाश्चैव मनो धर्म्मस्तथैव च । सत्यमस्याभवद्वाणी जिह्वा देवी सरस्वती ।
ग्रीवाऽदितिर्महादेवी तालु सूर्य्यश्च दीप्तिमान् । द्वारं स्वर्गस्य नाभिर्वै मित्रस्त्वष्टा च वै भ्रुवौ ।
मुखं वैश्वानरश्चास्य वृषणौ तु प्रजापतिः । हृदयं भगवान् ब्रह्मा पुंस्त्वं वै कश्यपो मुनिः ।
पृष्ठेऽस्य वसवो देवा मरुतः सर्व्वसन्धिषु । सर्व्वच्छन्दांसि दशना ज्योतींषि विपुलाः प्रभाः । १४३०५
उरो रुद्रो महादेवो धैर्य्यञ्चास्य महार्णवः । उदरश्चास्य गन्धर्व्वा भुजङ्गाश्च महाबलाः ।
लक्ष्मीर्मेधा धृतिः कान्तिः सर्व्वविद्याश्च वै कटिः । ललाटमस्य परमं यत् स्थानं परमात्मनः ।
सर्व्वज्योतींषि यानीह तपः शक्रश्च देवराट् । तस्य देवातिदेवस्य तेजो ह्याक्रमेदात्मनः ।
स्तनौ कक्षौ च वेदाश्च ओष्ठौ चास्य मखास्तथा । इष्टयः पशुबन्धाश्च द्विजानां चेष्टितानि च ।

तस्य देवमयं रूपं दृष्ट्वा विष्णोर्महासुराः । उपासर्पन्त संक्रुद्धाः पतङ्गा इव पावकं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने विश्वरूपप्रकाशे द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥
॥ वैशम्पायन उवाच ॥ शृणु नामानि सर्व्वेषां रूपाण्याभरणानि च । आयुधानि च मुख्यानि दानवानां महात्मनां ।
विप्रचित्तिः शिविः शङ्कुरयःशङ्कुस्तथैव च । अयःशिरा अश्वशिरा हयग्रीवश्च वीर्य्यवान् ।
वेगवान् केतुमानुग्रः सोमव्यग्रो महासुरः । पुष्करः पुष्कलश्चैव साश्वोऽश्वपतिरेव च ।
प्रह्लादोऽश्वशिराः कुम्भः संह्लादो गगनप्रियः । अनुह्लादो हरिहरौ वराहः संहरोऽरुजः ।
वृषपर्व्वा विरूपाक्षो मुनीन्द्रश्चन्द्रलोचनः । निष्प्रभः सुप्रभः श्रीमांस्तथैव च निरुदरः ।
एकवक्त्रो महावक्त्रो द्विवक्त्रः कालसन्निभः । शरत्कीर्त्तिर्महाजिह्वः शङ्कुकर्णो महाध्वनिः ।
शरभः शलभश्चैव कुपथः कापथः क्रथः । दीर्घजिह्वोऽर्कनयनो मृदुचापो मृदुप्रियः ।
वायुर्गविष्ठो नमुचिः शम्बरो विचरो महान् । चन्द्रहन्ता क्रोधहन्ता क्रोधवर्द्धन एव च ।
कालकः कालकाचश्च वृत्रः क्रोधो विमोचनः । गरिष्ठश्च वरिष्ठश्च प्रलम्बो नरकः पृथुः ।
इन्द्रतापनवातापी केतुमान् बलदर्पितः । असिलोमा पुलोमा च वाष्कलः प्रमदो मदः ।
खसमः कालवदनः करालः केशिरेव च । एकाक्षश्चैव राहुश्च तुहुण्डः समलः स्वपः ।
एते चान्ये च बहवः क्रममाणं त्रिविक्रमं । उपतस्थुर्महात्मानं विष्णुं दैत्यगणास्तदा ।
पाशोद्यतकराः केचिद्व्यादितास्याः खरस्वनाः । शतघ्नीचक्रहस्ताश्च परश्वधधरास्तथा ।
प्रासमुद्गरहस्ताश्च तथा परिघपाणयः । महाशिलायुधकराः शूलहस्ता महाबलाः ।
महावृक्षोद्यतकरास्तथैव च धनुर्द्धराः । महापट्टिशहस्ताश्च तथा मुषलपाणयः ।
गदाभुशुण्डीहस्ताश्च वज्रहस्तास्तथाऽपरे । असिकम्पनहस्ताश्च दानवा युद्धदुर्मदाः ।
नानाप्रहरणा घोरा नानावेषा महाबलाः । कूर्म्मकुक्कुटवक्त्राश्च शशवक्त्रास्तथाऽपरे ।
खरोष्ट्रवदनाश्चैव वराहवदनास्तथा । भीमा मकरवक्त्राश्च शिशुमारमुखास्तथा ।
मार्ज्जारशशवक्त्राश्च वृकवक्त्राश्च दानवाः । गोवक्त्रा मेषवक्त्राश्च घोरा खगमुखास्तथा ।
उद्रवक्त्रा किरवक्त्राश्च गजवक्त्राश्च दानवाः । नकुलश्येनवक्त्राश्च पारावतमुखास्तथा ।
आखुमृगाननाः क्रूराश्छागाऽविमहिषाननाः । शारमेयमुखा रौद्राः क्रोष्टुवक्त्राश्च दानवाः ।
चक्रवाकमुखाश्चैव गोधावक्त्रास्तथाऽपरे । शकधारानना क्रूरा चक्रवाहूकवक्त्रकाः ।
मद्गुशिखिमुखाश्चैव मयूरवदनास्तथा । गजेन्द्रचर्मवसनास्तथा कृष्णाजिनाम्बराः ।
चीरसंवृतगात्राश्च तथा फलकवाससः । उष्णीषिणो मुकुटिनस्तथा कुण्डलिनोऽपरे ।
किरीटिनो लम्बशिखाः कम्बुग्रीवाः सुवर्चसः । नानावेषधरा दैत्या नानामाल्यानुलेपनाः ।
स्वान्यायुधानि रौद्राणि प्रगृह्यासुरसत्तमाः । क्रममाणं हृषीकेशमुपातिष्ठन्त दानवाः ।
प्रमथ्य सर्व्वान् दैतेयान् पादहस्ततलैः प्रभुः । चकार चिदिवं देवधिमीर्विवमवेषंः ।
रूपं कृत्वा महाकायं जहाराशु च मेदिनीं । चैतास्य क्रममाणस्य पुतिरादित्यसन्निभा ।

तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे । नभः प्रक्रममाणस्य सक्थिदेशे महात्मनः ।
परं विक्रममाणस्य पादमूले व्यवस्थितौ । विष्णोरमितवीर्य्यस्य वदन्त्येवं द्विजातयः । १२२१०
जित्वा लोकांस्ततः कृत्स्नान् हत्वा चासुरपुङ्गवान् । ददौ शक्राय वसुधां हरिर्लोकनमस्कृतः ।
सुतलं नाम पातालमधस्ताद्वसुधातले । बलेर्द्दत्तं निवासाय विष्णुना प्रभविष्णुना ।
तद्वाप्यासुरश्रेष्ठश्चकार मतिमुत्तमां । रसातलतले वासमकरोदसुराधिपः ।
तत्रस्थस्स महातेजा ध्यानं परममास्थितः । उवाच वचनं धीमान् विष्णुं लोकनमस्कृतं ।
किं मया देव कर्त्तव्यं ब्रूहि सर्व्वमशेषतः । ततो दैत्याधिपं प्राह देवो विष्णुः सुरोत्तमः । १२२१५
॥ विष्णुरुवाच ॥ ददानि ते महाभाग वरं वरय सुव्रत । परितुष्टोऽस्मि भद्रं ते यथेष्टं काममाप्नुहि ।
मा च शक्रस्य वचनं पर्य्यहासीः कथञ्चन । अहमाज्ञापयामि त्वां श्रेयश्चैवमवाप्स्यसि ।
एवमुक्त्वा ततो विष्णुरथ भूयोऽसुराधिपं । वाचा परमया प्राह सान्त्वयन् सर्व्वलोककृत् ।
यत्त्वया सलिलं दत्तं गृहीतं पाणिना मया । तस्मात्ते दैत्य देवेभ्यो नास्ति जीवितसंशयः ।
सुतलं नाम पाताले तत्र त्वं सानुगो वस । सर्व्वदैत्यगणैः सार्द्धं मत्प्रसादान्महासुर । १२२२०
न च ते देवदेवस्य शक्रस्यामिततेजसः । शासनं प्रतिहन्तव्यं स्मरता मम शासनं ।
देवताश्चापि ते सर्व्वाः पूज्या एव महासुर । प्राप्स्यसेवं महाभाग दिव्यान् कामान् यथेप्सितान् ।
इह चामुत्र च सुखं विविधांश्च परिच्छदान् । दैत्याधिपत्यञ्च पुनर्मत्प्रसादादवाप्स्यसि ।
भोगांश्च विविधान् सम्यक् यज्ञांश्चैव महर्द्धिमान् । यदा चैतां मया प्रोक्तां मर्य्यादां लङ्घयिष्यसि ।
बन्धिष्यन्ति तदा हि त्वां नागा भीमैर्महोजसः । नमस्कार्य्यश्च ते नित्यं महेन्द्रस्त्रिदशाधिपः । १२२२५
मम ज्येष्ठः सुरश्रेष्ठः शासनं प्रतिमन्यतां ।
॥ बलिरुवाच ॥ देवदेव महाभाग शङ्खचक्रगदाधर । सुरासुरगुरुश्रेष्ठ सर्व्वलोकमहेश्वर ।
तत्रासतो मे पाताले भागं ब्रूहि सुरोत्तम । कथं तत्र मया स्थेयं विबुधानां महेश्वर ।
मम किं त्रिदशश्रेष्ठ साधनार्थं भविष्यति । तदद्य सुरश्रेष्ठ हरिर्दैत्य समादिश ।
॥ त्रिविक्रम उवाच ॥ अश्रोत्रियं श्राद्धमधीतमव्रतमदक्षिणं यज्ञमनृत्विजाहुतं । अश्रद्धया दत्तमसंस्कृतं हविर्भागाः षडेते तव दैत्यसत्तम । १२२३०
पुण्यं ब्रह्मद्विषां यच्च ब्रह्मकर्मद्विषां तथा । क्रयविक्रयसक्तानां पुण्यं यच्चाग्निहोत्रिणां ।
अश्रद्धया यच्च दानं ददतां यजतां तथा । तत्सर्व्वं तव दैत्येन्द्र मत्प्रसादाद्भविष्यति ।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु वचनं बलिर्विष्णोर्महात्मनः । एवमस्त्विति तं प्रोक्त्वा पातालमसुरोत्तमः ।
प्रविवेश महाभागो देवाज्ञां प्रतिपालयन् । एतस्मिन्नन्तरे चापि विष्णुस्त्रिदशपूजितः ।
भगवानपि राज्यानां प्रविभागं चकार ह । ददौ चैन्द्रीं दिशं पूर्व्वां शक्रायामिततेजसे । १२२३५
याम्यां यमाय देवाय पितृराज्ञे महात्मने । पश्चिमाञ्च दिशं देवो वरुणाय ददौ प्रभुः ।
उत्तरान्तु कुबेराय यक्षाधिपतये दिशं । अधस्तान्नागराजाय सोमायोर्द्ध्वं दिशं ददौ ।

एवं विभज्य त्रैलोक्यं विष्णुर्बलवतांवरः। शोकापनयनं चक्रे देवानामजितः प्रभुः।
वामनः सर्व्वभूतेषु प्रतिष्ठाप्य स वासवं। जगाम त्रिदिवं देवः पूज्यमानो महर्षिभिः।
तस्मिन् प्रयाते दुर्द्धर्षे वामनेऽमिततेजसि। सर्व्वे मुमुदिरे देवाः पुरस्कृत्य शतक्रतुं। १४१४०
॥ वैशम्पायन उवाच ॥ गते तु त्रिदिवं कृष्णे बद्धा वैरोचनिं बलिं। नागैः सप्तशिरोभिश्च कम्बलाश्वतरादिभिः।
नागबन्धनदुःखार्त्तं बलिं वैरोचनिं ततः। यदृच्छयाऽसौ देवर्षिर्नारदः प्रत्यदृश्यत।
स तं कृच्छ्रगतं दृष्ट्वा कृपयाऽभिपरिप्लुतः। उवाच दानवश्रेष्ठ मोक्षोपायं ददामि ते।
स्तवं देवातिदेवस्य वासुदेवस्य धीमतः। अनादिनिधनस्यास्य अक्षयस्याव्ययस्य च।
तमधीष्वाद्य दैत्येन्द्र विशुद्धेनान्तरात्मना। तद्गतस्तन्मना भूत्वा द्रुतं मोक्षमवाप्स्यसि। १४१४५
ततो विरोचनसुतः प्रयतः प्राञ्जलिः शुचिः। मोक्षविंशकमव्यग्रो नारदात् समधीतवान्।
तमधीत्य स्तवं दिव्यं नारदेन समीरितं। पृथिवी चोद्धृता येन तं जजाप महासुरः।
नमोऽस्त्वनन्तपतये अव्ययाय महात्मने। जलेशयाय देवाय पद्मनाभाय विष्णवे।
सप्त सूर्य्यं वपुः कृत्वा त्रीन् लोकान् क्रान्तवानसि। भगवान् कालकालस्त्वं तेन सत्येन मोचय।
नष्टचन्द्रार्कगगने क्षीणयज्ञतपःक्रिये। पुनश्चिन्तयसे लोकांस्तेन सत्येन मोचय। १४१५०
ब्रह्मरुद्रेन्द्रवाय्वग्निसरिद्भुजगपर्व्वताः। त्वत्स्था दृष्टा द्विजेन्द्रेण तेन सत्येन मोचय।
मार्कण्डेन पुराकल्पे प्रविश्य जठरं तव। चराचरगतं दृष्टं तेन सत्येन मोचय।
एको विश्वसहायस्त्वं योगी योगमुपागतः। पुनस्त्रैलोक्यमुत्सृज्य तेन सत्येन मोचय।
जलशय्यामुपासीनो योगनिद्रामुपागतः। लोकांश्चिन्तयसे भूयस्तेन सत्येन मोचय।
वाराहं रूपमास्थाय वेदयज्ञपुरस्कृतं। धरा जलोद्धृता येन तेन सत्येन मोचय। १४१५५
उद्धृत्य दंष्ट्रया यज्ञे त्रीन् पिण्डान् कृतवानसि। त्वं पितॄणामपि हरे तेन सत्येन मोचय।
प्रदुद्रुवुः सुराः सर्व्वे हिरण्याक्षभयार्द्दिताः। परित्रातास्त्वया देव तेन सत्येन मोचय।
दीर्घवक्त्रेण रूपेण हिरण्याक्षस्य संयुगे। शिरो जहार चक्रेण तेन सत्येन मोचय।
भग्नमूर्द्धास्थिमर्मास्थो हिरण्यकशिपुः पुरा। त्वत्करेण हतो दैत्यस्तेन सत्येन मोचय।
दानवाभ्यां हृता देवा ब्रह्मणः पश्यतः पुरा। परित्रातास्त्वया देव तेन सत्येन मोचय। १४१६०
कृत्वा हयशिरोरूपं हत्वा तु मधुकैटभौ। ब्रह्मणे तेऽर्पिता वेदास्तेन सत्येन मोचय।
देवदानवगन्धर्व्वा यक्षसिद्धमहोरगाः। अन्तं तव न पश्यन्ति तेन सत्येन मोचय।
अपान्तरतमा नाम जातो देवस्य वै सुतः। कृताश्च तेन वेदार्थास्तेन सत्येन मोचय।
वेदयज्ञशिरोक्षाणि शिरयज्ञहवींषि च। रहस्यं तव देवस्य तेन सत्येन मोचय।
ऋषिर्दीर्घतपा नाम जातस्त्वो गुरुशापतः। तत्प्रसादाच्च चक्षुष्मांस्तेन सत्येन मोचय। १४१६५
ग्राहग्रस्तं गजेन्द्रञ्च दीनं मृत्युवशे स्थितं। भक्तं मोचितवांस्त्वं हि तेन सत्येन मोचय।
अक्षयश्चाव्ययश्च त्वं ब्रह्मण्यो भक्तवत्सलः। उच्छ्रितानां निहन्ताऽसि तेन सत्येन मोचय।

शंखचक्रगदाढ्यं शार्ङ्गं गरुडमेव च। प्रसादयामि शिरसा ते बन्धान्मोचयन्तु मां।
ततः प्रसन्नो भगवानादिदेश खगोत्तम। गरुडं नागहन्तारं बलिं मोचय बन्धनात्।
ततो निश्चित्य गरुडः पक्षावतुलविक्रमः। जगाम वसुधामूलं यत्रास्ते संयतो बलिः। १११७०
आगमं तस्य विज्ञाय नागा मुक्त्वा महासुरं। ययुः पुरीं भोगवतीं वैनतेयभयार्द्दिताः।
मुक्तं विष्णुप्रसादेन चिन्तयानमधोमुखं। भ्रष्टश्रियमुवाचेदं गरुत्मानपपन्नगं।
॥ गरुड उवाच ॥ दानवेन्द्र महाबाहो विष्णुस्त्वामब्रवीत् प्रभुः। मुक्तो निवस पाताले सपुत्रजनबान्धवः।
इतस्त्वया न गन्तव्यं गव्यूतिमपि दानव। समयं यदि भिन्द्यास्त्वं मूर्द्धा ते शतधा भवेत्।
पक्षीन्द्रवचनं श्रुत्वा दानवेन्द्रोऽब्रवीदिदं। स्थितोऽस्मि समये तस्य अनन्तस्य महात्मनः। १११७५
जीव्योपायन्तु भगवान्मम किञ्चित् करोतु सः। इहस्थोऽहं सुखासीनो येनाप्याये खगेश्वर।
बलेस्तु वचनं श्रुत्वा गरुत्मानिदमब्रवीत्। पूर्व्वमेव कृतस्तेन जीव्योपायो महात्मना।
वर्त्तयिष्यन्ति ये यज्ञं विधिहीना ह्यनृत्विजः। प्रायश्चित्तमजानन्तो यज्ञभागं ततस्तव।
नैतेषां यज्ञभागं वै प्रतिगृह्णन्ति देवताः। अनेनाप्यायित बले सुखमत्र निवत्स्यसि।
॥ वैशम्पायन उवाच ॥ सन्देशमेतं भगवान्दत्तवान् कश्यपात्मजः। दानवेन्द्रे महाबाहो विष्णुस्त्रैलोक्यभावनः। १११८०
इमं स्तवमनन्तस्य सर्व्वपापप्रमोचनं। यः पठेत नरो भक्त्या तस्य नश्यति किल्बिषं।
गोहत्यायाः प्रमुच्येत ब्रह्मघ्नो ब्रह्महत्यया। अपुत्रो लभते पुत्रं कन्या चैवेप्सितं पतिं।
क्षामगर्भा प्रमुच्येत गुर्व्विणी जनयेत् सुतं। ये च मोक्षैषिणो लोके योगिनः सांख्यकापिलाः।
स्तवेनानेन गच्छन्ति श्वेतद्वीपमकल्मषाः। सर्व्वकामप्रदो ह्येष स्तवोऽनन्तस्य कीर्त्यते।
यः पठेत् प्रातरुत्थाय शुचिः प्रयतमानसः। सर्व्वकामनवाप्नोति मानवो नात्र संशयः। १११८५
एष वै वामनो नाम प्रादुर्भावो महात्मनः। वेदविद्भिर्द्विजैरेतत् पठ्यते वैष्णवं यशः।
यश्चेमं वामनं दिव्यं प्रादुर्भावं महात्मनः। शृणुयान्नियतो भक्त्या नरः पर्व्वसु पर्व्वसु।
परान् विजयते राजा यथा विष्णुर्महाबलः। यशश्च महदाप्नोति प्रेत्य सद्गतिमाप्नुयात्।
प्रियो भवति भूतानां सर्व्वदा नात्र संशयः। पुत्रांश्च लभते धन्यान् मेधागुणसमन्वितान्।
प्रीयते पठतश्चास्य देवदेवो जनार्द्दनः। सर्व्वकामयुतश्चैव कृष्णद्वैपायनोऽब्रवीत्। १११९०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने प्रादुर्भावे त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥
॥ जनमेजय उवाच ॥ किमर्थं भगवान् विष्णुर्द्देवदेवो जनार्द्दनः। गतः कैलासशिखरमालयं शङ्करस्य च।
नारदाद्यैस्तपोवृद्धैर्मुनिभिस्तत्त्वदर्शिभिः। तत्र दृष्टो महादेवः शङ्करो नीललोहितः।
केशवेन पुरा विप्र कुर्व्वता तप उत्तमं। अर्च्चितो देवदेवेन शङ्करश्चेति नः श्रुतं।
देवौ तत्र जगन्नाथौ द्रष्टवन्तौ पुरातनौ। अर्च्चयाञ्चक्रिरे देवा इन्द्राद्याः शङ्करं हरिं।
तौ हि देवौ महादेवावेकीभूतौ द्विधाकृतौ। एकात्मानौ जगद्योनी सृष्टिसंहारकारकौ। १११९५
परस्परसमावेशात्त्रिजगत् पालने स्थितौ। तयोस्तत्र यथा वृत्तं कैलासे पर्व्वतोत्तमे।

ऋषयः किमचेष्टन्त दृष्ट्वा तौ पुरुषोत्तमौ । एतत् सर्व्वमशेषेण वक्तुमर्हसि सत्तम ।
यथा गतो हरिर्विष्णुः कृष्णो जिष्णु पुरातनः । यथा च शङ्करः साक्षाज्जतवान्नागभूषणः ।
एतत् सर्व्वं विप्रवर्य्य ब्रूहि तत्त्वेन यत्नतः ।
॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजन् यथा कृष्णो गतो नगं । यथा च दृष्टो देवेशः शङ्करो वृषवाहनः । १४४००
यथा चचार स तपो यथा ते मुनयो गताः । एवं तयोर्यथा वृत्तं तथा शृणु नरोत्तम ।
द्वैपायनोऽथ भगवान् यथा प्रोवाच मां तथा । नमस्कृत्वा प्रवक्ष्यामि केशवं खगवाहनं ।
यथाशक्ति यथायुक्तं शृणु यत्नेन सुव्रत । न चाशुश्रूषवे वाच्यं नृशंसायातपस्विने ।
नानधीताय वक्तव्यं पुण्यं पुण्यवतां सदा । स्वर्ग्यं यशस्यं धन्यञ्च बुद्धिशुद्धिकरं सदा ।
श्रेयं पुण्यात्मनां नित्यमिदं वेदार्थनिश्चितं । अनेकारण्यसंयुक्तं सेवन्ते नित्यमीदृशं । १४४०५
मुनयो वेदनिरता नारदाद्यास्तपोधनाः । अत्यद्भुतं महापुण्यं वृत्तं कैलासपर्व्वते ।
शिवयोर्देवयोस्तत्र हरस्यैव भवस्य च । हतेष्वसुरसंघेषु नरकादिषु भूमिप ।
हतेष्वथ नृपेष्वेवं किञ्चिच्छिष्टेषु शत्रुषु । शासति स्म सदा विष्णुः पृथिवीं पुरुषोत्तमः ।
द्वारवत्यां जगन्नाथो वसन् वृष्णिभिरीश्वरः । रुक्मिण्या सङ्गतो देवो वसंस्तत्र पुरे हरिः ।
कदाचिच्च तया सार्द्धं शेते रात्रौ जगत्पतिः । विहरंश्च यथायोगं प्रीतः प्रीतियुजा तया । १४४१०
अथोवाच तदा देवी रुक्मिणी रुक्मभूषणं । पुत्रमिच्छामि देवेश त्वत्तो माधव नन्दनं ।
बलिनं रूपसम्पन्नं त्वयैव सदृशं प्रभो । वृष्णीनामपि नेतारं वीर्य्यवन्तं तपोनिधिं ।
सर्व्वशास्त्रार्थकुशलं राजविद्यापुरस्कृतं । एवमादिगुणैर्युक्तं दातुमर्हसि सत्तम ।
त्वयि सर्व्वस्य दातृत्वं नित्यमेव प्रतिष्ठितं । त्वं हि सर्व्वस्य कर्त्ता च दाता भोक्ता जगत्पतिः ।
विशेषतस्तु भृत्यानां शुश्रूषानियतात्मनां । वक्तव्यं किमु देवेश यदि भक्तोऽस्मि केशव । १४४१५
अनुग्राह्या यदि स्यान्मे देवदेव जगत्पते । दातुमर्हसि पुत्रं त्वं वीर्य्यवन्तं जनार्द्दन ।
॥ वैशम्पायन उवाच ॥ इत्युक्तो देवदेवेशः प्रियया प्रीयमाणया । तथा महिष्या रुक्मिण्या रुक्मिशत्रुर्यदूद्वहः ।
प्रोवाच वचनं काले रुक्मिणीं यादवेश्वरः । दाताऽस्मि तादृशं पुत्रं यं त्वमिच्छसि मानिनि ।
नित्यभक्ताऽसि मे देवि नात्र कार्य्या विचारणा । अवश्यं तव दास्यामि पुत्रं शत्रुनिवर्हणं ।
पुत्रेण लोकान् जयति सतां कामदुघा हि ये । नरकं पुदिति ख्यातं दुःखञ्च नरकं विदुः । १४४२०
पुंस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च । अनन्ताः पुत्रिणो लोकाः पुरुषस्य प्रिये शुभाः ।
पतिर्भार्य्यां प्रविशति गर्भो भूत्वा स मातरं । तस्यां पुनर्नरो भूत्वा दशमे मासि जायते ।
पुत्रवन्तं विभेतीन्द्र किंनु तेनाजितं भवेत् नापुत्रो विन्दते लोकान् कुपुत्राद्गम्यता वरा ।
कुपुत्रो नरके यस्मात् सुपुत्रात् स्वर्गं एव हि । तस्माद्विनीतं सत्पुत्रं श्रुतवन्तं दयापरं ।
विद्यया विनयो यस्माद्विद्यायुक्तं सुधार्मिकं । इच्छेत् पुत्रं पुत्रकाम पुरुषो यत्नवान् बुधः । १४४२५
तस्माद्दास्यामि ते पुत्रं विद्यावन्तं सुधार्मिकं । एष गच्छामि पुत्रार्थं कैलासं पर्व्वतोत्तमं ।

तत्रोपास्य महादेवं शङ्करं नीललोहितं। ततो लब्धाऽस्मि पुत्रन्ते भवाद्भूतहिते रतात्।
तपसा ब्रह्मचर्य्येण भवं शङ्करमव्ययं। तोषयित्वा विरूपाक्षमादिदेवमजं विभुं।
गमिष्याम्यहमद्यैव द्रष्टुं शङ्करमव्ययं। स च मे दास्यते पुत्त्रं तोषितस्तपसा मया।
तत्र गत्वा महादेवं नमस्कृत्य सहोमया। प्रविश्य वदरीं पुण्यां मुनिजुष्टां तपोमयीं। १४४१०
अग्निहोत्राकुलां दिव्यां गङ्गाम्बुप्लावितां सदा। मृगपक्षिसमायुक्तां सिंहद्विपशताकुलां।
वदरीफलसंपूर्णां वानरक्षोभितद्रुमां। वेत्रारूढमहावृक्षां कदलीखण्डमण्डितां।
मुनिभिर्वेदतत्त्वार्थविचारनिपुणैः सदा। वेदनिश्चिततत्त्वार्थैः प्रमाणकुशलैर्युतां।
इदमेकमिदं तत्त्वमिति निश्चितमानसैः। उपास्यमानामन्यत्र सिद्धैः सिद्धार्थतत्परैः।
इतिहासपुराणज्ञैः सेव्यमानां महर्षिभिः। गच्छद्भिः स्वर्गनिलयं परित्यज्य कलेवरं। १४४१५
प्रसिद्धां महती देवीं यास्यामि सुकृतालयां। इत्युक्त्वा विररामैव देवदेवो जनार्द्दनः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां चतुःषष्ट्यधिकद्विशतोऽध्यायः ॥ २६४ ॥

॥ वैशम्पायन उवाच ॥ प्रभातायान्तु शर्व्वर्य्यां गन्तुमैच्छज्जनार्द्दनः। हुताग्निः कृतकल्याणः समाप्तस्वरदक्षिणः।
गाश्च दत्त्वाऽथ विप्रेभ्यो नमस्कृत्य द्विजोत्तमान्। आस्थानमण्डपं कृष्णः प्रविवेश जगत्पतिः।
आसने महदास्थाय वृष्णीनाहूय सर्व्वशः। बलभद्रं शिनेः पुत्त्रं हार्द्दिक्यं शठसारणौ।
उग्रसेनं महाबुद्धिमुद्धवं नीतिमत्तरं। यस्य बुद्धिं समाश्रित्य जीवन्ति यादवाः सुखं। १४४२०
नेता च यदुवृष्णीनां स तु धर्म्मपरः सदा। यस्य विभ्यति देवाश्च नीतिज्ञस्य महात्मनः।
यस्य बुद्धिवशाद्विष्णुः शशास पृथिवीं तदा। तस्य वृष्णिवरं वीरमुद्धवं देवसप्रभं।
अन्यानपि यदून् सर्व्वानुवाच भगवान् हरिः। शृण्वन्तु मम वाक्यानि यादवाः सर्व्व एव हि।
शृणु चापि वचो मह्यं पितुरुद्धव मे सखे। बाल्यात् प्रभृति यो यत्नो मम दुष्टनिवर्हणे।
प्रत्यक्षं भवता दृष्टं पूतनानिधनं नृप। केशी च निहतो बाल्ये मया बालेन यादवाः। १४४२५
गोवर्द्धनो धृतः शैलो गावश्च परिपालिताः। अभिषिक्तोऽस्मि शक्रेण देवानामग्रतः स्थितः।
कंसोऽपि निधनं नीतो मया चाणूरमुष्टिकौ। उग्रसेनोऽभिषिक्तश्च कृता द्वारवती मया।
अन्ये चापि नृपा राजन् बलिनो निहता मया। योऽपि वीरो जरासन्धो निगृहीतो बलान्मया।
भीमेन बलिना राजन्नथेन मम यादवाः। शृगालो निहतः संख्ये गोमन्ताद्गच्छता मया।
योऽपि वीरो दुरात्माऽसौ दानवो नरको हतः। निष्कण्टकमिमं लोकं कृतवान् राजसत्तमाः। १४४३०
किन्तु वीरो नृपो यश्च सखा भीमस्य यादवाः। पौण्ड्रो वीर्य्यवतां नेता द्वेष्टा चासौ सदा मम।
शिष्यो द्रोणस्य राजेन्द्रो बली ब्रह्मास्त्रवित् कृती। शास्त्रज्ञो नीतिमान् मायावेत्ता सर्व्वस्य यत्नवान्।
योद्धा युद्धप्रियो राजा जामदग्न्य इवापरः। एकान्ततस्तुरस्माकं छिद्रान्वेषी सदा मम।
बाधिष्यते पुरीं योद्धा छिद्रं यदि लभेत सः। न ह्यन्यसाध्यो बलवान् पुण्डरीको नृपोत्तमाः।
यत्ता भवन्तस्तिष्ठन्तु सन्नद्धोतशरासनाः। यथा न बाधते राजा पुरीं यदुकुलाश्रयां। १४४३५

अहन्तु यास्ये कैलासं कुतश्चित् कारणान्नृपाः । शङ्करं द्रष्टुकामोऽस्मि भूतभावनभावनं ।
यावदागमनं मह्यं तावद्यत्ता भवन्त्विह । मया विरहितां चेमां यदि जानाति पौण्ड्रकः ।
आगमिष्यति राजेन्द्रा योत्स्यते च पुरीमिमां । इमां निर्यादवां कर्त्तुं शक्नोतीति च मे मतिः ।
यत्ता भवत राजेन्द्राः खड्गैः पाशैः परश्वधैः । पाषाणैः कर्षणीयैश्च सन्नद्धा भवत स्वकैः ।
पिधाय च कपाटानि महाद्वाराणि यत्नतः । एकएव महाद्वारो गमनागमने सदा । १४४१०
मुद्रया सह गच्छन्तु राज्ञो ये गन्तुमीप्सवः । न चामुद्रः प्रवेष्टव्यो द्वारपालस्य पश्यतः ।
यावदागमनं मह्यं तावदेवं भविष्यति । मृगया नात्र कर्त्तव्या न च क्रीडा बहिः पुरात् ।
ज्ञातव्याश्च परे खे च गमनागमने सदा । एवमादिक्रिया कार्य्या यावदागमनं मम ।
इत्युक्त्वा यादवान् सर्व्वान् सात्यकिं पुनराह च ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां पञ्चषष्ट्यधिकद्विशतोऽध्यायः ॥ २६५ ॥
॥ भगवानुवाच ॥ सात्यके शृणु मद्वाक्यं यत्तो भव युधाम्वर । त्वन्तु खड्गी गदी भूत्वा चापी बाणी तलत्रवान् । १४४१५
तिष्ठ यत्नेन रक्षस्व पुरीं वज्रनृपाश्रयां । न च निद्रा त्वया कार्य्या रात्रौ यदूद्वह प्रभो ।
न च व्याख्या त्वया कार्य्या शास्त्राणां शास्त्रतत्पर । न च वादस्त्वया कार्य्यो वादिभिः सह वृष्णिप ।
त्वं हि योद्धा बली चैव धनुर्वेदस्य वेदवित् । तथा कुरु यथा वीर नोपहास्या भवेमहि ।
॥ सात्यकिरुवाच ॥ करिष्यामि वचस्तुभ्यं यथाशक्ति जनार्द्दन । आज्ञा तव जगन्नाथ धार्य्या यत्नेन मे सदा ।
भृत्यवत् प्रचरिष्यामि कामपालस्य माधव । यावदागमनं तुभ्यं तावत् स्थास्यामि यत्नतः । १४४२०
प्रसादात्तव गोविन्द यदि स्यान्मयि माधव । किं नाम मम दुःसाध्यं शत्रूणां निग्रहे रणे ।
यदि शक्रं यमं वाऽपि कुवेरमपि पाशिनं । सर्व्वानेतान् विजेष्यामि किमुपेन्द्र नृपोत्तमं ।
गच्छ कार्य्यं कुरुष्वेदं यत्तोऽहं सततं हरे । उद्धवं पुनराहेदं कृष्णः पद्मनिभेक्षणः ।
शृणूद्धव त्वं वाक्यं मे कुर्व्वाश्चैतत् प्रयत्नवान् । रक्ष्या नयेन राजेन्द्र पुरी द्वारवती त्वया ।
यत्तो भव सदा तात कुरु साहाय्यमत्र नः । लज्जा मम समुत्पन्ना वदतस्तव साम्प्रतं । १४४२५
त्वं हि नेता समस्तस्य विद्यापारस्य सर्व्वतः । को नु शक्ष्यति मेधावी वक्तुं विद्यावतः पुरः ।
यत्कार्य्यं तद्भवान् वेत्ति ह्यकार्य्यञ्चापि सर्व्वतः । अतोऽहं विरमे तात वक्तुं सम्प्रति वृष्णिप ।
॥ उद्धव उवाच ॥ किमिदं तव गोविन्द वर्त्तते साम्प्रति प्रभो । अहो प्रसन्नता मह्यं किन्नु प्रीतिरियं तव ।
ज्ञानाम्यहं जगन्नाथ प्रसादस्यैव विस्तरः । यस्य प्रसन्नो भवसि तस्य किं नास्ति केशव ।
त्वं हि सर्व्वस्य जगतः कर्त्ता हर्त्ता प्रधानतः । प्रभवः सर्व्वकार्य्याणां वक्ता श्रोता प्रमाणवित् ।
ध्याता ध्यानमयो ध्येय इति सद्ब्रह्मविदो विदुः । जेता देवरिपूणाञ्च गोप्ता नाकसदां भवान् ।
त्वन्नाथा वयमेवेति जीवामो निहतद्विषः । इयं नीतिरता मन्ये नेता नीतेर्यतो भवान् ।
को नु नाम नयं वेद त्वामृते साम्प्रतं वद । नीतिस्त्वं सर्व्वकार्य्याणामिति मे निश्चिता मतिः ।
दुर्गाढो नयमार्गोऽयमित्याहुस्तद्विदो जनाः । चतुर्द्धा भाष्यते नीतिः सामदाने जनार्द्दन ।

दण्डो भेदो मनुष्याणां निग्रहावग्रहे सदा । दण्डेषु दण्डमिच्छन्ति सामान्यन्तु नये हरे । १४८८५
बलवत्स्वय दानन्तु त्रयाणामप्यगोचरे । प्रयोक्तव्यो महाभेद इति नीतिमतां मतं ।
तेषु तेष्वय सर्व्वेषु प्रमाणं त्वां विदुर्बुधाः । किमत्र बहुनोक्तेन सर्व्वं त्वयि समर्पितं ।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा विरराभैव उद्धवो नीतिमत्तरः । ततः स भगवान् विष्णुरेवमेव नृपोत्तम ।
कामपालं महाबाहुमुवाच यदुसंसदि । उग्रसेनं नृपं राजंस्तथा हार्द्दिक्यमेव च ।
कामपालं पुनर्विष्णुरिदं प्रे... च तत्त्ववित् । न प्रमादस्त्वया कार्य्यः सर्व्वदा यत्नवान् भव । १४८९०
स्थिते त्वयि महाबाहो का पीडा जगतो भवेत् । गदी भव सदा त्वाथ न क्रीडा सर्व्वदा भवेत् ।
रक्ष त्वं सर्व्वदा यत्नात् पुरीं द्वारवतीं प्रभो । नोपहास्या यथा स्याम तथा कुरु गदी भव ।
उत्साहः सर्व्वदा कार्य्यो निरुत्साहो न यत्नतः । वाढमित्यब्रवीद्रामः कृष्णं वृष्णिकुलोद्भवं ।
वृष्णयः सर्व्वं एवैते स्वं स्वं सद्म समाययुः । गन्तुमैच्छज्जगन्नाथः कैलासं पर्व्वतोत्तमं ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां षट्षष्ट्यधिकद्विशततोऽध्यायः ॥ २६६ ॥

॥ वैशम्पायन उवाच ॥ ततः सञ्चिन्तयामास गरुडं पक्षिपुङ्गवं । आगच्छ त्वरितं तार्क्ष्य इति विष्णुर्जगत्पतिः । १४८९५
ततः स भगवांस्तार्क्ष्यो वेदराशिरिति स्मृतः । बलवान् विक्रमी योगशास्त्रनेता कुरूद्वह ।
यज्ञमूर्त्तिः पुराणात्मा साममूर्द्धा च पावनः । ऋग्वेदपक्षवान् पक्षी पिङ्गलो जटिलाकृतिः ।
ताम्रतुण्डः सोमहरः शत्रुजेता महाशिराः । पन्नगारिः पद्मनेत्रः साक्षाद्विष्णुरिवापरः ।
वाहनं देवदेवस्य दानवीगर्भकृन्तनः । राक्षसासुरसंघानां जेता पक्षबलेन यः ।
प्रादुरासीन्महावीर्य्यः केशवस्याग्रतस्तदा । जानुभ्यामपतद्भूमौ नमो विष्णो जगत्पते । १४९००
नमस्ते देवदेवेश हरे स्वामिन्निति ब्रुवन् । पस्पर्श पाणिना कृष्णः स्वागतं तार्क्ष्य पुङ्गव ।
इत्युवाच तदा तार्क्ष्यं यास्ये कैलासपर्व्वतं । शूलिनं द्रष्टुमिच्छामि शङ्करं शाश्वतं शिवं ।
वाढमित्यब्रवीत्तार्क्ष्य आरुरोह जनार्द्दनः । तिष्ठध्वमिति होवाच यादवान् पार्श्ववर्त्तिनः ।
ततो ययौ जगन्नाथो दिशं प्रागुत्तरां हरिः । रवेण महता तार्क्ष्यस्त्रैलोक्यं समकम्पयत् ।
सागरं क्षोभयामास पक्षाभ्यां पक्षी भ्रजंस्तदा । पवनेन पर्व्वतान् सर्व्वान् वहन् देवं जनार्द्दनं । १४९०५
ततो देवाः सगन्धर्व्वा आकाशेऽधिष्ठितास्तदा । तुष्टुवुः पुण्डरीकाक्षं वाग्भिरिष्टाभिरीश्वरं ।
जय देव जगन्नाथ जय विष्णो जगत्पते । जयाजय नमो देव भूतभावन भावन ।
नमः परमसिंहाय दैत्यदानवनाशन । जयाजेय हरे देव योगिध्येय परागते ।
नारायण नमो देव कृष्ण कृष्ण हरे हर । आदिकर्त्तः पुराणात्मन् ब्रह्मयोने सनातन ।
नमस्ते सकलेशाय निर्गुणाय गुणात्मने । भक्तिप्रियाय भक्ताय नमो दानवनाशन । १४९१०
अचिन्त्यमूर्त्तये तुभ्यं नमस्ते सकलेश्वर । दैत्यादिभिस्तदा देवं वाग्भिर्गीर्वाणमव्ययं ।
तुष्टुवुर्देवगन्धर्व्वा रुद्रयः सिद्धचारणाः । शृण्वन्नेव जगन्नाथः स्तुतिवाक्यानि तानि च ।
ययौ सार्द्धं सुरगणैर्मुनिभिर्वेदपारगैः । यत्र पूर्व्वं स्वयं विष्णुस्तपस्तेपे सुदारुणं ।

लोकवृद्धिकरं श्रीमान् लोकानां हितकाम्यया । वर्षायुतं तपस्तप्तं विष्णुना प्रभविष्णुना ।
यत्र विष्णुर्जगन्नाथस्तपस्तप्त्वा सुदारुणं । द्विधाऽकरोत् स्वमात्मानं नरनारायणाख्यया । १४५१५
गङ्गा यत्र परिक्षिप्ता मध्ये धावति पावनी । यत्र शक्रः स्वयं हत्वा वृत्रं वेदार्थतत्त्वगं ।
ब्रह्महत्याविनाशार्थं तपो वर्षायुतं चरत् । यत्र सिद्धाश्च सिद्धाः सुध्यात्वा देवं जनार्द्दनं ।
यत्र हत्वा रणे रामो रावणं लोकरावणं । एतच्छासनमिच्छंश्च तपो घोरमतप्यत ।
देवाश्च मुनयश्चैव सिद्धिं यान्ति शुचिस्मिताः । यत्र नित्यं जगन्नाथः साक्षाद्वसति केशवः ।
यत्र यज्ञाः प्रवर्त्तन्ते नित्यं मुनिगणैः सह । यस्याः स्मरणमात्रेण नरः स्वर्गे गमिष्यति । १४५२०
स्वर्गसोपानमिच्छन्ति यां पुण्यां मुनिसत्तमाः । शवरो शिवतां यान्ति यत्र नित्यं नृपोत्तम ।
यामाहुः पुण्यशीलानां स्थानमुत्तमधर्म्मिणां । यत्र विष्णुं समाराध्य देवाः स्वर्गं समाययुः ।
सिद्धक्षेत्रमिदं प्राहुर्ऋषयो वीतमत्सराः । विशालां वदरीं विष्णुस्तां द्रष्टुं स किलेश्वरः ।
सायाह्ने चामरगणैर्मुनिभिस्तत्त्वदर्शिभिः । प्रविवेश महापुण्यमृषिजुष्टं तपोवनं ।
अग्निहोत्राकुले काले पवित्राहारसंकुले । नीडस्थेषु विहङ्गेषु दुह्यमानासु गोषु च । १४५२५
तूष्णीम्ब्यवतिष्ठत्सु मुनिवीरेषु सर्व्वतः । समाधिस्थेषु सिद्धेषु चिन्तयत्सु जनार्द्दनं ।
अधिश्रितेषु हविषु ज्वाल्यमानेषु चाग्निषु । हूयमानेषु तत्रैव पावकेषु समन्ततः ।
अतिथौ पूज्यमाने च सन्ध्याश्लिष्टे जगन्मये । स तस्यामथ वेलायां देवैः सह जनार्द्दनः ।
विवेश वदरीं विष्णुर्मुनिजुष्टां तपोमयी । आश्रमस्याथ मध्यन्तु प्रविश्य हरिरीश्वरः ।
गरुडादवरुह्याथ दीपिकादीपिते तदा । मदेशे पुण्डरीकाक्षः स्थितस्तावत् सहामरैः । १४५३०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां सप्तषष्ठ्यधिकद्विशततोऽध्यायः ॥ २६७ ॥
॥ वैशम्पायन उवाच ॥ ततो मुनिगणा दृष्ट्वा देवदेवमवस्थितं । समाप्य चाग्निहोत्राणि सम्पूज्यातिथिसत्तमान् ।
मुनयो दीर्घतपसः समाधौ कृतनिश्चयाः । जटिनो मुण्डिनः केचित् शिराधमनिसन्तताः ।
निर्म्मज्जा नीरसाः केचिद्वेतालाः इव केचन । अश्मकुट्टाशनपराः पराभिचाखथा परे ।
वेदविद्याव्रतस्नाता निराहारा महातपाः । कारन्तः सर्व्वदा विष्णुं तद्भक्तास्तत्परायणाः ।
आमन्नमुक्तयः केचित् केचिद्ध्यानैकतत्पराः । ध्यानेन मनसा विष्णुं दृष्टवन्तस्तपोधनाः । १४५३५
संवत्सराग्निनः केचित् केचिच्छलविचारिणः । शक्रस्य भयदातारः श्रुतिस्मृतिपरायणाः ।
वशिष्ठो वामदेवश्च रैभ्यो धूम्रस्तथैव च । जाजलिः काश्यपः कण्वो भरद्वाजोऽथ गौतमः ।
अत्रिरथाङ्गिराश्चैव शङ्खः शङ्खनिधिः कुणिः । पाराशर्य्यः पविकाशो याज्ञवल्क्यो महामनाः ।
कक्षीवानङ्गिराश्चैव मुनिर्दीर्घतपास्तथा । असितो देवलस्तात वाल्मीकिश्च महातपाः ।
एते चान्ये च मुनयो द्रष्टुमीश्वरमव्ययं । आदायार्घ्यं यथायोगमुटजात् स्वात् समाययुः । १४५४०
ते च गत्वा हरिं कृष्णं द्रष्टुमीशं जनार्द्दनं । भक्तिनम्रास्तदा देवं प्रणेमुर्भक्तवत्सलं ।
नमोऽस्तु कृष्ण कृष्णेति देवदेवेति केशवं । प्रणतात्मन् जगन्नाथ भताः स्म शिरसा हरे ।

कृष्ण विष्णो हृषीकेश केशवेति च सर्व्वदा । प्रणामप्रवणा विप्राः प्राञ्जलित्वं जगत्पतिं ।
इदमर्घ्यमिदं पाद्यमिदं विष्टरमेव च । कृतार्थाः सर्व्वथा देव प्रसन्नो नो जगत्पतिः ।
किं कुर्म्मः किं नु नः कृत्य कश्चिद्दोषः प्रभो हरे । इति प्राञ्जलयः सर्व्वे प्राञ्जदेवस्य पश्यतः ।
कृष्णोऽपि तद्यथायोगमुपयुज्य सहामरैः । कृतं सर्व्वं मुनिवरा वर्द्धतां तप उत्तमं ।
इति ब्रुवन् पुराणात्मा प्रीतस्तेन गरुत्मता । आसनं लम्भयामास रात्रौ देवो जनार्द्दनः ।
कुशलं पृष्टवान् भूयो मुनीनां भवितात्मनां । अग्निहोत्रेषु तपसि तथा शृत्येषु सर्व्वतः ।
एवमादि जगन्नाथः पृष्टवानीश्वरस्तदा । सर्व्वत्र कुशलं तत्र ब्रूयुः कृष्णस्य सर्व्वतः ।
आतिथ्यं चक्रिरे ते तु नीवारैः फलमूलकैः । देवानामथ सर्व्वेषां विष्णोः कृष्णस्य यत्नतः ।
आतिथ्यमुपयुञ्जानस्ततः प्रीतो ऽभवद्धरिः ।
*इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां अष्टषष्ट्यधिकद्विशततोऽध्यायः ॥ २६८ ॥*
॥ वैशम्पायन उवाच ॥ ततः स भगवान् विष्णुर्व्विश्वयगतिः प्रभुः । यत्र पूर्व्वं तपस्तप्तमात्मना यादवेश्वरः ।
गङ्गायाश्चोत्तरे तीरे देशं द्रष्टुमुपागतः । स्वयमेव हरिः साक्षात् प्रविवेश तपोवनं ।
प्रविश्य सुचिरं देशं ददर्श च मनोरमं । निषसाद ततस्तस्मिन्नाश्रमे पुण्यवर्द्धने ।
समाधौ योजयामास मनः पद्मनिभेक्षणः । किमप्येष जगन्नाथो ध्यात्वा देवेश्वरः स्थितः ।
स्थिते देवगुरौ तत्र समाधौ द्वीपवर्द्धरौ । तत्र शब्दो महाघोरः प्रादुरासीत् समन्ततः ।
खाद खादत मोदेत यात यात मृगानिमान् । प्रेषयेद शुनः सर्व्वान् प्रसादाच्छार्ङ्गधन्वनः ।
एष विष्णुरयं कृष्णो हरिरीश इतोऽच्युतः । नमोऽस्तु विष्णो देवेश स्वामिन्माधव केशव ।
इत्यादिशब्दः सुमहान् मृगाननुविनर्द्दतां । मृगाणां भीतियुक्तानामृक्षाणां द्वीपिनां तथा ।
गजानां नर्द्दतां राजन् वृंहितस्य ततस्ततः । महावातसमुद्धूतक्षुभितस्येव वारिधेः ।
नादस्त्रैलोक्यविन्नासः प्रादुरासीत्तदा निशि । श्रुत्वा शब्दं हरिर्द्देवस्तादृशं नत्र धिष्ठितः ।
समाधिक्षोभमासाद्य निश्वस्य च जगत्पतिः । ततः सञ्चिन्तयामास कोऽयमेव महात्मनः ।
कस्यायमीदृशः शब्दः स्तुतियुक्तो मम त्विति । अहोऽस्मिन्मृगयाशब्दः शुना सञ्चरतां वने ।
मृगाणामथ सर्व्वेषां नादश्च सुमहानयं । व्यामिश्रः स्तुतियुक्ताभिर्व्वाग्भिर्व्वंम समन्ततः ।
इति सञ्चिन्त्य मनसा दिशो विभेक्ष्य सर्व्वतः । तत आस्ते हरिस्तत्र ज्ञातुं तस्य समुद्भवं ।
ततो मृगाः समाधावन् यत्र तिष्ठति केशवः । तांश्चैवानुसरो राजन् श्वगणः समपद्यत ।
अथ वै दीपिका राजन् शतशोऽथ सहस्रशः । ततस्तमोऽपि व्युनशद्दिवेव समपद्यत ।
ततोऽनु भूतसंघाश्च समदृश्यन्त तत्र ह । पिशाचाश्च महाघोरा नदन्तो बहुविस्तरं ।
भक्षयन्तोऽथ पिशितं पिबन्तो रुधिरं बहु । प्रादुरासन् महाघोराः पिशाचा विकृताननाः ।
वध्यमाना हता राजन् पतन्तः पतिता मृगाः । इतश्चेतश्च धावन्तो वाणैर्व्विद्धा मृगादयः ।
ततो मृगसहस्राणि समुदीर्णानि भारत । यत्रासौ तिष्ठते देवस्तत्र यातानि भारत ।

धावन्तः प्रहरन्त्येतान् सर्व्वतो नृप हन्ति नः। अयमेष महाबाहुः खड्गी पतति वीर्य्यवान्।
अयमेष शरी घोरो वर्त्ततेऽतिसुदारुणः। गदी चायं महावीर्य्यः सर्व्वान्नो बाधते नृप।
अयं रथी शरी चापी गदी तूणी तनुत्रवान्। पट्टिशी सर्व्वतो याति कुन्तपाणिरयं बली।
अयमत्र महाशूली संस्थितः सर्व्वतो दिशं। गजोऽयं सविशाखाग्रो वर्त्तते सर्व्वतः प्रति। ११११५
अयं सर्व्वगः शूरो वेगवान् वातसन्निभः। शरान् शरैः समाहन्ति दण्डान् दण्डैश्च मत्पते।
कुन्तान् कुन्तैः समाजघ्नुर्गदाभिश्च गदास्तथा। परिघान् परिघैः सार्द्धं शूलान् शूलैः समन्ततः।
एवं तेषां महाराज कुर्व्वतां रणमुत्तमं। संग्रामः सुमहानासीच्छब्दश्चापि महानभूत्।
भूतानि सुबहून्याशु शब्दयन्ति महान्ति च। प्रादुरासन् समस्तानि शङ्खनादैश्च निस्वनः।
रात्रौ प्रादुरभूच्छब्दः संग्रामे लोमहर्षणः। प्रावर्त्तत महायुद्धं वृष्णीनाञ्चैव तैः सह। १११२०
केचिद्धताः समापेतुः पृथिव्यां पृथिवीक्षितः। केचित् पतितमाश्लिष्टा विप्रकीर्णशिरोधराः।
पेतुरुर्व्व्यां महावीर्य्या राजानः शस्त्रपाणयः। केचित्तु भिन्नमर्म्माणः समापेतुः सहस्रशः।
परस्परं समाश्रित्य परस्परवधैषिणः। न्यस्तशस्त्रा महात्मानः समन्तात् क्षतविग्रहाः।
पेतुर्गतासवः केचित् यमराष्ट्रविवर्द्धनाः। एवन्ते निहता राजन् पोथिताः सर्व्व एव तु।
एतस्मिन्नन्तरे शूर एकलव्यो निषादप। धनुर्गृह्य महाघोरं कालान्तकयमोपमः। १११२५
शरैरनेकसाहस्रैरर्द्दयामास यादवान्। परःशतैः शराणान्तु निशितैर्म्मर्म्मभेदिभिः।
वृष्णीनाञ्च बलं सर्व्वं पोथयामास सर्व्वतः। युध्यतः शस्त्रपाणींश्च क्षत्त्रियान् वीर्य्यवत्तरान्।
निशठं पञ्चविंशत्या शराणां नतपर्व्वणां। सारणं दशभिर्विद्धा हार्द्दिक्यं पञ्चभिः शरैः।
उग्रसेनं नवत्या तु वसुदेवञ्च सप्तभिः। उद्धवं दशभिश्चैव ह्यक्रूरं पञ्चभिः शरैः।
एवमेवेतुशः सर्व्वे निहता निशितैः शरैः। विद्राव्य यादवो सेनां नाम विश्राव्य वीर्य्यवान्। १११३०
एकलव्यो यदुवृषान् वीर्य्यवान् बलवानहं। इदानीं सात्यकिर्वीरः क यास्यति महाबलः।
मदमत्तो हली साक्षात् क यातीह गदाधरः। इत्याह सिंहनादेन सिंहान् विस्मापयन्निव।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे रात्रियुद्धे पञ्चाशीत्यधिकद्विशतोऽध्यायः॥ २८५॥
॥ वैशम्पायन उवाच॥ निवृत्तेष्वथ सैन्येषु वृष्णिवीरेषु चैव हि। भीतेष्वथ महाराज हतेषु युधि सर्व्वतः।
दीपिकासु प्रशान्तासु निःशब्दे सति सर्व्वतः। जितमित्येव तन्मत्वा वृष्णीनां बलमुत्तमं।
ततः पौण्ड्रो महावीर्य्यो बभाषे सैनिकान् स्वकान्। शीघ्रं गच्छत राजेन्द्राः दृढैः कुन्तैः पुरीमिमां। १११३५
कुठारैः कुन्तलैश्चैव पाषाणैः सर्व्वतो दिशं। कर्षणैः सुघोरैस्तान् सर्व्वतो यात भूमिपाः।
भिन्दन्तो प्राकारचयाः प्रासादांश्च समन्ततः। गृह्णन्तो कन्यकाः सर्व्वा दासांश्चैव समन्ततः।
गृह्णन्तो रत्नमुख्यांश्च धनानि सुबहून्यथ। ते तथेति महात्मानो राजन् सर्व्व एव तु।
कुठारैः सर्व्वतश्चैव चिच्छिदुः पौण्ड्रकाश्रयाः। प्राकारांश्चैव सर्व्वत्र प्रासादान् वरवेश्मान्।
अथ तत्र महान् शब्दः प्रादुरासीत् समन्ततः। अट्टेषु पात्यमानेषु प्राकारेषु महाबलैः। १११४०

पूर्व्वद्वारे महाराज भिन्नाः प्राकारसञ्चयाः । श्रुत्वा शब्दं महाघोरं सात्यकिः क्रोधमूर्च्छितः ।
मयि सर्व्वं समारोप्य केशवो यादवेश्वरः । गतः कैलासशिखरं द्रष्टुं शङ्करमव्ययं ।
अवश्यं हि मया रक्ष्या पुरी द्वारवती स्थियं । इति सञ्चिन्त्य मनसा धनुरादाय सत्वरं ।
रथं महान्तमारुह्य दारुकस्य महात्मनः । पुत्त्रेण संस्कृतं घोरं यन्त्रा च स्वयमेव हि ।
धनुर्म्महत्तदादाय शरांश्चाशीविषोपमान् । आमुच्य कवचं घोरं दृढं संपातदु सहं । १५१५५
अङ्गदी कुण्डली तूणी शरी चापी गदासिमान् । ययौ युद्धाय शैनेयः संस्मरन् कैशवं वचः ।
दीपिकादीपिते देशे ययौ सात्यकिरुत्तमः । तथैव बलदेवोऽपि रथमारुह्य भास्वरं ।
गदी शरी महावीर्य्यः प्रायाद्रणचिकीर्षया । सिंहनादं प्रकुर्व्वन् वै मुञ्चन् वै भैरवं रवं ।
उद्धवोऽपि बली साक्षाद्गजमारुह्य सत्वरं । कृत्वा महारवं घोरं सर्व्वयादवसत्तमः ।
ययौ नीतिं विचिन्वानः परां प्रीतिं महाबलः । अन्ये च वृष्णयः सर्व्वे यदु संग्रामलालसाः । १५१६०
रथान् गजान् समारुह्य हार्द्दिक्यप्रमुखास्तदा । दीपिकाभिश्च सर्व्वत्र पुरोद्दत्ताभिरीश्वराः ।
सिंहनादं प्रकुर्व्वन्तः स्मरन्तः कैशवं वचः । पूर्व्वद्वारं समागम्य वृष्णयो युद्धलालसाः ।
ते समेत्य यथायोगं स्थितास्तत्र महाबलाः । स्थिते सैन्ये महाघोरे दीपिकादीपिते तथा ।
शिनिर्व्वीरः शरी चापी गदी तूणीरवान् विभो । वायव्यास्त्रं समादाय योजयित्वा महाशरं ।
आकर्णपूर्णमाकृष्य धनुः प्रवरमुत्तमं । मुमोच परसैन्येषु शिनिर्वीरः प्रतापवान् । १५१६५
वायव्यास्त्रेण ते सर्व्वे तत्रस्था नरसत्तमाः । विजिता ह्यस्त्रवीर्य्येण यत्र तिष्ठति पौण्ड्रकः ।
तत्र गत्वा स्थिताः सर्व्वे निर्द्धूता वातरंहसा । यत्र पूर्व्वं स्थिताः सर्व्वे विद्रुता राजसत्तमाः ।
तत्र स्थित्वा च शैनेयः शरमादाय सत्वरं । निशितं सर्पभोगाभं बभाषे सात्यकिस्तदा ।
क इदानीं महाबुद्धिः पौण्ड्रको राजसत्तमः । स्थितोऽस्मि व्यवसायेन शरी चापी महाबलः ।
यदि द्रष्टा दुरात्मानं ततो हत्वा नृपाधमं । भृत्योऽस्मि केशवस्याहं जिघांसुः पौण्ड्रकं स्थितः । १५१७०
छित्वा शिरस्तु तस्याथ सर्व्वचत्वस्य पश्यतः । बलिं दास्यामि रक्षोभ्यः श्वभ्यश्चैव दुरात्मनः ।
को नाम ईदृशं कर्म्म चौरवच्च समाचरेत् । सुप्तेषु निशि सर्व्वेषु यादवेषु महात्मसु ।
चौरोऽयं सर्व्वथा राजा न हि राजबलान्वितः । यदि शक्तो न कुर्य्याच्च चौर्य्यमेवं नृपाधम ।
अहोऽस्य बलिता राजचौर्य्यकार्य्यं प्रकुर्व्वतः । सर्व्वथा गमनं तस्य न हि पश्यामि सांप्रतं ।
इत्युक्त्वा सात्यकिर्व्वीरः प्रजहास महाबलः । विस्फार्य्य सुदृढं चापं सन्दधे कार्म्मुके शरं । १५१७५
आकर्ण्य वचनं वीरः सात्यकेस्तस्य धीमतः । क नु कृष्णः क गोपालः कुतः सोऽद्य प्रवर्त्तते ।
स्त्रीहन्ता पशुहन्ता च क च स्वामीति सेवितः । स इदानीं क वर्त्तेत स्वहीत्वा मम नाम तत् ।
हन्ता सख्युर्म्महावीर्य्यो नरकस्य महात्मनः । ममैव तात युद्धेऽस्मिन् हते तस्मिन् दुरात्मनि ।
गच्छ त्वं कामतो वीर योद्धुं न क्षमते भवान् । अथवा तिष्ठ किञ्चित्तु ततो द्रक्ष्यामि मे बलं ।
शिरस्ते पातयिष्यामि शरैर्घोरैर्दुरासदैः । हतस्य तव वीरेह भूमिः पास्यति शोणितं । १५१८०

श्रोष्यते स तथा गोपो हतः सात्यकिरित्यपि। यो गर्व्वस्तस्य गोपस्य सर्व्वदा वर्त्तते महान्।
विनश्यतु स तु क्षिप्रं हते त्वयि यदूत्तम। त्वयि रक्षां समादिश्य गोपः कैलासपर्व्वतं।
गत इत्येवमस्माभिः श्रुतं पूर्व्वं महामते। शरं स्वहाण निशितं यदि शक्तोऽसि सात्यके।
इत्युक्ता वाणमादाय ययौ योद्धुं व्यवस्थितः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे रात्रियुद्धे षडशीत्यधिकद्विशतोऽध्यायः॥ २८६ ॥

॥ वैशम्पायन उवाच ॥ ततः क्रुद्धो महाराज सात्यकिर्वृष्णिपुङ्गवः। उवाच वचनं राजन् वासुदेवं स्मरन्निव। १११७५
अवोचदीदृशं वाक्यं वासुदेवं नृपाधमः। को नाम जगतां नाथमित्थं ब्रूयाज्जिजीविषुः।
मृत्युस्त्वां सर्व्वथा याति वदन्तं तादृशं वचः। जिह्वा ते शतधा दीर्य्याद्वदतस्तादृशं वचः।
एष ते पातयिष्यामि शिरः कायाच्च पौण्ड्रक। यन्नाम वासुदेवेति तव संप्रति वर्त्तते।
यावत् पतति कायात्ते शिरस्तावत् प्रवर्त्तते। स एव श्वो नु भगवान् वासुदेवो भविष्यति।
एक एव जगन्नाथः कर्त्ता सर्व्वस्य सर्व्वगः। दुरात्मन् सर्व्वथा देवो भविष्यति न संशयः। १११८०
एष तेऽहं शिरः कायात् पातयिष्यामि राजक। यद्वचो भगवान् विष्णुर्नाशमिष्यति सांप्रतं।
अस्त्रवीर्य्यं बलञ्चैव सर्व्वं दर्शय साम्प्रतं। नातः परतरं राजन् वीर्य्यं तव च वर्त्तते।
सर्व्वं दर्शय यत्नेन स्थितोऽस्मि व्यवसायवान्। शरी चापी गदी खड्गी सर्व्वथाऽहमुपस्थितः।
नैतन्नगरमायासीः सत्येनैतद्ब्रवीम्यहं। सर्व्वथा कृतकृत्योऽस्मि दृष्ट्वा त्वां वासुदेवक।
तवाङ्गं तिलशः कृत्वा श्वभ्यो दास्यामि राजक। इत्युक्ता वाणमादाय वासुदेवं महाबलः। १११८५
आकर्णपूर्णमाकृष्य विव्याध निशितं शरं। स तेन विद्धो यदुना वासुदेवः प्रतापवान्।
नवभिर्दशभिश्चैव शरैः सन्नतपर्व्वभिः। विव्याध सात्यकिं राजा नदंश्च बहुधा किल।
ततो नाराचमादाय निशितं यमसन्निभं। धनुराकृष्य भगवान् वासुदेवो नृपोत्तम।
विव्याध सात्यकिं भूयो निशि प्रह्लादयन् स्वकान्। नाराचेन समाविद्धः सात्यकिः सत्यशङ्करः।
ललाटे सुदृढं वीरो वृष्णीनामग्रणीस्तदा। निषसाद रथोपस्थे निश्चेष्ट इव सत्तम। १११९०
ततः स पौण्ड्रको राजाऽविध्यद्दशभिराशुगैः। सारथिं पञ्चविंशत्या हयांश्च चतुरो नृप।
ते हया रुधिराक्ताङ्गाः सारथिश्च समन्ततः। विह्वलाः समपद्यन्त वासुदेवस्य पश्यतः।
वासुदेवो रथे चापि सिंहनादं समादधे। तेन नादेन तत्राभूद्विबुद्धः सात्यकिर्नृप।
विदान् हयांस्तथा दृष्ट्वा सारथिञ्च तथा गतं। शैनेयोऽथ महावीर्य्यो रुषितो नृपसत्तम।
अलं द्रक्ष्यामि ते वीर्य्यमित्युक्ता वाणमाददे। विव्याध तेन वाणेन वक्षसेनं महाबलं। १११९५
ततश्चचाल तेनाजौ वासुदेवः शरेण ह। सुस्रुवे रुधिरं घोरमत्युष्णं वक्षसा नृप।
रथोपस्थे पपाताशु निश्चलाङ्गो यथा। कृत्यञ्चापि न जानाति केवलं निषसाद ह।
सात्यकिस्तु रथं भित्त्वा दशभिः सायकैस्तथा। ध्वजं चिच्छेद भल्लेन वासुदेवस्य वृष्णिपः।
हयांश्च चतुरो हत्वा वाणैः सारथिमेव च। युयुधानोऽथ राजेन्द्र वाणैः सारथिमेव च।

सारथेश्च शिरः कायादाहरत् स रथात्तदा। रथयष्टिञ्च चिच्छेद हयाश्च व्यसवोऽभवन्। ११२००
चक्रञ्च तिलशः कृत्वा बाणैर्द्दशभिरञ्जसा। जहास विपुलं राजन् वासुदेवं महाबलः।
ततः परं महत्कार्यं सात्यकिर्वृष्णिनन्दनः। शब्दं कृत्वा बली सात्वान् सर्वेषामस्य पश्यतः।
शरैः सप्ततिसंख्याकैरर्द्दयामास सत्वरं। ते शराः शलभाकारा निपेतुः सर्व्वतस्तदा।
शिरसः पार्श्वतश्चैव पृष्ठतः पुरतस्तथा। केवलं धैर्य्यनिचयस्तृषार्त्तः शरावृत् यथा।
यथा सवत्सो विज्ञाय तथा तिष्ठति पौण्ड्रकः। ततश्चुक्रोध बलवान् वासुदेव प्रतापवान्। ११२०५
अर्द्धचन्द्रं समादाय विव्याध युधि सात्यकिं। विद्धा सप्तभिरायान्तं क्रोधेन प्रस्फुरन्निव।
विद्धोऽथ सात्यकिस्तेन शरैः पञ्चभिराशुगैः। चापं चिच्छेद पौण्ड्रस्य सिंहनादं तथाऽनदत्।
वासुदेवो गदां गृह्य भ्रामयित्वा पदात् पदं। त्वरितं पातयामास सात्यकेर्व्वक्षसि प्रभो।
सव्येन तां समाकृष्य करेण यदुनन्दनः। शरं प्रगृह्य विव्याध सात्यकिर्युधि पौण्ड्रकं।
तमन्तरे गृहीत्वाशु वासुदेवः प्रतापवान्। शक्तिभिर्द्दशभिश्चैव सात्यकिं निजघान ह। ११२१०
ताभिर्विद्धो रणे वीरः सात्यकिः सत्यसङ्गरः। अपास्य धनुरन्यत्तद्धनुरादाय सत्वरं।
आजघान गदापाणिर्वृष्णीनामग्रणीर्नृप।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकसात्यकियुद्धे सप्ताशीत्यधिकद्विशततोऽध्यायः॥ २८७ ॥

॥ वैशम्पायन उवाच ॥ ततः क्रुद्धो गदापाणिः सात्यकिर्वृष्णिनन्दनः। वासुदेवं जघानाशु गदया तीक्ष्णया नृप।
सात्यकिं वासुदेवस्तु गदयाऽभ्यहनद्बली। तावुद्यतगदौ वीरौ शुशुभाते सुदारुणौ।
हृप्तौ वने यथा सिंहौ परस्परवधैषिणौ। ततः स सात्यकिः क्रुद्धः सव्यं मण्डलमागमत्। ११२१५
दक्षिणं वासुदेवस्तु त जघान स्तनान्तरे। युयुधानोऽथ वीरस्तु बाह्वोर्मध्ये न्यताडयत्।
दृढं स ताडितो वीरो जानुभ्यामपतद्भुवि। तत उत्थाय वीरस्तु ललाटेऽभ्यहनत् गदां।
विपक्षः किञ्चिदायस्तस्तत उत्थाय सत्वरं। गदयाऽभ्यहनद्वीरः सात्यकिं पौण्ड्रसत्तमं।
वासुदेवो बली वीरः साक्षान्मृत्युरिवापरः। जघान गदया वृष्णिं निर्द्दहन्निव चक्षुषा।
स तया ताडितो वृष्णिर्गदया वाज्रमुक्तया। आलम्ब्य भूमिं सहसा न्यषीदन्मत्तो यथा। ११२२०
संज्ञां पुनः समालम्ब्य पाणिभ्यां दृढमेव च। गदां तस्य महाराज गृहीत्वा प्रयत्नेन ह।
द्विधा कृत्वा महागुर्व्वीं गदां कालायसीं शुभां। उत्सृज्य सहसा वीरः सिंहनादं व्यनीनदत्।
तत उत्सृज्य राजा तु वासुदेवो महाबलः। सव्येन सात्यकिं गृह्य दक्षिणेन करेण च।
मुष्टिं कृत्वा महाघोरां वासुदेवः प्रतापवान्। ताडयामास मध्ये तु स्तनयोः सात्यकेर्नृप।
शैनेयो वृष्णिवीरस्तु गदामुत्सृज्य सत्वरं। तलेनाभ्याहनद्वीरो वासुदेवं रणाजिरे। ११२२५
तलेन वासुदेवोऽपि सात्यकिं सत्यसङ्गरं। तयोरेवं महाघोरं तलयुद्धं प्रवर्त्तत।
जानुभ्यां मुष्टिभिश्चैव बाहुभ्यां शिरसा तदा। उरसोरः समाहत्य जानुभ्यां जानुनी तथा।
कराभ्यां करमाहत्य तौ युद्धं समचक्रतुः। तत्रयोस्तत्र राजेन्द्र द्वयोः सन्निकर्षयोः।

वने यथाऽग्निरुत्पन्नस्तथैवाभून्महास्वनः । तावोजो प्रथितौ वीरावुभौ पौण्ड्रकसात्यकी ।
निशि स्तिमितमूकायां शक्तं त्यक्त्वा महाबलौ । युयुधाते महारङ्गे मल्लौ इाविव विश्रुतौ । ११११०
उभे सेने महाराज संश्रयं जग्मतुस्तदा । किन्नु स्यात् सात्यकिर्वीरो हतस्तेन भविष्यति ।
आहोस्विद्वासुदेवस्तु हतस्तेन महात्मना । अथैव तौ महावीरौ परस्परवधैषिणौ ।
युध्यमानौ महावीरौ नरौ स्वर्गं गमिष्यतः । अन्यथा नोपरस्येतां युद्धादोस्ते सुनिश्चितौ ।
अहो वीर्य्यमहो धैर्य्यमेतयोर्म्बलशालिनोः । एतौ महाबलौ लोके एतौ प्रकृतिसत्तमौ ।
नैवं युद्धं महाघोरमासीद्देवासुरेष्वपि । न श्रुतो न च वा दृष्टः श्रयामोऽयं कदाचन । १११११
एवं ते सैनिका ब्रूयुः सेनयोरुभयोरपि । रात्रौ निशीथे मेघेषि दृष्ट्वा युद्धं सुदारुणं ।
अथ तौ बाहुभिर्वीरौ सन्निपेततुरञ्जसा । दशभिर्मुष्टिभिर्जघ्ने सात्यकिः पौण्ड्रकं तदा ।
पञ्चभिः सात्यकिं पौण्ड्रः समाजघ्ने महाबलः । तयोश्चटचटाशब्दो मल्लास्फोटभवो महान् ।
प्रादुरासीत्तु सर्व्वत्र सर्व्वान् विस्मापयन्निव ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकसात्यकियुद्धे अष्टाशीत्यधिकद्विशततोऽध्यायः ॥ २८८ ॥

॥ वैशम्पायन उवाच ॥ एतस्मिन्नन्तरे क्रुद्ध एकलव्यो निषादपः । बलभद्रमभिप्रेक्ष्य धनुरादाय सत्वरं । १११२०
नाराचैर्दशभिर्विद्धो वाणैस्तु दशभिः परैः । चिच्छेद धनुरङ्के तत् सर्व्वसत्त्वस्य पश्यतः ।
सूतं दशभिराहत्य रथं त्रिंशद्भिरेव च । ध्वजं चिच्छेद भल्लेन निषादस्य जगत्पतिः ।
ततोऽपरं महच्चापं निषादो वीर्य्यसम्मतः । दृढमौर्व्वीसमायुक्तं दशतालप्रमाणतः ।
कामपालं शरेणाशु जघान जनमध्यतः । बलदेवो महावीर्य्यः श्वेतसर्प इव श्वसन् ।
दशभिश्चतुर्भिर्दिव्यैः शरैः सर्व्वसैर्न्बलैः । चिच्छेद मुष्टिदेशे तु माधवो माधवाग्रजः । १११२५
एकलव्यो निषादेशः खड्गमादाय सत्वरः । प्राहिणोद्बलदेवाय निशितं घोरविग्रहं ।
तमन्तरे यदुर्वीरो वृष्णिवीरः प्रतापवान् । तिलशः पञ्चभिर्व्वाणैश्चकार यदुनन्दनः ।
ततो महत् परं खड्गं सर्व्वकालायसं शुभं । प्राहिणोत् सारथेः कायमालोक्याथ निषादपः ।
तच्चापि दशभिर्वीरो माधवो यदुनन्दनः । बाह्वोरन्तरयोश्चैव निर्बिभेद महारणे ।
ततः शक्तिं समादाय घण्टामालाकुलां नृप । निषादो बलदेवाय प्रेषयित्वा महाबलः । १११३०
सिंहनादं महाघोरमकरोत् स निषादपः । सा शक्तिः प्रेषिता तेन बलदेवमुपागमत् ।
उत्पतन्तीं महाघोरां बलभद्रः प्रतापवान् । आदायाय निषादेशं सर्व्वान् विस्मापयन्निव ।
तयैव तं जघानाशु वक्षोदेशे स माधवः । स तया ताडितो वीरः स्वयमेव निषादपः ।
विह्वलः सर्व्वगात्रेषु निपपात महीतले । प्राणसंशयमापन्नो निषादो रामताडितः ।
निषादास्तस्य राजेन्द्र शतशोऽथ सहस्रशः । अष्टाशीतिसहस्राणि निषादास्तस्य चोधिनः । १११३५
गदिनः खड्गिनश्चैव महेष्वासा महाबलाः । शरैरनेकसाहस्रैः शक्तिभिश्च परश्वधैः ।
गदाभिः पट्टिशैः शूलैः परिघैः प्रासतोमरैः । कुन्तैरथ कुठारैश्च यादवानां महाभयं ।

शलभा इव राजेन्द्र दीप्यमानं हुताशनं । ते शतं पातयाञ्चक्रू रामं राममिवापरे।
केचित् कुठारैराजघ्नुः केचित् कुन्तैः परश्वधैः । गदाभि. केचिदाघ्नन्ति शक्तिभिश्च तथाऽपरे।
निजघ्नुः सहसा रामं प्रस्फुरन्तं यथा यथा । तत. क्रुद्धो हली साचात् हलमुद्यम्य सत्वरं । ११२९०
सर्व्वानाकर्षयामास मुषलेन स्थि पीडयन् । ते हन्यमाना राजेन्द्र निषादाः पर्व्वताश्रयाः ।
निपेतुर्द्धरणीपृष्ठे शतशोऽथ सहस्रशः । शरेण तान्महाराज हत्वा सर्व्वान्महाबलान् ।
सिंहवद्व्यनदत्तत्र तस्थौ रामो महाबलः । ततो रात्रौ महाघोराः पिशाचाः पिशिताशनाः ।
आक्रम्य मांसयूथानि भक्षयन्तः समासते। पिबन्तः शोणितं कोष्ठात् संच्छिद्य च शवं बहु ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि एकलव्यसैन्यबधे ऊननवत्यधिकद्विशतोऽध्यायः ॥ २८९ ॥
॥ वैशम्पायन उवाच ॥ क्रव्यादा. सर्व्व एवाशु भक्षयन्तस्तदा शवं । हसन्तो विविधं घोरं नादयन्तो वसुन्धरां । ११२९१
राक्षसाः पिशिताशाश्च पिबन्तः शोणितं बहु । आमिषं भुञ्जते राजन् शवस्य पिशिताशनाः ।
नृत्यन्ति स्म तदा राजन्नगर्य्यां रणतोषिणः । काका बलाका गृध्राश्च श्येना गोमायवस्तथा ।
भक्षयन्तः प्रवर्त्तन्ते राक्षसाश्चैव दारुणाः । एतस्मिन्नन्तरे वीरो निषादो लब्धसंज्ञकः ।
हतान् सर्व्वान् समालोक्य निषादान्नगचारिणः । गदामादाय कुपितो राममेव जगाम ह ।
जघान गदया राजन् जत्रुदेशे निषादपः । ततो रामो दृढं राजन्निषादं श्लाघशालिनं । ११३००
आजघ्ने गदया क्रूरं मदमत्तो हलायुधः । तयोश्च तुमुलं युद्धं गदाभ्यां समवर्त्तत ।
आकाशे शब्द आसीत्तु तयोर्युद्धे महाभुज । समुद्राणां यथा घोषः सर्व्वेषां सन्निगच्छतां ।
कल्पक्षये महाराज शब्दः सुतुमुलोऽभवत् । चोभितो नागराजश्च नागा. चोभं समाययुः ।
पृथिवी चान्तरीक्षञ्च सर्व्वं शब्दमयं बभौ । तत. स पौण्ड्रको राजा सात्यकिं वृष्णिनन्दनं ।
गदयैव जघानाशु सत्वरं रणकोविद. । युयुधानो बली राजन् वासुदेवं जघान ह । ११३०५
तयोश्च तुमुलः शब्द. प्रादुरासीन्महारणे । चतुर्णां युध्यतां राजन् परस्परबधैषिणां ।
ब्रह्माण्डक्षोभणो राजन् शब्द आसीत् सुदारुणः । ततो रज. प्रादुरभूत्तस्मिन् संग्राममूर्द्धनि।
तारका निष्प्रभा राजंस्तमस्येव क्षयं गते । उषसि प्रतिबुद्धायां तमो नि.शेषतां ययौ ।
उदितो भगवान् सूर्य्यश्चन्द्रश्च क्षयमाययौ । तयोर्युद्धं प्रादुरभूत्तुर्णां श्लाघशालिनां ।
देवासुरसमं राजन्नुदिते भास्करे महत् । ११३१०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकबधे नवत्यधिकद्विशतोऽध्याय. ॥ २९० ॥
॥ वैशम्पायन उवाच ॥ तत. प्रभाते विमले भगवान् देवकीसुतः । गन्तुमैच्छज्जगन्नाथः पुरीं वदरिकाश्रमात् ।
नमस्कृत्य मुनीन् सर्व्वान् ययौ द्वारवतीं नृप । आरुह्य गरुडं विष्णुर्वेगेन महता प्रभुः ।
सुमहान् शुश्रुवे शब्दस्तेषां युद्धं प्रकुर्व्वतां । गच्छता देवदेवेन पुरीं द्वारवतीं नृप।
अचिन्तयज्जगन्नाथः को न्वयं शब्द उत्थित. । संग्रामसदृशो घोर आर्य्यशैनेयसंयुतः ।
व्यक्तमागतवान् पौण्ड्रो नगरीं द्वारकामनु । तेन युद्धं समभवत् पौण्ड्रकेण महात्मना । ११३१८

यदूनां वृष्णिवीराणां युध्यतामितरेतरं । शब्दोऽयं सुमहान् व्यक्तो नात्र कार्य्या विचारणा ।
इत्येवं चिन्तयित्वा तु दध्मौ शङ्खं महारवं । पाञ्चजन्यं हरिः साक्षात् प्रीणयन् वृष्णिपुङ्गवान् ।
रोदसी पूरयामास तेन शब्देन केशवः । यादवा वृष्णयश्चैव श्रुत्वा शङ्खस्य तं रवं ।
व्यक्तमायाति भगवान् पाञ्चजन्यरवो ह्ययं । इति ते मेनिरे राजन् वृष्णयो यादवास्तथा ।
निर्भयाः समपद्यन्त वृष्णयो यादवाश्च ते । तस्मिन्नेव क्षणे दृष्टस्तार्क्ष्यश्च पतताम्वरः । ११९८०
ततश्च देवकीसूनुर्दृष्टस्तैर्यादवेश्वरः । सूताश्च मागधाश्चैव पुरो यान्ति जगत्पतेः ।
स्तुत्या स्तुतं हरिं विष्णुमीश्वरं कमलेक्षणं । ततश्च यादवाः सर्व्वे परिवव्रुर्ज्जनार्द्दनं ।
कृष्णस्तु गरुडं भूयो गच्छ त्वं नाकमुत्तमं । इत्युक्त्वा गरुडं विष्णुर्विसृज्य यदुनन्दनः ।
दारुकं पुनराहेदं रथमानय मे प्रभो । स तथेति प्रतिज्ञाय रथमादाय सत्वरं ।
रथोऽयं भगवन् देव किमतः कृत्यमस्ति मे । इत्युक्त्वा रथमादाय प्रणम्याग्रे स्थितो हरेः । ११९८५
गते च गरुडे विष्णू रथमारुह्य सत्वरं । यत्र युद्धं समभवत्तत्र याति स्म केशवः ।
तत्र गत्वा महाराज युध्यताञ्च महात्मनां । पाञ्चजन्यं महाशङ्खं दध्मौ यदुवृषोत्तमः ।
पौण्ड्रोऽथ वासुदेवस्तु कृष्णं दृष्ट्वा रणोत्सुकं । सात्यकिं पृष्ठतः कृत्वा वासुदेवमुपागमत् ।
क्रुद्धोऽथ सात्यकी राजन् वारयामास पौण्ड्रकं । न गन्तव्यमितो राजन् नैष धर्म्मः सनातनः ।
जित्वा मां गच्छ राजेन्द्र परं योद्धुं महारणे । क्षत्रियोऽस्मि महावीर स्थिते मयि रणोत्सुके । ११९९०
एष ते गर्व्वमखिलं नाशयिष्यामि संयुगे । इत्युक्त्वा चाथ तस्थौ स गच्छतो यादवेश्वरः ।
पौण्ड्रकस्य शिनेर्नप्ता पश्यतः केशवस्य ह । अवज्ञाय शिनेः पौत्रं कृष्णमेव जगाम ह ।
निर्भर्त्स्य सहसा भूयः सात्यकिः क्रोधमूर्च्छितः । गदया प्राहरत् पौण्ड्रं वासुदेवस्य पश्यतः ।
यथाप्राणं यथायोगं सात्यकिः सत्यविक्रमः । दृष्ट्वाऽथ भगवानेवं सात्यकिं प्रशशंस ह ।
निवार्य्य सात्यकिं कृष्णो यथेष्टं क्रियतामयं । उपारमद्यथायोगं सात्यकिः कृष्णवारितः । ११९९५
स ततः पौण्ड्रको राजा वासुदेवमुवाच ह । भो भो यादव गोपाल इदानीं क्व गतो भवान् ।
त्वां द्रष्टुमथ संप्राप्तो वासुदेवोऽस्मि साम्प्रतं । हत्वा त्वां सबलं कृष्ण बलैर्ब्बहुभिरन्वितः ।
अहमेको भविष्यामि वासुदेवो महीतले । यदक्तं तव गोविन्द प्रथितं सुमहं महत् ।
अनेन मम चक्रेण पीडितोऽस्मि च तद्रणे । चक्रमस्तीति यदोर्थं तव माधव सांप्रतं ।
नाशयिष्यामि तत् सर्व्वं सर्व्वचक्रस्य पश्यतः । शार्ङ्गीति मां विजानीहि न त्वं शार्ङ्गीति विश्रुतः । १२०००
शङ्खी चाहं गदी चाहं चक्री चाहं जनार्द्दन । मामेव हि सदा शश्वन्मन्ता वीर्य्यशालिनः ।
आदौ त्वबलवद्दुष्टान् हत्वा स्त्रीबालकान् पशून् । गाश्च हत्वा महागर्व्वस्तव संप्रति वर्त्तते ।
तमद्याहं नाशयिष्यामि यदि तिष्ठसि मत्पुरः । शस्त्रं गृहाण गोविन्द यदि योद्धुं व्यवस्थितः ।
इत्युक्त्वा चापमादाय तस्थौ पार्श्वे जगत्पतेः । तदेवचनमाकर्ण्य वासुदेवस्य भाषितं ।
स्मितं कृत्वा हरिः कृष्णो बभाषे पौण्ड्रकं नृपं । कामं वद नृप त्वं हि पापरूपस्य सदा नृप । १२००५

गोघाती बालघाती च स्त्रीहन्ता शर्व्वया नृप । चक्री भव गदी राजन् शार्ङ्गी च सततं भव ।
नामधेयं त्वया मह्यं वासुदेवेति च प्रभो । शार्ङ्गी चक्री गदी शङ्खीत्येवमादि यथा मम ।
किन्तु वक्ष्यामि किञ्चित्तु शृणुष्व यदि मन्यसे । क्षत्रिया बलिनो ये तु स्थिते मयि जगत्पतौ ।
तथाऽनुब्रुवते त्वां हि जीवत्येव मयि प्रभो । यत्ते चक्रं महाघोरमसुरान्तकरं महत् ।
तत्तुल्यं मम चक्रस्य वृत्ततो न तु वीर्य्यतः । आयुधेष्वथ सर्व्वेषु शब्दसादृश्यमस्ति ते । ११११०
गोपोऽहं सर्व्वदा राजन् प्राणिनां प्राणद सदा । गोप्ता सर्व्वेषु लोकेषु शास्ता दुष्टस्य सर्व्वदा ।
कत्थनं सर्व्वदा कार्य्यं जित्वा राजन्नृपाधम । अजित्वा किं भवान् ब्रूते स्थिते मयि च शस्त्रिणि ।
हत्वा मां ब्रूहि राजेन्द्र यदि शक्तोऽसि पौण्ड्रक । स्थितोऽहं चक्रमाश्रित्य रथी चापी गदासिमान् ।
रथमारुह्य युद्धेऽस्मिन् सन्नद्धो भव मानद । इत्युक्त्वा भगवान् विष्णु सिंहनादं ननाद ह ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कृष्णपौण्ड्रकयुद्धे एकनवत्यधिकद्विशततोऽध्यायः ॥२९१॥
॥ वैशम्पायन उवाच ॥ तत शरं समादाय वासुदेवः प्रतापवान् । पौण्ड्रं जघान सहसा निशितेन शरेण ह । ११११५
पौण्ड्रोऽथ वासुदेवस्तु शरैर्दशभिराशुगैः । वासुदेवं जघानाशु वार्ष्णेयं वृष्णिनन्दनं ।
दारुकं पञ्चविंशत्या हयान् दशभिरेव च । सप्तत्या वासुदेवन्तु यादवं वासुदेवक. ।
तत. प्रहस्य सुचिरं केशव केशिसूदन. । हृष्टोऽसाविति मनसा संपूज्य यदुनन्दन ।
आकृष्य शार्ङ्गं बलवान् सन्धाय रिपुसूदन. । नाराचेन सुतीक्ष्णेन ध्वजं चिच्छेद केशव ।
सारथेश्च शिरः कायादाहृत्य यदुनन्दन । अश्वांश्च चतुरो हत्वा चतुर्भि. सायकोत्तमै । १११२०
रथं राज्ञ समाहत्य तयोभौ पार्ष्णिसारथी । चक्राञ्च तिलश कृत्वा हसन् किञ्चिदवस्थित. ।
पौण्ड्रको वासुदेवस्तु रथादाप्लुत्य सत्वर. । आदाय निशितं खड्गं प्राहिणोत् केशवाय स. ।
स खड्गं शतधा कृत्वा तूष्णीमासीच्च केशव । ततोऽपरं महाघोरं परिघं कालसन्निभ ।
गृहीत्वा वासुदेवाय वासुदेव. प्रतापवान् । प्राहिणोद्वृष्णिवीराय सर्व्वक्षत्रस्य पश्यत ।
तद्द्विधा जगतां नाथश्चकार यदुनन्दन । ततश्चक्रं महाघोरं सहस्रारं महाप्रभं । १११२५
त्रिंशद्धारसमायुक्तमायसस्तम्भसन्निभम् । आदायाथ महाराज केशवं वाक्यमब्रवीत् ।
पश्येदं निशित घोरं तव चक्रविनाशनं । अनेन तव गोविन्द दर्पं दर्पवतांवर ।
अपनेष्यामि वार्ष्णेय सर्व्वक्षत्रस्य पश्यत. । त्वामुद्दिश्य महाघोरं कृतमन्यद्दुरासदं ।
यदि शक्तो हरे कृष्ण दारयेदं महासदं । इत्युक्त्वा तच्छतगुणं भ्रामयित्वा महाबल ।
चिक्षेपाथ महावीर्य्य. पौण्ड्रको नृपसत्तम. । अवप्लुत्य ततो देशात्तदुत्सृज्य महाबल. । १११३०
सिंहनादं महाघोरं व्यनदद्वीर्य्यवांस्तदा । ततो विस्मयमापन्नो भगवान् देवकीसुत ।
अहो वीर्य्यमहो धैर्य्यमस्य पौण्ड्रस्य दु सहं । इति मत्वा जगन्नाथ उत्थितश्च रथोत्तमात् ।
तत. शिलां समादाय प्रेषयामास केशवे । तां शिलां प्रेषयामास तस्मै यदुकुलोद्वह ।
पौण्ड्रेण सुचिरं कालं विक्रीड्य भगवान् हरि. । ततश्च चक्रमादाय निशितं रक्तभोजनं ।

दैत्यमांसप्रदिग्धाङ्ग नारीगर्भविमोचनं । शातकुम्भमयं घोरं दैत्यदानवनाशनं । ११२३५
सहस्रारं शतारन्तदद्भुतं दैत्यभीषण । ऐश्वर्य्यञ्च परमं नित्यं सुरगणार्च्चितं ।
विष्णु कृष्णस्तथा शार्ङ्गी नित्य युक्त सदा हरि । जघान तेन गोविन्द पौण्ड्रकं नृपसत्तमं ।
तस्य देह विदार्य्याशु चक्रं पिशितभोजनं । कृष्णस्याथ कर भूय. प्राप सर्व्वेश्वरस्य ह ।
तत. स पौण्ड्रको राजा गतासु प्रापतद्भुवि । निहत्य भगवान् विष्णुर्दुर्विज्ञेयगति प्रभु । ११२४०
प्रतिपेदे सुधर्म्मान्तु यादवै. पूजितो हरि. ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे द्विनवत्यधिकद्विशततोऽध्याय. ॥ २९२ ॥
॥ वैशम्पायन उवाच ॥ निषादेशं ततो राम शक्त्या वीर्य्यवताम्वर । आजघान स्तनद्वन्द्वे सिंहनादं तथाऽनदत् ।
तत. क्रुद्धो निषादेशो रामं मत्त महाबल । गदया लोकविख्यातो जघान स्तनयोरपि ।
आहत. स तु तेनाशु वलभद्रो महावल । उभाभ्याञ्चैव रामस्तु कराभ्यां वृष्णिपुङ्गव ।
गदां स्पृश्य महाघोरामायान्तो प्राणहारिणी । दुद्रावाथ निषादेशः समुद्रं मकरालय ।
धावत्येवं तदा राजि एकलव्ये निषादपे । धावत्येव च रामोऽपि यत्र यातो निषादप । ११२४५
सागरं स प्रविश्याशु गत्वा योजनपञ्चक । भीत एव तदा राजन्नेकलव्यो निषादपः ।
कश्चिद्द्वीपान्तरं राजन् प्रविश्य न्यवसत्तदा । ततो रामो निषादेशं जिगाय यदुनन्दन. ।
तां सभा मणिरत्नाढ्यां प्रविवेश हलायुध । सात्यकिर्युद्धसंसक्ता सभां प्रविवेश ह ।
अन्ये च यादवा राजन् यथायोगमुपस्थिता । आसनेषु च सर्व्वेषु वृष्णिवीरेषु सर्व्वत । ११२५०
अभिवाद्य यथायोगं वृष्णीन सर्व्वांश्च केशव । उवाच वचनं काले भगवान् देवकीसुत. ।
दृष्टं कैलासशिखरं शङ्करो नीललोहित । स तु मह्यं यदुवरा प्रीतिमांश्च ददौ वर ।
तत्र देवा समायाता मुनयश्च तपोधना । दृष्ट्वा मां शङ्करश्चैव प्रीत. स्तुत्वा समाययौ ।
अत्यद्भुत मया दृष्टं रात्रौ यादवसत्तमाः । पिशाचौ द्वौ महाघोरौ वदन्तौ नासिकां कथां ।
मृगयां चक्रतुस्तौ तु चिन्तयन्तौ तु मां सदा । दृष्ट्वा मा तौ तु राजेन्द्रा प्रीतिमन्तौ तपस्विनौ ।
भक्तिमन्तौ महात्मानौ प्रणामं चक्रतुस्तदा । ततोऽहं सर्व्वथा प्रीतस्तौ नीतौ स्वर्गमुत्तमं । ११२५५
तोषयित्वा महादेवं मया चाद्य समागतं ।
॥ वैशम्पायन उवाच ॥ ततस्ते वृष्णय सर्व्वे देवदेवं शशंसिरे । सर्व्वथा कृतकृत्यास्ते वृष्णय केशवाश्रयाः ।
यादवा. सर्व्वे एवाथ स्वं स्व जग्मुर्यथालयं । अभ्यन्तरं जगन्नाथ प्रविश्य हरिरीश्वरः ।
रुक्मिणीसत्यभामाभ्यामाचचक्षे यथाऽभवत् । ते प्रीते प्रीतियुक्तेन केशवेन समन्विते ।
एतत्ते, सर्व्वमाख्यात केशवस्य च चेष्टित । शशास पृथिवीं कृत्स्ना दुष्टान् हत्वा महाबलान् । ११२६०
नरकं घोरकर्म्माण पौण्ड्रकं नृपसत्तमं । हयग्रीवं निशुम्भञ्च तथा सुन्दोपसुन्दकौ ।
एरच विप्रान् देवेशो मुनीन् मुनिवरार्च्चित । विप्रेभ्यश्च ददौ वित्त गाश्च दत्वा स केशव ।
अग्निहोत्रे प्रयुञ्जानो ब्राह्मणाय सुतर्पयन् । मुनींश्च ब्रह्मचर्य्येण देवान् यज्ञैरनेकधा ।

स्वधया च पितॄन् सर्व्वान् प्रीणयन्नेव सर्व्वदा । तस्मिन् शासति देवेशे राज्यं निष्कण्टकं प्रभो।
सुखमेव प्रजाः सर्व्वा जीवन्ति ब्राह्मणादयः । १५३७५
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे त्रिनवत्यधिकद्विशततोऽध्यायः ॥ २९३ ॥
॥ जनमेजय उवाच ॥ भूय एव द्विजश्रेष्ठ शङ्खचक्रगदाभृतः। चरितं श्रोतुमिच्छामि विस्तरेण तपोधन।
न हि मे तृप्तिरस्तीह शृण्वतः कैशवीं कथां । को नु नाम हरेर्विष्णोर्देवदेवस्य चक्रिणः ।
शृण्वन् स्तुवं स्मरन् वाऽपि तृप्तिं याति दिवानिशं । पुरुषार्थोऽयमेवैको यत्कथाश्रवणं हरेः ।
कथमासीज्जगद्धेतोर्हंसस्य डिम्भकस्य च । समितिः सर्व्वभूतानां सदा विस्मयदायिनी ।
विचक्रस्य कथं युद्धं दानवस्य महात्मनः । स तयोश्चित्रतां यात दर्ययैतमनुग्रङ्ग्रम । १५३८०
तौ सुतौ वीर्यसम्पन्नौ शिष्यौ भृगुसुतस्य ह । सर्व्वास्त्रकुशलौ वीरौ हरलब्धवरौ किल ।
संग्रामः सुमहानासीदित्युक्तं भवता पुरा । तयोश्च नृपयोर्विप्र केशवस्य जगत्पते. । ,
कस्य पुत्त्रौ समुत्पन्नौ यथाऽभूद्विग्रहो महान्। अष्टाशीतिसहस्राणि दानवानां तरस्विनां।
बलान्यथ विचक्रस्य शितशूलधराणि च । आसन् युद्धे महाराज दानवस्य जयैषिणः ।
यदूनामन्तरप्रेप्सुर्यदूनां युद्धकाङ्क्षया। देवासुरे महायुद्धे देवान् जयति दुर्द्धरः । १५३८५
तद्वधार्थं सदा यत्नमकरोच्चैव केशवः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने जनमेजयवाक्ये चतुर्नवत्यधिकद्विशततोऽध्यायः ॥२९४ ॥
॥ वैशम्पायन उवाच ॥ आसीत् शाल्वेषु राजेन्द्र ब्रह्मदत्तो नृपोत्तमः । नाम्ना राजन् स पूतात्मा सर्व्वभूतदयापरः।
पञ्चयज्ञपरो नित्यं जितात्मा विजितेन्द्रियः । ब्रह्मविद्वेदविच्चैव सदा यज्ञपरः शिवः ।
तस्य भार्य्ये महीपाल रूपौदार्य्यगुणान्विते । बभूवतुः सुसंपन्ने अनपत्ये नृपोत्तम ।
स ताभ्यां मुमुदे राजा शच्या शक्र इवाम्बरे । नाम्ना मित्रसहो.नाम सखा चासीन्महामते । १५३९०
तस्य राज्ञो महायोगी वेदवेदाङ्गतत्परः । अनपत्यः स विप्रेन्द्रो यथा राजा बभूव ह ।
स राजा सहितस्ताभ्यामर्चयामास शङ्करं । पुत्त्रार्थं शूलिनं शर्व्वं दशवर्षाण्यनन्यधीः ।
स विप्रो वैष्णवं सत्रं पुत्त्रार्थं समयोजयत् । अर्चितस्तेन राजेन्द्र शङ्करो नीललोहितः ।
आत्मानं दर्शयामास क्षिप्रं राजानमब्रवीत् । प्रीतोऽस्मि तव भद्रन्ते वरं वरय सुव्रत ।
अथ राजा जगन्नाथमुवाचेदं स्मयन्निव । पुत्त्रौ मम भवेतां हि तथेत्युक्त्वा वृषध्वजः । १५३९५
अन्तर्द्धानं गत. शम्भुः प्रतिबुद्धस्ततो नृपः। सोऽपि मित्रसहो विद्वान् देवं केशवमव्ययं ।
पञ्चवर्षं जगन्नाथमर्चयामास भक्तितः । अर्चितस्तेन विप्रेण देवदेवो जनार्द्दनः ।
पुत्त्रमेकं ददौ तस्मै स्वात्मना सदृशं हरिः । ते भार्य्ये गर्भमाधत्तां तेजसा शङ्करस्य ह ।
विप्रभार्य्या महाराज वैष्णवं तेज आदधत् । महिष्यौ ते सुषुवाते पुत्त्रौ शङ्करनिर्म्मितौ ।
असूयतां महीपाल क्रमेणैव नृपस्य ह । स तयोश्च महाराज नामकर्म्मादिकाः क्रियाः । १५४००

चकार विधिवत् सर्व्वं विप्रेभ्यो ऽदान्महद्धनं। स च विप्रो विनीतात्मा पुत्रमेकं हि लब्धवान्।
साक्षादिव जगन्नाथं स्थितं पुत्रात्मना नृप। जातकर्म्मादिकं सर्व्वं ब्राह्मणः स चकार ह।
तौ कुमारावयं चैव त्रय. सुवपुषोऽभवन्। वेदानधीत्य ते सर्व्वान् श्रुत्वा चान्वीक्षिकीं तथा।
धनुर्व्वेदे तथाऽस्त्रे च निपुणास्त्वभवंस्तदा। हंसो ज्येष्ठो नृपसुतो डिम्भकोऽनन्तरोऽभवत्।
स च विप्रसुतो राजन् जनार्द्दन इति स्मृतः। अन्योन्यमित्रतां याताः सर्व्वे चैव कुमारकाः। १५७०५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने पञ्चनवत्यधिकद्विशतोऽध्यायः॥ २९५॥

॥ वैशम्पायन उवाच॥ हंसश्च डिम्भकश्चैव तपश्चक्रुं महामते। मनश्चक्रतुरात्मांशौ शङ्करस्य नृपोत्तम।
गत्वा तु हिमवत्पार्श्वं तपश्चक्रतुरञ्जसा। उद्दिश्य शङ्करं शर्व्वं नीलग्रीवमुमापतिं।
वीर्य्यास्त्रे चैव नौ स्यातामित्याधाय तु मानसे। एकाग्रौ प्रयतौ भूत्वा वाय्वम्बुप्राशिनौ नृप।
नमस्ते देवदेवेति शङ्करेति दिवानिशं। हर शर्व्व शिवानन्द नीलग्रीव उमापते।
वृषध्वज विरूपाक्ष हर्य्यक्ष जगतांपते। भक्तिप्रिय गिरीशेश वामदेव शिवाच्युत। १५७१०
सद्योजात महादेव देवदेव गुहाश्रय। भूतभावन भूतेश प्रणवात्मन् सदाशिव।
इत्यादिनामभिर्नित्यं स्तुवन्तौ शङ्करं भवं। हृदि कृत्वा विरूपाक्षं तपस्तेपतुरञ्जसा।
निर्म्ममौ निरहङ्कारौ मौनव्रतसमास्थितौ। वर्षाणि च तदा राजन् पञ्च चक्रतुरोजसा।
ततः प्रीतो ऽभवच्छर्व्वस्ताभ्यां संयमनेन च। स ददौ दर्शनं नेत्रं व्याघ्रचर्म्माम्बरो हरः।
त्रियक्षः शङ्करः शर्व्वः शूलपाणिरुमापतिः। अग्रतः संस्थितं शर्व्वं चन्द्राङ्कृतशेखरं। १५७१५
तौ दृष्ट्वा प्रीतमनसौ नमश्चक्रतुरञ्जसा।

॥ श्रीभगवानुवाच॥ वरं वरय भद्रं वो यथेच्छा वां तथाऽस्तु वो। तावूचतुस्तदा राजन् प्रीतस्त्वं भगवन् यदि।
देवासुरचमूमुख्यैरजेयान्गन्धर्व्वदानवैः। आवामजय्यौ सर्व्वास्त्रेष नौ प्रथमो वरः।
द्वितीयो नौ विरूपाक्ष रौद्रास्त्राणाञ्च संग्रहः। माहेश्वरं तथा रौद्रमस्त्रं ब्रह्मशिरो महत्।
अभेद्यं कवचं दिव्यमच्छेद्यञ्चापि कार्म्मुकं। परशुञ्च तथा शर्व्व सदा रक्षार्थमेव च। १५७२०
सहायौ द्वौ महादेव भूतौ युद्धे हि गच्छतां। एवमस्त्विति देवेश आह शङ्करिटो हरः।
कुण्डोदरं विरूपाक्षं सर्व्वप्राणिहिते रतं। युवामयं च भूतेशौ सहायौ सततं रणे।
सदायं गच्छतां घोरमेतयोर्ज्वलमालिनौ.। इत्युक्त्वा भगवान् शर्व्वस्तत्रैवान्तरधीयत।
ततस्तौ वीर्य्यसम्पन्नौ हंसो डिम्भक एव च। कृतास्त्रौ शस्त्रसम्पन्नौ चाग्निमौ वीर्य्यवत्तरौ।
आमुक्तकवचौ वीरावजय्यौ देवदानवैः। अत्यन्तभक्तौ देवेशे शङ्करे नीललोहिते। १५७२५
नित्योत्सवकरौ देवे भस्मोद्धूलनशोभिनौ। कृतत्रिपुण्ड्रकौ नित्यं जटामुकुटशिरोधरौ।
रुद्राक्षार्पितसर्व्वाङ्गौ व्याघ्रचर्म्माहृताम्बरौ। नमः शिवाय शान्ताय महादेवाय धीमते।
इत्यादिभिर्महादेवं स्तुवन्तौ नामभिः शिवं। साक्षादिव महादेवौ रेजतुर्ज्जलधारिणौ।
ततः स्वभवनं गत्वा पितुः पादावस्पृशतां। पितुश्च सख्युर्व्विप्रिणो मातुश्च चरणौ तदा।

जनार्द्दनोऽपि धर्म्मात्मा कालेन महता नृप। विद्यापारं महाबुद्धिर्योगेनासावुपेयिवान्।
स च विष्णुं हृषीकेशं पीतकौशेयवाससं। ब्रह्मतत्त्वपरो नित्यमुपास्ते विजितेन्द्रिय।
हंसश्च डिम्भकश्चैव कृतदारौ बभूवतुः। जनार्द्दनोऽपि धर्म्मात्मा कृतदारो बभूव ह।
सर्व्वे ते यज्ञनिरता. पञ्चयज्ञपरास्तथा। स्वदारनिरता. सर्व्वे गुरुशुश्रूषणे रता.।
धर्म्म एव परं श्रेय इति ते मेनिरे नृप।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने षडशत्यधिकद्विशततोऽध्यायः॥ २८६॥

॥ वैशम्पायन उवाच॥ तत. कदाचित्तौ वीरौ मृगयामाटत. किल। जनार्द्दनेन सहितौ रथैरश्वैर्गजैरपि।
वनं गत्वा तु तौ वीरौ सिंहव्याघ्रांश्च जघ्नतु। शितैर्बाणैर्महाराज वराहांश्च सर्व्वश।
व्यालानन्यान्मृगान् हिंस्रान् घ्नन्तौ सहितौ नृप। एष आयाति विपुलो वराहो दीर्घलोचन.।
एनं बाणेन सञ्छिन्धि याति चायं मृगाधिप.। अयमन्योऽयं महिषः शृङ्गभीतसरीसृप.।
एते खलु मृगा. सार्द्धं शावैर्धावन्ति सर्व्वश.। एतद्भ्रमति सर्व्वत्र सितं शशकुलं महत्।
शावैस्तनं पिबत सार्द्धं न हन्तव्यमिदं शुभं। ग्रहीतव्यमिदं सर्व्वैर्निरुध्य श्वगणैरिह।
इत्यादिशब्द सुमहान् मृगयां कुर्व्वतां नृप। क्षत्रियाणां नृपश्रेष्ठ व्याधानां चैव धावतां।
हत्वा मृगान् सुबहुशो व्याघ्रान् सिंहान्नृपोत्तमौ। श्रमश्च जग्मतुर्वीरौ मध्यं याते दिवाकरे।
अलं हि मृगयाऽस्माकं श्रमः समुपजायते। इत्यूचतुर्महाराज पुष्करं जग्मतु सर.।
सर.समीपमागम्य मुनिसिद्धनिषेवितं। वीजन्यास्तथानूपं श्रमात्तत्र सुखं स्थितौ।
ततो जना. सर. सर्व्वे विगाह्य श्रमकर्षिता। बिसान् प्रवालान् पद्मानां भक्षयामासुरार्त्तवत्।
जनार्द्दनेन सहितौ हंसो डिम्भक एव च। सर. कचित् समाश्रित्य श्रम संत्यज्य तिष्ठत.।
विश्रम्य सरसस्तीरे तदासाते सुखं नृपौ। शृण्वतां परं ब्रह्म मुनिमुख्यै समीरितं।
माध्यन्दिनं तदा सर्व्वे सवनं सुस्वरं नृपा। तत. प्रीतौ नृपौ भूत्वा श्रुत्वा वेदध्वनीस्तदा।
ऐच्छतां तौ तदा द्रष्टुं यत्र मुनिकृतं सदा। स्थापयित्वा तत सेनां सर्व्वां मृगसमन्विता।
आदाय च महावीर्य्या शरान् कतिचिदेव च। जनार्द्दनस्तदा वीरो हंसो डिम्भक एव च।
पदातिनौ महाराज जग्मुश्चैवाश्रमं किल। महर्षे. काश्यपस्याथ सत्रं वैष्णवसंज्ञितं।
यजतो मुनिभिः सार्द्धं जपहोमपरायणै.।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने सप्तनवत्यधिकद्विशततोऽध्याय॥ २८७॥

॥ वैशम्पायन उवाच॥ जनार्द्दनश्च धर्म्मात्मा हंसो डिम्भक एव च। सदः प्रविश्य सहसा नमश्चक्रुर्मुनीश्वरान्।
तानागतान् महात्मानो मुनय शिष्यसंयुता.। अर्घ्यपाद्यासनादीनि चक्रु पूजाञ्च यत्नत।
तौ नृपौ स च विप्रेन्द्रः सपर्य्यां प्रतिगृह्य च। प्रीतात्मानो महात्मान आसते सुसुख नृप।
ततो हंसो बभाषे तान्मुनीन् संयतवान्नृप। पिता हि नौ मुनिश्रेष्ठा यष्टुमैच्छत् ससाधनं।
गन्तव्यं तत्र युष्माभि, श्रुतान्ते मुनिसत्तमा.। राजसूयेन यज्ञेन कृत्वा दिग्विजयं वयं।

याजयिष्यामहे विप्राः पितरं धार्म्मिकं नृपं । आयान्तु तत्र विप्रेन्द्राः सशिष्याः सपरिच्छदाः ।
वयमद्यैव सहिता द्विजो जेष्यामहे ध्रुवं । शक्तावहमवैतत् कर्त्तुं हैनिकसद्ध्ये ।
आवयोः पुरतः स्थातुं न शक्ता देवदानवाः । कैलासनिलयाद्देवाद्वरं लब्धा स्म यत्नतः । ११३९०
अजेय्या शत्रुसंघानामस्त्राणि विविधानि च । इत्युक्ता विरराभैव हंसो सहजनार्द्दन ।
॥ मुनय ऊचुः ॥ यदि स्यात्तत्र गच्छामो वयं शिष्यैर्नृपोत्तम । आस्महे चान्यथा राजन्नित्यूचुः किल तापसाः ।
॥ वैशम्पायन उवाच ॥ ततो देशान्महाराज गन्तुं निश्चितमानसौ । पुष्करस्योत्तरं तीरं दुर्व्वासा यत्र तिष्ठति ।
यतयो नियता भूत्वा मन्त्रब्रह्मनिवेविणः । ब्रह्मसूत्रपदे शक्तास्तर्थालोकतत्पराः ।
निर्म्ममा निरहङ्काराः कौपीनाच्छादनव्रताः । तमात्मानं जगद्योनिं विष्णुं विश्वेश्वरं विभुं । ११३९५
ब्रह्मरूपं शुभं शान्तमजरं सर्व्वतोमुखं । वेदान्तमूर्त्तिमव्यक्तमनन्तं शाश्वतं शिवं ।
नित्ययुक्तं विरूपाक्षं भूताधारमनामयं । ध्यायन्तः सर्व्वदा देवं मनसा सर्व्वतोमुखं ।
दुर्व्वाससा सदोपास्यं वेदान्तैकरसं प्रभुं । तर्कनिश्चिततत्त्वार्थाः सुविनिर्म्मलचेतसः ।
हंसाः परमहंसाश्च शिष्या दुर्व्वाससः प्रभो । तत्र गत्वा महात्मानौ तौ दृष्ट्वा ऊर्द्धरेतसं ।
दुर्व्वाससं महाबुद्धिं विचिन्वानं परं पदं । क्रुद्धो यदि स दुर्व्वासा दग्धुं लोकानिमान् चरः । ११४००
देवा अपि च यं द्रष्टुं क्रुद्धं नैव क्षमाः सदा । रोषमूर्त्तिः सदा यस्तु रुद्रात्मा विश्वरूपधृक् ।
रक्तकौपीनवसनो हंसः परम एव च । दृष्ट्वैनञ्च तयोरेवं बुद्धिरासीन्महामते ।
को नामासौ नराभूतः काषायी वर्णवित्तमः । कश्चाश्रमाश्रमो नाम विहाय च गृहाश्रमं ।
गृहस्थ एव धर्म्मात्मा गृहस्थो धर्म्मवित्तमः । गृहस्थो धर्म्मरूपस्तु गृहस्थो वर्ण एव च ।
गृहस्थस्य सदा माता प्राणिनां जीवनं सदा । तं विनाऽन्येन रूपेण वर्त्तते यो हि मूर्खनर । ११४०५
उन्मत्तोऽयं विरूपोऽयमथ वा मूर्ख एव च । ध्यायन्निव सदा चायमास्ते वञ्चयिताऽपि वा ।
किमेते प्राकृतज्ञाना ध्यायन्त इव किञ्चन । वयमेतान् दुराचारानाश्रमान्नरकप्रदान् ।
स्थापयिष्यामहे सर्व्वान्सन्दबुद्धीनिमान् गृहे । बलादेव द्विजानेतान्मूढविज्ञानतत्परान् ।
असद्दुराग्रहीतांश्च बालिशान्दुर्म्मतीनिमान् । एषां शास्ता च को मूढो न विद्मो वयमत्र ह ।
धर्म्मवर्त्मनि संस्थाप्य पुनर्यास्याव निर्वृतौ । इति सञ्चिन्त्य तौ वीरौ विप्रैश्च सहितौ नृप । ११४१०
जनार्द्दनेन राजानौ मोक्षाद्भ्रंशयितुं नृप । समीपं तस्य राजेन्द्र यतेर्जग्मतुरञ्जसा ।
गत्वा च प्रोचतुरुभौ दुर्व्वाससमतीन्द्रियं । यतीश्च नियतान् क्रुद्धौ राजानौ राजसत्तम ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने षट्नवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥
॥ हंसडिम्भकावूचतुः ॥ मानलोभादिहीनात्मन् किन्ते व्यवसितं द्विज । कस्त्वयमाश्रमो विर भवता यः समाश्रितः ।
गृहमेवं परित्यज्य किन्त्वया साधितं परं । दम्भ एव भवान् व्यक्तं लोके नास्त्यत्र कारणं ।
लोकानिमान् सदा मूढ नाशयिष्यसि निर्वृतः । एतान् सर्व्वान् विनेताऽसि नरके पातयिष्यसि । ११४१५
स्वयं नष्टः परान्मूर्ख नाशयिष्यसि यत्नतः । अहो शास्ता कथं नासि तव मन्दमतेर्द्विज ।

सर्व्वथा त्वद्विनेता च पापं नास्त्यत्र संशयः । त्यक्तेममाश्रमं विप्र गृही भव यतात्मवान् ।
पञ्चयज्ञान् सदा विप्र कुरु यत्नपरो भव । तत स्वर्गे परं गत्वा स्वर्गे हि सुमहत्सुखं ।
एष श्रेयः परो विप्र जीविते चेत् स्पृहा तव । इत्युक्तवन्तौ धर्म्मात्मा श्रुत्वा विप्रो जनार्द्दनः ।
उवाच च यतिं दृष्ट्वा प्रणम्यासौ सुभीतवत् । मा श्रुतामीदृशं वाक्यं राजानौ मन्दचेतसौ । ११४९०
अश्राव्यमीदृशं घोरं लोकयोरुभयोरपि । को वक्तुमीशो मन्दात्मा यदि जीवेत् सबान्धवः ।
सर्व्वथा काल एवायं युवयोर्मन्दचेतसोः । समाप्त आयुषः शेषो ब्रह्मदण्डहतौ युवां ।
एते हि यतयः शुद्धा ज्ञानदीपितचेतसः । ज्ञानाग्निदग्धकर्म्माण. प्राणान् प्राणेषु जुह्वति ।
ईदृते वामीदृशं वाक्यं कः समर्थो ह्यनुब्रुवन् । सर्व्वथा ज्ञातमस्माभिः समाप्तमिह जीवितं ।
चत्वार आश्रमाः पूर्व्वमृषिभिर्व्विहिता नृपौ । ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । ११४९५
तेषामग्र्यश्चतुर्थोऽयमाश्रमो भिक्षुकः स्मृतः । अस्ति तस्मिन्महावृद्धिः स हि पुण्यतमः स्मृतः ।
नोपासिता भवद्भ्याञ्च वृद्धाः सम्यग्विनीतवत् । ज्ञानं नाप्तं ततस्तेभ्यस्तथा चैवं वदेत कः ।
अश्राव्यमीदृशं घोरं मया प्राणभृता नृप । किं करिष्यामि मन्दात्मन् मित्रत्वाद्भवतो नृप ।
ज्ञानं यदाप्तं भवता गुरुभ्यस्तदत्र दु.खाय हि केवलं नृप । ज्ञानं हि धर्म्मप्रभवं यथेष्टं बलाद्धि पापस्य विधातृरूपं ।
युवां विहाय यास्ये वा पतेयं वा शिलातले । पिबे वाऽपि विषं घोरं पतेयं वा महोर्म्मिषु। ११५००
आत्मानं वाऽत्र संयच्छे पश्यतो श्रृण्वतो पुनः । इत्युक्त्वा विललापैवं मा मृतामिति तौ वदन्।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने नवनवत्यधिकद्विशतोऽध्यायः ॥ २९९ ॥
॥ वैशम्पायन उवाच ॥ ततः क्रुद्धोऽथ दुर्व्वासा धक्ष्यन्निव तयोरसून्। एकेनाक्ष्णाऽथ दुर्व्वासा रौद्रेणाग्नियुजा सदा ।
पश्यंस्तौ च दुरात्मानौ रोषव्याकुलितेन्द्रियः । कुर्व्वन्निव तदा लोकान् भस्मभूतानिमान्नृप ।
ब्राह्मणं चक्षुषा पश्यन् सौम्येनान्येन केवलं । उवाच वचनं राजन् ध्वंसत ध्वंसतेति च ।
इतो गच्छत राजानौ किं विलम्बत माचिरं । न वां वचनसंभूतं रोषं धारयितुं क्षमे। ११५०५
अन्यथा वो महीपालान् सर्व्वान्दग्धुमहं क्षमः । किमत. साहसं वक्तुं कस्य शक्नोति मत्पुर. ।
दर्पं वो लोकविख्यातः शङ्खचक्रगदाधर. । व्यपनेष्यति मन्दौ किं वा वक्ष्यामि साम्प्रतं ।
तत उत्थाय धर्म्मात्मा गन्तुमैच्छद्यतीश्वरः । तस्य बाहुं समादाय हंसो नृपवरोत्तमः ।
कौपीनं चिच्छिदे क्रूरः कृतान्त इव सत्तम । यतयोऽन्येऽपलायन्त दिशो दश विचेतस.।
कष्टं हेति वदन् विप्रो मित्रभावाज्जनार्द्दन. । न्यवारयद्यथाशक्ति किमिदं साहसन्त्विति । ११५१०
दुर्व्वासा सत्यधर्म्मस्तु हन्तुमीशोऽपि तं ततः । मन्दं मन्दमुवाचेदं हंसं डिम्भकमेव च ।
शापेनाहं समर्थोऽपि हन्तुं राजकुलाधमौ । तथाऽपि न करोम्यन्तं यतयो ह्यत्र ते वयं ।
यो हि देवो जगन्नाथ. केशवो यादवेश्वरः । शङ्खचक्रगदापाणिर्गर्व्वं ते व्यपनेष्यति।
लोके तस्मिन् यदुश्रेष्ठे रक्षत्येव जगत्पतौ । युवयोः सर्व्वथा जीवः सुजीव इति मे मतिः।
जरासन्धे पि वां बन्धुः स च वक्तुं न चेच्छति । ईदृशं लोकविदिष्टं स हि धर्म्मपथे सदा । ११५१५

एतावता स वां बन्धुर्न हि भूयो भविष्यति । विद्वेषोऽप्यस्तु वां तस्य मागधस्य महीपतेः ।
श्रुत्वेदं घोररूपन्तु स हि बन्धुः सहेत चेत् । धर्म्मनाशो भवेत्तस्य नात्र कार्य्या विचारणा ।
इत्युक्त्वा गच्छ गच्छेति हंसं प्राह पुनः पुनः । जनार्द्दनमुवाचेदं दुर्व्वासा यतिसत्तमः ।
स्वस्त्यस्तु तव विप्रेन्द्र भक्तिरस्तु जनार्द्दने । सङ्गतिस्तव तस्यास्तु शङ्खचक्रगदाभृतः ।
अद्य श्वो वा परश्वो वा साधुरेव सदा भवान् । न हि साधोर्विनाशोऽस्ति लोकयोरुभयोरपि । ११११०
गच्छ सर्व्वं पितुर्ब्रूहि ज्ञात्वा वृत्तं यथाखिलं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने द्विशततमोऽध्यायः ॥ २०० ॥
॥ वैशम्पायन उवाच ॥ ततस्तौ हंसडिम्भकौ क्रुद्धौ कालेन चोदितौ । शिक्य कमण्डलुञ्चैव द्विदलं दारुमेव च ।
दण्डान् पात्रविशेषांश्च छित्त्वा भित्त्वा च सर्व्वश । तस्मिन् देशे महाराज व्याधिस्थानान्यदीदहन् ।
भर्त्सयित्वा च तद्देशात स्वपुरीं तौ प्रजग्मतुः । जनार्द्दनश्च धर्म्मात्मा स्नेहादनुययौ तयोः ।
नष्टाविमाविति तदा स मेने दुःखितः परं । गतेषु तेषु सर्व्वेषु दुर्व्वासा यतिसत्तमः । ११११५
पलायनपरान् सर्व्वानिदमाह यतीश्वरान् । इतो देशाद्विनिर्गत्य पुष्करात् पुण्यसंयुतात् ।
मन्दं मन्दं समाश्वस्य विश्रम्य च ततस्ततः । प्रविश्य द्वारकां देवं शङ्खचक्रगदाधरं ।
दृष्ट्वा च तस्मै प्रभवे वक्ष्यामो यतिसत्तमाः । स हि रक्षन् जगदिदं धर्म्मवर्त्मनि संस्थितः ।
आद्यो लोकगुरुर्विष्णुर्यतात्मा तत्त्ववित्प्रियः । उद्धृत्य कण्टकान् सर्व्वान् शशास पृथिवीमिमां ।
स च पापान्महाघोरान् पापकर्म्मरतान् प्रभुः । रक्षेन्न सकलान् सर्व्वान् ज्ञानिनु नियतात्मनः । १११२०
इदमद्य वयं विप्रा यानमद्य विधीयतां । साहसं यत् कृतं ताभ्यां पात्रभेदादि सत्तमाः ।
एतत् सर्व्वमशेषेण दर्शयामो जनार्द्दनं । तथेति ते प्रतिज्ञाय यतयो ज्ञानचक्षुषः ।
छिन्नांस्ताभ्यां समादाय शिक्यं दारुमयं तथा । द्विदलं कर्पटञ्चैव कौपीनमथ वल्कलं ।
कमण्डलुं तथा राजन्नर्द्धभीतकपालकं । एतानन्यान् समादाय द्रष्टुं केशवमाययुः ।
पञ्च चैव सहस्राणि पुरस्कृत्य महामुनिं । दुर्व्वाससं तपोयोनिमीश्वरस्यात्मसम्भवं । १११२५
अहोरात्रेण ते सर्व्वे द्वारकां कृष्णपालितां । ययुर्दान्ता महात्मानो लोमशाः केशवर्ज्जिताः ।
प्रातः प्रविश्य राजेन्द्र वापिकायां यतीश्वराः । स्नात्वापसृत्य ते सर्व्वे यत्नेन महता तदा ।
द्रष्टुमभ्युद्यता विष्णुं कष्टकोद्धृतितत्परं । एकच्छं समास्थाय सुधर्म्मायामवस्थितं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥
॥ वैशम्पायन उवाच ॥ अथ सर्व्वेश्वरो विष्णुः पद्मकिञ्जल्कलोचनः । श्यामः पीताम्बरः श्रीमान् प्रलम्बाम्बरभूषणः ।
किरीटी श्रीपतिः कृष्णो नीलकुञ्चितमूर्द्धजः । अव्ययः शाश्वतो देवः सकलो निष्कलः शिवः । १११३०
क्रीडाविहारोपगतः कदाचिदभवद्धरिः । कुमारैरपरैः सार्द्धं सात्यकिप्रमुखैर्नृप ।
गोलक्रीडां सुधर्म्माया मध्ये यादवसत्तमः । चकार नियतश्चापि युयुधानेन केशवः ।
ममायं प्रथमो गोलकः पश्चाद्भविष्यति । इति ब्रुवंस्तदा विष्णुः सात्यकिं मनोजवः ।

पार्श्वस्था यादवास्तस्य वसुदेवपुरोगमाः। उद्धवप्रमुखा राजन्नासेदुः कचिदत्र वै।
अन्यव्यापाररहितो भूतात्मा भूतभावनः। विजहार यथा रामः सुग्रीवेण पुरा नृप। १११०५
मध्यन्दिने महाविष्णुः शैनेयेन महाच्युत। विक्रीड्य सुचिरं कृष्ण उपारंसीत् स यादव।
द्वाःस्थेन वारिताः पूर्व्वं द्वार्य्येव च समास्थिताः। इदमन्तरमित्येवं विविशुस्तां सभां नृप।
यतयो दीर्घतपसः पुरस्कृत्य तपोधनं। दुर्व्वाससं सुमनसो ददृशुर्यादवेश्वरं।
गोलक्रीडासमायुक्तं करसंस्थितगोलकं। पद्मपत्रविशालाक्षं विष्णुं तं सात्यकिं हरिं।
एकेनाक्ष्णा छादयन्तं परेणान्येन गोलकं। यतयश्च महाराज प्रत्यदृश्यन्त तत्पुरः। १११९०
कृष्णायः पुण्डरीकाक्ष सात्यकिर्ब्बलभद्रक। वसुदेवस्तथाऽक्रूर उग्रसेनस्तथा नृपः।
अन्ये च यादवा सर्व्वे संभ्रमं प्रतिपेदिरे। इदं किमिदमित्येवं व्यासक्तमनसोऽभवन्।
पृष्ठतोऽप्यनुगच्छन्तं दिधक्षन्तं जगत्त्रयं। अर्द्धकौपीनवसनं स्मरन्तं कमपि द्विजं।
अन्तस्तापसमायुक्तं छिन्नदण्डधरं यतिं। अन्तर्ज्ज्वलन्तं रोषेण हंसासादितकल्मषं।
नेत्रोत्थितमहावह्निं प्रेक्षन्तं यादवेश्वरं। दुर्व्वाससं ते ददृशुर्भीता यादवसत्तमा। ११११५
किं करिष्यत्यधौ क्रुद्धः किं वा वक्ष्यति नः प्रभु। इति प्राञ्जलयः सर्व्वे यादवाः प्रतिपेदिरे।
इदमासनमित्येव किञ्चिदुत्सृज्य कृष्णयः। ततः कृष्णो हृषीकेश किञ्चिदुत्थाय तत्पुरः।
इदमासनमित्येवं स्थीयतामिह निर्वृत। अहमद्य स्थितो विप्र किङ्करोऽस्मीति चाब्रवीत्।
ततः किञ्चिदिवासीत आसने यतिविग्रह। आसने संस्थिते तस्मिन् यतयो वीतमत्सराः।
आसनानि यथायोगं भेजिरे निर्वृताः किल। अर्घ्यादिसमुदाचारं चक्रे कृष्णः किरीटभृत्। १११२०
आह भूयो हृषीकेशो यतिं दुर्व्वाससं प्रभुं। किमर्थं ब्रूहि विप्रेन्द्र अस्मिन् प्रत्यागमो हि वः।
दृष्टं वाऽप्यथ वा किञ्चित् कारणं वोऽस्ति वा महत्। सन्न्यासिनो द्विजश्रेष्ठा यूयं विगतकल्मषाः।
निस्पृहाश्च सदा यूयमस्मत्तो द्विजपुङ्गवाः। प्रार्थ्यं नाम न चैवास्ति स्पृहा नैवास्ति वो यतः।
स्पृहाप्रेरितकर्म्माणः पचियान् यान्ति सुव्रता। निरूप्यमाणमस्माभिर्भिक्षु किञ्चिन्न दृश्यते।
न जाने कारणं ब्रह्मन् युष्मदागमनं प्रति। एतावता चानुमेयं किञ्चित् कारणमस्ति वै। १११२५
तद्ब्रूहि यदि विद्येत लत्तो ज्ञास्यामहे वयं। इत्युक्तवति देवेशे चक्रपाणौ जनार्द्दने।
तस्यापि राजन् विप्रस्य भूयः कोपो महानभूत्। तस्मादभ्यधिकः पूर्व्वात् कोपः कोपायते महान्।
दिधक्षन्निव लोकांस्त्रीन् भक्षयन्निव पश्यतः। रोषरक्तेक्षणः क्रुद्धो हसन्निव दहन्निव।
उवाच वचनं विष्णुं दुर्व्वासाः क्रोधमूर्च्छितः। न जाने इति कस्मात्त्वं ब्रूषे नो यादवेश्वर।
जानामि त्वां महादेवं वञ्चयन्निव भाषसे। पुरातना वयं विप्रा पूर्व्ववृत्तान्तवेदिनः। १११३०
तथापि देवदेवोऽपि मायामानुषदेहवान्। निगूहसे प्रभुस्तः कस्मात्त्वं जगतीपते।
सोऽपि ब्रह्मविदां मूर्त्तिस्त्वदेतत् परमं पदं। यदभावं पुरा ब्रह्म यत्र ज्ञाता वयं पुरा।
यस्मो विश्वमिदं भूतं तदेतत् परमं पदं। यत्र सूक्ष्मं विजानन्ति पुरातत्त्वेन चेतसा।

पुराविदोऽथ विश्वेश तदेतत् परमं वपुः । कर्म्मणा प्राप्यते यत्तु यत् खला निर्वृता वयं ।
प्रत्यक्षमपि यद्रूपं नैव जानन्ति मानुषाः । न हि मूढधियो देव न वयं तादृशा हरे । १११७५
न जाने इति यद्ब्रूषे किमतः साहसं वचः । ये हि मूलं विजानन्ति तेषान्तु प्रविचेतनं ।
कुर्व्वतः किं फलं देव तव कंसनिसूदन । वेदान्ते प्रथितं तेजस्तव चेदं विचार्य्यते ।
ये च विज्ञानहृष्टास्तु योगिनो वीतकल्मषाः । पश्यन्ति हृत्सरोजे हि तदेवेदं वपुः प्रभो ।
वेदैर्यच्छ्रूयते तेजो ब्रह्मेति प्रतिपाद्य वै । तदेवेदं विजानेऽहं रूपमैश्वरमेव च ।
वैष्णवं परमं तेज इति वेदेषु पठ्यते । अवगच्छाम्यहं विष्णो तदेवेदं वपुस्तव । १११८०
य ओमित्युच्यते शब्दो यस्य वागिति गीयते । स एवासि प्रभो विष्णो न जाने इति मा वद ।
परोक्षे यदि किञ्चित् स्यात्तव वक्तुं प्रयुज्यते । न जाने इति गोविन्द मा वादीः साहसं हरे ।
विश्वं यदा प्रादुरासीदस्मिन् लोके चये सति । इदं तदैश्वरं तेजस्त्वगच्छामि केशव ।
कर्त्ता त्वं भूतभव्येश प्रतिभासि सदा हृदि । यद्यद्रूपं स्मरे नित्यं तत्तदेवासि मे हृदि ।
वायुरेव यदा विष्णुरिति मे धीयते मतिः । तदा तद्रूप एवासि हृन्मध्ये संस्थितो विभो । १११८५
आकाशो विष्णुरित्येव कदाचिद्धीयते मतिः । तदा तद्रूप एवासि हृन्मध्ये संस्थितो विभो ।
पृथिवी विष्णुरित्येव कदाचिद्धीयते मतिः । तदा पार्थिवरूपस्त्वं प्रतिभासि सदा मम ।
रसोऽयं देव इत्येव कदाचिच्चिन्त्यते मया । तदा रसात्मना विष्णो हृन्मध्ये संस्थितो विभो ।
यदा त्वं तेज इत्येव स्मर्त्तो त्वां पुरुषोत्तम । तदा तद्रूपसम्पन्नः प्रतिभासि सदा हृदि ।
चन्द्रमा हरिरित्येव तदा चान्द्रमसं वपुः । निरीक्ष्य चक्षुषा देव तत प्रीतोऽस्मि केशव । १११९०
यदा सौरं वपुरिति स्मर्त्ता त्वां जगतीपते । तदा तद्भावनायोगात् सूर्य्य एव विराजसे ।
तस्मात् सर्व्वं त्वमेवासि निश्चिता मतिरीदृशी । अतो न जानेऽहमिति वक्तुं नेशो जनार्द्दन ।
इत्यर्थे संस्थितो विष्णो पीडां नो नैव चिन्त्यसे । अत्यन्तदुःखिता विष्णो वयं त्वामनुसंस्थिताः ।
इदृशीयमवस्था नो नैतां स्मरसि केशव । तत्पुनर्भाग्यधेयं नो नष्टमित्येव चिन्त्यसे ।
मन्दभाग्या वयं विष्णो यतो नो न स्मरेः प्रभो । कोऽपि च क्षत्रियदायादो गिरीशवरगर्व्वितौ । १११९५
नाम्ना च हंसडिम्भकौ बाधितो नो जनार्द्दन । गार्हस्थ्य हि सदा श्रेयो वदन्ताविति केशव ।
इतस्ततश्च धावन्तो वदन्तो बहुकिल्विषं । अयुक्तं बहुभावन्तो धर्षयन्तो च नः सदा ।
इदमन्यत् कृतं देव प्रमद्य पापमुच्यते । पश्येद बहुधा देव भिन्नं भिन्नं सहस्रश ।
शिक्यञ्च दारवं पात्रं विदलान् वेणुकान् बहून् । इदमपरं यस्य तयोः साहसचेष्टितं ।
कौपीनं बहुधा च्छिन्नं तदस्माकं महद्धनं । कृतं कपालमात्रेण कमण्डलु जगत्प्रभो । ११२००
त्वन्तु नो रक्ष्यैव नित्यं चास्ते वै व्रतमास्थित । चित्रं चित्रमिदं देव रक्षिष्यसि सदा निशं,
किं करिष्यामि मन्दात्मा मन्दभाग्या वयं विभो । किन्तु शरणमेव तद्ब्रूहि जगतां पते ।

जीवन्तौ तौ यदि स्यातां नष्टा लोका इमे त्रयः। न विप्रा न च राजानो न वैश्या न च पादजाः।
अत्यन्तबलिनौ मत्तौ तीक्ष्णदण्डधरौ नृप। न तयोः पुरतः स्यातुं शक्ता देवाः सवासवाः।
न च भीष्मो न वा राजा वाह्लीको भीमविक्रमः। यो हि वीरो जरासन्धः क्षत्रियाणां भयङ्करः। ११८०१
नैव च प्रायशः स्यातुं गिरीशवरदर्पितौ। तयोः कृष्ण हरे शक्रो नित्यमप्रतिपद्भिनोः।
तस्मात्त्वं जहि तौ वीरौ रक्ष लोकानिमान् प्रभो। अन्यथा रक्षणोत्थैवं व्यर्थं शब्दोऽत्र जायते।
बहुनाऽत्र किमुक्तेन रक्ष रक्ष जगत्त्रयं। इत्युक्त्वा विररामैव दुर्व्वासा क्रोधमूर्च्छितः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने द्व्यधिकद्विशततोऽध्यायः ॥ २०२ ॥
॥ वैशम्पायन उवाच ॥ एतद्वचनमाकर्ण्य मन्दमुच्छ्वस्य केशवः। दुर्व्वाससं समालोक्य बभाषे यादवेश्वरः।
क्षन्तव्यं भवता सर्व्वं दोष एवं ममैव हि। शृणु वाक्यं ममैतत्तु श्रुत्वा क्षमापरो भव। ११८१०
जेष्यामि तौ रणे विप्र हंसं डिम्भकमेव च। गिरीशो वा वरं दद्यात् शक्रो वा धनदोऽपि वा।
यमो वा वरुणो वाऽपि ब्रह्मा चाथ चतुर्मुखः। सबलौ मानुजौ हत्वा पुनर्दास्यामि वो रतिं।
सत्येनैव शपाम्यद्य मा रोषवशगो भव। रक्षां वोऽहं करिष्यामि हत्वा तौ च नृपाधमौ।
जानामि तौ दुरात्मानौ युष्मद्दोषकरौ हि तौ। श्रुतश्च पूर्व्वमस्माभिस्तीक्ष्णदण्डधराविति।
अत्यन्तबलिनौ मत्तौ गिरीशवरदर्पितौ। नाल्पप्रयत्नसंसाध्यौ जरासन्धहितैषिणौ। ११८१५
प्राणानपि तयोः राजा दास्यत्येव न संशयः। जरासन्धो महीपालो विना तेन यतेम हि।
जये तयोर्विप्रवर्य्य तत्र श्रेयो भवेत्तु नः। यत्र यत्र च तौ गत्वा स्थिताविह्यनुशुश्रुम।
तत्र तत्र च हन्म्यहं नात्र कार्य्या विचारणा। गच्छध्वं यतयः स्वैरं निजकार्य्यपरायणाः।
अचिरेणैव कालेन जेष्यामि रणपुङ्गवौ। ततः प्रीतः प्रसन्नात्मा यादवेश्वरमाह सः।
स्वस्त्यस्तु भवते कृष्ण जगतां स्वस्तिकुर्व्वते। किन्नु नाम जगन्नाथ दुःसाध्यं तव केशव। ११८२०
त्रिलोकिम् त्रिधामाऽसि सर्गसंहारकारकः। देवानामपि देवेश सर्व्वत्र समदर्शन।
विष्णो देव हरे कृष्ण नमस्ते चक्रपाणये। नमः स्वभावशुद्धाय शुद्धाय नियताय च।
शब्दगोचर देवेश नमस्ते भक्तवत्सल। अज्ञानादथ वा ज्ञानाद्यन्मयोक्तं क्षमस्व तत्।
त्वमेवाह जगन्नाथ नावयोरन्तरं पृथक्। अतः क्षमस्व भगवन् क्षमासारा हि साधवः।
॥ श्रीभगवानुवाच ॥ क्षन्तव्यं भवता विप्र क्षमासारा वयं सदा। संन्यासिनः क्षमासाराः क्षमा तेषां परं बलं। ११८२५
क्षमा मोक्षकरी नित्यं तत्त्वज्ञानमिव द्विज। क्षमा धर्म्मः क्षमा कर्म्म क्षमा सत्यं क्षमा यशः।
क्षमा स्वर्गस्य सोपानमिति वेदविदो विदुः। तस्मात् सर्व्वप्रयत्नेन क्षमां पालयत स्वकाम्।
प्रायशः ज्ञानसंयुक्ता यूयं सर्व्वे यतीश्वराः। न एते यतयो विप्राः पूजनीया ममाऽद्य वै।
भोक्तव्या यतयो विप्रा भिक्षुकाः सर्व्व एव हि। तथेति ते प्रतिज्ञाय भोक्तुमैच्छन् हरेर्गृहे।
ततः स्वभवनं विष्णुः प्रविश्य हरिरीश्वरः। चतुर्व्विधं तथाहारं कारयित्वा यथाविधि। ११८३०

भोजयामास तान् सर्व्वान् यतीन् यतिवरार्चितः। छित्त्वा च्छित्त्वा च देवेशो दुकूलानि मृदूनि सः।
ददौ तेभ्यस्तदा विष्णुः सर्व्वेभ्यो जनमेजय। ते च प्रीता यथायोगं यतः पूर्व्वं ततो गताः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने यतिभोजने त्र्यधिकद्विशततोऽध्यायः ॥ २०३ ॥
॥ वैशम्पायन उवाच ॥ दुर्व्वासास्त्वथ तत्रैव नारदेन महात्मना। चिन्तयन् ब्रह्मणस्तत्त्वं विजहार यथासुखं।
भगवानपि गोविन्दस्तयोर्व्वाक्यममन्यत। ततस्तौ हंसडिम्भकौ तस्मिन् काले महीपते।
ब्रह्मदत्तं महीपालं पितरं वीर्य्यशालिनं। प्रोवाचतामिदं वाक्यं समन्ताज्जनसंसदि। ११८०५
राजसूयं महायज्ञं पितः कुरु सुयत्नतः। अस्मिन्नासि नृपश्रेष्ठ यतावो यज्ञसिद्धये।
आवां तेऽद्य महाराज दिशो विजयतत्परौ। यतिष्यावो बलैः सार्द्धं गजैरश्वैरथैरपि।
सम्भारा यज्ञसिद्ध्यर्थमानेतव्या नृपोत्तम। तथेति स महाबाहो ब्रह्मदत्तोऽब्रवीत्तदा।
जनार्द्दनस्तु विप्रेन्द्रो दृष्ट्वा साहसतत्परौ। अशक्यमिति मन्वानो वयस्यं हंसमब्रवीत्।
शृणु हंस वचो मह्यं श्रुत्वा निश्चित्य वीर्य्यवान्। आयुष्मन् साहसं कर्त्तुमुद्यतोऽसि नृपोत्तम। ११८१०
स्थिते भीष्मे जरासन्धे वाह्लीके च नृपोत्तमे। किञ्च वीरेषु सर्व्वेषु यादवेषु नृपोत्तम।
भीष्मो हि बलवान् वृद्धः सत्यसन्धो जितेन्द्रियः। त्रिसप्तकृत्वः पृथिवीं यो जिगाय भृगूत्तमः।
तं युद्धे जितवान् भीमः सर्व्वक्षत्रस्य पश्यतः। जरासन्धस्य यद्वीर्य्यं तद्भवान् वेत्ति संयुगे।
वृष्णिवीरास्तु ते सर्व्वे कृतास्त्रा युद्धदुर्म्मदाः। तत्र कृष्णो हृषीकेशो जितशत्रुः कृती सदा।
जरासन्धेन सहितः सदा युद्धे जितश्रमः। प्रमुखे तस्य न स्थातुं शक्तो जीवन्नृपोत्तम। ११८१५
बलभद्रस्तथा मत्तः क्रुद्धो यदि भवेद्बली। लोकानिमान् समाहर्त्तुं शक्नोतीति मतिर्म्मम।
तथा च सात्यकिर्व्वीरः शक्तो जेतुं रणे रिपून्। तथाऽन्ये यादवाः सर्व्वे कृष्णमाश्रित्य गर्व्विताः।
अस्माभिश्च कृतः पूर्व्वं विरोधो यतिभिः सह। दुर्व्वासा यतिभिः सार्द्धं गतो द्रष्टुं स केशवं।
इति श्रुतं नृपश्रेष्ठ ब्राह्मणाल्लोकमागतात्। तथा सति यथा सिद्धिस्तथा चिन्त्यस्व मन्त्रिभिः।
ततः पश्चाद्विधास्यामो राजसूयं महाक्रतुं। ११८२०
॥ हंस उवाच ॥ को नाम भीष्मो मन्दात्मा वृद्धो हीनबलः सदा। आवयोः पुरतः स्थातुं शक्तः स किल वृद्धकः।
यादवा इति चित्रं नः शक्ताः स्थातुं रणे द्विज। क्व च कृष्णः पुरः स्थातुं बलदेवश्च मत्तकः।
शैनेयश्चापि विप्रेन्द्र स्थातुं न इति चिन्तय। जरासन्धस्तु धर्म्मात्मा बन्धुरेव सदा मम।
गच्छ विप्र यदुश्रेष्ठं ब्रूहि मद्वचनात् त्वरन्। दीयतां करसर्व्वस्वं यज्ञार्थं सुन्दरं बहु।
लवणानि बहून्याशु गृह्य केशव माचिरं। आगच्छ त्वरितं कृष्ण न ते कार्य्यं विलम्बनं। ११८२५
इति ब्रूहि यदुश्रेष्ठं याहि त्वरितविक्रम। न ब्रूयाश्चोत्तरं विप्र शपेयं त्वां प्रियोऽसि मे।
मित्रभावादिदं ब्रूहि शपामि त्वां पुनः पुनः। इति सञ्चोदितो विप्रो नोत्तरं प्रत्यभाषत।
मित्रभावात्तथा राजन् स्नेहाच्च जनमेजय। जनार्द्दनस्तु धर्म्मात्मा नित्यं गन्तुं समुद्यतः।
अद्य श्वो वा परश्वो वा गच्छामीति यतेत सः। देवं द्रष्टुं जगद्योनिं शङ्खचक्रगदाधरं।

